# काशीविद्यासुधानिधिः

# THE PANDIT.

A MONTHLY PUBLICATION

OF THE

BENARES COLLEGE

DEVOTED TO

SANSKRIT LITERATURE.

---

NEW SERIES

---

VOL XXVIII.

BENARES

PRINTED AND PUBLISHED BY THE PROPRIETORS,
E. J. LAZARUS AND CO., AT THE MEDICAL HALL PRESS

1906

# INDEX TO VOLUME XXVIII NEW SERIES

कुतः । विकारादिभ्यः । आत्मनः सावयवत्वेन तत्तच्छ-
रीरप्राप्त्या वृद्धिह्रासवत्त्वाङ्गीकारे विकारवत्त्वप्रसक्तौ
प्रदीपादिवदनित्यत्वं स्यात् । अनित्यत्वे च बन्धमोक्षा-
भ्युपगमो विरुध्येत, जलतुम्बिकान्यायेन संसारसागरे म-
ग्नस्य बन्धविच्छेदात्सन्ततोर्ध्वगमनं मुक्तिर्भवतीति त्व-
याऽभ्युपगमादिति । यद्वा, पूर्वसूत्रे परिच्छिन्नत्वादात्मनो-
ऽनित्यत्वं स्यादित्युक्तमयुक्तम्, अनित्यत्वेऽपि बौद्धवत्स-
न्तानरूपेण नित्यत्वस्यात्मन्यविरोध इति "न चे"त्यर्थः ।
कुतः । विकारादिभ्यः । सन्तानस्य सन्तानिव्यतिरि-
क्तस्य सत्त्वे तस्य च सन्तानिजन्यत्वाद्विकारवत्त्वं स्यादेव,
असत्त्वे नैरात्म्यवादप्रसङ्गः, इत्यर्थः ॥

किं च ।

**अन्त्यावस्थितेश्चोभयनित्यत्वादवि-
शेषः ॥ २ । २ । ३६ ॥**

मुक्तात्मनो यत्परिमाणं तदन्त्यम् । तच्च नित्यमणु-
त्वाद्यन्यतमपरिमाणत्वेन व्यवस्थितं चेति जैनसिद्धान्तः ।
तथा चान्त्यस्य परिणामस्य नित्यत्वेनावस्थितेस्तदृष्टा-
न्तेनात्मपरिमाणत्वेन हेतुनोभयोराद्यमध्यमपरिमाणयो-
र्नित्यत्वप्रसङ्गात्त्रयाणामाद्यमध्यमान्त्यपरिमाणानामवि-
शेषः साम्यं स्यादित्यर्थः । नित्यपरिमाणानां त्रयाणामेक-
त्रासम्भवान्नित्यत्वमापाद्य तेन साम्यमापादितमिति द्रष्ट-
व्यम् । परिमाणसाम्ये स्थूलसूक्ष्मशरीरप्राप्तौ परिमाणवै-
षम्यं न स्यादिति भावः । यद्वा सर्वदैकमेव परिमाणं
स्यादित्यापाद्यम् । तथा हि, अन्त्यपरिमाणस्य जन्यत्वे
नित्यत्वविरोधादाद्यमध्यमकालावस्थानं वक्तव्यमिति,
यदन्त्यपरिमाणमणु महद्वा तदेवैकं सर्वदा स्यान्नान्यत् ।

तथा चान्त्यस्य परिमाणस्यावस्थितेरणुत्वाद्यन्यतमत्वेन नियतत्वादाद्यमध्यमकालयोरुभयोस्तस्य परिमाणस्य नित्यत्वादिकत्वादविशेषः। जीवोऽणुश्चेदणुरेव, महांश्चेन्महानेव स्यादित्यर्थः । तथा च न शरीरपरिमाणनियम इति भावः। तस्मादयुक्तविवसनमतेन न समन्वयस्य विरोध इति सिद्धम् ॥

इदानीं केवलनिमित्तकारणमेवेश्वरो नोपादानमिति येषां सेश्वरसांख्यपातञ्जलशैवकणभुगादीनां मतं तदीयं दूषयति ।

**पत्युरसामञ्जस्यात्** ॥ २ । २ । ३७ ॥

पूर्वं सत्त्वासत्त्वयोरेकत्र विरोधादसम्भव इत्युक्तम् । तर्हि तद्वदुपादानकर्तृत्वयोरेकत्र विरोधादसम्भव इति दृष्टान्तसङ्गत्या निमित्तोपादानोभयात्मकब्रह्मसमन्वयासम्भव इत्याक्षेपे सिद्धान्तः। पत्युरीश्वरस्य जगदुपादानप्रधानादिप्रेरकत्वेन जगन्निमित्तत्वमात्रं न सम्भवति । कुतः। असामञ्जस्यात् । ईश्वरस्य जगत्सर्जने प्रवृत्तौ रागद्वेषादिप्रसङ्गादसामञ्जस्यं स्यात्, प्रवृत्तेः रागद्वेषादिपूर्वकत्वेन लोके दृष्टत्वात्, दृष्टानुसारित्वात्कल्पनायाः । अस्माकं तु श्रुत्यनुसारित्वादनिर्वचनीयवादित्वाच्च न दोष इति भावः ॥

**सम्बन्धानुपपत्तेश्च** ॥ २ । २ । ३८ ॥

प्रेर्यप्रधानादिभिः प्रेरकस्येश्वरस्य सम्बन्धो वाच्यः, असम्बद्धस्य प्रेरकत्वायोगात् । न च सम्बन्धः सम्भवति, निरवयवत्वायुतसिद्धत्वाच्च संयोगसमवाययोरनुपपत्तेरित्यर्थः । सिद्धान्ते त्वविद्यादिप्रेरकत्वं कल्पिततादात्म्येनोपपद्यत इति भावः ॥

किं च । कुम्भकारस्य मृदादिप्रेरकत्वं दृष्ट्वा तद्दृष्टान्तेनेश्वरस्य प्रधानादिप्रेरकत्वं कल्पनीयम् । न हि तत्सम्भवति, प्रधानस्य रूपादिहीनत्वेन दृष्टमृदादिवैलक्षण्यात्, प्रधानादिविषयकप्रेरणाया ईश्वरस्यानुपपत्तेरित्याह ।

**अधिष्ठानानुपपत्तेश्च ॥ २ । २ । ३९ ॥**

अधिष्ठानं प्रेरणा । सिद्धान्ते तु न दृष्टापेक्षा, श्रुत्येकशरणत्वादिति भावः ॥

**करणवच्चेन्न भोगादिभ्यः ॥ २ । २ । ४० ॥**

ननु करणानीन्द्रियाण्यप्रत्यक्षाण्यपि यथा जीवेन प्रेर्यन्ते, एवं प्रधानादिकमप्रत्यक्षमपीश्वरेण प्रेर्यत इति चेन्न। कुतः । भोगादिभ्यो दोषेभ्यः । जीवो हीन्द्रियग्रामं भोगार्थं प्रेरयति । तद्दृष्टान्तेनेश्वरस्य प्रेरकत्वे तद्वद्भोगादयः प्रसज्येरन्नित्यर्थः ॥

यद्वा । सशरीरस्यैव प्रेरकत्वदर्शनादीश्वरस्य च शरीरानुपपत्तेर्न प्रेरकत्वमित्याह, "अधिष्ठानानुपपत्तेश्च" । भोगाधिष्ठानं शरीरमधिष्ठानशब्दार्थः । "करणवच्चेन्न भोगादिभ्यः" । करणवदिन्द्रियाधिष्ठानं शरीरमित्यर्थः । तदीश्वरेऽङ्गीक्रियत एवेति चेन्न । शरीरवत्वे भोगादिप्रसङ्गादीश्वरत्वमेव न स्यादित्यर्थः ॥

**अन्तवत्त्वमसर्वज्ञता वा ॥ २ । २ । ४१ ॥**

किं च । प्रधानजीवेश्वराणां या संख्या यच्च परिमाणं तदुभयमीश्वरेण परिच्छिद्यते न वा । आद्ये परिच्छिन्नसंख्यावत्त्वात्परिच्छिन्नपरिमाणवत्त्वाच्च त्रयाणां प्रधानजीवेश्वराणां घटादिवदन्तवत्त्वं विनाशित्वं स्यात् । द्वितीय ईश्वरस्यासर्वज्ञत्वं स्यादित्यर्थः । तस्मादसङ्गतेन

तार्किकपरिकल्पितेश्वरकारणवादेन नाभिन्ननिमित्तोपादानब्रह्मसमन्वयविरोध इति सिद्धम् ॥

**उत्पत्त्यसम्भवात् ॥ २ । २ । ४२ ॥**

एवं केवलाधिष्ठातैवेश्वर इति वेदासङ्गतं मतं निरस्य, निमित्तं प्रकृतिश्चेश्वर इति भागवतमतस्य वेदसङ्गतार्थत्वात्तदङ्गीकृत्य जीवोत्पत्त्यंशेऽपि प्रमाणमूलत्वं स्यादिति प्रत्युदाहरणसङ्गत्याऽस्यारम्भः । तद्भागवतमतं प्रमाणमूलं भ्रान्तिमूलं वेति सन्देहे प्रमाणमूलमिति प्राप्तम् । तथा हि, वासुदेवः खलु परमात्मा परमार्थतत्त्वं जगदुपादानं निमित्तं च, तस्माद्वासुदेवात्सङ्कर्षणाख्यो जीव उत्पद्यते, तस्माज्जीवात्प्रद्युम्नाख्यं मनो जायते, मनसश्चानिरुद्धाख्योऽहङ्कार इति । तथा च जीवाभिन्नाद्ब्रह्मणो जगत्सर्गं ब्रुवतः समन्वयस्यासम्भव इति प्राप्ते, वेदाविरुद्धांशमङ्गीकृत्य वेदविरुद्धजीवाद्युत्पत्त्यंशं दूषयति, "उत्पत्त्यसम्भवा"दिति । परमात्मनो वासुदेवाज्जीवस्योत्पत्तेरसम्भवान्न तन्मतं साध्वित्यर्थः । अन्यथा जीवस्योत्पत्त्यङ्गीकारे घटादिवदनित्यत्वापत्त्या भगवत्प्राप्तिरूपमोक्षस्त्वदभ्युपगतः कस्य स्यादिति भावः ॥

**न च कर्तुः करणम् ॥ २ । २ । ४३ ॥**

लोके कर्तुर्देवदत्तादेः सकाशात्करणस्य कुठारादेरुत्पत्त्यदर्शनाज्जीवात्कर्तुः करणं मनो जायत इत्येतन्न युक्तम् । इत्यतस्तन्मतमसङ्गतमित्यर्थः । अयं भावः । किं जीवो मनः करणान्तरमासाद्य जनयत्यनासाद्य वा । आद्ये तत्करणान्तरं जीवजन्यं न वा । आद्येऽनवस्था, आद्यविकल्पावतारासम्भवात् । द्वितीये तदेव मनोऽ-

स्त्विति न मनसो जीवजन्यत्वम् । प्रथमद्वितीये करणरहितस्यैव जीवस्य कार्यजननसामर्थ्याङ्गीकारे किं मनःकल्पनयेति ॥

ननु सङ्कर्षणादयस्त्रयो न जीवादिरूपाः, किं तु वासुदेववद्विज्ञानस्वरूपा ईश्वरा एवेत्याशङ्क्याह ।

**विज्ञानादिभावे वा तदप्रतिषेधः ॥ २ । २ । ४४ ॥**

सङ्कर्षणादीनां त्रयाणां वासुदेववद्विज्ञानादिभावे वा विज्ञानैश्वर्यबलवन्निरवद्यस्वरूपत्वेऽपि तदप्रतिषेधः । तस्योत्पत्त्यसम्भवरूपदोषस्य प्रकारान्तरेणाप्रतिषेध इत्यर्थः । तथा हि । न तावच्चतुर्णां वासुदेवादीनामीश्वराणां किञ्चित्प्रयोजनमप्यस्ति, एकेनैव कार्यसिद्धेः, भगवानेवैको वासुदेवः परमार्थतत्त्वमिति त्वत्सिद्धान्तहानिश्च । नन्वीश्वराणां सङ्कर्षणादीनां त्रयाणां वासुदेवतुल्यानामेव वासुदेवादुत्पत्तिरभ्युपगम्यत इति नोक्तदोष इति चेत्, तर्ह्यागत उत्पत्त्यसम्भवो दोषः, सङ्कर्षणादीनामीश्वरत्वाविशेषे वासुदेवस्य ततोऽतिशयाभावेन त्रयाणां वासुदेवेन जन्यत्वानुपपत्तेरिति ॥

**विप्रतिषेधाच्च ॥ २ । २ । ४५ ॥**

क्वचिज्ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि वासुदेवगुणा इति प्रतिपादयन्ति । क्वचिच्चोक्तगुणा एवात्मानो वासुदेवा भगवन्त इत्यभेदं गुणगुणिनोर्वर्णयन्ति । तथा च परस्परं विप्रतिषेधाच्चासङ्गतमिदं भागवतमतमित्यर्थः । तस्मान्निरवद्ये ब्रह्मणि वेदान्तानां समन्वय इति सिद्धम् ॥

॥ इति द्वितीयाध्यायस्य द्वितीयः पादः ॥

## न वियदश्रुतेः ॥ २ । ३ । १ ॥

पूर्वस्मिन्पादे श्रुतिविरुद्धत्वात्परपक्षाणामप्रामाण्यमुक्तम् । तर्हि श्रुतीनामप्यन्योन्यविरुद्धत्वाद्ब्रह्मकारणवादस्याप्यनपेक्षत्वं स्यादिति शङ्कानिरासार्थं परं पादद्वयमारभ्यते । पादद्वयस्यापि श्रुतीनामन्योन्यविरोधनिरासेन समन्वयदृढीकरणाच्छ्रुत्यध्यायसङ्गतिः । पूर्वपादेनास्य प्रासङ्गिकी सङ्गतिः शङ्काव्याजेन दर्शिता । तत्र तावदादौ सृष्टिवाक्यानामविरोधं प्रतिपादयितुमाकाशमाश्रित्य विचार्यते, आकाशस्य किमुत्पत्तिरस्त्युत नास्तीति । यद्यस्ति तर्हि विरोधः । तथा हि छान्दोग्य आकाशवायू विना "तत्तेजोऽसृजते"ति तेजआदिका सृष्टिः श्रूयते, तैत्तिरीयके तु "आत्मन आकाशः सम्भूत" इत्याकाशादिका । तथा चानयोर्वाक्ययोर्विरोध इति पूर्वपक्षः । आऽध्यायात्पूर्वपक्षे श्रुतीनां मिथो विरोधादप्रामाण्यं फलं, सिद्धान्ते विरोधाभावात्प्रामाण्यमिति बोध्यम् । एवं प्राप्ते, एकदेशिमतेन समाधत्ते "न वियदश्रुतेः" । वियन्नोत्पद्यते । कुतः । अश्रुतेर्वियदुत्पत्तिप्रतिपादकवाक्यस्याश्रवणादित्यर्थः । यद्य "प्यात्मन आकाशस्सम्भूत" इति श्रुतिरस्ति, तथाऽपि सा गौणीति गूढोऽभिसन्धिः । तथा चाकाशस्योत्पत्तेरनभ्युपगमादेव न विरोध इति ॥

गूढाभिसन्धिमजानानः शङ्कते ।

## अस्ति तु ॥ २ । ३ । २ ॥

"तु" शब्दः पक्षान्तरपरिग्रहे । छान्दोग्य आकाशोत्पत्तिश्रुत्यभावेऽपि सा श्रुतिस्तैत्तिरीयकेऽस्तीत्यर्थः । तथा च विरोधस्तदवस्थ इति शङ्कितुरभिप्रायः ॥

एकदेशी स्वाभिप्रायं प्रकटयति ।

गौण्यसम्भवात् ॥ २ । ३ । ३ ॥

न ह्याकाशस्योत्पत्तिश्रुतिर्मुख्या, किं तु गौणी । कुतः । असम्भवात् । आकाशोत्पत्तौ समवायिकारणादिसामग्र्यभावात्, विभुत्वेन नित्यत्वानुमानाच्च, आकाशोत्पत्तेरसम्भवादित्यर्थः ॥

शब्दाच्च ॥ २ । ३ । ४ ॥

"वायुश्चान्तरिक्षं चैतदमृत"मित्याकाशेऽमृतशब्ददर्शनादाकाशस्य नोत्पत्तिरित्यर्थः ॥

न "त्वात्मन आकाशस्सम्भूत" इत्यादिवाक्ये सम्भूतशब्दस्याकाशे गौणत्वं, तेज आदौ तु मुख्यत्वमित्येतद्विरुद्धम्, एकस्मिन्वाक्य एकस्य शब्दस्य गौणमुख्यत्वादर्शनादित्यत आह ।

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २ । ३ । ५ ॥

यथैकस्मिन्नेव प्रकरणे "न्नं ब्रह्मेति व्यजाना"दित्यादावन्नादिषु ब्रह्मशब्दो गौणः, "आनन्दो ब्रह्मे"त्यत्र मुख्यो विषयभेदात्, एवं प्रकृतेऽपिविषयभेदादेकस्य सम्भूतशब्दस्य गौणत्वं मुख्यत्वं च स्यादित्यर्थः ॥

इदमेकदेशिमतं दूषयन्सिद्धान्तयति ।

प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ २ । ३ । ६ ॥

विज्ञेयाद्ब्रह्मणः कृत्स्नस्य वस्तुजातस्याव्यतिरेकादात्मैकविज्ञानात्सर्वविज्ञानप्रतिज्ञाया अहानिर्भवति । ब्रह्मभिन्नसत्ताकस्याकाशस्याभ्युपगमे तु सा प्रतिज्ञा बाध्येत । तस्मादाकाशस्योत्पत्तिमङ्गीकृत्य, ब्रह्माधीनसत्ताकत्वाद्ब्रह्मणि ज्ञाते सर्वमाकाशादिकं ज्ञातं भवतीति सा प्रतिज्ञा समर्थनीयेति,-अस्याकाशस्योत्पत्तिरित्यर्थः । किं च, प्रति-

ज्ञायाः समर्थनं कार्यकारणाभेदपरेभ्यः शब्देभ्यो भवति । तथा हि कार्यकारणाभेदप्रतिपादनपरैर्मृदादिदृष्टान्तैः प्रतिज्ञां संपाद्य, तत्साधनायैव "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्," "तदैक्षत," "तत्तेजोऽसृजत," "ऐतदात्म्यमिदं सर्वम्", इत्यादिशब्दाः कार्यजातं प्रदर्श्य तस्य ब्रह्माव्यतिरेकं दर्शयन्ति । इदं सर्वमाकाशस्याकार्यत्वे बाधितं स्यादिति । नन्वेवमुत्पत्तिमत्त्वे सिद्धे पूर्वोक्तविरोधपरिहारः कथमिति चेत्, उच्यते । छान्दोग्ये हि तेजस उत्पत्तिमात्रं श्रूयते, नाद्यत्वमपि । तैत्तिरियके तु "आकाशाद्वायुर्वायोरग्नि"रिति तेजसस्तृतीयत्वं श्रूयते । तथा च तयोर्वाक्ययोरेकवाक्यत्वादनवकाशतैत्तिरीयश्रुत्यनुसारेणाकाशं वायुं च सृष्ट्वा तद्ब्रह्म तेजोऽसृजतेति छान्दोग्यश्रुतिः परिणम्यत इति नानयोर्वाक्ययोर्विरोध इति ॥

यदुक्तं तैत्तिरीयके वियदुत्पत्तिश्रुतिर्गौणी सामग्र्यभावाद्विभुत्वेन नित्यत्वानुमानाच्चेति तन्न, श्रौतस्य ब्रह्मण एव वियत्सामग्रीत्वादित्यभिप्रेत्य तदीयानुमानमनुमानेनैव दूषयति ।

## यावद्विकारं तु विभागो लोकवत् ॥ २ । ३ । ७ ॥

"तु" शब्द आकाशोत्पत्त्यसम्भवाशङ्काव्यावृत्त्यर्थः । यतो यावद्विकारजातं विभागो दृश्यते, न त्वविकारे ब्रह्मणि, विभागादर्शनात् । लोके घटादेर्विकारस्यैव विभक्तत्वदर्शनादित्यर्थः । तथा चायं प्रयोगः, "आकाशदिक्कालमनःपरमाणवः पराधीनसत्ताकाः, स्वसमानसत्ताकविभागवत्त्वात्, घटशरावादिवत्" इति । आकाशोत्पत्तिवादिनं प्रति विभुत्वहेतोः परोक्तस्यासिद्धिरपि बो-

ध्या । आकाशेऽमृतशब्दप्रयोगस्त्वापेक्षिकः, "अमृता देवा" इतिवत् । इति सिद्धं ब्रह्मकार्यं वियदिति ॥

ननुच्छान्दोग्ये वायोरुत्पत्तिर्न श्रूयते, तैत्तिरीये तु श्रूयते । तथा च पूर्ववदनयोर्विरोधपरिहारार्थं वायूत्पत्ति-र्गौणीति वाच्यम् । किं च "सैषाऽनस्तमिता देवता यद्वायु"रिति वायोर्लयप्रतिषेधाच्च नित्यत्वमित्याशङ्कामतिदेशेन निराकरोति ।

**एतेन मातरिश्वा व्याख्यातः ॥ २ । ३ । ८ ॥**

एतेन वियदुत्पत्तिमत्त्वव्याख्यानेन वायुरपि वियदवच्छिन्नब्रह्मजन्यत्वेन व्याख्यात इत्यर्थः । वायोर्नित्यत्व एकविज्ञानप्रतिज्ञाहान्यादेः समानत्वादिति भावः । वायोर्लयप्रतिषेधश्चापेक्षिकः । अतिदेशत्वान्न पृथक्सङ्गत्यपेक्षेति मन्तव्यम् ॥

**असम्भवस्तु सतोऽनुपपत्तेः ॥ २ । ३ । ९ ॥**

पूर्वमसम्भावितोत्पत्तिकयोरपि वियत्पवनयोरुत्पत्तिरस्ति श्रुतिबलादित्युक्तम् । तद्वदेव "ब्रह्मापि ब्रह्मान्तरकार्यमस्तु, कार्यकारित्वात्, वियदादिवत्" इत्यनुमानानुगृहीतया "त्वं जातो भवसि विश्वतोमुख"इत्यादिब्रह्मजन्मश्रुत्या ब्रह्मणोऽप्युत्पत्तिरस्त्विति दृष्टान्तसङ्गत्येदमारभ्यते । तत्र ब्रह्मणो नित्यत्वप्रतिपादकश्रुतीनामुक्तानुमानानुगृहीतश्रुत्या विरोधोऽस्ति न वेति सन्देहे, अग्नेर्विस्फुलिङ्गोत्पत्तिवद्ब्रह्मान्तराद्ब्रह्मोत्पत्तिरुक्तश्रुतिबलादस्त्येवेति विरोध इति प्राप्ते ब्रूमः । सतः सदात्मकस्य ब्रह्मण उत्पत्त्यसम्भवः । कुतः । अनुपपत्तेः । सत्सामान्यात्सत्सामान्यस्योत्पत्तेरनुपपत्तिः, विशेषस्यैव घटादेः सामान्यजन्यत्वदर्शनात् । ब्रह्मणश्च विशेषत्वेन जन्यत्वे, यत्त-

ज्जनकं सामान्यं तदेव नो ब्रह्म । ब्रह्मणः कार्यत्वेऽध्यस्तत्वेन जगदधिष्ठानत्वानुपपत्तेश्चेत्यर्थः । जन्मश्रुतिश्चौपाधिकविषया "न चास्य कश्चिज्जनिते"त्यादिबहुश्रुतिविरोधात् । इत्यविरोधः ॥

## तेजोऽतस्तथा ह्याह ॥ २ । ३ । १० ॥

"तत्तेजोऽसृजते"ति छान्दोग्ये ब्रह्मजन्यत्वं तेजसः श्रूयते, तैत्तिरीयके तु "वायोरग्नि"रिति वायुजन्यत्वम् । इत्यनयोर्वाक्ययोर्विरोधोऽस्तिनवेति सन्देहे, सामान्यात्सामान्यस्योत्पत्तिर्माभूत् । सामान्याद्वायोर्विशेषस्य तेजस उत्पत्तिः सम्भवति । एवं श्रुतिबलात्सर्वोपादानब्रह्मजन्यत्वमपीत्यस्ति विरोध इति प्रत्युदाहरणसङ्गत्या पूर्वपक्षे, पूर्वं ब्रह्मणः कार्यत्वे जगदुपादानत्वं न सम्भवतीत्युक्तम् । तद्वद्वायोरपि कार्यत्वात्तेजः प्रत्युपादानत्वं नास्त्येवेति ब्रह्ममात्रजन्यत्वं तेजस इत्यविरोधः । "वायोरग्नि" रिति पञ्चमी क्रमार्था, न तु हेतुत्वार्थिकेत्येकदेशिनां सिद्धान्तः । तं दूषयति "तेजोऽतस्तथाह्याहे"ति । अतो मातरिश्वनः सकाशात्तेजो जायत एव । हि यतस्तथा वायुजन्यत्वं "वायोरग्नि"रिति श्रुतिराह । न चेयं पञ्चमी क्रमार्था, वाय्वनन्तरं तेज इति पदान्तरकल्पनाप्रसङ्गात् । किं च, "आत्मन आकाशः सम्भूत" इत्यादौ "पृथिव्या ओषधय"इत्यन्ते च हेतुपञ्चम्या दर्शनान्मध्येऽकस्मात्क्रमार्थपञ्चमीत्यसङ्गतमेव । न चैवं क्वचिद्ब्रह्मजन्यत्वं क्वचिद्वायुजन्यत्वमिति विरोधः, वायोर्ब्रह्मानन्यत्वेन वायुभावापन्नब्रह्मजन्यत्वस्य छान्दोग्यवाक्यार्थस्यैव "वायोरग्नि" रिति वाक्यस्याप्यर्थत्वेनाविरोधादिति ॥

## आपः ॥ २ । ३ । ११ ॥

अत "स्तथा ह्याहे"त्यनुवर्तते । तेजोऽनन्तरभावित्वादप्पृथिव्योरिति तेजसो वायुजन्यकथनानन्तरं तयोरप्पृथिव्योः क्रमेण बुद्धिस्थत्वाद्बुद्धिसन्निधिलक्षणसङ्गत्या क्रमेणाधिकरणद्वयमारभ्यते । "तदपोऽसृजते"त्यादिवाक्यस्यापां ब्रह्मजन्यत्वप्रतिपादकस्य "अग्नेराप" इति वाक्येन विरोधोऽस्ति न वेति सन्देहे, पूर्ववद्विरोधोऽस्तीति पूर्वपक्षे, अपामग्निदाह्यत्वात्तज्जन्यत्वं नास्त्येवेत्यविरोध इत्येकदेशिसिद्धान्तं दूषयति "आप"इति । आपोऽतस्तेजसोजायन्ते । हि यस्मात्तथा तेजोजन्यत्व "मग्नेराप"इति श्रुतिराहेत्यर्थः । त्रिवृत्कृतयोरग्नेजसोर्दाह्यदाहकभावेऽप्यत्रिवृत्कृतयोर्न विरोधः । छान्दोग्ये तेजोऽवच्छिन्नं ब्रह्म तच्छब्दार्थ इति पूर्ववद्विरोधपरिहारो बोध्यः ॥

अनन्तरभाविपृथिवीमाश्रित्य विचारयति ।

**पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ २ । ३ । १२ ॥**

"ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्ते"ति श्रूयते । तत्र संशयः, किमन्नशब्देनौदनादिकमुच्यते किं वा पृथिवीति । तत्रान्नशब्दस्यौदनादौ प्रसिद्धत्वादोदनादिकमेवान्नशब्देनोच्यते । तथा च व्रीहियवादेस्तज्जन्यौदनस्य च योगेन रूढ्या चान्नशब्दवाच्यस्य क्वचिदब्जन्यत्वं, क्वचित्तु "पृथिव्या ओषधय ओषधीभ्योऽन्न"मित्यत्र पृथिव्यादिजन्यत्वं, इत्यनयोः श्रुत्योर्विरोधः । इति प्राप्ते ब्रूमः । पृथिव्येवात्रान्नशब्देनोच्यते, न व्रीह्यादिकम् । कुतः । अधिकाररूपशब्दान्तरेभ्यः । "तत्तेजोऽसृजते"ति महाभूतोत्पत्त्यधिकारात्, "यत्कृष्णं तदन्नस्ये"ति कृष्णरूपस्यान्नशब्दवाच्यस्य पृथिवीत्वज्ञापकत्वश्रवणात्, समानप्रकरणेऽ "द्भ्यः पृथिवी"ति च "तद्यदपां

शर आसीत्तत्समहन्यत सा पृथिव्यभव''दिति च पृथिव्या एतज्जन्यत्वप्रतिपादकशब्दान्तरसत्त्वाच्चेत्यर्थः । तत्तत्र तेजःसृष्टिकाले यदपां शरो घनीभाव आसीत्तत्समहन्यत स घनीभावः सङ्घातात्मना परिणत आसीत् । सैवापां कठिनाकारपरिणामरूपा पृथिव्यभवदिति श्रुत्यर्थः । तथा च व्रीह्याद्यन्नस्य नाम्बूपादानकत्वं, किं तु पृथिव्याद्युपादानकत्वमेवेत्यविरोध इति सिद्धम् ॥

**तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ २ । ३ । १३ ॥**

एवं तावत्सृष्टिक्रमे महाभूतश्रुतीनामविरोधः प्रतिपादितः । इदानीं तानि भूतान्याश्रित्याश्रयाश्रयिभावः सङ्गत्याऽन्यद्विचार्यते । किं महाभूताभिमानिन्यो देवतास्वतन्त्रा एव भौतिकोत्पादने प्रवर्तन्ते, उतेश्वराधिष्ठिता इति विशये, ''आकाशाद्वायु''रित्यादिना स्वस्वकार्योत्पत्तौ स्वातन्त्र्यश्रवणात्स्वतन्त्रा एवेति ब्रह्मणः सर्वसृष्टिकर्तृत्वप्रतिपादकश्रुत्या भूतसृष्टिश्रुतीनां विरोध इति प्राप्ते ब्रूमः । स परमात्मा तत्तत्कार्यगोचरेक्षणात्मकाभिध्यानादेवेक्षिता तत्कारणाधिष्ठाता सर्वं कार्यं सृजति । कस्मात् । तल्लिङ्गात्तस्य परमात्मनः सर्वनियन्तृत्वरूपलिङ्गस्य ''यः पृथिव्यां तिष्ठ''न्नित्यादिना श्रुतत्वादित्यर्थः । पृथिव्यां तदभिमानिदेवतायाम् । अयं भावः । आकाशादिपदानां भूतमात्रे रूढत्वाद्देवतापरत्वे लक्षणाऽऽपत्तेर्न भूताभिमानिदेवतानां स्वातन्त्र्य ''माकाशाद्वायु''रित्यादौ श्रुतम् । न च ''ता आप ऐक्षन्त''त्येतदबादिपदानां देवतापरत्वे लिङ्गम्, तदीयेक्षणस्य तदवच्छिन्नब्रह्मनिष्ठत्वात् । इति न देवतानां स्वातन्त्र्ये किञ्चिन्मानमिति ॥

**विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ २ । ३ । १४ ॥**

एवं भूतानामुत्पत्तिक्रमे चिन्तिते लयक्रमो बुद्धिस्थः प्रसङ्गसङ्गत्या विचार्यते । एतस्य विचारस्य प्रयोजनमद्वैतब्रह्मध्यानं प्रासङ्गिकत्वादेव । नास्मिन्पादेऽसङ्गतिराशङ्कनीया । तत्र किं भूतानां श्रुतोत्पत्तिक्रमेणैव लयक्रमः, उत सोपानपरम्परारूढस्य व्युत्क्रमेणावरोहणवद्व्युत्क्रमेणैव लयक्रम इति सन्देहे, श्रुतोत्पत्तिक्रमेणैवेति प्राप्ते ब्रूमः । अत उत्पत्तिक्रमाद्विपर्ययेणैव लयक्रमः, स्वस्वकारणे कार्याणां लयस्य दर्शनात्, आकाशादीनां चोत्तरोत्तरभूतं प्रति कारणतयोक्तत्वात् । किं च, व्युत्क्रमेणैव लयक्रम उपपद्यते । अन्यथोत्पत्तिक्रमेण च लयाङ्गीकारे, सति कार्ये कारणस्य नाश इति स्यात् । तच्चायुक्तमित्यर्थः ॥

भूतोत्पत्तिलयविचारस्य यत्प्रयोजनमद्वैतब्रह्मध्यानं तत्प्रयोजनकं करणोत्पत्तिक्रममेकप्रयोजनकत्वसङ्गत्या विचारयति ।

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ २ । ३ । १५ ॥

पूर्वोक्तभूतोत्पत्तिक्रम इन्द्रियोत्पत्तिक्रमेण विरुध्यते न वेति सन्देहे, विरुध्यत इत्याह "अन्तरे"ति । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी"ति वाक्यं "तल्लिङ्ग"शब्देनोच्यते । विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानशब्देन बुद्धिरिन्द्रियाणि च गृह्यन्ते । निश्चयात्मकमन्तःकरणं बुद्धिः, संशयात्मकं मन इति भेदः । तानीन्द्रियबुद्धिमनांसि भूतानामात्मनश्चान्तराले तल्लिङ्गात्तस्याः सृष्टेर्गमकाद्वाक्यादनुक्रम्यन्ते । तथा चात्मन इन्द्रियबुद्धिमनांसि तेभ्यश्च भूतानीत्यनेन क्रमेण "त्मन आकाशः सम्भूत"

इत्यादिक्रमस्य बाध इत्यनयोर्वाक्ययोर्विरोध इति चेन्न । अविशेषात् । इन्द्रियमनोबुद्धीनां भौतिकत्वेन भूतोत्पत्तिक्रमादिन्द्रियाद्युत्पत्तिक्रमस्याविशेषात् । येन क्रमेण भूतोत्पत्तिस्तेनैव क्रमेण भौतिकोत्पत्तिरित्यविरोध इत्यर्थः । "एतस्माज्जायते प्राण" इत्यादिश्रुतिश्च सर्वेषामात्मनः सकाशादुत्पत्तिमात्रं ब्रूते, न क्रममिति भावः । अतो न केनापि वाक्येन भूतसृष्टिवाक्यानां विरोध इति सिद्धम् ॥

एवं तत्पदार्थसर्वोपादानब्रह्मसिद्धौ, उपादेयभूतकरणश्रुतिविरोधो निरस्तः । इदानीं त्वम्पदार्थसिद्धौ जीवविषयश्रुतिविरोधो निरस्यते पादसमाप्तिपर्यन्तम् । तत्र जीवोत्पत्तिनाशनिमित्तकजातेष्ट्यादिशास्त्राणां जीवनित्यत्ववादिशास्त्रस्य च विरोधोऽस्ति न वेति सन्देहे, "देवदत्तो जातो मृतश्चे" ति लोकव्यपदेशानुगृहीतजातकर्मादिशास्त्रविरोधोऽस्त्येव । तयाकरणोत्पत्तिश्रुत्या भूतश्रुतेर्न विरोधस्तथा जीवोत्पत्तावपि भूतश्रुतिविरोधस्याभावो वाच्यः । स न सम्भवति, उक्तयुक्त्या जीवोत्पत्तावुक्तभूतोत्पत्तिक्रमभङ्गस्यावश्यकत्वादिति प्रत्युदाहरणेन पूर्वपक्षे राद्धान्तः ।

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्** ॥ २ । ३ । १६ ॥

योऽयं लौकिकस्तयोर्जन्ममरणयोर्व्यपदेशो "देवदत्तो जातो मृतश्चे" ति स चराचरव्यपाश्रयः स्थावरजङ्गमदेहविषयो मुख्यः । जीवे तु भाक्तो गौणः स्यात् । कुतः । जन्ममरणव्यपदेशस्य तद्भावभावित्वात्, देहोत्पत्तिनाशानुविधायित्वादित्यर्थः । देहप्रादुर्भावाद्यपेक्षयैव जातकर्मा-

दिविधानमिति न तेन शास्त्रेण जीवनित्यत्वशास्त्रस्य विरोध इति भावः ॥

एवं देहोत्पत्तिनाशयोर्जीवस्य जन्मनाशौ मा भूताम् । कल्पाद्यन्तयोर्जीवस्य जन्मनाशौ किं न स्यातां स्वर्गादिफलकर्मशास्त्रविरोधाभावादिति प्रत्युदाहरणेन विस्फुलिङ्गदृष्टान्तेन "एतस्मादात्मनः सर्वे एत आत्मानो व्युच्चरन्ती"त्यादेर्जीवात्मनः परस्माद् ब्रह्मण उत्पत्तिवाक्यस्याविकृतस्यैव ब्रह्मणो जीवभावेन प्रवेशवाक्यस्य च विरोधोऽस्ति न वेति सन्देहे, विरोधोऽस्तीति प्राप्ते ब्रूमः ।

**नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ २ । ३ । १७ ॥**

आत्मा जीवो नोत्पद्यते । कुतः । अश्रुतेः । उत्पत्तिप्रकरणेषु जीवोत्पत्तेरश्रुतेः, ताभ्यः श्रुतिभ्यो जीवस्य नित्यत्वावगमाच्च न जीवो म्रियते । "स वा एष महानज आत्माऽजरोऽमरोऽमृत" इत्यादिश्रुतयो जीवनित्यत्ववादिन्यो द्रष्टव्याः । यत्तु क्वचिद्विस्फुलिङ्गदृष्टान्तेन परस्माद् ब्रह्मणो जीवोत्पत्तिश्रवणं तत्कार्यकारणसङ्घातोपाधिनिमित्तमिति श्रुत्यैव स्फुटीकृतम् । विज्ञानघन एवायं जीव एतेभ्यः कार्यकारणसङ्घातापन्नभूतेभ्य उत्पत्तिमद्भ्यः साम्येनोत्थाय तानि भूतानि नश्यन्ति सन्ति स्वयमनुसृत्य विनश्यति, विनाशानन्तरं संज्ञा नास्तीति याज्ञवल्क्येनोक्ते, मैत्रेयी पप्रच्छ, "अत्रैव मा भगवान्मोहान्तमापीपिपन्न वा अहमिमं विजानामी"ति । अद्य मां प्रति त्वं मोहान्तं मोहमध्यं मोहमापीपिपदापादितवान् स, प्रेत्य नाशानन्तरं संज्ञा नास्तीतीदमहं न विजानामि, त्वं तु प्रेत्य संज्ञा नास्तीति वदन्मां मोहयसीति प्रश्नार्थः । तत्रोत्तरं "न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मा-

ऽनुच्छित्तिधर्मे" ति । अविनाशित्वमपरिणामित्वम् । तत्र हेतु "रनुच्छित्ती" ति । मोहं मोहकरं वाक्यम् । संज्ञा घटादिविशेषविज्ञानं नास्तीति मयोक्तं, न स्वरूपाभाव इति, नाहं मोहवादी । भूतमात्राप्रयुक्तमेवास्योत्पत्त्यादिकं न स्वाभाविकमिति तात्पर्यम् ॥

## ज्ञोऽत एव ॥ २ । ३ । १८ ॥

"अत्रायं पुरुषः स्वयंज्योति" रित्यादिस्वप्रकाशत्वबोधकश्रुतेः "पश्यंश्चक्षुः शृण्वन्श्रोत्र" मित्याद्यागन्तुकज्ञानवत्त्ववादिश्रुतिभिर्विरोधोऽस्ति न वेति सन्देहे, अस्तीतिपूर्वपक्षे, पूर्वाधिकरणसिद्धजीवानुत्पत्तिमुपजीव्य सिद्धान्तयति "ज्ञोऽत एवे" ति । जीवो ज्ञः स्वयंप्रकाशस्वरूपः । अत एवानुत्पत्तिमत्त्वादेवेत्यर्थः । अनुत्पत्तौ हि स्वयंप्रकाशं ब्रह्मैवोपहितं जीव इत्यापादि । तथा च ब्रह्माभिन्नजीवोऽपि स्वयं प्रकाश इति भावः । "पश्यंश्चक्षु" रित्यादिश्रुतय आगन्तुकवृत्त्यभिप्रायेण स्वप्रकाशत्वाविरोधेन नेतव्या इत्यविरोध इति सिद्धम् । चक्षुर्द्रष्टा ॥

## उत्क्रान्तिगत्यागतीनाम् ॥ २ । ३ । १९ ॥

आत्मनो ब्रह्माभेदयोग्यत्वाय नित्यत्वं स्वप्रकाशत्वं चोक्त्वा, इदानीं स्वप्रकाशत्वादीषद्बहिष्ठमनवच्छिन्नस्वरूपत्वमणुत्वनिरासेन साधयतीत्यान्तरबहिर्भावः सङ्गतिः । एतदनन्तरभाव्यधिकरणत्रयेणानवच्छिन्नत्वादपि बहिष्ठं कर्तृत्वमध्यस्तमात्मनीति प्रतिपाद्यते । ततो ब्रह्माभेदयोग्यजीवस्यांश इत्यधिकरणे ब्रह्मैक्यं विवद्यत इत्यापादमवान्तरसङ्गतयः । अत्रानवच्छिन्नत्वश्रुतीना "मेषोऽणुरात्मा चेतसा वेदितव्य" इत्याद्यणुत्वश्रुतिभिर्विरोधोऽस्ति न वेति सन्देहे, अस्तीत्याह "उत्क्रान्ती" ति । जीवस्योत्क्रान्तिगत्यागतीनां श्रवणादणुर्जीवः । सयदाऽस्मा-

उपादेयानि ह्यङ्गान्तराण्यनुपादेयं निमित्तम् । एभिरेतानि वा कुर्य्यादित्यङ्गेषु वचनव्यक्तिः । अस्मिन् सतीति निमित्ते । ततोऽङ्गान्तराणि नालं निमित्तमनुप्रवेष्टुम् । कालस्त्वनुपादेयः समानवचनव्यक्तिरङ्गमपि सन्निमित्तमनुप्रविशतीति युक्तम् । अथ निमित्तोपसंहार एव किं नेष्यते ? काम्येऽपि तत्कालेच्छया । ननु प्रयोजनमेतत् ?

प्रवेशो कस्मान्नाङ्गान्तराण्यप्येव? अत आह—न त्वङ्गान्तराण्येवम् । कुतः? असाम्यान्निमित्तेन । तदेव कुतः? वचनव्यक्तिभेदात् । किं पुनः कारणं वचनव्यक्तिभेदे? इत्यत आह—उपादेयानि ह्यङ्गान्तराणि कालात् अनुपादेयं निमित्त, ततो वचनव्यक्तिभेदः । तद्दर्शयति—एभिरेतानि वा कुर्यादिति अङ्गेषु वचनव्यक्तिः । अङ्गैः खलु करणोपकारे क्रियमाणे ऽकृतानि न सन्तीति तान्यपि क्रियन्तएव । तदिदमुपादेयत्वमङ्गानाम् । तेन तत्रोभयी वचनव्यक्तिरुपपन्ना । एतैरेतानि पुरुषप्रयत्नाऽगोचरे त्वस्मिन्सतीति निमित्ते वचनव्यक्तिः । ततो वचनव्यक्तिभेदादङ्गान्तराणि नाऽलं निमित्तमनुप्रवेष्टुम् । कालस्त्वनुपादेयो यतस्तस्मान्निमित्तसमानवचनव्यक्तिः कालो ऽङ्गमपि सन्निमित्तमनुप्रविशतीति युक्तम् । यथा अनुपादेये निमित्ते कर्म विधीयते तथा काले ऽपि न त्वङ्गान्तरेष्विति निमित्तवत्कालो ऽधिकृतविशेषणं नाङ्गान्तराणीति सिद्धम् ।

अत्र पार्श्वस्थश्चोदयति—अथ निमित्तोपसंहार एव किं नेष्यते? प्रथममङ्गत्वेन सम्बध्यते कालः पश्चात्त्वर्थान्निमित्तमनुप्रविशतीति किमनया परम्परया? यत्सामान्येन यावज्जीवमिति श्रुतेः प्रसृतं जीवनं प्रत्यैवाऽयं कालविधिः कालविशेषे उपसंहरिष्यति । नेयं कालश्रुतिरङ्गश्रुतिरपि तु निमित्तश्रुतिरेवास्त्वित्यर्थः ।

पार्श्वस्थान्तरं परिहरति—काम्ये ऽपि तत्कालेच्छया । अय-

सत्यम्। हेतुस्तु यावज्जीवश्रुतेरनतिरिक्तार्थत्वम्। प्रकरणार्थः। यदीयं पौर्णमास्याममावास्यायामिति निमित्तश्रुतिः स्यात् तत्काम्येन न सम्बध्येत, न चैकमेव वाक्यं तस्यैव निमित्ततामङ्गतां च बोधयितुं पारयति वैरूप्यात्। निमित्ततया चोभयसम्बन्धे काम्येऽपि यथाशक्ति प्रयोगप्रसङ्गः। असम्बन्धे वा काम्यस्याऽनियतकालत्वाऽऽपत्तिरिति।

तदेतद् दूषयन्ति—ननु प्रयोजनमेतत्। अयमभिसन्धिः। यदि प्रमाणप्रत्यालोचनया काम्यस्याऽनियतकालत्वं भवति भवतु का नः पीडा प्रामाणिकानाम्? न जातु प्रयोजनाऽनुवर्ति प्रमाणं, प्रमाणवशवर्तित्वात्तस्येति।

परमसिद्धान्ती ब्रूते—सत्यं, न प्रयोजनाधीनं प्रमाणमित्यर्थः। हेतुस्तु यावज्जीवश्रुतेरनतिरिक्तार्थत्वम्। इदमत्राकूतम्। तत्र नाम सामान्यश्रुतिर्विशेषे उपसंह्रियते यत्र सा विशेषशास्त्रादतिरिक्ताऽर्था भवति, तद्यथा पुरोडाशं चतुर्धा करोतीति सामान्यश्रुतिराग्नेये उपसंह्रियते 'आग्नेयं चतुर्द्धा करोती'त्यनेन, तत्र यद्याग्नेयं चतुर्द्धा करोतीत्येतावन्मात्रं न श्रूयते अनाग्नेयस्यापि प्रसज्येत तदुभयमर्थवत्। यदि तु पौर्णमास्याममावास्यायां वा निमित्ते कर्म क्रियमाणं तर्हि नाऽजीवतो नाप्ययावज्जीवं स्यात्। निमित्ते सत्यवश्यकर्तव्यत्वात् नैमित्तिकस्येति यावज्जीवश्रुतेरनतिरिक्तार्थत्वप्रसङ्गः। अथोच्येत यदि यावज्जीवं दर्शपूर्णमासाभ्यामिति न पठ्यते ततः समुदायद्वयस्य प्रत्येकं निमित्तसम्बन्धात्प्रत्येकमधिकारविषयत्वं प्रपद्येत[1]। तन्मा ऽत्र प्रसाङ्क्षीदिति यावज्जीवं दर्शपूर्णमासाभ्यामिति वाक्यार्थः। अनेन हि यागषट्कस्यैकाऽधिकारविषयत्वमापाद्यतइति। तथापि यावज्जीवमिति व्यर्थं, दर्शपूर्णमासाभ्यां यजेतेत्येतावन्मात्रमेव पठितव्यम्। न चात्र स स्वर्गः स्यादिति स्वर्गकामाऽधि-

१ प्रसज्येत २ पु पा।

णिनो ऽप्यङ्गार्थत्वं च । तदेवमविरोधादनिमित्ते कालतः शक्त्याश्रयो यदेति, निमित्तवति तु निमित्तविरोधात्कालवत एवाङ्गता यथेति ।

किं पुनरिदं यन्निरुणद्धि ? कालतः शक्त्याश्रयम् । कस्य चेति कुतो गम्यते निमित्तनैमित्तिकभावः ? कथं चाऽस्य नैमित्तिकसम्बन्धः ? यदि तावद्यस्मिन् सति । को विरोधः ? न कारः । स्वर्गकामो यजेतेत्यनेनैव तस्याऽवगतेः । न च यावज्जीवमग्निहोत्रमित्यत्रायं परिहारः संभवति । अग्निहोत्रं जुहोतीत्युत्पन्नस्याऽग्निहोत्रस्य सायंप्रातरग्निहोत्रं जुहोतीति सायंप्रातर्लक्षणनिमित्तविधाने सति यावज्जीवमग्निहोत्रं जुहुयादिति वाक्यस्य वैयर्थ्यप्रसङ्गादिति । हेत्वन्तरं समुच्चिनोति—प्रकरणिनो ऽप्यङ्गार्थत्वं च । ससाध्यसाधना खल्वियं प्रधानभावना स्वसाधनाऽनुग्रहाऽपेक्षा यद्यदङ्गं संनिध्यानुपतितं तत्स्वसाधनाऽनुग्राहकतया गृह्णातीति । तत्प्रकरणे च कालविधिवाक्यं श्रुतं स्वगोचरस्याङ्गतामवगमयति न निमित्त भावं, प्रकरणिनो ऽङ्गाऽनपेक्षितत्वात् । तस्मात्कालविधिवाक्यं प्रकरणसहायं कालस्याङ्गतायां प्रमाणं न निमित्ततायामिति रमणीयम् ।

सहेतुकं प्रकृतमुपसंहरति—तदेवमविरोधादनिमित्ते कालतः शक्त्याश्रयो यदेति, निमित्तवति तु निमित्तविरोधात् कालवत एवाङ्गता यथेति । सुगमम् ।

एवं पूर्वार्द्धं कारिकाया व्याख्याय पश्चार्धं विवरीतुकामस्तदवतारयितुं निमित्तमाक्षिपति—किं पुनरित्यादिना । किमाक्षेपे । तत्र किं पुनरिदं तन्निमित्तं यन्निरुणद्धि कालतः शक्त्याश्रयमिति स्वरूपाक्षेपः, कस्य चेति सबन्ध्यन्तराक्षेपः कुतो गम्यते । निमित्तनैमित्तिकभाव इति प्रमाणाक्षेपः कथमिति । तत्र स्वरूपाक्षेपं विभजते—यदि तावद्यस्मिन् सति । को विरोधः कालतः । शक्त्याश्रयेणेति शेषः ।

हि कालतोऽपि शक्त्याश्रये तस्मिन्नसति तत्क्रिया सत्येव। अथ तस्मिन् सति क्रियते एव। स्याद् विरोधः। न त्वीदृशो निमित्तार्थः। हेतुर्हि निमित्तम्। न चाऽवश्यं हेतवः कार्य्यवन्तः। कार्य्यन्तु नाऽसति हेतौ। तस्मान्न विरोधः।

यदि कर्मणो निमित्तं तत एव कर्म्मप्रवृत्तेर्विधिवैयर्थ्यम्। अनिरूपितादपि निमित्तान्निमित्तवद्दर्शनात् पुरु-

अविरोध दर्शयति—न हि कालतोऽपि शक्त्याश्रये तस्मिन्नसति तत्क्रिया, अपि तु सत्येव सा। अथोच्यते। तस्मिन् सत्येव क्रियते नाऽसतीति नाऽवधार्यते, अपि तु क्रियते एव न न क्रियते इति भवत्यक्रियाया निमित्तविरोध इत्याह—अथ तस्मिन् सति क्रियत एवेति। दूषयति—स्याद्विरोधो न त्वीदृशो निमित्तशब्दस्यार्थः। हेतुर्हि निमित्तम्। ततः किं? न चावश्य हेतवः कार्यवन्त,स्ततश्च पूर्व एव निमित्तार्थः सत्येव नाऽसतीति। तथा च न विरोध इत्याह—कार्यं तु नाऽसति हेतौ, तस्मान्न विरोधः। इदमभिसंहितम्। लोकप्रयोगाऽवधारणाधीनो हि शब्दार्थसबन्धः। हेतुशब्दश्चाऽविवादं यस्मिन् सत्येव नाऽसति कार्यं तस्मिन् प्रयुज्यते। न खलु कुसूलस्थ बीजमजनयदङ्कुरं हेतुतया न प्रतियन्ति लौकिकाः। तेन यथा व्याप्यव्यापकभाव उभयाश्रयोपि व्यापकसबन्धितया व्याप्ये भाव एव ऽनाभाव इति व्याप्यसबन्धितया च नाऽन्यत्रेति निरूप्यते तथा कार्यकारणभावो ऽपि कार्यस्य कारणे सत्येव नाऽसति भाव इति कारणस्यापि कार्यात्प्रागभावो नाभाव इति निरूपणीयः। ततश्चाय निमित्तशब्दः। तस्मात्सो ऽतदर्थ इति। कस्येत्याक्षिप्तं विभजते—यदि कर्मणो निमित्त ततः कर्मप्रवृत्तेर्विधिवैयर्थ्यं, सकलवचोवैयर्थ्यं च।

ननु किमिति वचोवैयर्थ्यं? यावता वचो निमित्तमवगमयिष्यति ततो निमित्तावगमात्पुरुषः कर्मणो घटिष्यते इत्याशङ्क्याह—

**काराऽभावात् । न तस्य निमित्तादुत्पत्तिः । नित्यत्वात् । तस्य तस्मिन् सति न बोधः । वाक्यादेव तत्सिद्धेः । कर्मवैयर्थ्यम् । सति भवत्येवेति । सत्येव तस्मिन् कर्म्मणः फलमिति चेत् । विरोधाभावः सर्वाङ्गोपसंहारेण । अथाऽधिकारस्य । न, नियोगादधिकारः । स एव नियोगसम्बन्धस्त·**

अनिरूपितादपि निमित्तान्निमित्तवद्दर्शनात्पुरुषकाराऽभावात् । अयमभिप्रायः । तन्नाम हेतुभूतमपिशब्देन ज्ञायता यदज्ञानमनुपात्तसत्कार्यायाऽपर्याप्तम् । यथा यथास्वमुपादेयानि द्रव्यगुणकर्माणि कर्मणः । न चेदमुपादेय जीवनादि । तस्मात्सत्तामात्रेणैव कर्मणो हेतुरिति न पुरुषकारस्तन्निरूपणं चाऽर्थवदिति । अथ विधेर्निमित्तमित्यनुषज्यते । दूषयति—न तस्य निमित्तादुत्पत्तिः । कुतः ? नित्यत्वात्स्वाभाविकत्वात् । श्रेयःसाधनता हि कर्मणो विधि· । न चाऽसौ निमित्तेन जीवनादिना कर्मण्याधीयते, अपि तु स्वकारणादेव श्रेयःसाधनमुत्पद्यते कर्मणः । न च जीवनादि कर्मनिमित्तमित्युक्तमित्यभिप्राय· । ननु मा भूद्विधेस्तद्बोधस्य भविष्यतीत्यत आह—तस्य तस्मिन् सति न बोधः । कुत ? वाक्यादेव तत्सिद्धेः । अथ फलस्य निमित्तमित्यनुषज्यते । दूषयति—कर्मवैयर्थ्यम् । यत सति निमित्ते फलं भवत्येवेति । पुनः शङ्कते—सत्येव तस्मिन्निमित्ते कर्मणः फलमिति चेत् । न कर्माऽपेक्षा निमित्तभाव विहिन्ति, सोपधानि तथा सर्वत्रेति भावः । सत्यमेव,मभिमत तु नास्तीत्याह—विरोधाभावः सर्वाङ्गोपसंहारेण । निगदव्याख्यातम् । अथाऽधिकारस्य निमित्तमिति सबन्धः । एतदुक्त भवति । येय कर्मणि स्वामिता कर्मैतदस्य तदभिमतस्य जनकमिति पुरुषस्य प्रतीतिरसौ निमित्तादिति । निराकरोति—न निमित्तात्कि तु नियोगादधिकारः । नियोगमवगच्छत् कार्यं भावार्थे विषये तिरश्चीनमात्मानं नियोज्यं प्रतिपद्यमानः पुरुषो नियोगविषये

**न्निमित्तः । यदि तर्हि तन्निमित्तको नियोगो न नियोगान्निमित्ताऽवगतिः । प्राक्सिद्धनिमित्तापेक्षः स शब्देनोच्यतइति सापेक्षत्वम् ।**

भावार्थे स्वामितामात्मनो नियोगसामर्थ्यादेव विजानातीति किं निमित्तेने? त्यर्थः । सत्यं, नियोज्यता भावार्थविषया स्वामितामाक्षिपति, सैव तु नियोज्यता नियोगसंबन्धः पुंसो न निमित्तमन्तरेण भवति, तच्च निमित्तस्य सद्भावो भविष्यतीत्याशङ्कते—स एव नियोगसंबन्धस्तन्निमित्तः । दूषयति—यदि तर्हि तन्निमित्तको नियोगो न नियोगान्निमित्ताऽवगतिः । अयमभिसंधिः । जीवनादि निमित्त नियोगसंबन्ध पुंसो वदंस्तन्निमित्तं नियोगमेव ब्रूते । न हि कार्यमित्येवाऽवगम्यते, अपि तु ममेदं कार्यमिति । एवं च स्वसंबन्धिकार्यप्रतिपत्तिरेव नियोगप्रतीतिः । अतो निमित्ताऽवगतिपुरःसरं नियोगसंबन्धं ब्रुवाणो नियोगमेव तत्पुरःसरमाह । ततश्च न नियोगान्निमित्ताऽवगतिः स्यादिति । मा भूत्को दोषः? इत्यत आह—प्राक्सिद्धनिमित्तापेक्षः स शब्देनोच्यते इति सापेक्षत्वम् । निमित्तं हि नियोगस्य कारकं वा स्याद् ज्ञापकं वेति तृतीयस्य प्रकारस्य निमित्ततायामभावात् तत्कारकत्वे कर्मानुष्ठानवैयर्थ्याद् ज्ञापकत्वमवशिष्यते । तथा च प्राक्सिद्धेनैव निमित्तेन नियोगस्याऽवगमितत्वात्तदपेक्षमभिधानं शब्दस्येत्यप्रामाण्यप्रसङ्गः ।

अथोच्येत न वयं निमित्ताऽवगमान्नियोगाऽवगतिं ब्रूमहे, यदेवमुपालभ्येमहि । किं तु शब्द एव निरपेक्षो जीवनवतो नियोगमवगमयति । नियोगेन नियोज्यविशेषणस्यैव प्रथममपेक्षितत्वात् जीवनादेस्तदवच्छेदकत्वेन संबन्धः । नियोज्यविशेषणमेव तु जीवनादि निमित्तमित्युच्यते । तन्नियोज्यविशेषणे सत्येवाऽऽत्मसंबन्धितया नियोगप्रतीतेः कर्मणि च स्वामिताऽवगमात् कर्तुरधिकारसिद्धेरित्या-

अथ नियोज्यविशेषणस्याऽर्थान्निमित्तभावस्तस्मिन् सत्यधिकारात्। न चात्र प्रत्यक्षादि क्रमते। नापि शब्दः। विधिप्रधानत्वात्। तस्य च भावविषयत्वात्। तस्य चांशत्रयाऽतिरेकात्। तत्र विधीयमानस्य कर्म्मणः फले, विधानात् तत्र विधौ निमित्ते उभयविधौ वाक्यभेद इति।

उच्यते। यत्र जाते कर्म्मणोऽवश्यकर्त्तव्यता तन्नि-

ह—अथ नियोज्यविशेषणस्याऽर्थान्निमित्तभाव[1]स्तस्मिन् सत्यधिकारात्। अर्थान्निमित्तत्वं स्वर्गकामनाया अपि सम्भवति। न च सर्वाङ्गोपसंहारेण विरोधस्तया यावज्जीवमित्यत्रापि स्यादित्यर्थः।

एवं कस्य चेति विभज्य कुतो वेति विभजते—न चाऽत्र निमित्तभावे जीवनादेः प्रत्यक्षादि क्रमते। ननु मा नाम क्रमन्ता[2] प्रत्यक्षादीनि, शब्दस्तु क्रस्यते इत्यत आह—नापि शब्दः। कुतः? विधिप्रधानत्वात्। तथापि कुतो न निमित्तविषयत्व[?]मित्यत आह—तस्य च विधेर्भावविषयत्वाद्भावशब्दश्च एयन्ताद्भवतेरजित्यचि व्युत्पत्तेर्भावनामाह। यद्युच्येत भवतु भावनाविषयो विधिस्तत्संबन्धात्तु निमित्तमपि गोचरयन् तत्र शब्दः प्रमाणयिष्यतीत्यत आह—तस्य चांशत्रयाऽतिरेकात्। भावनासम्बन्धे सिद्धे निमित्तस्य चोदनार्थत्वम्, स एव तु साध्यसाधनेतिकर्तव्यताऽतिरेकादसिद्ध इत्यर्थः।

कथं चास्येति विभजते—तत्र निमित्ते विधीयमानस्य कर्मणः फले नित्यसमीहिते विधानात्तत्र फले विधौ निमित्ते विधानादित्यनुषङ्गः। उभयविधौ तूभयस्मिन् फले निमित्ते च कर्मविधौ वाक्यभेद इति। इतिश्चाऽऽक्षेपपरिसमाप्तौ।

एवमाक्षिप्योत्तरतयोत्तरार्धं कारिकाया अवतारयति—उच्यते। यत्र जाते कर्मणोऽवश्यकर्तव्यता तन्निमित्तम्। जाते इत्य-

१ विशेषणात स्यान्निमित्तभावः २ पु पा।
२ नाम क्रमत १ पु प।

**मित्तम् । कथम्? यस्मिन् सति भवत्येव स हेतुर्मुख्यः, इतरस्तु भक्तया । तदवस्थाभेदसम्बन्धात् । गौणमुख्ययोश्च**

नुपादेयतां निमित्तभावोपयोगिनीं सूचयति । कर्त्तव्यतायां निमित्तमित्याह कर्मणा कर्त्तव्यतेति । यस्मिन् सति भवत्येव न न भवति तन्निमित्तमित्यवश्यग्रहणेन दर्शयति । एवं च वदता कर्त्तव्यतारूपविधिविशेषणतया निमित्त मवबध्यतइति वाक्यार्थोऽन्वयप्रकारो ऽपि निमित्तस्यार्थात्सूचित इति । पूर्वोक्तानि प्रायेण पृच्छति—कथम्? उत्तरम्—यस्मिन् सति भवत्येव स हेतुर्मुख्यः । ननु कार्यमकुर्वाणो सत्येव नाऽसतीति विवक्षित्वा हेतुशब्द लौकिका प्रयुञ्जते, तत्र कथमसौ मुख्यो हेतु? रित्यत आह—इतरस्तु भक्त्या लक्षणया । सत्यमकुर्वत्यपि कार्यं धूमादिलक्षण वह्न्यादौ हेतुशब्दः प्रयुज्यते । न त्वेतावता ऽसौ मुख्योऽर्थः । न खल्वय हेतुशब्दो यद्यत् कार्यं जनयति तत्र सर्वत्र विशेषेण प्रवर्त्तमानो जनयति प्रवर्त्तितुमर्हति । न जातु दण्डविशेषणाऽधीनप्रवृत्ति दण्डिपदं दण्डविरहिणि चैत्रादौ वर्त्तते जनयतीति स एवोच्यते यस्मिन् सति कार्यं भवत्येव न तु यस्मिन्सत्येव तद्धि करोति न करोति च । करण चोपाधिः प्रवृत्तौ हेतुशब्दस्य कथ? यत् करिष्यत्यकार्षीद्वा न तत्र हेतुशब्द. प्रवर्त्तते, अवर्त्तमानस्योपाधेरसत्त्वात् । असतश्च प्रवृत्तिनिमित्तत्वे ऽतिप्रसङ्गात् । तस्माद्यस्मिन् सति भवत्येवेति तत्राऽय निमित्तशब्दो मुख्यो भाक्त इतरत्रेति साम्प्रतम् । लक्षणायां बीजमाह—तदवस्थाभेदसम्बन्धात् । बीजादय एव हि परस्परसमवधानसमासादिताऽवस्थाविशेषा नियमेन कार्यशालिनः । यदाहुर्बाह्या अपि "न कि चिदेकमेकस्मात्सामग्र्या[1] सर्वसम्भव" इति । तस्मादवस्थाविशेषा वा[2] ऽवस्थाविशेषशालिनो वा निमित्तपदाऽभिधेया. । यत्र तु सो ऽवस्थाविशेषो न वर्त्तमानस्तत्र सो ऽभूद्भविष्यति वेति कथ चिदवस्थाभेदसंबन्धाल्लाक्षणिक

१ सामग्र्यात ग पु पा० । २ अवस्थाविशेषा वा इति नास्ति ग पु ।

मुख्ये संप्रत्यय इत्यावश्यकसिद्धिः । तन्निमित्तसामर्थ्या-देव । निमित्तमेव हि तन्न स्याद् यस्मिन् सति न क्रियेत ।

अवश्यकर्त्तव्यता च कर्म्मणः प्रतीता नोपसंहार्य्यं-निखिलाङ्गस्य कल्पते, न कदा चिदहितोपायस्येत्यतो यथा-शक्त्यङ्गसमवेतं सदा समभिलषितोपायं कर्म्मेति गम्यते । निमित्तता च कर्त्तव्यतायाः विधिरूपायाः । तस्मिन् सति

इत्यर्थः । ननु भवतु भाक्तः, तथापि स एव हेतुः किमिति नेत्यत आह—गौणमुख्ययोश्च मुख्ये संप्रत्यय इति । तस्मादावश्यकसिद्धिः कर्तव्यतायाः । कुतः ? निमित्तसामर्थ्यादेव । सामर्थ्यमेव व्यतिरेकमुखेन दर्शयति—निमित्तमेव हि तन्न स्याद् यस्मिन् सति न क्रियेत । ततश्च सिद्धः सर्वाङ्गोपसंहारविरोधान्नैमित्तिके यथाशक्तिप्रयोगः । सदा समीहितोपायता चेत्याह—अवश्यकर्तव्यता च कर्मणः प्रतीता नोपसंहार्योऽखिलाङ्गस्य कल्पते । न कदा चिदहितोपायस्येत्यर्थाद्यथाशक्त्यङ्गसमवेतं सदा समभिलषितोपायं कर्म नैमित्तिकमिति गम्यते । कस्य निमित्तमिति यदुक्तं तत्रोत्तरमाह—निमित्तता च कर्तव्यतायाः फलकर्तव्यताया व्यवच्छिनत्ति विधिरूपाया इति ।

ननु तस्य नित्यत्वादित्युक्तं, तत्राह—तस्मिन्सति कुर्वतो यथा कथं चित्सदा समीहितमेन त्वयं साधयत्येव । इदमाकूतम् । सत्य कर्तृसमीहितोपायता कर्मधर्मो विधिः । स च स्वकारणादुत्पत्स्यमानस्य स्वाभाविकस्तथापि निमित्ते सत्यवश्यकर्त्तव्यत्वाद्यथा कथं चित् क्रियमाणं कर्तुः समीहितमुपात्तदुरितक्षयलक्षणं फलं साधयत्येव । एतदुक्तं भवति । निमित्ते सति स्वकारणेभ्यः कर्मोपजायमानमविकलाङ्गमितरथा कर्तुः समीहितोपायता कर्तव्यतामासादयति । नाऽसतीति भवति कर्तव्यताया कर्तृसमीहितसाधनताया विधेर्निमित्त[1]श्रवणादिति ।

१ निमित्ते २ पु पा० ।

**तत्कुर्वतो यथाकथं चित्सदा समीहितमेनःक्षयं साधयत्येव। भावव्यतिरेके ऽपि च शब्दप्रमेयत्वम। अविधेयस्यापि विधिवद्विध्यनुप्रवेशा[1]द्विधिविशेषणत्वात्। अत**

यदुक्त निमित्तभावे प्रमाणाभाव इति, तत्र शब्दव्यतिरिक्तानामभावं मृष्यामहे, न तु शब्दस्य। ननु विधिप्रधानः शब्दो विधौ तद्गोचरभावनायां तदङ्गेषु वा तत्सम्बन्धात्प्रमाणम्। न च निमित्तमेषामन्यतमं, कथ तत्र चोदनात्वेन शब्दः प्रमाणम्? इत्यत आह—भावव्यतिरेके ऽपि च चोदनाभूतशब्दप्रमेयत्व निमित्तस्येति सबन्धः। भावशब्देनांशत्रयोपेतां भावनामाह।

ननु निमित्तस्याऽनुपादेयत्वादविधेयस्य वाक्यभेद[2]प्रसङ्गाच्चाऽनुद्देश्यस्य कथ चोदनाभूतशब्दविषयत्व?मित्यत आह—अविधेयस्यापि विधिवत्। अयमभिसंधिः। नास्त्ययं नियमो यद्विधेयमेव सोद्देश्य चोदनार्थ इति। विधेरविधेयस्य चाऽनुद्देश्यस्य चाऽचोदनार्थत्वप्रसङ्गा, दपि तु यच्चोदना बोधयति निमित्तमिति विधिवत्तदपि तदर्थ। ननु विधिं विधेय वा बोधयन् शब्दश्चोदनात्वेन प्रमाण, न च निमित्त विधिर्विधेय वा, तत्कथ तत्र चोदनात्वेन शब्दः प्रमाण?मित्यत आह—विध्यनुप्रवेशात्। स एवाऽविधेयस्य कुत? इत्यत आह-विधिविशेषणत्वात्। अयमभिसंधिः। वैश्वानर द्वादशकपालकर्म्म, तत्कर्त्तव्यता पुत्रजन्मनि सत्यसति चाऽविशेषेण प्रसक्ता न चाऽवश्यभाविनी स्यात्। अनेन तु पुत्रजन्मना निमित्तेन जाते एव नाऽजाते कर्तव्यतेव नाऽकर्त्तव्यतेति व्यवस्थाप्यमाना निमित्तमविधेयमप्यनुद्देश्यमपि स्वयमनुद्देश्या वा ऽविधेया च विशेषणतया गृह्णातीति विशेषणाऽभिधाने चोपपन्नं शब्दस्य चोदनात्वमिति।

**कथ चाऽस्य नैमित्तिकसंबन्ध इति यदुक्तं तत्रोत्तरमाह—**

१ विध्यर्थानुप्रवेशात-मू पु पा। २ वाक्यार्थभेद १ पु पा।

एव चास्य कर्म्मणा सह सम्बन्धे विकल्पो ऽनवकाश इति चतुरस्रम् ।

ननु नियोज्यविशेषणं जीवनादि स्वर्गादिवन्मन्यन्ते, नियोगेन नियोज्यस्य प्रथममपेक्षितत्वात् । न ह्यनाश्रितनियोज्यविशेषो नियोगो लोके दृश्यते । तदभावे प्रति-

अत एव चास्य[1] कर्मणा सह सबन्धे विकल्पो ऽनवकाशः । यत एवाऽविधेयस्य विशेषणतया विध्यनुप्रवेशित्वेन शब्दप्रमेयतया विधिसबन्ध[2] अत एव विधेयेन कर्मणा सह निमित्तस्य सबन्धे यो विकल्प किं निमित्तोद्देशेन कर्म विधीयते, आहो स्वित्कर्मोद्देशेन निमित्तमिति, तत्र यो दोषः प्रसञ्जित स सर्वो ऽनवकाशः । विधेयसंबन्धनिबन्धनो विकल्पप्रसङ्गो नाऽविधेयसबन्धे भवितुमर्हतीत्यर्थ इति । तस्माच्चतुरस्रम् ।

यदुक्त प्रथमत एव जीविनादिर्निमित्ततया संबध्यतइति, तत्प्रत्यावस्थाता आह—ननु नियोज्यविशेषण जीवनादि स्वर्गादिवन्मन्यन्ते । न मननमात्राद्वस्तुसिद्धिरिति हेतुमुपन्यस्यति—नियोगेन नियोज्यस्य प्रथममपेक्षितत्वात् । अयमर्थः । कार्यं हि कृत्यधीनसत्त्वमननुष्ठीयमानं न तत्त्वे पर्यवस्यति, अनुष्ठानं च न कर्तारमन्तरेण, कर्तृता च नाधिकार विना, अधिकारश्च ममेद कार्यमिति बोद्धार नियोज्यमपेक्ष्य भवतीति कार्यबोद्धा नियोज्यभेदो न नियोगेन कार्येणाऽनन्यप्रयुक्ता[3]ऽनुष्ठानेनान्तरङ्गतया निमित्तान्नियोज्यस्यैव प्रथमपेक्षितत्वाद्विशेषणमन्तरेण च नियोज्यभेदाऽसिद्धेर्निमित्तस्याऽनुपादेयतया तदुपपत्तेर्नियोज्यविशेषणतयैव तावत्प्रथम सङ्गतिर्न तु निमित्ततयेति । लोके ऽपि चैतत् सिद्धमिति तत्पूर्वकत्वाद्वेदे न कथ सा सेत्स्यती? त्याशयवानाह—न ह्यनाश्रितनियोज्यविशेषो नि-

---

१ निमित्तस्य च—मू पु पा० ।
२ संबन्धनिबन्धन' ? पु० पा० ।
३ अन्याऽनायत्तप्रयुक्त० २ पु पा० ।

**पत्तिरेव न स्यात्। तद्विशेषणमेव तु स तस्मिन् सत्यधिकारान्निमित्तत्वेनाऽवतिष्ठते। स्वर्गादि तु साध्यतया काम्यत्वेन।**

**नैतत्सारम्। विशेषणाऽनुपपत्तेः। न हि यावज्जीवनं तावता विशिष्टः कश्चित्कदा चिद्वा यो नियुज्यते ना-**

योगो लोके दृश्यते। निमित्तमन्तरेण पुनर्लोके वेदे च यथायथ नियोगो दृश्यते एवेत्यर्थः। ननु नाऽदर्शनमात्राद्व्यावृत्तिरित्यत आह—तदभावे नियोज्यविशेषस्य प्रतिपत्तुरभावे प्रतिपत्तिरेव न स्यात्। तदुक्तमाचार्येण 'न हि देवदत्त यज्ञदत्त वा ऽनुद्दिश्य लिङादयः प्रवर्तन्त' इति। ननु यदि निमित्तमप्यधिकृतविशेषणं ततो निमित्तत्वेनाऽसम्बन्धान्न नैमित्तिकत्व कर्मण इति स्वसिद्धान्तव्याकोप. प्राप्त इत्यत आह—तद्विशेषणमेव तु स तस्मिन् सत्यधिकारान्निमित्तत्वेन अवतिष्ठते। जीवनादेरधिकृतविशेषणस्यापि सतस्तस्मिन् सत्यधिकारादर्थान्निमित्तत्वमस्तीति तद्योगान्नैमित्तिक कर्मेति कुतः सिद्धान्तव्याकोप इत्यर्थः। नन्वीदृश स्वर्गादेरपि निमित्तत्वमिति काम्यस्यापि नैमित्तिकत्वप्रसङ्ग इत्यत आह—स्वर्गादि तु साध्यतया काम्यत्वेनाऽवतिष्ठतइत्यनुषङ्गः। अयमभिसंधिः। सत्यप्यधिकृतविशेषणत्वे स्वर्गादेर्न निमित्तभावः। कामियोगाऽऽपादितेन साध्याभावेन विरोधान्निमित्तत्वस्य च सिद्धतया सहैकार्थसमवायनियमाद्व्यापकविरुद्धोपलब्ध्या विनिवृत्तेः। जीवनादेस्तु सिद्धत्वे निमित्तत्वमविहतमिति सिद्धः काम्यनैमित्तिकविवेक इति।

तदेकदेशिमत सिद्धान्ती दूषयति—नैतत्सारम्। कुतः? विशेषणाऽनुपपत्ते। तामेवाह—न हि यावज्जीवन तावता विशिष्ट' कश्चित्कदा चिद्वा यो नियुज्यते[1] नानावसन्तकालविशिष्टो वा। अयमिर्थः। जीवन नाम प्राणधारणमुच्यते। तत्पद चेह यावच्छब्दसमभव्याहृतं यावतां वा प्राणिना जीवनानि यावन्ति वा यावत्काल वा

१ नियोज्यते २ पु पा।

**नावसन्तकालविशिष्टो वा । न जीवनमात्रं वसन्तमात्रं वा विशेषणम् । अवाच्यत्वाज्जीवनस्य । यावद्वीप्सयोरनन्वयाच्च । न च प्राप्तयोरनुवादः । जीवतो ऽपि स्वर्गकामस्यै-**

पुस एकस्य जीवनमभिदध्यात । तत्र प्रथममध्यमयो: कल्पयोर्दूषण– न हि यावता पुसा यावन्ति वा जीवनानि सभवन्ति, जात्यभिप्राय-मेकवचनं, तावता विशिष्ट कश्चिदेक पुरुष: संभवति । तृतीयक-ल्पदूषण–कदा चिदिति । न हि कालत्रयविप्रकीर्णजीवनवानेकदा पुरुष: सभवी, सभवे व्यभिचारे वा ऽर्थवद्विशेषणम् असभवे कथ भवे? दिति नानावसन्तकालविशिष्टो वा । कदा चिदिति वाक्यान्त-रेण हि ज्योतिष्टोमस्य कालसबन्धे विहिते वसन्ते ज्योतिषा यजेतेति निमित्तार्था श्रुतिरित्याशय. । अथोच्येत न यावद्वीप्से अधिकृतविशे-षणे अपि तु जीवनवसन्तौ, तयोश्चाऽस्ति सभव इत्यत आह–न जीवनमात्र वा वसन्तमात्र वा विशेषणम् । तत्र जीवनमात्रस्याऽवि-शेषणत्वे हेतुमाह–अवाच्यत्वाज्जीवनस्य । सत्यमस्ति सभवो न तु व्यभिचार. । नो खल्वजीवतो नियोज्यता संभवति, या जीवनेन व्यवच्छिद्येत, ततश्चास्य व्यवच्छेद्याऽभावाद्विशेषणत्वेनाऽवाच्यत्व जीवनस्येत्यर्थ: । जीवनवसन्तसाधारण च हेत्वन्तर समुच्चिनोति– यावद्वीप्सयोरनन्वयाच्चैकपुरुषसबन्धितया एकदा ऽधस्तादसभव उक्त: ततो ऽनन्वयाद्यावद्वीप्सयो. प्रमत्तगीतत्वप्रसङ्गादित्यर्थ. ।

स्यादेतत् । यद्यपि शाब्दमधिकृतविशेषणत्व जीवनवसन्तयो: तथाप्यार्थं निमित्तत्वमप्यस्ति । यदा यदा निमित्तसद्भावस्तदा तदा भाव्य नैमित्तिकेनेति प्राप्तावेव यावद्वीप्सार्थावनूद्येते इति कुतो ऽनन्वय? इत्यत आह–न च प्राप्तयोरनुवाद: । कुत: ? जीवतो ऽपि स्वर्गकामस्यैवाऽधिकारे यदा शक्नुयादित्युपबन्धात् । नन्वार्थेनापि निमित्तत्वेनाऽवश्यकर्तव्यताप्रतीतेर्यदा शक्नुयादित्युप-

वाऽधिकारे यदा शक्नुयादित्युपबन्धाद्विरोधाऽभावात् । क्रमपर्यन्ताऽपेक्षित्वान्नियोगस्य नाऽङ्गहानम् । तस्माद्यावद्वीप्साथाऽनन्वयाद्यथा न कर्तृविशेषणं जीवनमवाच्यत्वात्, वसन्ते वसन्ते इति च न कालार्थसंयोगस्तथा नाऽधिकारविशेषणे अपि । अतो निमित्तमेव तन्निमित्तम् । तथा हि-तयोरनन्वयः । निमित्तमेव हि तन्न स्याद्यदि तस्मि-

बन्धो विरोधादनुपपन्न इत्यत आह—विरोधाऽभावात् । एतदुक्तं भवति । अधिकारिविशेषणदशायां तावज्जीवनादीनां यदेत्युपबन्धेन न विरोधो ऽस्ति, यदि परमार्थेन निमित्तभावेन वक्तव्यः । स च नित्यवदाम्नातनानाङ्गोपदेश[1]बललब्धनिखिलाङ्गोपसंहारसामर्थ्य[2]विरोधात् आत्मानमेव तावदासादयितुं नार्हति किमङ्ग पुनर्विरोधम्? अतस्तदनुगुणतया व्यवतिष्ठते । न चाऽधिकारवाक्यविरोधः । न हि तन्निमित्तश्रुत्यनपेक्षमवश्यकर्तव्यतामवगमयति । न च तामन्तरेण नोपपद्यते येनादावेवं कल्पयेत् । तस्माद्विरोधाऽभावात्क्रमपर्यन्ताऽपेक्षित्वमप्रतिहतं नियोगस्येति यदा शक्नुयादित्युपबन्धान्नाङ्गहानम् । तदिदमुक्तं—क्रमपर्यन्तापेक्षित्वान्नियोगस्य नाङ्गहानम् ।

अपि च । त्वया ऽप्येतदवश्याङ्गीकरणीयमित्युपसंहारमुखेनाह—तस्माद्यावद्वीप्सार्थाऽनन्वयाद्यथा न कर्तृविशेषणं जीवनमवाच्यत्वात् वसन्ते वसन्ते इति च न कालार्थसंयोगस्तथा नाऽधिकारविशेषणे अपि । यथा जीवनं तत्रापि न कर्तृविशेषणं यावच्छब्दाऽनन्वयाद्धावच्छेदव्याऽभावेनाऽवाच्यत्वाच्च तथा वसन्ते वसन्ते इति न कार्यः संयोगः, वीप्साया अनन्वयादित्यर्थः ।

स्वमतमुपसंहरति—अतो निमित्तमेव निमित्तं नाऽधिकारिविशेषणं प्रथममित्यर्थः । कस्मात्? तथा हि । तयोर्यावद्वीप्सयोरन-

१ आम्नातमङ्गोपदेश० २ पु पा ।
२ सामर्थ्यम २ पु० पा० ।

न्सति न क्रियेत । निमित्तवांश्च नियोगो यस्य तस्येत्यधिकारिविशेषसिद्धेर्नाऽप्रतिपत्तिः । तेन निमित्तं सदधिकारिविशेषणं नाऽधिकारिविशेषणं सन्निमित्तम् । शाब्दत्वाच्च निमित्तभावस्य । लिङादयो हि 'दहेद्भिन्ने आरभमाण' इति तत्र तत्र स्मृतेस्तदभिदधति । तत्र शब्दार्थं परित्यज्याऽन्य-

न्वयः । कस्मात्पुनर्निमित्तत्वे सत्यनन्वय ? इत्यत आह—निमित्तमेव हि तन्न स्याद्यस्मिन्सति न क्रियेतेति । उक्तमेतत्प्राक् । ननूक्तं नियोगेन नियोज्यस्य प्रथममपेक्षणादिति, तत्राह—निमित्तवांश्च नियोगो यस्य पुंसस्तन्निमित्तमस्ति तस्य कर्मकर्तव्यतेत्यधिकारिविशेषणसिद्धेर्नाऽप्रतिपत्तिः । अस्ति तावन्न प्रथममित्युपरिष्टादिहैव वक्ष्यामः । निमित्तश्रुतेरेवार्थादधिकारविशेषणलाभ इति प्रतिपत्तिप्रतिलम्भान्नाऽप्रतिपत्तिः कर्तव्यतायाः इत्यर्थः । तेनैतदुक्तं भवतीत्याह—तेन निमित्तं प्रथममवगतं सदधिकारिविशेषणं नाऽधिकारिविशेषणं प्रथममवगतं सदर्थान्निमित्तमिति ।

ननु यावज्जीवकाम्ययोरनन्वयाज्जीवनवसन्तयोरस्तु निमित्तभावः, न तु गृहदाहादिष्वेतदस्ति प्रमाणमित्यत आह—शाब्दत्वाच्च निमित्तभावस्य । श्रुतिरेव मूलं निमित्तत्वाऽवगम्यस्य, सौकर्यमात्रेण तु यावज्जीवे अप्युपन्यस्ते इत्याशयः । शाब्दत्वं दर्शयति—लिङादयो हि 'दहेद्भिन्ने आरभमाण' इति तत्र निमित्तस्मृतेस्तन्निमित्तमभिदधति । दहेदिति लिङ्, भिन्ने इति निमित्तसप्तमी । दर्शपूर्णमासावारभमाण इति लक्षणहेत्वो' क्रियाया इति हेतौ लकारः । यावज्जीवमित्यत्रापि यावति विन्दजीवोरिति णमुल्प्रत्ययो यद्यपि साक्षान्निमित्ते स्मृतस्तथापि समानकर्तृकधात्वर्थान्तरसम्बन्धे स्मरणाज्जीवनस्य होमादिधात्वर्थान्तरसम्बन्धमाह । न चासौ निमित्तनैमित्तिकभावादन्य इति णमुलो निमित्तभावः । तथापि किमिति नाऽधिकरणविशेषणपरता निमित्तशब्दस्य ? । न खल्वभिधीयमानप-

**परः[1] शब्दसामर्थ्यात्तत्पर इतरो ऽर्थादिति शब्दवृत्त्यनुसारो ऽन्याय्यः[2] । यथा च निमित्तं सदधिकारिविशेषणमेवं फलं सदधिकारिविशेषणं नाऽधिकारिविशेषणं सत् फलमित्युक्तं भावनाविवेके ।**

एतैव सर्वेत्यत आह—तत्र शब्दार्थनिमित्तभाव परित्यज्याऽन्यपर-शब्दार्थभूताऽधिकारिविशेषणपरो निमित्तशब्दः, स च शब्दार्थभूतो निमित्तभावो ऽर्थादनेनायुक्तपक्षीकारो दर्शितः ।

युक्तपरित्याग दर्शयति—न पुनस्तत्पर. शब्दार्थभूतनिमित्तभावपर' । अधिकारिविशेषणपरस्त्वर्थादिति । अनेन प्रकारेण शब्दवृत्त्यनुसारो ऽन्याय्यतया ऽनर्ह इत्यर्थ । क्व चित्पाठः—तत्र शब्दार्थं परित्यज्याऽन्यपरः शब्दसामर्थ्यात्तत्पर इतरो ऽर्थादिति । तस्यार्थः । विमर्श एव विमृश्यते—किं शब्दार्थनिमित्तभावं परित्यज्याऽन्यपरो ऽधिकारिविशेषपरः सामर्थ्यात्तु तत्परो निमित्तपर उताऽधिकारविशेषो ऽर्थान्निमित्तपरस्तु शब्द ? इति विमृश्य निमित्तमवधारयति—शब्दवृत्त्यनुसारो न्याय्यः । नाभिधेयपरत्वे सम्भवत्यन्यपरता न्याय्या । अभिधेयता च निमित्तस्य वर्णिता । तस्मान्निमित्तपरतैव साध्वीत्यर्थः । नन्वेव सति स्वर्गकामपदमधिकारिविशेषणप्रतिपादनपर प्रसज्येत, न ह्येतद्भाव्यतया स्वर्गं बोधयति, अपि तु पुरुषविशेषणतयेत्यत आह—यथा च निमित्त सदधिकारिविशेषणमेव फल सदधिकारिविशेषण नाधिकारिविशेषण सत् फलमित्युक्त भावनाविवेके । भावना हि कस्य चिदुत्पादना, तेनासावपि किं चिदुत्पाद्य भाव्यमन्तरेणाशक्या निरूपयितुम् । न च समानपदोपात्तं धात्वर्थं भाव्यतया स्वीकर्तुमर्हति । विध्यापादितत्वेन पुरुषार्थभाव्यापेक्षणात् । धात्वर्थस्य च दुःखतया तद्विपरीत्यात्ततः प्रच्याविता प्रथमतरमपे-

१ अनन्यपर'—मू पु' पा' ।

२ क्वाचित्को ऽय 'पाठ इति टीकाकारः । तन्मतेन सार्वत्रिकः पाठः—"तत्र शब्दार्थं परित्यज्याऽन्यपर' शब्द' स च शब्दार्थभूतो न पुनस्तत्पर. । इतरो ऽर्थात् इति शब्दवृत्त्यनुसारो ऽन्याय्यः" इति प्रतिभाति ।

ॐ नमः श्रीरामाय ।



[1]जयति रघुवंशतिलकः कौशल्यानन्दिवर्द्धनो रामः ।
दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः ॥
[2]यत्र यत्र रघुनाथकीर्तनं तत्र तत्र शिरसा कृताञ्जलिम् ।
वाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥
[3]नमस्तस्मै मुनीशाय श्रीयुताय महात्मने ।
सर्वज्ञानाधिवासाय वाल्मीकये नमोनमः ॥
कृत्वा पापसहस्राणि महापातकजान्यपि ।
मुच्यते सर्वपापेभ्यो राम रामेति कीर्तनात्



तपःस्वाध्याय[4]निरतस्तपस्वी वाग्विदांवरम्[5] ।
नारदं परिपप्रच्छ वाल्मीकि[6]र्मुनिसत्तमः ॥ १ ॥
[7]कोन्वस्मिन् प्रथितो लोके सद्गुणैर्गुणिसत्तमः ।
धर्म्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढ़व्रतः ॥ २ ॥
[8]उदाराचारसम्पन्नः सर्वभूतहिते रतः ।

---

1 G 2nd Śloka of Mangalácharana B 14th Śloka of Mangalácharana in the Commentary Rámáyana Tilaka, having कोशल्या हृदयनन्दनो for कौशल्यानन्दिवर्द्धनो । 2 V. 9th Śloka of लव कुशयोर्मङ्गलस्तवः in the Commentary 3 G Sl 3 of Mangalá charana. 4. B निरतं 5. G वाग्विदा वर· 6 B मुनिपुङ्गव । 7 G. begins with कोह्यस्मिन् , while B. reads कोन्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान् for this line 8 B 3 चारित्रेण च को युक्तः सर्वभूतेषु को

वीर्यवांश्च वदान्यश्च कश्चापि प्रियदर्शनः ॥ ३ ॥
[1]जितक्रोधो महान् कश्च धृतिमान् कोऽनसूयकः ।
सञ्जातरोषात् कस्माच्च देवता अपि बिभ्यति ॥ ४ ॥
[2]क उदारः समर्थश्च त्रैलोक्यस्यापि रक्षणे ।
कः प्रजानुग्रहरतः को निधिर्गुणसम्पदाम् ॥ ५ ॥
समग्रा रूपिणी लक्ष्मीः कमेकं संश्रिता नरं ।
अनिलानलसूर्येन्दुशक्रोपेन्द्रसमश्चकः ॥ ६ ॥
[3]एतदिच्छाम्यहं श्रोतुं त्वत्तो नारद तत्त्वतः ।
देवर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरं ॥ ७ ॥
[4]कालत्रयज्ञस्तच्छ्रुत्वा वाल्मीकेर्नारदो वचः ।
श्रूयतामित्युपामन्त्र्य तमृषिं प्रत्यभाषत ॥ ८ ॥
बहवो दुर्लभाश्चैव [5]त्वयैते कीर्तिता गुणाः ।
[6]एकस्मिन् हि नृलोके वै गुणा एते सुदुर्लभाः ॥ ९ ॥
[7]देवेष्वपि न पश्यामि कञ्चिदेभिर्गुणैर्युतं ।
किन्तु वक्ष्याम्यहं तुभ्यं भविष्यति महायशाः ॥ १० ॥

---

हित । विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शन । 1 B 4 आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयक । कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे । 2 Sl 5 & 6 are wanting in B 3 B 5 reads एतदिच्छाम्यहं श्रोतु पर कौतूहल हि मे for this line, and, महर्षे for देवर्षे in the next line 4 B 6 श्रुत्वा चैतत्त्रिलोकज्ञो for half the first line and—प्रहृष्टो वाक्यमब्रवीत् for the 2nd half of the next line 5 B 7 येत्वया । 6 G has एकेन for एकस्मिन्, B 7 reads मुने वक्ष्याम्यहं बुध्वा तैर्युक्त श्रूयतां नर for this line 7 Sl 10 and 11 are wanting in B, G makes one Śloka of the two, with the 1st line of 10 and the last line of 11

एतैरप्यधिकैश्चैव गुणैर्युक्तो महामनाः ।
श्रूयतां तु गुणैरेभिर्यो युक्तो नरचन्द्रमाः ॥ ११ ॥
[1]इक्ष्वाकुवंशप्रभवो रामनामा गुणाकरः ।
एतैरभ्यधिकैश्चैव गुणैर्युक्तो महाद्युतिः ॥ १२ ॥
[2]संयतात्मा महात्मा च धृतिमान् द्युतिमान् वशी ।
बुद्धिमान्नीतिमान्वाग्मी श्रीमान् शत्रुनिवर्हणः ॥१३॥
विपुलांशो महाबाहुः कम्बुग्रीवो महाहनुः ।
[3]महेष्वासो महातेजा गूढजत्रुररिन्दमः ॥ १४ ॥
[4]आजानुबाहुः सुशिरा बलवान् सत्यविक्रमः ।
समस्समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ॥ १५ ॥
[5]विशालाक्षः पीनवक्षा लक्ष्मीवान् शुभलक्षणः ।
धर्म्मज्ञः सत्यसन्धश्च जितक्रोधो जितेन्द्रियः ॥ १६॥
[6]मनस्वी ज्ञानसम्पन्नः शुचिर्वीर्यसमन्वितः ।
रक्षिता सर्वलोकस्य धर्म्मस्य परिरक्षिता ॥ १७ ॥

1 G has रामोनाम for रामनामा B has जनै॰ श्रुत॰ for गुणाकर॰, and नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी for the 2nd line which agrees more with the 1st line of Sl 13 2 G 12 has ऋद्धिमान् for नीतिमान B line 1 of Sl 9 3 B line 1 of Sl 10 महोरस्को महेष्वासो for the first two words, G 13 दृढजानु for गूढजत्रु॰ 4 सुमुखो for सुशिरा in marginal note—which agrees with the reading in G 14 and B 10 line 2,—the latter has सुललाट॰ सुविक्रम॰ for बलवान सत्यविक्रम 5 B, 11 पीनवक्षा विशालाक्षो, and 12 प्रजाना च हिते रत for जितक्रोधो जितेन्द्रियः । 6 B 12 यशस्वी for मनस्वी, वश्यः समाधिमान् for वीर्यसमन्वित॰, B 13 1 1 reads प्रजापतिसम श्रीमान धाता रिपुनिषूदनः before the 2 lines here, and has जीवलोकस्य for सर्वलोकस्य in 1 2

[1]सर्ववेदाङ्गविच्चैव सर्वशास्त्रविशारदः ।
सर्वशास्त्रार्थतत्त्वज्ञो नीतिमान् प्रतिभानुमान् ॥ १८ ॥
[2]सर्वलोकप्रियः साधुरदीनात्मा बहुश्रुतः ।
सर्वदाभिप्लुतः सद्भिः समुद्र इव सिन्धुभिः ॥ १९ ॥
[3]स सत्यः स समः सौम्यः स चैकः प्रियदर्शनः ।
रामः सर्वगुणोपेतः कौशल्यानन्दिवर्धनः ॥ २० ॥
[4]समुद्र इव गाम्भीर्ये स्थैर्ये च हिमवानिव ।
विष्णुना सदृशो वीर्ये सोमवत् प्रियदर्शनः ॥ २१ ॥
[5]कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ।
धनदस्य समस्त्यागे सत्येऽप्यनुपमः सदा ॥ २२ ॥
[6]रञ्जयामास सगुणैरुदारैस्तैरिमाः प्रजाः ।
यस्मादतो राम इति नामैतत्तस्य विश्रुतम् ॥ २३ ॥
[7]तमेवं गुणसम्पन्नं रामं सत्यपराक्रमम् ।
ज्येष्ठं श्रेष्ठैर्गुणैर्युक्तं पिता दशरथः सुतम् ॥ २४ ॥

---

1 G 17 has वेदवेदाङ्गवित् for the first word—and प्रथितो भुवि for प्रतिभानुमान् । B has रक्षिता स्वस्य धर्म्मस्य स्वजनस्य च रक्षिता । वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः । (14),—सर्वशास्त्रार्थतत्त्वज्ञ स्मृतिमान् प्रतिभानवान् । (S 15 1 1) 2 B 15 and 16 विचक्षण for बहुश्रुत॰, and अभिगत॰ for अभिप्लुतः । 3 B 16 & 17 आर्य सर्वसमश्चैव सदैवप्रियदर्शन । स च कौशल्यानन्दवर्धन॰ । 4 B 17 & 18 धैर्येण for स्थैर्येण । 5. B 18 & 19 धनदेन for धनदस्य and सत्येधर्म्मइवापरः for सत्येप्यनुपमः सदा । 6. G 22 रमयत्येव for रञ्जयामास This Sl is wanting in B. 7 B, 19 & 20 ज्येष्ठगुणैः for श्रेष्ठैर्गुणै॰, and प्रियं in place of पिता ।

[1]यौवराज्येन संयोक्तुमियेष स महामतिः ।
तस्याभिषेकसम्भारं दृष्ट्वा केकयवंशजा ॥ २५ ॥
[2]पूर्वं दत्तवरा राज्ञा वरमेनमयाचत ।
विवासनञ्च रामस्य भरतस्याभिषेचनम् ॥ २६ ॥
[3]स सत्यवचनाद्राजा धर्म्मपाशेन संयतः ।
विवासयामास सुतं राजा दशरथः प्रियम् ॥ २७ ॥
[4]स जगाम वनं धीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ॥ २८ ॥
[5]तं यान्तमनुजो धीमान् भ्रातरं राममग्रजम् ।
लक्ष्मणो नाम विनयादनुवव्राजवीर्यवान् ॥ २९ ॥
[6]सर्वलक्षणसम्पन्ना भार्या चैनमनुव्रता ।
अनुवव्राज वैदेही सीतानाम शुभव्रता ॥ ३० ॥
रूपयौवनमाधुर्यशीलाचारसमन्विता ।
बभौ सानुगता रामं निशाकरमिव प्रभा ॥ ३१ ॥

1 G. 24 महाद्युति for महामति॰, B 20 has—प्रकृतीना हितैर्युक्तं प्रकृतिप्रियकाम्यया before this Śloka, then 21—यौवराज्येन सयोक्तुमैच्छ त्प्रीत्या महीपतिः। तस्याभिषेकसम्भारान्दृष्ट्वा भार्याथ केकेयी। 2 B 22 देवी in place of राज्ञा। 3 Marginal correction—राम for राजा, B 23 also reads राम। 4 G 27 and B 24 वीर. for धीर॰। 5 B 25 & 26 त व्रजन्त प्रियो भ्राता लक्ष्मणो ऽनुजगाम ह। स्नेहाद्विनयसम्पन्न सुमित्रान न्दवर्धन.। भ्रातर दयितो भ्रातु सौभ्रात्रमनुदर्शयन्। 6 Marginal reading—agreeing with G 29—नारीणामुत्तमा सती for भार्या चैनमनुव्रता। G further has पतिव्रता for शुभव्रता। For Slokas 30 and 31. B 26 28 reads—रामस्य दयिता भार्या नित्य प्राणसमाहिता। जनकस्य कुले जाता देवमा येव निर्म्मिता। सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधू.। सीताप्यनुगता राम शशिन

पौरैरनुगतो दूरं पित्रा दशरथेन च ।
शृंगवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ॥ ३२ ॥
[1]गुहमासाद्य धर्म्मात्मा निषादाधिपतिं प्रियम् ।
गुहेन सहितो रामो लक्ष्मणेन च सीतया ॥ ३३ ॥
[2]उत्ततार ततो गङ्गां वनञ्चैव विवेशह ।
प्रविश्य स महारण्यं रामो राजीवलोचनः ॥ ३४ ॥
सोऽतीत्य वनदुर्गाणि सरितश्च सरांसि च ।
चित्रकूटं ययौ शैलं भरद्वाजस्य शासनात् ॥ ३५ ॥
रम्यमावसथं तत्र कृत्वा रामः सलक्ष्मणः ।
उवास सीतया सार्धं वल्कलाजिनसंवृतः ॥ ३६ ॥
[3]वास्तुपूजां ततश्चक्रे कुसुमैः सुसमाहितः ।
देवगन्धर्वसङ्काशा न्यवसन् प्रथमं त्रयः ॥ ३७ ॥
[4]श्रीमद्भिस्तैस्त्रिभिः सार्धं चित्रकूटो रराज सः ।
अधिष्ठितो यथा मेरुः श्रीवैश्रवणशङ्करैः ॥ ३८ ॥
[5]चित्रकूटं गते रामे पुत्रशोकार्दितस्तदा ।
राजादशरथः स्वर्गमगमद्विलपन् सुतम् ॥ ३९ ॥
[6]रामप्रवासनं श्रुत्वा पितुश्च निधनं तथा ।

रोहिणी यथा । 1 Ślokas 33 & 34 are wanting in G 2 For Slokas 34 37 B 30 32 ते वनेन वनङ्गत्वा नदीस्तीर्त्वा बहूदका । चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात । रम्यमावसथ कृत्वा रममाणा वने त्रय । देवगन्धर्वसङ्काशा स्तत्र ते न्यवसन् सुख । 3 This Śloka is wanting in G 4 This Sloka is wanting in B 5 B 32 & 33 पुत्रशोकातुरस्तथ। for पुत्रशोकार्दित स्तदा । 6 G 36 गृह for बहु । This Sloka is wanting in B

भरतो विललापार्त्तो मातुकादागतो बहु ॥ ४० ॥
[1]गते तु तस्मिन् भरतो वशिष्ठप्रमुखैर्द्विजैः ।
प्रबोधितोऽपि राज्याय नैच्छद्राज्यं महायशाः ॥४१॥
[2]मृते पितरि धर्म्मात्मा राजभिः स पुरस्कृतः ।
राज्यलोभं परित्यज्य रामं द्रष्टुमुपागतः ॥ ४२ ॥
[3]अयाचद्भ्रातरं राममार्यभावपुरस्कृतः ।
गृहाण राज्यं धर्म्मात्मन्निति रामं वचोऽब्रवीत् ॥ ४३ ॥
[4]प्रसाद्यमानोऽपि यदा नैच्छद्राज्यं महायशाः ।
पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ॥ ४४ ॥
[5]निवर्तयामास तदा भरतं भरताग्रजः ।
सकाममनवाप्यैव गृहीत्वा रामपादुके ॥ ४५ ॥
[6]नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ।
गते तु भरते रामो धर्म्मपाशनियन्त्रितः ॥ ४६ ॥
[7]आशङ्कमानश्च पुनः पौरजानपदागमम् ।
रामोऽपि हित्वा तं शैलं प्रययौ दण्डकं वनम् ॥४७॥

---

1 V 33 मृते तु &c; G 37 प्रचोदितोऽपि and B 34 नियुज्यमानो for प्रबोधितोऽपि, B has महाबल for महायशा । 2 B, and G 38. राजत्वे for राजभि°, B 34 & 35 स जगाम वनं वीरो रामपादप्रसादकः ॥ गत्वा तु समहात्मानं रामं सत्यपराक्रमं । 3 The second line is wanting in G, while B 36 reads for it त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत । 4 G 39 & 40 न चैच्छत्पितुरादेशाद्राज्य रामो महायशा &c । B 36 & 37 रामोऽपि परमोदार° सुमुख° सुमहायशाः । नचैच्छत्पितुरादेशाद्राज्य रामो महाबल° &c 5 B 38 ततो for तदा, रामपादावुपस्पृश्य for गृहीत्वा रामपादुके । 6 The second line is wanting in G, B 39 has for it—गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रिय. । 7 B 40 रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ।

[1]प्रविश्य स महारण्यं रामो राजीवलोचनः ।
विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ॥ ४८ ॥
सुतीक्ष्णं चाप्यगस्त्यञ्च अगस्त्यभ्रातरं तथा ।
अगस्त्यवचनाच्चैव [2]जग्राहास्त्रं धनुस्तदा ॥ ४९ ॥
[3]लब्ध्वा स परमप्रीतस्तूणौ चाक्षय्यसायकौ ।
अतीत्य शरभङ्गञ्च अगस्त्यञ्च महामुनिम् ॥ ५० ॥
[4]सोऽभिवाद्य ययौ श्रीमाननसूयान् शुभव्रतान् ।
देशं पञ्चवटीं नाम तत्र वासमकल्पयत् ॥ ५१ ॥
वसतस्तत्र रामस्य वने वनचरैः सह ।
[5]रक्षोभ्यः कामरूपेभ्य ऋषयोऽभ्यागमन् भयात्॥५२॥
[6]रामं कमलपत्राक्षं शरण्यं शरणैषिणाम् ।
महेन्द्रमिव दुर्धर्षं बाणखड्गधनुर्धरम् ॥ ५३ ॥
[7]स तेषां प्रतिशुश्राव राक्षसानां तदा वने ।
प्रतिज्ञातस्तु रामेण वधः संयति रक्षसाम् ॥ ५४ ॥
[8]तेन तत्र सहभ्रात्रा जनस्याननिवासिनी ।

---

तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह । 1. The first line is wanting in G 2 G 44 जग्राहैन्द्र धनुस्तदा, B 42 जग्राहैन्द्र शरासन । 3 G 44 चाक्षयसायकौ for चाक्षय्य सायकौ। B 43 खड्गं च परमप्रीतस्तूनी चाक्षयसायकौ for the first line The second line is wanting in both G & B 4 G 45 देशः पञ्चवटीनाम for देश &c The first line is wanting in G, and the whole Sloka is wanting in B 5 G 46 कामरूपिभ्य for कामरूपेभ्यः, B 44 ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसा for the whole line 6 G 46 शरणैषिणा॰ for शरणैषिणाम् । This Sloka is wanting in B 7 This Śloka is wanting in G, B 45 has the line ऋषीणामग्निकल्पाना दण्डकारण्यवासिना after the reading of this Śloka 8 B 46 तत्रैव

विरूपिणी सूर्पनखा राक्षसी कामरूपिणी ॥ ५५ ॥
[1]ततःसूर्पनखावाक्यादागतान् सर्वराक्षसान् ।
खरञ्चदूषणञ्चैव रक्षस्त्रिशिरएव च ॥ ५६ ॥
[2]निजघान रणे रामो योधांस्तान्सर्वराक्षसान् ।
तेषामनुबलञ्चैव सहस्राणि चतुर्दश ॥ ५७ ॥
[3]ततो ज्ञातिवधं श्रुत्वा रक्षस्त्रैलोक्यविश्रुतम् ।
नामतो रावणो नाम कामरूपी महाबलः ॥ ५८ ॥
राक्षसाधिपतिः शूरो रावणः क्रोधमूर्च्छितः ।
सहायं वरयामास मारीचं नाम राक्षसम् ॥ ५९ ॥
वार्यमाणो [4]ऽपि बहुशो मारीचेन स रावणः ।
न विरोधो बलवता क्षमो रावण तेन ते ॥ ६० ॥
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ।
जगाम सहमारीचो [5]रामाश्रमपदं ततः ॥ ६१ ॥
तेन मायाविना दूरमपवाह्य नृपात्मजौ ।
[6]रावणो ऽन्तरमासाद्य सीतां सुरसुतोपमाम् ॥ ६२ ॥
जहार भार्यां रामस्य [7]हत्वा गृध्रं जटायुषम् ।

---

वसता for तत्र सहभ्रात्रा, B , & G 48, विरूपिता (a better reading) for विरूपिणी ।   1 B 47 उद्युक्तान for आगतान् and खर स्त्रिशिरस चैव दूषणा चैवराक्षस for the 2nd line   2. G 49 घोरास्तान for योधास्तान् । B 48 निजघान रणे रामस्तेषाञ्चैव पदानुगान् । वने तस्मिन्निवसता जनस्थाननिवासिना । 3 For this Śloka and the 1st line of the next Śloka B 49 has ततो ज्ञातिवध श्रुत्वा रावणः क्रोधमूर्च्छित. ।   4 B 50 सुबहुशो ।   5 B 52 तस्याश्रमपद तदा ।   6 This line is wanting in B   7 B 53

गृध्रन्तु निहतं दृष्ट्वा हृतां [1]भार्य्यां च दुर्लभाम् ॥ ६३ ॥
राघवः शोकसन्तप्तो विललापाकुलेन्द्रियः ।
[2]ततः स तत्र काकुत्स्थो दग्ध्वा गृध्रं जटायुषम् ॥ ६४ ॥
[3]कबन्धं ददृशे भूयो दनोः पुत्रं महाबलम् ।
[4]तं स तेनैव कोपेन कबन्धं घोरदर्शनम् ॥ ६५ ॥
निहत्य काष्ठैरदहत् स च दिव्यवपुस्तदा ।
कथयामास रामाय श्रमणां शबरीं ततः ॥ ६६ ॥
[5]शबरीं धर्म्मनिपुणामभिगच्छ रघूद्वह ।
तस्यैव वचनाद्रामो लक्ष्मणेन सहानघः ॥ ६७ ॥
अभ्यगच्छन् महातेजाः शबरीं शत्रुसूदनः ।
[6]शबरीं धर्म्मनिपुणां स निर्गम्य रघूद्वहः ॥ ६८ ॥
शबर्य्या पूजितः सम्यग्रामो दशरथात्मजः ।
पम्पातीरे हनुमता सङ्गतो वानरेणह ॥ ६९ ॥
हनुमद्वचनाच्चैव सुग्रीवेण समागतः ।
[7]सुग्रीवस्य च तत्सर्वं [8]रामो ऽशंसन्महाबलः ॥ ७० ॥

---

गृध्र हत्वा । 1 B 53 श्रुत्वा च मैथिलीम । 2 B 54 ततस्तेनैव शोकेन गृध्र दग्ध्वा जटायुष । 3 B 55 मार्गमाणो वने सीता राक्षस सन्दर्शह । कबन्ध नाम रूपेण विकृत घोरदर्शन । 4 for this line and the following Śloka, B 56 तन्निहत्य महाबाहुर्ददाह स्वर्गतश्च स । सचास्य कथयामास शबरी धर्म्मचारिणी । 5 For this Śloka and the 1st line of the next Śloka B, 57 श्रमणा धर्म्मनिपुणामभिगच्छेति राघव । सोऽभ्यगच्छन्महातेजाः शबरी शत्रुसूदन । 6 This line is wanting in both G & B 7 B 59 सुग्रीवाय &c and 8 शशद्रामो । &c.

[1]सुग्रीवस्तत्र रामस्य श्रुत्वा वाक्यं महामनाः ।
चकार सख्यं रामोऽपि सुग्रीवेण महात्मना ॥ ७१ ॥
[2]चक्रे वानरराजेन वैरानुकथनं महत् ।
रामे निवेदितं सर्वं प्रणयाद्दुःखितेन च ॥ ७२ ॥
[3]बालिनश्च बलं तत्र कथयामास वानरः ।
प्रतिज्ञातं तु रामेण तदा बालिवधं प्रति ॥ ७३ ॥
[4]राघवे बालिवीर्येण सुग्रीवः शङ्कितो ऽभवत् ।
रामो ऽसम्प्रत्ययं दृष्ट्वा सुग्रीवे वानराधिपे ॥ ७४ ॥
[5]पादेन दुन्दुभेः कायं चिक्षेप शतयोजनम् ।
बिभेद सप्ततालांश्च शरेणानतपर्वणा ॥ ७५ ॥
गिरिं रसातलं चैव जनयंस्तस्य विस्मयम् ।
ततः प्रीतमनास्तस्य कर्म्मणा तेन सोऽभवत् ॥७६॥
सुग्रीवो वानरश्रेष्ठः परं हर्षमवाप च ।

1 The second line of this Sloka is wanting in G, B 60 61 आदितस्तद्यथावृत्त सीतायाश्च विशेषत । सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानर. । चकार सख्य रामेण प्रीतश्चैवाग्निसाक्षिक । 2 B 61 62 ततो वानरराजेन वैरानुकथन प्रति । रामायावेदित सर्व &c । 3 The first line appears after the 2nd in B 62 63, G 65 प्रतिज्ञाते for प्रतिज्ञात । 4 For the first line, B 63 has सुग्रीव शङ्कितश्चासीच्चित्य वीर्येण राघवे । The second line is wanting in B, while it reads here the additional lines.— राघवप्रत्ययार्थं तु दुन्दुभे कायमुत्तम । दर्शयामास सुग्रीवो महापर्वत सन्निभ । 5 For this and the following Slokas down to the first line of 79 B 65 67 उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबल । पादाङ्गुष्ठेन चिक्षेप सम्पूर्ण दशयोजन । बिभेद च पुनः शालान्सप्तैकेन महेषुणा । गिरि रसातल चैव जनयन प्रत्यय तदा । तत. प्रीतमनास्तेन विश्वस्त स महाकपि । किष्किधा रामसहितो

ततोवानरराजेन कृत्वा सख्यं महाबलः ॥ ७७ ॥
प्रत्ययं जनयामास तदान्योऽन्यस्य वै मिथः ।
समयं तौ ततः कृत्वा नरवानरपुङ्गवौ ॥ ७८ ॥
किष्किन्ध्यां रामसुग्रीवौ जग्मतुस्तौ गुहान्तदा ।
ततोऽगर्जद्धरिवरः सुग्रीवो[1] मेघनिस्वनः ॥ ७९ ॥
[2]नर्दन्निव स सुग्रीवः पूरयामास रोदसी ।
तेन नादेन महता निर्जगाम हरीश्वरः ॥ ८० ॥
[3]अनुमान्य ततस्तारां सुग्रीवेण समागतः ।
[4]ततः सुग्रीववचनाद्धत्वा वालिनमाहवे ॥ ८१ ॥
[5]सुग्रीवायैव तद्राज्यं राघवः प्रत्यपादयत् ।
अनुज्ञातश्च रामेण किष्किन्ध्यां प्रविवेशह ॥ ८२ ॥
[6]चतुरो वार्षिकान् मासानुषित्वा समयेन तु ।
स च सर्वान्[7]समानाय्य वानरान् वानरर्षभः ॥ ८३ ॥
दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ।
ततो गृध्रस्य वचनात्सम्पातेर्हनुमान्[8]कपिः ॥ ८४ ॥
शतयोजनविस्तीर्णं पुप्लुवे[9]मकरालयम् ।

जगाम च गुहां तदा । 1 B 68 हेमपिङ्गल॰ । 2 The first line of this Śloka is wanting both in G & B, G 71 has शब्देन for नादेन in the 2nd line 3 The first line is wanting in G, B 69 has तदातारां for ततस्तारां, and reads another line between this and the next — निजघान च तत्रैन शरेणैकेन राघवः । 4 G 72 has तत्र for ततः । 5 B 70 सुग्रीवमेव तद्राज्ये &c The 2nd line is wanting in B 6 This line is wanting in B 7 B 71 समानीय । 8 B 72 बली । 9 B 73 लवणार्णव

[1]ततो लङ्कां समासाद्य पुरीं रावणपालिताम्॥ ८५॥
ददर्श सीतां ध्यायन्तीमशोकवनिकागताम् ।
[2]निवेद्य चाप्यभिज्ञानं प्रवृत्तिं विनिवेद्य च ॥ ८६ ॥
[3]गृहीत्वा प्रत्यभिज्ञानं मर्दयामास नैर्ऋतान् ।
पञ्चमन्त्रिसुतान् हत्वा पञ्चसेनाग्रगानपि ॥ ८७ ॥
[4]कुमारमक्षं निष्पिष्य ग्रहणं समुपागमत् ।
[5]अस्त्रादुन्मोच्य चात्मानं ज्ञात्वा पैतामहान्वरान्॥ ८८॥
[6]ममर्ष रक्षसां वीरो यन्त्रणाञ्च यदृच्छया ।
ततो दग्ध्वा पुरीं लङ्कां[7] हित्वा सीतां तु मैथिलीम् ८९ ॥
[8]भार्यां दृष्ट्वा तु रामस्य शीघ्रमायान्महाकपिः ।
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम्॥ ९० ॥
[9]निवेदयामास तदा दृष्टा सीता मयेति वै ।
ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ॥ ९१ ॥
समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ।
दर्शयामास चात्मानं[10]समुद्रो राघवस्य तु ॥ ९२ ॥
समुद्रवचनाच्चैव [11]नलः सेतुमकारयत् ।

---

1 B 73 तत्र &c 2 B 74 निवेदयित्वा &c 3 B 74—75 समाश्वास्य च वैदेहीं मर्दयामास तोरणं । पञ्चसेनाग्रगान् हत्वा सप्तमन्त्रिसुतानपि । 4 B 75 शूरमक्षं च &c 5 B 76 अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् । 6 B 76 मर्षयन् राक्षसान्वीरो यन्त्रिणस्तान्यदृच्छया । 7 G 80 पुनर्दृष्ट्वा च &c, B. 77. ऋते सीताञ्च &c 8 G 80 समाश्वास्य च वैदेहीं &c, B 77 रामाय प्रियमाख्यातुं &c 9 B 78 न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः । 10 B 80 समुद्रः सरितां पतिः । 11 B 80. नलम &c.

तेन गत्वा पुरीं लङ्कां हत्वा[1]तं राक्षसेश्वरम् ॥ ९३ ॥
[2]अभ्यषिञ्चत् स लङ्कायां राक्षसेन्द्रं विभीषणम् ।
कर्म्मणा तेन महता देवा इन्द्रपुरोगमाः ॥ ९४ ॥
सदेवर्षिगणास्तुष्टा राघवं तेऽभ्यपूजयन् ।
तथा परमसन्तुष्टैः पूजितः सर्व्वदैवतैः ॥ ९५ ॥
तामुवाच ततो रामः परुषं [3]तत्र संसदि ।
अमृष्यमाणा [4]सीतापि विवेश ज्वलनं [5]ततः ॥ ९६ ॥
[6]ततो वायुः प्रादुरासीद् वागुवाचाशरीरिणी ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात च ॥ ९७ ॥
[7]सचाग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् ।
[8]अग्रहीदमलां राम वचनाच्च गुरोस्तदा ॥ ९८ ॥
[9]कृतकृत्यस्तदा रामो विज्वरः [10]समपद्यत ।
[11]देवेभ्यः सवरान् प्राप्य रामः सीतामवाप्य च ॥ ९९ ॥
[12]पुष्पकञ्च समारुह्य नन्दिग्राम[13]मुपागतः ।

1 B 81 रावणमाहवे । 2 After Śloka 93—B 81 has the line राम. सीतामनुप्राप्य परा व्रीडामुपागमत् । Ślokas 94 & 95 are wanting in B which are necessary to make sense with the 1st line of Śl 9› here. 3 B 82 जनसंसदि. 4. G 87 त सीता &c B 82 सा सीता &c 5 B 82 सती 6 This Śloka is wanting in B 7 B 83 ततोऽग्नि &c 8 This line is wanting in B 9 Between the 1st line of Śl 98 and this line—B (83 85) reads कर्म्मणा तेन महता त्रैलोक्य सचराचरं । सदेव र्षिगणा तुष्ट राघवस्य महात्मनः । बभौ राम. सप्रहृष्ट॰ पूजित सर्व्वदैवतै । अभि षिच्य च लंकाया राक्षसेन्द्र बिभीषण । 10 B 85 प्रमुमोदह । 11 B 86 देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् । Before the next Śloka—B (86 88) reads —अयोध्या प्रस्थितो राम. पुष्पकेण सुहृद्वृत । भरद्वाजाश्रम गत्वा राम सत्यपराक्रम । भरतस्यान्तिके रामो हनूमतं व्यसर्जयत । पुनराख्यायिका जल्पन सुग्रीवसहितस्तदा । 12 B 88 पुष्पक तत्, 13. G 90 उपागमत्,

नन्दिग्रामे [1]जटाश्छित्वा भ्रातृभिः [2]सह राघवः ॥१००॥
रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ।
[3]ईजे च विविधैर्यज्ञैर्हत्वा तं लोककण्टकम् ॥ १०१ ॥
[4]सीतया सहितः श्रीमान् रेमे पुरगतः सुखी ।
पालयामास चैवेमाः पितृवन्मुदिताः प्रजाः ॥ १०२ ॥
अयोध्याधिपतिः श्रीमान् राजा दशरथात्मजः ।
[5]हृष्टः प्रमुदितो लोकस्तुष्टः पुष्टः सुधार्म्मिकः ॥ १०३ ॥
[6]निरामयो विरागश्च दुर्भिक्षायासवर्जितः ।
न पुत्रमरणं केचित्प[7]श्यन्तिस्म नराः क्वचित् ॥१०४॥
नार्यश्चाविधवा नित्यं [8]पतिशुश्रूषणे रताः ।
[9]न वातजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः॥१०५॥
[10]न चाग्निजं भयं किञ्चिद्यथा कृतयुगन्तथा ।
न तस्य [11]राज्ये विधवा नानाथस्तत्र नाबुधः ॥ १०६ ॥
[12]न जडो नैव बधिरो नैवार्त्तः प्रियया सह ।

---

B 88 ययौ तदा  1 G 91 जटा छित्वा B 89 जटा हित्वा  2 B 89 सहितोऽनघ ।  3. This line is wanting in B  4 This Śloka and the 1st line of the next Śloka is wanting in B  5 B 90 प्रहृष्टमुदितो &c  6 For विरागश्च we have विशोकश्च in G 94, B 90 has निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जित for this line  7 B 91 द्रक्ष्यन्ति पुरुषा॰ क्वचित् ।  8 B 91 भविष्यन्ति पतिव्रता॰ ।  9 B 92 नचाग्निज &c  10 B 92 93 न वातज भय किञ्चिन्नापि ज्वरकृत तथा । नचापिक्षुद भय तत्र न तस्करभय तथा ।  11 G 97 राष्ट्रे विधवा &c  12 The first line is wanting in G, B, 93 94 has for this Śloka—नगराणि च राष्ट्राणि धनधान्ययुतानि च । नित्य प्रमुदिता॰ सर्वे यथाकृतयुग तथा ।

न दुर्गतो न कृपणो न व्याध्यार्त्तो ऽभवन्नरः ॥ १०७ ॥
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ।
[1]गवांशतसहस्राणि बहूनि सहि दास्यति ॥ १०८ ॥
[2]बहून् वश्यांश्च राज्ञः स राघवो वै करिष्यति ।
चातुर्वर्ण्यञ्च लोकेऽस्मिन् [3]स्वधर्म्मे स्थापयिष्यति॥१०९॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमु[4]पास्यादौ ब्रह्मलोकं [5]गमिष्यति ॥११० ॥
स सर्वगुणसम्पन्नः श्रीमानूर्जितशासनः ।
एतत्ते सर्वमाख्यातं रामस्य चरितं महत् ॥ १११ ॥
[6]यन्मां पृच्छसि वाल्मीके राम एभिर्गुणैर्युतः ।
नारदस्य वचः श्रुत्वा वाल्मीकिरिदमब्रवीत् ॥ ११२ ॥
देवर्षे ये त्वया प्रोक्ता गुणाः पुरुषदुर्लभाः ।
तेषामेव समावायः साम्प्रतं राममाश्रितः ॥ ११३ ॥
[7]इदमाख्यानमायुष्यं यशस्यं बलवर्धनम् ।
यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ ११४ ॥
[8]इमं पठन् सदाध्यायं पुण्यश्रवणकीर्त्तनम् ।

1 B. 95 गवा कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वक । असङ्ख्येय धन दत्वा ब्राह्मणेभ्यो महायशा॰ । 2 Marginal reading and G 99 बहुवर्षाश्च राज्य स &c B 96 for this line—राजवशान् शतगुणान् स्थापयिष्यति राघवः । 3 B 96 स्वे स्वे धर्म्मे नियोक्ष्यति । 4 G 100 उपास्यासौ. B 97. उपासित्वा । 5 B 97 प्रयास्यति । 6. This Śloka is wanting in B. The second line is wanting in G 7 This, and the following Śloka are wanting in B 8. For this line B 98 has इद पवित्र पापघ्न पुण्यं वेदैश्च समित ।

कृतमुपकारं स्मारयति—बाष्पेति। एतस्याः सीतायाः नयनकमलस्यन्दिभिः नेत्रकमलपरिस्रुतैः बाष्पोत्पीडैरश्रुप्रवाहैः अनुदिनं प्रतिदिनं सिक्तः आलबालो मूलभूमिः यस्य स एवम्भूतः त्वं न किम्। तव मूले प्रतिदिनसलिलसेकं कृतवती जानकी अश्रुप्रवाहैः अतः प्रत्युपकाररूपेण अधुना त्वमपि एनां जलकणिकाभिः सिक्त्वा उज्जीवयेति भावः। मन्दाक्रान्ता वृत्तम्॥ १९॥

(११३) प्रत्याख्यातमिति। नानुष्ठितं मद्वचनमिति भावः। कृतघ्नतेति। कृतोपकारेऽपि जनेऽपकारिता। प्रकृतीति। प्रकृत्या स्वभावेनैव प्रियं वदति या सा तस्याः प्रियभाषिण्याः अनायासेन सख्यो भवन्तीति प्रसिद्धमेव।

स्वहस्तेति। स्वहस्ते कलितो धृतः तरङ्ग एव चामरः अथ च धवलकमलमेव आतपत्रं छत्रं यया सा तया तथाभूतया गोदावर्या॥

सुखस्वप्न इति। शुभसूचकः स्वप्न इति भावः।

चिन्तास्वप्न इति। यस्मिन् विषये अनवरतं चित्तं वर्तते तद्विषयकः स्वप्नो न शकुनत्वेन गृह्यते सम्प्रदायविद्भिः। अचुम्बितेति। अचुम्बितमसम्भावनीयं वनवासिनो राजचिह्नादिरूपं यदवगाहते तत्। राज्यचिह्नवद्रामचन्द्रस्य दर्शनेन भाविराज्याभिषेकः सूचितः त्रिजटयैव स्वप्ने जानक्यै इति रामायणे द्रष्टव्यम्।

यत्र खल्विति। रामचन्द्रस्य मुखमदृष्ट्वा सीतायाः क्षणमपि जीवनं न सम्भावितमासीत्। अधुना तु तद्विपरीतमेव दृश्यते इत्यसम्भावनीयमपि सम्भावनीयं भवति, मद्भागधेयविलसितेनेत्यर्थः॥

(११४) उपेक्षितेति। परित्यक्तेत्यर्थः॥ २०॥

हरेति। हरशिरःशायिनि चन्द्रे। तद्वत्पवित्रे रामे इति यावत्। अकलितेति। अकलितः अज्ञातो वृत्तान्तो रावणकृतहरणादिरूपो येन स तथाभूतः।

वाचालेनेति। वाचालेन मुखरेण नूपुररवेण पथिपरिभ्रष्टनूपुरशब्देनापि नाहं नाथस्य रामचन्द्राय कथिता ज्ञापिता। अथ वा विधे यद्विधुरं विपद्विरुद्धं बलं तस्मात्तेनापि नूपुरेण मूकत्वं प्राप्तम्।

मारुतिं प्रदर्शयन्नाह—प्राकारमिति। असीममपारं बलं यस्य स एवम्भूतः कोऽप्यज्ञातनामकः कपिप्रवीरः उच्चं प्राकारं परिखावेष्टनं विलङ्घ्य लङ्कां विशति॥ उभे सीतात्रिजटे॥ (११५) तस्य वानरस्य सम्मुखम् अक्ष इति नाम यस्य स राक्षसपतेः रावणस्य कुमारः कुपितः सन् प्रचलति तेन सह योधनायेति भावः॥ वसन्ततिलकं वृत्तम्॥ २२॥

**वेपत इति** कम्पत इत्यर्थ. ।

रावणागमनजन्यवनवेपन परामृशन्त्याह-**तुहिनकरेति** । रामचन्द्रे एव एकस्मिन् चित्त मनो यस्या॰ सा ताम तपनकुलवधूटी सूर्यकुलवधू त्वाम अनुनेतु स्वायत्तीकर्त्तुम अथ लङ्काधिनाथो रावणतुहिनकरस्य चन्द्रस्य मयूखे किरणैः दीप्त वर्धित॰ कन्दर्पदर्प कामवेगो यस्य स तथाभूत ततश्च त्यक्तलज्जः सन विपिनवीथी॰ वनवाटिकाम् एति आयाति । रामचन्द्रैकचित्तामिति रावणायासस्य वैफल्यसूचकम ॥ मालिनी वृत्तम ॥

**कन्दर्पेति ।** एतन्मम वक्ष.स्थल त्वा याचते इत्यभिसन्धि । वक्ष स्थलवर्णनव्याजेन स्वकामावस्था वर्णयति । **कन्दर्पेत्यादिना ।** कन्दर्पज्वरस्य कामवेगस्य वेदनया पीडया परिपतत् यत् बाष्पमश्रु तस्य स्रुत्या प्रवाहेण क्षालितम । पुन॰ स्वर्गस्त्रीणा ये कुचकुम्भा. तेषु य कुङ्कुमरस तस्य यत स्तेयं चौर्य तदेव योऽपराध तेनोज्ज्वलम । स्वर्नारीकुचकुङ्कुमरसाङ्कितमिति भाव. । पुन. सुरदन्तिना दिग्गजाना दन्तशिखरै कृतो य॰ उल्लेखाक योधनप्रहारकृतचिह्न तेन विख्यापित स्फूर्जन् चतुरन्तविश्वस्य दिगन्तपर्यन्तभूमण्डलस्य विजय यस्य तदेवम्भूतमित्यर्थ । शार्दूलविक्रीडित वृत्तम ॥ २४ ॥

**साध्विति ।** यत॰ प्रलापो मत्तजल्पितमनर्थक वचश्च । उभयमपि तद्रावणवाक्ये घटत एव ।

(११६) **यत्सन्तुष्टवत इति ।** सन्तुष्टवतः सन्तुष्टस्य अथ च छेदोत्सवस्य सकलशिरश्छेदनजन्यहर्षस्य छेदिनो निवारकस्य पुरभिद॰ शिवस्य पुरः अग्रे नवोद्गतशिर.श्रेण्या हरप्रसादलब्धनवीनशिर॰पङ्क्तौ नमन्त्यामपि हराग्रे प्रणतायामपि यत् शिर॰ क्रोधात् छेदोत्सवनिवारणजनितात न अनमत् नम्रमभूत् तदेतन्मे दशम शिर॰ त्वत्पादपायोजयोस्त्वच्चरणकमलयो॰ नमत् नम्रीभवत् सत् आतुर व्याकुलम अपि च अव्याज निष्कपटं यथा स्यात्तथा प्रेम तव प्रीति याचते । त्वत्सकाशादिति भाव । हेमिथिलेन्द्रपुत्रि जानकि । शार्दूलक्रीडित वृत्तम ॥ २५ **संस्कृतमाश्रित्येति** उत्तमाङ्गनाना संस्कृताश्रयणमनुमत विशिष्टस्थानेषु नाट्याचार्यैः ।

**निजे पाणाविति ।** गुञ्जन्तो मधुपा यस्मिन तत् वकुललतिकाया बालमुकुल नूतनोद्गतकुड्मल निजे स्वकीये पाणौ हस्ते कृत्वा रघुपतिर्मयोर्मम कर्णयो॰ अवतसं कर्णभूषण चक्रे । अपि तावेव इमौ कर्णौ इद वचन रावणोक्तमाकर्ण्य कथ न विशीर्णौ विदीर्णौ भवत॰ । अथ अन्तःकुटिलयोरनयो कर्णयोरिद चरित युक्त समुचितमेव । अन्तःकुटिलयोरिति कर्णपक्षे अन्त॰ अभ्यन्तरे कुटिलयो॰ चक्राकारयो । सामान्यपक्षे तु अन्त अभ्यन्तरे हृदि कुटिलयो. कपटबुद्धिमतोरित्यर्थ. । अर्थान्तरन्यास । शिखरिणी वृत्तम् ॥ २६ ॥

अपि निशाचरेति । प्रार्थनाया यो भङ्गः तेन यत लाघवं अपमान. तस्मात् स्वकीयनीचत्वात यदि न विभेषि तत्किं प्रख्यातवीर्यात् राघवादपि न विभेषि। पूर्वमाश्लेष याचमानो ऽधुना नेत्रपातमेव याचसे इति प्रार्थनाभङ्ग. ॥

काम इति । असिलताया करवाले निहितो यः एको बाहुः तस्य क्रोडया अर्दित पीडित त्रिभुवन येन स तस्य दशाननस्य मम काम· कियान् । न किमपि कर्तु समर्थ इत्यर्थ किन्तु हे सुमुखि अय रामस्त्वदर्थे नचिरात शीघ्रमेव निशितैस्तीक्ष्णै शरौघै शरसमूहै मा हन्ति । रामो न कियान्, अपि तु त्वत्प्रेमदत्तचित्त मा कामो हन्तीति वक्तव्ये भवितव्यताबलात् रामकामपदयोर्व्यत्यासो जात. । वसन्ततिलकं वृत्तम ॥ २७ ॥

यथोक्तस्यैवोत्तर जानक्याः सत्यमेतदिति ॥

तदेवेति । काम इत्यादि पद्यम । विपरीतमिति । कामराम पदव्यत्यासेनेत्यर्थ ।

तदेति । यदा रामस्त्वा निशितै शरौघैर्हनिष्यति तदैवाह त्वा द्रक्ष्यामीति भाव. ॥

(११७) समयमिति । यदा त्व मां विलोकयिष्यसीति भाव ।

मन्दोदरीमिति । अयम मन्दोदरी स्वकीया धर्मपत्नी विमुञ्चति त्यजति । त्वदर्थे इत्यत्रापि सम्बध्यते । अपि च उन्मदमुदति प्राप्त मेतद्राज्यमन्त्रैलोक्याधिपत्यमपि तव पदाब्जतले करोमि अर्पयामि । बहुना जल्पितेन वलानेन कि प्रयोजनम । हे सुमुखि त्वदर्थे स्वानि निजानि शिरास्यपि दशास्य· पुनरपि उच्छिनत्ति । यथा हरप्रसादने कृत तथैव त्वत्प्रसादनेऽपीति भावः । वसन्ततिलकं वृत्तम् ॥ २८ ॥

खद्योतेति । खद्योतस्य भासा कान्त्या पद्मिनी समुन्मीलति विकसति किम् । रामचन्द्ररूपसूर्यसमक्ष विकसन्त्यह खद्योतसदृशस्त्वदर्थे विकसिष्यामीत्याशामात्र तवेति भाव ॥

तपनेति । तपनश्च खद्योतश्च तयोः सूर्य्यखद्योतयोरिति यावत् । अन्तर भेद ।

हा जानकीति । अधुना रावणकरवालहता त्व कथ किमवस्था भवित्री भविष्यसि । दैवत विधि धिक् । तवैव विधे. दारुणो निर्दय एष पाक. परिणाम. । आः पाप पापकर्मरत राक्षसकुलाधम रावण सहूनोऽसि । अयमहं रामस्त्वा संहरामीति भाव. । हे वत्स लक्ष्मण धनुर्देहि । द्विरुक्ति सम्भ्रमसूचिका । एष कालः रावणवधस्य, यतो ऽधुना न निहतो जानकीमेव व्यापादयिष्यतीति भाव. । वसन्ततिलक वृत्तम् ॥ २९ ॥

**उदीर्णेति** । उदीर्णं स्वकोशाच्चि.स्रतः करालो भीषणश्च करवाल खड्ग' । **दशकण्ठेति** । दशकण्ठस्य मम भुजाना य आश्लेषः आलिङ्गन तदेव यत्क्षेपजमौषध तत अनुजानीहि स्वीकुरु । ममालिङ्गनस्वीकार एव त्वा मत्कृपाणपाताद्दुद्धरिष्यतीति भाव. ।

( ११८ ) **विरमेति** । हे रक्षः राक्षस अस्मादालापाद्विरम विरतो भव । मुधा बहुवल्गनेन न ते किमपि सेत्स्यतीति भाव.। यत उत्पलवत् श्यामा कान्ति' छविर्यस्य स तस्मात् एवम्भूतात रघुपतिभुजदण्डात् अथवा तथाभूतादेव निष्कृपात दारुणात तव कृपाणात् अन्यः कोपि मम कण्ठस्य सीमान प्रान्त न स्पृशति । पातय करवाल मत्कण्ठ सीम्नि नाह त्वत्कथा स्वीकरोमीति भाव. । मालिनी वृत्तम् ॥ ३० ॥

**विधिरिति** । विधिर्विधाता अकरुण निर्दय.। यतः स्फीतस्फीतं सान्द्र तम' अन्धकारो विपत्तिरूप' परिजृम्भते आपतति । विश्वं ससार जलधिसलिले समुद्रजले मग्नमिवाभाति । युगञ्च परिवर्त्तते अन्यथाभवति । पूर्वं सर्व सुखमयमासीत अधुना तत दु.खमय जात मिति भाव । यत् यस्मात्कारणात् अदयो दारुणो ऽय कृपाणक कुव लयदलस्य या स्रक् माला तस्या. य अश्लेषो मिलन तस्य यः उत्सवः आह्लाद' तस्यैवैकस्य पदे स्थाने कोमलत्वात् मालामात्रधारणयोग्ये सीताय कण्ठे पद स्वपदन्यास करोति । हरिणीवृत्तम ॥ ३१ ॥

विधेरकरुणत्व प्रदर्शयन् दृष्टान्तान्याह—**चान्द्रीमिति** । दारुणो निर्दयः सैंहिकेयो राहु. चान्द्री लेखा चन्द्रमण्डल दशनैर्दशति । दवदहनको दावानल. नव्या नवोद्गता चान्दनी वल्ली चन्दनलता दन्दहीति पुनः पुनः दहति । अपि च उन्मत्तो जनः कुवलयमयी मालिका माला आलुनीते खण्डयति । दुष्टहस्ती मत्तगज. करेण शुण्डादण्डेन नलिनी मूलादेव उन्मूलयति उत्खातयति । एवविधश्च विधिसविधाने युक्तमेव सीताकण्ठे करवालपातनमिति भाव' । मन्दाक्रान्ता वृत्तम ॥ ३२ ॥

**चन्द्रहासेति** । हे चन्द्रहास रावणकृपाण रामचन्द्रात यो विरहो वियोगदु'खं स एव य' अनलो वह्नि तस्माज्जातम् उत्पन्न तापं हर मत्प्राणघातेन मा दु खरहिता कुर्वित्यर्थ' । कुत' खड्गस्य तापहरत्वमित्याकाङ्क्षायामाह—**त्वमिति** । हि यतः त्व कान्त्या जितः अधरीकृतो मौक्तिकस्य चूर्णो येन तत् तथा भूत शीतलञ्च अम्भो जलं धारया वहसि दधासि । धारया जलवहनम तितैक्ष्ण्यसूचकम। शीतलजलवाहस्य तव युक्तमेवानलजाततापहरणमिति भाव' । स्वागता वृत्तम् ॥ ३३ ॥

**कपालपात्रमिति** । प्रागुक्तकालिकार्चनार्थं कपालस्य प्रयोजनम् ।

( ११९ ) **अशस्रति** । मोटितमित्यर्थः । **दुष्टकपेः** । हनूमत' ।

वर्त्म पथश्चरितं यस्य स कृष्णवर्त्मा तेन नाम्ना ख्यातोऽसि । कृष्ण-वर्त्मेतिनामधेयस्य कदाप्युचितं कृतचैव सम्भाव्यतइत्याशयः । पुष्पिताग्रा वृत्तम् ॥ ३७ ॥

सेति । चिरपरिचिता रामहस्तगतेत्यर्थः ।

या शैशवावधीति । शैशवाधि बाल्यावस्थामारभ्य मनोरमा मनोहरा या रामचन्द्रहस्ताङ्गुलिः तस्याः प्रणयिनी सहवर्तिनी (पक्षे प्रेयसी) अथ च सुभगा सुन्दरी सुवृत्ता च सुष्ठु वृत्त गोलक यस्याः सा (पक्षे शोभनचरित्रा) एवम्भूता सेय मणिमुद्रिका अन्या अपरा जनकराजसुता इव लङ्कां कथं उपागतवती । उत्प्रेक्षालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ३८ ॥

(१२२) अमृतमुखेति । अमृतं शुभा रामचन्द्रकुशलमयी वार्ता मुखे यस्य स तत्सम्बुद्धौ ।

निजपरिचय ददाति तारापतेरिति । अह तारापतेः सुग्रीवस्य अनुचर सेवक, रघुनन्दनस्य दूत. सन्देशहरः, मरुतो वायोः सुत., प्रथितः ख्यातो हनूमानिति नाम्ना । त्वा हन्तु करवालेन निहन्तुमुद्यतवतः दशकन्धरस्य रावणस्य करे अक्षस्य तत्कुमारस्य शिरः मयैव निभृत यथा स्यात तथा न्यस्तं प्रक्षिप्तम् ॥ वसन्ततिलक वृत्तम् ॥३९॥

विलसितमिति । चरितमित्यर्थः ।

यो बालिन इति । यः शौर्यनिधेः महावीरस्य बालिन अमित्र शत्रु, त्रैलोक्यबन्धोः सूर्यस्य च सूनुः पुत्रः रामस्य च पादाब्जतलाभिवर्ती अनुचरः । सोऽय सुग्रीवनामा कपीना वानराणा चक्रवर्ती महाराज. । इन्द्रवज्रा वृत्तम ॥ ४० ॥

रामबाणेनैवेति । निर्मितं सखित्वमिति पूर्वेण सम्बन्धः । बालिन इति । बालिने धनुरकं धनुष्क्रोड विसृजता त्यजता रामबाणेन तस्मै नाकलोकललनाना स्वर्नारीणा या कुचकेलिः सम्भोगादिः सोऽदीयत, इत्यागामिना सम्बन्धः । (१२३) अस्मै सुग्रीवाय पुनः, तारया पत्न्या सम सह वानरेन्द्रपदव्याः कपिचक्रवर्तिलाञ्छनस्य यो मणिमौलिः रत्नमुकुट सोऽदीयत । सहोक्तिदीपकयोः सङ्कर. । स्वागता वृत्तम् ॥ ४१ ॥

बहुलपक्षेति । बहुलपक्षस्य कृष्णपक्षस्य शशी चन्द्र इव दिने दिने प्रतिदिन कृशता क्षीणतामुपयाति रघुपतिः । रघुपतिखिन्नताश्रवणेन जानक्या खेद । किन्तु अस्य रामस्य अनुभावस्य प्रभावस्य वशवदा वशवर्तिनी कुवलयप्रतिमा कमलसदृशी द्युति. कान्तिः प्रविकसति विकाशिता भवति । प्रभावातिशयात्कान्तिर्म्लानिमान न वहतीत्यर्थः । 'अनुभावः प्रभावे चेत्यमर. । द्रुतविलम्बित वृत्तम ॥ ४२ ॥

रामचन्द्रविरहावस्थां सन्देशरूपेण वर्णयति हिमांशुरिति ।

हिमांशु. चन्द्रः अधुना मम चण्डांशु. सूर्य एव । तापकत्वसाम्यात । नवजलधरः नूतनमेघ दावदहनः दावानल. । सरितो नद्याः वीचो व्रात. तरङ्गसमीरः कुपितफणीना क्रुद्धसर्पाणा निश्वासपवन. । नवा नवप्रफुल्ला मल्ली पुष्पविशेष भल्ली त त्वाणशस्त्रविशेष । कुवलयवन कमलवन कुन्तवत् शक्तिवत गहन दु खदम । एव हे सुमुखि त्वद्वि प्रलेषात् इद समस्त जगत विश्व विपरीत यातम । सर्वं सुखद वस्तुजात दु खमयमस्ति ममेत्यर्थ. । विषमोऽलङ्कारः । शिखरिणी वृत्तम ॥ ४३ ॥

कस्याख्यायेति । असु त्वद्वियोगज व्यतिकर दु ख कस्य कस्मै आख्याय कथयित्वा मुक्तदु.ख किञ्चिन्निवृत्तक्लेशो भवेयम्, "शोकक्षोभे हि हृदय प्रलापैरेव धार्यते" इति भवभूत्युक्तन्यायेन । आवयो. मम तव च स्नेहस्य सार तत्त्व निभृत निश्चयेन को जानीते । न कोऽपीति भावः । अतो न कश्चिद् यस्मै त्वदु.खमाख्यास्यामीत्याशय । (१२४) हे शशधरमुखि चन्द्रमुखि प्रेमतत्त्वं एक मे मन एव जानाति । किन्त्वे तन्मम मन. त्वामेव अनुगत चिरम । अत. तदपि अत्र नास्ति यस्मै कथयिष्यामि । तत. किं करोमरेति न जानामि । मन्दा क्रान्ता वृत्तम ॥ ४४ ॥

बहलेति । बहलं बहु यथा स्यात तथा गलत पतत यच्चय्न जलमश्रु तस्य निर्झरेण प्रवाहेण पर्याकुलाऽपि आच्छन्नाऽपि मम दृष्टिः हे सुभग तव वदनमेव यः शशधर. चन्द्र तस्य लावण्यरस पातु मिच्छति । जलनिर्झरपर्याकुलाऽपि पिपासतीति विरोधाभास ॥ ४५ ॥

अपि क्षालयेति । रजनिचरस्य राक्षसस्य या दृष्टि. सैव यः पांसुः धूलि. (पांसुर्ना न द्वयो रज इत्यमरः) तेन पांसुलित धूसरि समपवित्रीकृत निजमङ्ग रघुपते रामचन्द्रस्य पदस्य यानि निर्मलानि पवित्राणि नखानि तान्येव यो रजनीकर चन्द्र तस्य ज्योत्स्ने व कान्तिरेव यत् नीर जलं तस्य निकरे समूहे क्षालय पवित्रीकुरु । हे चूडारत्न इति सम्बन्ध ॥ ४६ ॥

अकारणेति । अकारणेन प्रत्युपकारग्रहणादिकारण विनैव स्निग्ध स्नेहो मित्र तत्सम्बुद्धौ ॥

(१२५) जानकीप्रश्नोत्तररूपेण रघुवरस्यापर सन्देशमेवाह–मा ता म्येति । हे तामरसपत्रविशालनेत्रे कमलपत्रदीर्घनयने मा ताम्य खेद भज । यतो गभीरे सौमित्रिकार्मुकगुणस्य लक्ष्मणधनुर्ज्यायाः ध्वनिभि निनादैः अथ च अधीरे विगलितधैर्ये राक्षसवधूना रुदिते प्रियमर णजन्याक्रन्दने. मत्प्रवृत्तिः मद्वार्ता त्वयि विख्याप्यते । स्वमुपक्षिप्य सौमित्रिसमाश्रितवीरवृत्तिकथनेन आत्मनः शुद्धवीररस उत्तमनाय कत्व च योतितम ॥ वसन्ततिलकं वृत्तम् ॥ ४७ ॥

हनूमन्तमन्विष्यता राक्षसभटाना नेपथ्योक्ति. । हत्वेति । राज

कुमारं राक्षसतनयमक्ष कथञ्चिदपि येन केन प्रकारेण हत्वा कुत्र पलायितोऽसि रे वानरेषु अपसद नीच । ननु दर्पेण वीर्येण । उद्धतः धनुर्हस्तः मेघनादः दशाननस्य स्वपितुः शासनेन आज्ञया हन्तुमिच्छति । अत. प्रदर्शय आत्मान यदि वीरोऽसीति भाव. । वसन्ततिलक वृत्तम ॥ ४८ ॥

**अलमिति** । आत्मनोऽपलापेन अलम् । नातः परं गोपयिष्यास्यात्मान राक्षसेभ्य इति भाव ।

**आपृच्छ्यस इति** । गमनायेति शेषः ।

हनूमतश्चरितानि खेचरीभूय वर्णयन्त्याह त्रिजटा—**बाणौघानिति** । एष वीरो हनूमान् मेघनादेन रुषा सक्रोधं मुक्तान् बाणौघान् कलयति सहते अक्लेशेनेत्याशय । अनेन सीतादीना हर्षः । पुन॰ अय हनूमान राक्षसेन मेघनादेन बद्ध पाशबद्ध॰ कृतः अथ च ज्वलन्त्या अनलशिखया दीप्तः प्रज्वालित पुच्छो यस्य स तथाभूत॰ कृत ।(१२६) पुन क्रामन इतस्ततो भ्रमन् अट्टालिकाना प्रासादशिखराणामुपरि कृतपदः कृतावस्थितिः सन् एष हनूमान लङ्का दन्दहीति नि.शेष दहति । हनूमत्पराक्रमेण हर्षो लङ्कादहनेन विषादश्च सर्वासाम । पुनः आक्रान्त. आखिचः अय हनूमान् पयोधे॰ समुद्रस्य पयसि जले स्वाङ्गलग्न कृशानुं वह्निं शमयति निर्वापयति । स्रग्धरा वृत्तम ॥ ४९ ॥

**वेलाद्रेरिति** । हेलया अनायासेन यदाक्रमण तदर्थं परिणतो वृद्धि गतोऽय हनूमान् अस्य निकटस्थितस्य वेलाद्रेः समुद्रकूलस्थपर्वतस्य तुङ्गमुच्चतं शृङ्गं शिखरमाक्रम्य अम्बुराशि समुद्र लङ्घयति । यथा द्युमणि. सूर्य. पूर्वाचलस्य मौलिमाक्रम्य नभ आकाश लङ्घयति तथैव । कथम्भूतोऽसौ हनूमानित्यपेक्षायामाह—वेगेति । वेगेन गमनजवेन प्रोद्भूत. उत्पन्नो यः वात. वायु॰ तेन प्रतिहतमुच्छलित यत् सलिल समुद्रजल तेन उन्मुक्तः त्यक्तो यो गम्भीरगर्भ गभीरजलोदर तत्र व्यक्तीभूतः य उरगेन्द्र वासुकिः तेन कृत यत् स्तुतिशतं वीर्यप्रशंसन तेन विकसन्ती प्रकाशमाना या कीर्ति. यशः सैव हारो यस्य स तथाभूत हनूमान् लंघयतीत्यभिसन्धिः । उपमोत्प्रेक्षयोः सङ्कर. ॥ स्रग्धरा वृत्तम् ॥ ५० ॥

**प्रतीक्षस्वेति** । आलिगनेन दर्शनेन चेति शेषः ।

**निजविक्रमेति** । स्वयमागत्य हनूमान् सीताप्रवृत्तिमात्रमेवास्मान् कथयिष्यति न तु स्वपराक्रमचरितानि । अनेनेन्द्रजालेन तु सर्वमवगतमस्माभिरिति भावः ॥

**(१२७) दर्पोद्धतमिति** । दर्पोद्धत मदोन्मत दधिमुखं मधुवनरक्षक तरसा वेगेन (रंहस्तरसी तु रय॰ स्यदः जव इत्यमर॰) निपीड्य निहत्य मधुवने स्वरस यथेष्ट यथा स्यात् तथा मधूनि च चिर चिरकालप

र्यन्त पीत्वा भवत पदपद्मलीलां पदकमलशोभा दृष्ट्वा नीलाङ्गदप्रभृतिभिः वानरभटैः सहितो हनूमान् अयम एति आगच्छति । वसन्ततिलक वृत्तम् ॥ एतन्नेन्द्रजालाङ्ग किन्तु यथार्थमेव लङ्कायाः प्रत्यागतस्य यथोक्तचरितस्य हनूमतः आगमन रामसन्निधाविति ज्ञेयम॥५१॥

इति महामहिमदिगन्तविख्यातकीर्तिमहाराजश्रीलक्ष्मीश्वरसिंहपादोपजीविना मैथिलश्रोत्रियकुलावतंसश्रीतीर्थनाथशर्मतनूजन्मना श्रीगङ्गानाथेन निर्मितायां प्रसन्नराघवव्याख्यायां भावार्थबोधिन्यां षष्ठोङ्कः ॥ ६ ॥



# प्रसन्नराघवनाटकटीकायाम्

## भावबोधिन्याम्

### सप्तमोऽङ्कः ।

अपरिशीलितेति । अपरिशीलिता अपरिचिता' सन्निवेशा भूविभागा यस्य स तथाभूत' ॥ तस्येति । विभीषणस्य । परिचारक इति । अनुचरो भृत्य इत्यर्थ. ।

समीहितमिति । इष्टमित्यर्थः ।

वाचितमिति । पठितमित्यर्थः ।

(१२८) उदर्केति । उदर्के उत्तरे फले ( उदर्क फलमुत्तरमित्यमर ) परिणामे इति यावत भूतिम् ऐश्वर्यम इच्छद्भि. कान्तद्भि सद्भि. सज्जनै परस्त्रियो भालपट्टिका चतुर्थीचन्द्रलेखा इव न दृश्यते । चतुर्थीचन्द्रसाम्यञ्च द्विधा–आकृत्या गुणेन च । यथा भाद्रशुक्लचतुर्थीचन्द्रमशुभभिया परिहरन्ति सन्त तथैव परस्त्रीभालपट्टिका चेत्यर्थ

प्रभुविज्ञप्तीति । यदि स्पष्ट सीताहरणान्निवारयेत्प्रभु तदा अस्य क्रोधो भवेदिति विचिन्त्य विभीषणेन कौतुकपातितपत्रद्वारा निवेदित निवेदनीयमित्यर्थ ॥ १ ॥

परस्त्रीति । परस्त्रीणां कुचकुम्भेषु भीरूणा भयशीलाना अङ्गनाना दृष्टयो न निपतन्ति । परदन्तिना कुम्भेषु भीरूणा शरवृष्टयो न निपतन्तीत्यभिसन्धि । दीपकयथासख्ययो. सङ्कर ॥ २ ॥

निजेति । निजचित्तवृत्तिरेव या भित्ति भूमिका तदनुसारीणि ॥

प्रणयेति । प्रणयेन भ्रातृप्रीत्या कोप विषादश्च यस्मिन् कर्मणि तद्यथा स्यात्तथेत्यर्थ ॥

यस्येति । यस्य तव त्र्यम्बकस्य शिवस्य मौलौ शिरसि खेलन्तो विहरन्तो या स्वर्लोककल्लोलिनी गङ्गा तस्या यत् लीलया अनायासेन लघनम् अतिक्रमण तस्मिन् लम्पटेन पटुना यशसा दिश एव या भित्तय' ताः क्षालिता' धौता । सुरलोक विलघ्य सकलदिगन्तान व्याप्तवती ते कीर्तिरिति भाव । एवम्भूतः त्व जनकाधिराजतनयाया सीताया बद्धा अभिलाषा येन स तथाभूत' सन् पुलस्त्यस्य या सन्ततिर्वंश' सन्तानप्ररोह तस्य यश एव सच्चरितत्वख्यातिरेव य शीतद्युति. चन्द्र. तस्य लाञ्छन कलङ्को जातोऽसि । शार्दूलविक्रीडित वृत्तम ॥ ३ ॥

**कोपेति।** कोपेन पाटलिता ईषद्रक्ता चञ्चला घूर्णमाना च दृष्टिर्यस्य स तेन पुनः किञ्चिदुन्नमिता कोशाद्बिःसारिता खड्गमुष्टिः येन स तेन एवम्भूतेन रावणेन नयो नीतिश्च धर्मश्च नयधर्मौ तावेव भूषणं यस्य स विभीषणः हृदि पदा चरणेन ताडितः। रथोद्धता वृत्तम् ॥ ४ ॥

**लङ्केश्वरेणेति।** दुष्टेन दुःस्वभावेन लङ्केश्वरेण रावणेन न केवलं नयधर्मविभूषणो विभीषणो हतः अपि तु विभवोऽपि ऐश्वर्य्यमपि पदा हतः। अनेन दुष्टव्यवहारेण जानीहि यदस्योन्नतिरपि समाप्तेति भावः। विशेषोऽलङ्कारः ॥ ५ ॥

(१२९) **कर्तुकाम इति।** कर्तुं कामो यस्य सः। तुंकाममनसोरपीति मकारलोपः ॥

**आसन्नेति।** आसन्नो निकटमागतः शत्रुः रामो यस्य स तस्मिन्। **प्रस्तुतेति।** युद्धसम्बद्धमेव किमपीति भावः ॥

काममपीडितरावणपरिचारकाणां परस्परालापं स्फुटयति-**रे रे चन्दनमिति।** रे रे परिचारकाः इन्दुमण्डलमेव यत् शिलापट्टं तस्मिन् चन्दनं समुदघृष्यतां भवद्भिरिति सर्वत्रोह्यम्। उज्ज्वलैः चन्द्रकिरणैरेव श्वेतं चामरं रावणवीजनार्थं विनिर्मीयताम्। बालमृणालस्य नूतनोद्गतबिसाङ्कुरस्य या तन्तुलतिका सैव यत् सूत्रं तेन पाथोजिनीपत्रस्थैः कमलपत्रस्थितैः उदबिन्दुभिः जलकणाभिः हारः समासूत्र्यतां ग्रथ्यताम् ॥ शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

**यादृश इति।** यथा शशिकरैः चामरनिर्माणमित्यादयः शीतोपचाराः अलीकवाग्डम्बरमेव तथैवास्य सीतार्थमायासोऽपि भविष्यति। सीतार्थं युद्धं कुर्वन्तं रामं हनिष्यामीत्यादि वाग्डम्बरमात्रमित्याशयः। यद्वा कामाभितप्तस्यास्य यथा शीतोपचारो निष्फल एव तथैवास्य सीतार्थमायासोऽपीति भावः। **खेचरा** देवगणा इत्यर्थः ॥

देवगणैः कृतामनुचरवृत्तिं प्रदर्शयन्नाह-**अङ्गमिति।** शीतद्युतिश्चन्द्रो मृदुभिः कोमलैः स्वैर्निजैः करैः किरणैरथ च हस्तैः चन्दनेन अङ्गं रावणस्य लिम्पति। वसन्तानिलः किञ्चित् चञ्चलं यत्तालवृन्तं तालव्यजनं तस्य यत्कलनं चालनं तस्मिन् व्यग्रो दत्तचित्तो वर्तते। किं च अयं प्रतीचीपतिः वरुणः नलिनीदलैः कमलपत्रैः तल्पं पर्यङ्कं वितनुते विरचयति। अनङ्गतप्तहृदयः लङ्केश्वरः देवैरित्थमेवप्रकारेण सेव्यते ॥ शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

(१३०) आत्मनः कामपीडां वर्णयन्नाह-**राजदिति।** राजत् शोभमानं ललाटफलकं यस्याः सा। यष्टिपक्षे राजत् ललाटरूपं फलकं लोहाग्रो यस्याः सा। पुनः कमनीयं सुन्दरं यथा स्यात्तथा कूजन्ती शब्दायमाना या काञ्ची मेखला तस्याः गुणप्रणयिनी मेखलासनाथकटिभा-

गेति भावः। अथ वा खिन्नत्वात् तन्तुसदृशी । पक्षे सुन्दरशब्दायमान श्वासम्बन्धिनी । पुन. धृतः आश्रित. केशस्य पक्षो यया सा विमुक्त केशो विरहविधुरत्वात् तदाश्रिता इव। पक्षे धृत केशपक्ष' कालपक्षो यया सा । एवम्भूता सा सीता पुष्पशिलीमुखस्य पुष्पबाणस्य कामस्य नाराचयष्टिरिव मम हृदय प्रविष्टा मम हृदय परवशमकरोदित्यर्थः । इति कि करोमि हा । वसन्ततिलकं वृत्तम् ॥ ८ ॥

**हठेति ।** हठात् यदाहरणं तेन खिन्नाम । नितान्तमतिशय कृश दुर्बलं धूसर रुक्ष च अङ्ग यस्याः सा ताम् । जनस्थाने दण्डकारण्ये स्थितामिव। अखण्ड मण्डन यस्याः सा ता भूषणसहितामिति यावत । कृशधूसरत्वेऽपि कमनीयत्व समर्थयते—**आचान्तेति ।** अहिमत्विष. घर्मदीधिते. सूर्यस्य मयूखै किरणैराचान्ता निपीता कान्तिः तेजो यस्या सा परिम्लानधूसराऽपि चान्द्री चन्द्रमस कला कलामात्रशेषः चन्द्र इति यावत । लोचन कि न बध्नाति आकर्षति मोहयति । अपि तु बध्नात्येवेति काकुध्वनि' । अतो विरहदहनज्वालामालावलीढा धूसराऽपि जानकी निसर्गलावण्यातिशयेन नितान्तरमणीया कमनीया चेति उचितमेवेति भावः ॥ ६ ॥

**तरलेति ।** तरलः यस्तिमिनिकरः मत्स्यसमूह तेन कराला भीषणा ये कल्लोला' तरङ्गा. तेषा कोलाहलैः शब्दै. उज्जागर. उत्फालित सागर । **उत्तरेणेति ।** तरङ्गमालिनमुत्तरेण समुद्रस्यात्तरे कूले । 'एनपा द्वितीये'ति एनबन्तस्याव्ययस्य उत्तरेणेत्यस्य योगे द्वितीया । अनुत मालखण्ड तमालवनसमीपमित्यर्थः **आखण्डलेति ।** आखण्डलस्य इन्द्रस्य धनुषः सहस्रम अनुकरोति यत्तत् गगनतल नभोमण्डल कपि शयति कपिश पिशङ्गवर्णं करोतीत्यर्थ. ॥

(१३१) **बाणेति ।** बाणपातस्य विलसितेन क्रियया। **सुग्रीवपा-लितमिति ।** बालिमरणेनेत्यर्थ. ।

**नितान्तेति ।** नितान्तमतिशय कृशा दुर्बला कमनोया मनोज्ञा च तनुः शरीर यस्य स' । अमन्दो घोरो यो मन्दरस्य पर्वतस्य आघातः तेन निर्मन्थनेन उत्थितैः तरङ्गैः दूरे विक्षिप्तः अथ च शङ्करस्य शिवस्य शिर'शेखराधिरोहणे कुतूहली कलानिधि. चन्द्र इव तरङ्ग मालिनः समुद्रस्य तटभुवम अधिशेते । तटभुवमित्यत्र अधिशीङ स्थासा कर्मेत्यनेन द्वितीया। सुन्दरत्वेन समुद्रोत्क्षिप्तचन्द्रसाम्यम अनु भावातिशयवत्वेन च शिवशिर स्योपमानम ॥

**उपचरितुमिति ।** पूजयितुमित्यर्थ । **प्रथम इति ।** राम' ।

**रामेति ।** रामस्य नाराचात् निर्मुक्त' य वहल विपुल' अनल. वह्निः तेन हेलया हठात तरलः चञ्चलो दीनो भीतश्च यो मीननि कर. स एव परिवार. यस्य स तथाभूते' पारावार' समुद्र' । पारा

वार सरित्पतिरित्यमरः । अनेन रामप्रभाववर्णनेन रावणोक्तिरुत्त-रिता ॥

विभीषणविषये स्वचिकीर्षितमाह—**निशाचरेति** । निशाचराणां राक्षसाना यानि शिरोरत्नानि तै रञ्जित शोभित अङ्घ्रिसरोरुह चरणकमल यस्य स तस्य दशकण्ठस्य प्रियेऽप्येष विभीषणः न दर्शनमेष्यति । न कदाऽप्यहं द्रक्ष्यामि तस्य मुखमिति भाव. ॥ १० ॥

(१३२) समुद्र प्रति लक्ष्मणस्योक्तिमाह—**त्रासमिति** । हे समुद्र त्व त्रास रामक्रोधाद भय मुञ्च त्यज । यत अस्य रामस्य कोपदहनः क्रोधाग्निः । वन्दीभूताः रावणेन नियन्त्रिता. याः सुरेन्द्रस्य देवराजस्य सुन्दरदृश. नार्य तासामक्ष्णो. नेत्रयो. असृट् देवराजविरहादनर्गलपरिस्रुत पय. अश्रु पास्यति शोषयिष्यति । पुनर्देवराजसङ्गमद्वारा निवारयिष्यतीति भाव. । न तु तव पयस' काचित् क्षतिर्भविष्यतीत्याशय । ततश्च ते त्वज्जलवासी मकरीगणो जलचरसमूह काम यथेच्छ विहरताम । यत एतस्य रामस्य सायका बाणाः लङ्केश्वरस्य स्त्रीणा गण्डस्थलेषु या पत्रभङ्गमकर्य. केशरादिरागविरचितचित्रगतमकर्याद्याकारा तासामेव विध्वसिन । तासा स्वामिनो वधादित्याशय । न तु त्वज्जलचारिमकरीणामिति हृदयम् ॥ शार्दूलविक्रीडित वृत्तम ॥ ११ ॥

विभीषणविषये रामचन्द्रचिकीर्षितमाह—**अद्यैवेति** । शरणमापन्नस्य आगतस्य विभीषणस्य मृधा नते प्रणामस्य आनृणय प्रत्युपकारम अद्य रघुपतिरद्यैव लङ्काधिपत्यश्रिय लङ्काधिराजपदवी विदधाति सम्पादयति । प्रमाणप्रत्युपकाररूपेण त लङ्काधिपति करोती-त्यर्थ' । इह अस्मिन् विषये सुग्रीवाय यद्राज्यार्पण तेन त्रैलोक्ये प्रथमान ख्यात सत्य प्रतिज्ञातानुसारि चरित ययो' तौ एतस्य रामचन्द्रस्य भुजावेव प्रतिभुवौ लग्नकौ ऋणादानादौ प्रतिनिधिभूतौ 'जामिन' इति भाषया प्रसिद्धौ, वय च सर्वे साक्षिण' इति । अत्र न कश्चित्सन्देह इति भाव । शार्दूलविक्रीडित वृत्तम् ॥ १२ ॥

**वाग्डम्बरेति** । वाग्डम्बर वचनविन्यास एवैक सारं तत्त्व यत्र स तस्य भाव । वचनमात्रे पौरुषमस्य न पुनः क्रियायामिति भाव । मध्येसमुद्रमिति समुद्रस्य मध्य इत्यर्थः । 'पारे मध्ये षष्ठ्या वा' पाणिनिसूत्र २ ॥ १ ॥ १८ ॥

**कपिकुलेति** । कपिकुलेन वानरसमूहेन उन्मूलितानि उत्पाटितानि यानि शैलशिखराणि तैर्निर्मिता काकुत्स्थकुलस्य रघुवंशस्य कीर्तेर साध्यसाधनजन्ययशस प्रसक्ति' सम्भावना तस्या' प्रबन्ध' उपाय । **अलीकमिति** । समुद्रबन्धनरूपमिति भाव । **अद्यापीति** । सेतु-द्वारेणवागते ऽपि लङ्काद्वार रघुपतावित्यर्थः ॥

(१३३) वानरसैन्यागमनं वर्णयन्नाह–एषामिति । दर्पेण वीर्येण उद्धतानामुन्मत्तानां रामचमूचराणां रामसैन्यगतानां कपिकुञ्जराणां वानरयूथपानां कोलाहलः कलकलः नवोद्गतानां नीरदानां मेघानां शब्द इव समुज्जिहीते उद्गच्छति । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥ १३ ॥

कोलाहलेनेति । उल्लसता उद्गच्छता कपीनां वानराणां कोलाहलेन कलकलेन मदीयं मनो मुदमेव हर्षमेव धत्ते हर्षितमेव भवति । यथा मन्दोदर्या भूषणानूपुरस्थानां महामणीनां सिञ्जितेन तथैवेत्यर्थः । मन्दोदरीप्रवेशसूचकमेतत् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः ॥१४॥

भुग्नालकमिति । भुग्ना कुटिला कुन्तलिता अलकाः चूर्णकुन्तला यस्मिन् तत् । पुनः स्मितेन ईषद्धसनेन पराजितः चन्द्रस्य लोकः आलोकः प्रकाशो येन तत् । दृशो नीलया शोभया कुवलयस्य कमलस्य शोभामादधानम् । पुनः दिविषदानां देवानामपि दुर्निरीक्ष्यम् एवम्भूत ते मुखं माम् इव किम् अधः करोषि । कस्मादधोमुखी तिष्ठसीति भावः । रावणपक्षेऽप्येव योज्यानि विशेषणानि । भुग्ना जिता अलका कुबेरपुरी येन स तम । पुनः स्मितेन अनायासेन पराजितः चन्द्रलोको येन स तम । देवानां दुर्निरीक्ष्य भयात् । दृग्लीलयेति नेत्रेङ्गितेनैव कुवलयस्य पृथिवीमण्डलस्य श्रियमैश्वर्यम् आदधानं गृह्णन्तमिति । वसन्ततिलकं वृत्तम् ॥ १५ ॥

(१३४) वानरसेनां लघूकुर्वन् तस्याः युवतिसाम्यमुद्भावयति इयमिति । लीलया लोलः चञ्चलः अङ्गदस्य तन्नामकवानरविशेषस्य भुजलता यस्या सा । युवतिपक्षे लीलाया क्रीडायां लोलं चञ्चलमङ्गदं केयूरं यस्या सा तथाभूता भुजलता यस्या सा । केयूरमङ्गदमित्यमरः । पुनः नील एव तन्नामकवानर एव चिकुरो यस्या सा । यद्वा नीलेन चिकुरा चञ्चला । पक्षे नीलः चिकुरो यस्याः सा । पुनः समुन्मीलन् तारो वानरविशेषो यस्या सा । पक्षे समुन्मीलन्ती कामातुरत्वात् तारा अक्षिकनीनिका यस्याः सा । कुमुद एव वानरविशेष एव हसितं हासो यस्या सा । यद्वा कुमुदनाम्नो वानरस्य हासेन सहिता । पक्षे कुमुदवत् स्वच्छं हसितं हासो यस्याः सा । पुनः चारु नयनं प्रेरणम् यस्याः सा । पक्षे चारु सुन्दरं नयनं नेत्रं यस्याः सा । पुनः तारापतिः सुग्रीवो मुखं मुख्यो यस्या सा । पक्षे तारापतिः चन्द्रः तद्वन्मुखं यस्याः सा । एवम्भूता प्लवङ्गानां वानराणां सेना युवतिरिव कामिनीव ममाग्रे मम समक्षं कन्दर्पं कामप्रौढिमं । पक्षे कामचेष्टाम् । प्रकटयितुं प्रभवति शक्नोति । श्लिष्टरूपकम् । शिखरिणी वृत्तम् ॥ १६ ॥

शबरपल्लीति । शबराणां पल्ली वासस्थानमित्यर्थः ॥

मन्दोदर्या श्रुतं पद्यं संस्कृतेनानुवाद्यात्मानम् प्रत्यसम्बद्धत्वमस्य प्रदर्शयति–मा भवेति । हे मृगेन्द्र सिंह नागपतेर्गजस्य परिभवमा

त्रेण पराभवजननेन गर्वनिर्व्यूढो गर्वितो मा भव । यतः शरभस्य अष्टपदयुतस्य श्वापदविशेषस्य नन्दन इमा गिरिभिः सकटा सकुलाम वसुधा प्राप्तः, यस्त्वा हनिष्यतीति केसरिकिशोर प्रत्येवमुक्तिः अस्मान प्रत्युदासीनैवेति भाव ॥ १७ ॥

देवविषयेऽप्येषोक्तिर्घटत इति प्रदर्शयितुमन्यथा संस्कृतयति प्रह स्त.-मा भवेति । नाकपतेरिन्द्रस्य परिभवमात्रेण गर्वनिर्व्यूढो मा भव । यतो गिरिसङ्कटमयीमिमा वसुधा लङ्का दशरथस्य नन्दन पुत्रः प्राप्त. समागत. । स च त्वा हनिष्यतीति भाव. ॥ १८ ॥

(१३५) हेलास्फालितेति । हेलया अनायासेन आस्फालितयोः आकृष्टयोः रामलक्ष्मणधनुषो या ज्यावल्लरी शिञ्जिनीमञ्जरिका सैव या झल्लरी वाद्यविशेषः तस्याः यो झाङ्कारप्रसर. शब्दविस्तारः तेन प्ररूढ सञ्जात यत्पुलक तस्य य प्राग्भारो विस्तार तेन नीरन्ध्रिता घनीकृता । झल्लरी हुडुके बालवाक इत्यमर । पुन व्यावल्गता शब्द कुर्वता कपिकण्ठकाण्डाना वानरकण्ठाकुराणा कदने खण्डने क्रोडभि कृपाणाञ्चले करवालधाराभि स्फुर्जत यद दुर्जय दोर्बल बाहुबल तस्मिन्नेव एकस्मिन् चपला चञ्चला रात्रिञ्चरा निशाचराः चञ्चन्ति इतस्तत सञ्चरन्ति । शार्दूलविक्रीडित वृत्तम ॥ १९ ॥

निशाचरेति । निशाचरवीराणा विजय उत्तरे अवसाने यस्य स तथाभूतः ।

अग्रेसरीति । रघुपते रामस्य अग्रेसरी अग्रगामिनी । पुन परि णद्ध पाको यस्य स तथाभूत य किम्पाकः फलविशेषः तद्वत पाट लमीषद्रक्त मुख यस्याः सा तथाभूता कपिवीरसेना राक्षसवीरचक्र निशाचरसमूह नि शेष यथा स्यात्तथा आपिबति नाशयतीत्यर्थः । तप नस्य सूर्यस्य प्रात.प्रभा प्रातस्तन तेजः ईषद्रक्ता सती यथा तमिस्र- जालमन्धकारसमूहमापिबति तथैवेत्यर्थः । परिणद्धेत्यादिविशेषण प्रभापरमपि ज्ञेयम । वसन्ततिलक वृत्तम् ॥ २० ॥

स्वानुचरानादिशति-कृत्वेति । अपनिद्र जागदुद्दण्ड भुजयोर वलेप दर्प यस्य स तथाभूत कुम्भकर्ण विनिद्रमपगतनिद्र कृत्वा प्रोद्दाम उद्धतः यो रामेण सह समर तदर्थम आदिश्यताम आज्ञा प्यता मदाज्ञयेति सम्बन्ध । पुन निजभुजाभ्यामर्दितः पराभूत वज्र पाणिरिन्द्र येन स तथाभूत. मेघनादश्च लक्ष्मणेन सह रणाय आदिश्यतामित्यत्राप्यनुवर्तते । वसन्ततिलक वृत्तम् ॥ २१ ॥

भवदिति । भवतः आशयं मनोवृत्ति वेत्ति यः स तेनेत्यर्थ ॥

रामेणेति । उद्धत उन्मत्त. बाहुदर्प बाहुबलगर्व यस्य स कुम्भ कर्ण रामेण सार्धं सग्रामभूमिमधितिष्ठति । भूमिमित्यत्र अधिशीङ स्थासा कर्मेत्यनेन द्वितीया । पुन रक्षासि राक्षसा एव ये शिखण्डिनः मयूरा. तेषा हृदयोत्सवाय मनस आह्लादनाय मेघनाद नीरदगर्जि

तम । निशाचरगणहृदयाह्लादनैकनिपुण इति भाव । नन्दन्ति बर्हिण सम्यक उद्धते मेघगर्जिते इति न्यायात् । एवम्भूतो मेघनादो ऽप्यसौ सौमित्रिणा लक्ष्मणेन सह समरभूमिम् अधितिष्ठतीत्यत्राप्यनुवर्तते । वसन्ततिलक वृत्तम् ॥ २२ ॥

(१३६) कुम्भकर्णमेघनादयोर्निधन वर्णयन्नाह—यद्दंष्ट्रेति । यस्य कुम्भकर्णस्य दंष्ट्राभि ये वज्रघाता वज्रसदृशप्रहारा ते समिति युद्धे शैलकल्पा पर्वतसदृशपरिणामा कपीन्द्राः वानरभटा विदलिता मर्दिता । ईषदूनार्थे कल्पदेश्यदेशीयप्रत्यया । यस्य मेघनादस्य च नाराचानामम्बुसदृशे वर्षे वर्षणे अनवरतपातैरिति यावत् दवदहन समा दावानलसदृशा वानरेन्द्रा शामिता शान्ति नीता मारिता इत्यर्थ । सोऽसौ कुम्भकर्ण समरकलासु युद्धविद्यासु कौतुकी उत्साहवान मेघनादश्च । दशरथसुतयो क्रमेण रामलक्ष्मणयोः दारुणे निष्करुणे बाणवह्नौ पतङ्गौ सजातौ । यथा पतङ्गा अग्नौ निपत्य नष्टाः भवन्ति तथैवेमौ दाशरथिबाणानले निपत्य निहतावित्यर्थः ॥ रूपकालङ्कार । स्रग्धरा वृत्तम ॥ २३ ॥

शोकेति । शोक एव तिमिर अन्धकारः तस्मिन् । चन्द्रहासेति । चन्द्रहास' मम खड्ग एव यश्चन्द्र स एव ते शोकान्धकारस्यापसारको भविता वैरनिर्यातनादिति भावः ।

स्वकर्तव्य प्रकटयन्नाह—भिन्नप्रभिन्नेति । भिन्नः प्रभिन्नः छिन्नो भिन्नो य. सुरकुञ्जरस्यैरावतस्य कुम्भ तस्मान्मुक्तानि यानि मुक्ताफलानि तेषां प्रकरै समूहै कलित निष्पादित' अधिवासोऽधिवासनं संस्कारो यस्य स तथाभूत चन्द्रहास' । खेचरा. रामभयेन गगनं पलायिता ये निशाचरा राक्षसा तेषां लोचनाना मुद हर्ष उन्मीलयन सञ्जनयन् अङ्कुरयन् उदञ्चति विजयते ॥ २४ ॥

(१३७) समरेति । समरे सङ्ग्रामे य संरम्भः सम्मर्द तस्य विलोकनाद्दर्शनात यो विस्मय खेदः तेन स्तिमित निश्चलीकृतम् ॥

रण इति । रजनिचरवीरा राक्षसभटा रणे मुक्तप्राणा मृता सन्त दिनमणि सूर्यमण्डल विशन्त प्रविशन्त शोभन्ते । यथा सायकाले मधुलिह भ्रमरा कमलं विशन्त शोभन्ते तथैवेति । उक्त च "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हत"इति । अथ च अमीभि निशाचरै भिन्न प्रविष्ट दिनकृत सूर्यस्य बिम्बमण्डलं गगने या नवकुञ्जोदरदरी नूतनोद्गतकुञ्जपरिणद्धगुहा तन्मय यच्छन्न निशाचरमय तस्य छायाम अनुभवति । अन्त प्रविष्टनिशाचरच्छायाक्रान्तमिव सूर्यमण्डलमिति भाव । शिखरिणी वृत्तम् ॥ २५ ॥

रणरभसेति । रणरभसेन संग्रामोत्साहेन विलसदुल्लसत् यत्पुलकं रोमाञ्चः तेन कुड्मलितं कुड्मलयुतमिव कृत भुजवनं यस्य स. ।

इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी"ति मुक्तस्यानन्तरप्रकृतत्वात् "ते यदन्तरे"ति च नामरूपविनिर्मुक्तस्य तस्याभिधानात् । 'नामरूपयोर्निर्वहिते'ति च स एव पूर्वावस्थयोपलक्षितयिषितः । स एव हि देवादिरूपाणि नामानि च पूर्वमऽभजत्* । तस्यैव नामरूपविनिर्मुक्ता साम्प्रतिकव्यऽवस्था[1] 'तद्ब्रह्म तदमृत'मित्युच्यते । आकाशशब्दस्तस्मिन्नप्य[2]सङ्कुचितप्रकाशयोगादुपपद्यते । ननु दहरवाक्यशेषत्वादस्य 'स एव दहराकाशोऽय'मिति प्रतीयते, तस्य च परमात्मत्वं निर्णीतम् । मैवम्, प्रजापतिवाक्यव्यवधानात् । प्रजापतिवाक्ये च प्रत्यगात्मनो मुक्त्यवस्थान्तं रूपमभिहितम् । अनन्तरञ्च 'विधूय पाप'मिति स एव मुक्तावस्थः प्रस्तुतः । अतोऽत्राकाशो मुक्तात्मा—इति प्राप्त उच्यते—

'आकाशोऽर्थान्तरत्वादिव्यपदेशात्',

'आकाश'' परं ब्रह्म । कुतः? 'अर्थान्तरत्वादिव्यपदेशात्' । अर्थान्तरत्वव्यपदेशस्तावत् "आकाशो ह वै नामरूपयोर्निर्वहिते"ति नामरूपयोर्निर्वोढृत्वं बद्धमुक्तोभयावस्थात्प्रत्यगात्मनोऽर्थान्तरत्वमाकाशस्योपपादयति । बद्धावस्थस्त्वय[3] कर्मवशा[4]न्नामरूपे भजमानो न नामरूपे निर्वोढुं शक्नुयात्, मुक्तावस्थस्य जगद्व्यापारासम्भवाच्च नितरां[5] नामरूपनिर्वोढृत्वम् । ईश्वरस्य तु निखिलजगन्निर्माणधुरन्धरस्य नामरूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम् "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" ।

"यस्सर्वज्ञस्सर्वविद् यस्य ज्ञानमयन्तपः ।
तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते" ॥
"सर्वाणि रूपाणि विचित्य[6] धीरो
नामानि कृत्वाऽभिवदन् यदास्ते" ॥—

* अबिभ्रदिति मु पु॰ पाठ, अधिभू—इति तु लि॰ पु पाठ॰ । नामरूपे भजमान इतिवक्ष्यमाणभाष्याक्षरानुरूप्यादभजदिति हि स्थापितम् ।

१ साम्प्रतिकव्यवस्थेति मु पु॰ पाठ । २ तस्मिन्नसङ्कुचितेति लि॰ पु पाठ
३ स्वयमिति लि पु । ४ वश्यो—इति मु॰ पु ।
५ नितरामिति नास्ति लि॰ पु । ६ विचिन्त्येति लि॰ पु॰ ।

इत्यादिषु । अतो निर्वाह्यनामरूपात्[1] प्रत्यगात्मनो नामरूपयोर्निर्वोढा ऽयमाकाशोऽर्थान्तरभूतः परमेव ब्रह्म । तदेवोपपादयति "ते यदन्तरे"ति । यस्मादऽय[2]माकाशो नामरूपे अन्तरा—ताभ्याम ऽस्पृष्टोऽर्थान्तरभूतः तस्मात्तयोर्निर्वोढा, ऽपहतपाप्मत्वात्सत्यसङ्कल्पत्वाच्च निर्वहितेत्यर्थः[3]। 'आदि'शब्देन ब्रह्मत्वाऽऽत्मत्वामृतत्वानि गृह्यन्ते । निरुपाधिकबृहत्त्वादयो[4] हि परमात्मन एव सम्भवन्ति । तेनात्राकाश' परमेव ब्रह्म । यत्पुनरुक्त'न्धूत्वा शरीर'मिति मुक्तोऽनन्तरः प्रकृत इति, तच्च, ब्रह्मलोकमभिसम्भवामीति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात् । यद्यप्यभिसम्भवितुर्मुक्तस्याभिसम्भाव्यतया पर ब्रह्म निर्दिष्टम्, तथाऽ[5]प्यभिसम्भवितुर्मुक्तस्य नामरूपनिर्वोढृत्वाद्यऽसम्भवादभिसम्भाव्य परमेव ब्रह्मात्र प्रत्येतव्यम् । किञ्च, आकाशशब्देन प्रकृतस्य दहराकाशस्याऽत्र प्रत्यभिज्ञानात् प्रजापतिवाक्यस्याप्युपासकस्वरूपकथनार्थत्वादुपास्य एव दहराकाशः प्राप्यतयेहोपसंह्रियत इति युक्तम् । आकाशशब्दश्च प्रत्यगात्मनि न क्वचिद् दृष्टचरः । अतो ऽत्राकाशः पर ब्रह्म ।

अथ स्यात्—प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव नास्ति, ऐक्योपदेशाद् द्वैतप्रतिषेधाच्च । शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परब्रह्म परमेश्वर इति च व्यपदिश्यते । अतः प्रकृतान्मुक्तात्मनोऽभिसम्भवितुर्नार्थान्तरमभिसम्भाव्यो ब्रह्मलोकः । अतो 'नामरूपयोर्निर्वहिता'ऽऽकाशोऽपि स एव भवितुमर्हतीति, अत उत्तरम्पठति—

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

व्यपदेशादिति वर्तते[6] । सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशात्प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मा ऽस्त्येव । तथाहि

१ रूपत्वादिति लि पु ।  २ यस्मादेवायमिति मु पु ।

३ निर्वहितेत्यर्थं इति पु द्वयेऽपि भवति, तत्त्वधिकमिव भाति० किंवा, 'निर्वहितेत्यर्थ', निर्वहितेत्यस्य पदस्य तात्पर्यविषयो निर्वोढृत्वसामर्थ्यवानऽर्थं इति गभीरोऽर्थः ।

४ ब्रह्मत्वादय इति लि पु० पाठ ।

५ परब्रह्मनिर्दिष्टतयेति लि० पु० ।

६ ०दित्यनुवर्तत इति—इति मु पु० ।

वाजसनेयके—"कतम आत्मा योऽयं विज्ञानमयः प्राणेष्वि"ति प्रकृतस्य प्रत्यगात्मनः सुषुप्त्यवस्थायामकिञ्चिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते—"प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर"-मिति । तथोत्क्रान्तावपि "प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्[1] याती"ति । न च स्वपत उत्क्रामतो वाप्यऽकिञ्चिज्ज्ञस्य[2] तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गाऽन्वारोहौ सम्भवतः । न च क्षेत्रज्ञान्तरेण, तस्याऽपि सर्वज्ञत्वासम्भवात्[3] ।

इतश्च प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याह—

## पत्यादिशब्देभ्यः ॥ ४४ ॥

अयं परिष्वञ्जकः परमात्मोत्तरत्र पत्यादिशब्दैर्व्यपदिश्यते—"सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानस्स न साधुना कर्म्मणा भूयान्नो एवा[4] साधुना कर्म्मणा कनीया[5]नेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं[6] वेदानुवचनेन ब्राह्मणा विविदिषन्ति एतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" "स वा एष महानज आत्माऽन्नादो वसुदानोऽजरोऽमृतोऽभय आनन्दो[7] ब्रह्मे"ति । एते च पतित्वजगद्विधरणसर्वेश्वरत्वादयः प्रत्यगात्मनि मुक्तावस्थेऽपि न कथञ्चित्सम्भवन्ति । अतो मुक्तात्मनोऽर्थान्तरभूतो 'नामरूपयोर्निर्वहिताऽऽकाशः' । ऐक्योपदेशस्तु सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्त इति "सर्वं खल्विदं ब्रह्म तज्जला"नित्यादिभिर्वाक्यैः प्रतिपाद्यत इति पूर्वमेवोक्तम्[8] । द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम् ॥

अर्थान्तरत्वादिव्यपदेशाधिकरणं समाप्तम् १० ॥

इति श्रीमद्भगवद्रामानुजाचार्यचरणकृतौ शारीरकमीमांसाभाष्ये समन्वयाख्यस्य प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

१ उत्सृजन्निति पु॰ द्वयेऽपि पाठः । २ वाऽस्य किञ्चिज्ज्ञस्येति मु॰ पु
३ सर्वज्ञत्वासम्भवादिति लि॰ पु॰ । ४ नोवा-इति लि॰ पु॰ ।
५ ॰सर्वस्याधिपति स न साधुना कर्मणा भूयान्नो एवा ऽसाधुना कनीयानित्युपनिषदि पाठः । ६ तमेवमिति लि॰ पु॰ ।
७ आनन्द इति नास्ति लि पु॰ । ८ सर्वमेव समर्थितमिति लि॰ पु॰ पाठ ।

# अथ प्रथमाध्याये चतुर्थः पादः ।

अथाऽऽनुमानिकाधिकरणम् १। **आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

उक्तं परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं जगज्जन्मादिकारणं ब्रह्म अचिद्वस्तुनः प्रधानाच्चेतनाच्च बद्धमुक्तोभयावस्थाद्विलक्षणं निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्यमिति ।

इदानीं कापिलतन्त्रसिद्धाऽब्रह्मात्मकप्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारीण्यपि कानिचिद्वाक्यानि कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारणत्वस्थेम्ने तन्निराक्रियते ।

कठवल्लीष्वाम्नायते—

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परम्मनः ।<br>
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥<br>
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।<br>
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति"रिति ।

तत्र सन्देहः—किं कापिलतन्त्रसिद्धमब्रह्मात्मकं प्रधानमिहाव्यक्तशब्देनोच्यत उत नेति । किं युक्तम् । प्रधानमिति । कुतः । "महतः परमव्यक्तमव्यक्तात्पुरुषः पर" इति तन्त्रसिद्धतत्त्वप्रक्रिया[1]प्रत्यभिज्ञानेन तस्यैव प्रतीतेः, "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति"रिति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च । अतोऽव्यक्तं कारणमिति प्राप्तम् । तदिदमुक्त'मानुमानिकमप्येकेषामिति चे'दिति । एकेषां शाखिनां शाखास्वा-

१ इति तत्प्रक्रियेति लि॰ पु॰ पाठः ।

ऽऽनुमानिक[1] प्रधानमपि कारणमाम्नायत इति चेत्, अत्रोत्तरम्—नेति । नाव्यक्तशब्देनात्रस्मात्मक प्रधानमिहाभिधीयते । कुतः । 'शरीररूपकवि-न्यस्तगृहीतेः', शरीराख्यरूपकविन्यस्तस्याऽव्यक्तशब्देन गृहीतेः । आत्म-शरीरबुद्धिमनइन्द्रियविषयेषु रथिरथादिभावेन निरूपितेषु रथरूपणेन विन्य-स्तस्य शरीरस्यात्राव्यक्तशब्देन ग्रहणादित्यर्थः । एतदुक्तम्भवति—पूर्वत्र हि

"आत्मान रथिन विद्धि शरीर रथमेव तु ।
बुद्धि तु सारथि विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयास्तेषु गोचरान्" ।

इत्यादिना

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परम पदम्" ।—

इत्यन्तेन ससाराध्वनः पार वैष्णव पदम्प्रेप्सन्तमुपासक रथित्वेन तच्छ-रीरादीनि च रथरथाङ्गत्वेन रूपयित्वा यस्यैते रथादयो वशे तिष्ठ-न्ति, स एवाध्वनः पारभूत वैष्णव पदमाप्नोतीत्युक्त्वा तेषु रथादिरूपित शरीरादिषु यानि येभ्यो वशीकार्य्यतायाम्प्रधानानि तान्युच्यन्ते 'इन्द्रि येभ्यः परा ह्यर्था' इत्यादिना । तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो[2] गो-चरत्वेन रूपिता विषया वशीकार्यत्वेन पराः, वश्येन्द्रियस्याऽपि विषय-सन्निधानादिन्द्रियाणा दुर्निग्रहत्वात् । तेभ्यः[3] परम्प्रग्रहत्वरूपितम्मन', मनसि विषयप्रवणे विषयासन्निधानस्याप्यकिञ्चित्करत्वात् । तस्मादपि सारथित्वरूपिता बुद्धिः परा, अध्यवसायाभावे मनसोऽप्यकिञ्चित्कर त्वात् । तस्या अपि रथित्वरूपित आत्मा कर्तृत्वेन प्राधान्यात् परः, सर्व्वस्य चास्या[4]त्मेच्छायत्तत्वादात्मैव महानिति च विशेष्यते । तस्मा-दपि रथरूपित शरीर परम्, तदायत्तत्वाज्जीवात्मनस्सकलपुरुषार्थसाधन प्रवृत्तीनाम् । तस्मादपि परः सर्व्वान्तरात्मभूतोऽन्तर्य्याम्यध्वनः पारभूतः परमपुरुषः, यथोक्तस्यात्मपर्यन्तस्य समस्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात् ।

---

[1] केषा शाखीना शाखासु मह्त परमव्यक्तमिति अनुमानिकमिति लि पु पाठ. ।
[2] तेभ्योऽपीति लि पु ।
[3] इन्द्रियेभ्य इति नास्ति लि पु ।
[4] सर्वस्यैवास्येति लि॰ पु पाठ॰

स खल्वन्तर्यामितयोपासनस्या[1]पि निर्वर्तकः, 'परात्तु तच्छ्रुते'रिति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते। वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव। तदिदमुच्यते 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रिति। तथा चान्तर्यामिब्राह्मणे "य आत्मनि तिष्ठ"न्नित्यादिभिस्सर्वं साक्षात्कुर्वन् सर्वं नियमयतीत्युक्त्वा "नान्योऽतोऽस्ति द्रष्टे"त्यादिना नियन्त्रन्तरं निषिध्यते। भगवद्गीतासु च—

"अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चम"मिति॥

दैवमत्र पुरुषोत्तम एव,

"सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनञ्चे"ति वचनात्।

तस्य च वशीकरणन्तच्छरणा[2]गतिरेव, यथाह—

"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥
तमेव शरणङ्गच्छे"ति।

तदेव 'मात्मानं रथिनं विद्धी'त्यादिना रथ्या[3]दिरूपकविन्यस्ता इन्द्रियादयः "इन्द्रियेभ्यः परा ह्यर्था"इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते, न रथरूपितं शरीरमिति परिशेषात्तदव्यक्तशब्देनोच्यत इति निश्चीयते। अतः कापिलतन्त्रसिद्धस्य[4] प्रधानस्य प्रसङ्ग एवेह नास्ति। न चात्र तत्तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञा, 'इन्द्रियेभ्यः परा ह्यर्था'इतीन्द्रियेभ्यो ह्यर्थानां शब्दादीनां[5] परत्वकीर्तनात्। न हि शब्दादय इन्द्रियाणां कारणभूतास्तद्दर्शने। 'अर्थेभ्यश्च परम्मन' इत्यपि न तत्तन्त्रे सङ्गतम्, अकारणत्वादेव। तथा 'बुद्धेरात्मा महान्पर' इत्यप्यसङ्गतम्, बुद्धिशब्देन महत्तत्त्वाभ्युपग-

१ उपासकस्यापीति लि पु पाठः।
२ चरणेति लि पु पाठ.।
३ रथेति लि पु.।
४ प्रसिद्धस्येति मु. पु.।
५ शब्दानामिति मु. पु. पाठ.।

मात्[1]। न हि महतो महान् पर इति सम्भवति। महत आत्मशब्देन विशेषणञ्च न सङ्गच्छते। अतो रूपकविन्यस्तामेवेह ग्रहणम्। दर्शयति च तदेव—

"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" ॥
"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज् ज्ञान आत्मनि।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनी"ति।

अजितबाह्याभ्यन्तरकरणस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय हयादिरूपितानामिन्द्रियादीनां[2] वशीकरणप्रकारोऽयमुच्यते 'यच्छेद्वाङ्मनसी' इति। वाचं मनसि नियच्छेत्=वाक्पूर्वकाणि कर्म्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः। वाक्शब्दे द्वितीयायाः "सुपां सुलु"गिति लुक्। मनसीति सप्तम्याश्छान्दसो दीर्घः। 'तद्यच्छेज् ज्ञान आत्मनि,' तन्मनो बुद्धौ नियच्छेत्, ज्ञानशब्देनाऽत्र पूर्वोक्ता बुद्धिरभिधीयते। 'ज्ञान आत्मनी'ति व्यधिकरणे सप्तम्यौ, आत्मनि वर्त्तमाने ज्ञाने नियच्छेदित्यर्थः। 'ज्ञानमात्मनि महति नियच्छेत्' बुद्धिं कर्त्तरि महत्यात्मनि नियच्छेत्। 'तद्यच्छेच्छान्त आत्मनि' तं कर्त्तारं परस्मिन् ब्रह्मणि सर्वान्तर्य्यामिणि नियच्छेत्। व्यत्ययेन तदिति नपुंसकलिङ्गता। एवंभूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः।

अव्यक्तशब्देन कथं व्यक्तस्य शरीरस्याऽभिधानम्, तत्राह—

## सूक्ष्मन्तु तदर्हत्वात् ॥ २ ॥

भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरम्भवति। तदव्याकृतमिह शरीरावस्थमव्यक्तशब्देनोच्यते, 'तदर्हत्वात्,' तस्याव्याकृतस्याऽचिद्वस्तुन एव विकारापन्नस्य रथवत् पुरुषार्थसाधनप्रवृत्त्यर्हत्वात्।

यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते, कापिलतन्त्रसिद्धो[3]पादाने

१ महतस्त्वस्याभिधानाभ्युपगमादिति लि॰ पु॰ पाठः।
२ आदिशब्दो नास्ति मु॰ पु॰। ३ तन्त्रासिद्धेति मु॰ पु॰।

कः प्रद्वेषः, तत्राऽपि हि भूतकारणमेवाव्यक्तमित्युच्यते, तत्राह-

तदधीनत्वादर्थवत् ॥ ३ ॥

परमकारणभूतपरमपुरुषाधीनत्वात्प्रयोजनवद् भूतसूक्ष्मम् । एतदुक्तम्भवति–न हि वयमव्यक्त[1] तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामः, अपि तु परमपुरुषशरीरतया तदात्मकत्वविरहेण। तदात्मकत्वेनैव हि प्रकृत्यादयस्स्वस्व प्रयोजन[2] साधयन्ति, अन्यथा स्वरूपस्थितिप्रवृत्तिभेदास्तेषा न स्युः । तथाऽनभ्युपगमादेव हि[3] तन्त्रसिद्धप्रक्रियानिरसनमिति । श्रुतिस्मृत्योर्हि जगदुत्पत्तिप्रलयवादेषु परमपुरुषमहिमवादेषु च प्रकृतिविकृतिपुरुषास्तदात्मकास्सङ्कीर्त्यन्ते, यथा[4] "पृथिव्यप्सु प्रलीयत"-इत्यारभ्य "तन्मात्राणि[5] भूतादौ लीयन्ते भूतादिर्महति लीयते महानऽव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरन्तमसि लीयते तमः परे देव एकीभवति" तथा, "यस्य पृथिवी शरीर यस्यापश्शरीर यस्य तेजःशरीर यस्य वायुश्शरीर यस्याकाशः शरीर यस्याहङ्कारः शरीर यस्य[6] बुद्धिश्शरीर यस्याव्यक्त शरीरं यस्याक्षर शरीर यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" तथा,

"भूमिरापोऽनलो वायुः खम्मनो बुद्धिरेव च ।
अहङ्कार इतीयम्मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्या प्रकृति विद्धि मे पराम्[7] ।
जीवभूता महाबाहो ययेद धार्य्यते जगत् ॥
एतद्योनीनि[8] भूतानि सर्वाणीत्युपधारय ।
अह कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥

१ नत्विदमव्यक्तमिति लि पु । २ स्वप्रयोजनमिति मु पु ।
३ हीति नास्ति लि पु । ४ तथेति मु पु ।
५ तन्मात्रा तमसीति लि पु ।
६ मु पु अत्र 'यस्येति' नास्ति ।
७ विद्धि मामिकामिति लि पु पाठः प्रामादिकः ।
८ एतद्योनीति–इति मु पु, एतद्योनि–इति च लि पु पाठ ।

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे''ति,

''व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव चे''ति,

''प्रकृतिर्य्या मयाख्याता[1] व्यक्ताव्यक्तस्वरूपिणी ।

पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥

परमात्मा च सर्वेषामाधारः पुरुषोत्तमः[2] ।

विष्णुनामा स वेदेषु[3] वेदान्तेषु च गीयत'' इति च ।

## ज्ञेयत्वाऽवचनाच्च ॥ ४ ॥

यदि तन्त्रसिद्धमिहाव्यक्तमविवक्षिष्यत्, तदाऽस्य ज्ञेयत्वमविवक्षिष्यत्, व्यक्ताव्यक्तविज्ञानान्मोक्षवादिभिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाऽभ्युपगमात् । न चास्य ज्ञेयत्वमुच्यत इत्यतो न तन्त्रसिद्धस्येह ग्रहणम् ।

## वदतीति चेन्न,[4] प्राज्ञो हि प्रकरणात् ॥ ५ ॥

''अशब्दमस्पर्शमरूपमव्यय-

न्तथाऽरसं नित्यमगन्धवच्च यत् ।

अनाद्यनन्तं[5]महतः परं ध्रुवं

निचाय्य तं मृत्युमुखात्प्रमुच्यते'' ॥–

इत्यऽव्यक्तस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरिति चे,न्न, प्राज्ञः परम पुरुष एव ह्यत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते ।

''विज्ञानसारथिर्य्यस्तु मनःप्रग्रहवान्नरः ।

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥

''एष सर्वेषु भूतेषु गूढोत्मा[6] न प्रकाशते ।

दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि''रिति–

प्राज्ञस्यैव प्रकृतत्वात् । अत एव 'पुरुषान्न परं किञ्चि'दिति न पञ्चवि-

१ प्रोक्तेति लि पु । २ परमेश्वर इति लि पु ।

३ सर्वदेवेष्विति लि पु ।

४ चेन्नेति लि॰ पु नास्ति, भाष्यमेव तु तेन ।

५ अनाद्यन्तमहत इति लि पु ।

६ गूढात्मेति लि पु॰ प्राक् चेदानीं च पठ्यते ।

शकपुरुषातिरिक्ततत्त्वनिषेधः । तस्य च परमपुरुषस्याशब्दत्वादयो धर्मा-यत्तदद्रेश्यमग्राह्य"मित्यादिश्रुतिसिद्धाः[1] । 'महतः पर[2] ध्रुव'मित्यपि 'बुद्धेरात्मा महान् पर' इति पूर्वप्रकृताज्जीवात्मनः परत्वमेवोच्यते ।

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

अस्मिन् प्रकरणे ह्युपायोपेयोपेतॄणा 'त्रयाणामेव चैवमुपन्यासो' ज्ञेयत्वेनोपन्यासस्तद्विषयश्च प्रश्नो दृश्यते, नान्यस्याव्यक्तादेः । तथाहि, नचिकेता नाम मुमुक्षुस्सन् मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणात्मनः पुरुषार्थयोग्यताऽऽपादनीमात्मनि पितुस्सुमनस्कतां प्रतिलभ्य द्वितीयेन वरेण मोक्षसाधनभूता नाचिकेताऽग्निविद्या वव्रे,

"स त्वमग्नि स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि त श्रद्दधानाय मह्यम् ।
स्वर्गलोका[3] अमृतत्व भजन्त एतद्द्वितीयेन वृणे वरेण"ति ।

स्वर्गशब्देनात्र परमपुरुषार्थलक्षणमोक्षोऽभिधीयते, 'अमृतत्वम्भजन्त' इति तत्रस्थस्य जननमरणाभावश्रवणा, दुत्तरत्र क्षयिफलकर्मनिन्दादर्शनाच्च,

"त्रिणाचिकेतस्त्रिभि[4]रेत्य सधि
त्रिकर्मकृत्तरति जन्ममृत्यू-

इति च प्रतिवचनात् । तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतानुष्ठितकर्म्मानुगृहीतो[4]पासनस्वरूपञ्च पृष्टम्,[5]

"येय प्रेते विचिकित्सा मनुष्ये
अस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहं
वराणामेष वरस्तृतीयः" ॥–

इत्येवम्मोक्षे पृष्टे तदुपदेशयोग्यता परीक्ष्योपदिदेश,

"तन्दुर्दर्श गूढमनुप्रविष्ट

१ प्रसिद्धा इति मु पु । २ परममिति मु पु ।
३ स्वर्गे लोका इति लि पु । ४ उपायभूतकर्मानु गृहीतेति लि॰ पु ।
५ दृष्टमिति लि पु ।

गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं
मत्वा धीरो हर्षशोकौ जहाती"ति ।

तदेव सामान्येनोपदिष्टे नचिकेताः प्रीतः सन् 'देवम्मत्वे'त्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्याध्यात्मयोगाधिगमेनेति वेदितव्यतया निर्दिष्टस्य[1] प्राप्तुः प्रत्यगात्मनश्च 'मत्वा धीरो हर्षशोकौ जहाती'[2]ति निर्दिष्टस्य प्राप्य[3]ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ—

"अन्यत्र धर्मादन्यत्राऽधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च[4] यत्तत्पश्यसि तद्वदे"ति ।

एवं सकलेतरातीतानागतवर्त्तमानसाध्यसाधनसाधकविलक्षणे त्रये क्रमेण[5] पृष्टे प्रथमं प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपन्तदन्तर्गतञ्च प्राप्तृस्वरूपं वाचकरूपं चोपायं पुनरपि सामान्येन ख्यापयन् प्रणवन्तावदुपदिदेश,

"सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति
तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्"—

इत्येवमुपदिश्य पुनरपि प्रणवं प्रशस्य प्रथमं तावत्प्राप्तुः प्रत्यगात्मनः स्वरूपमाह "न जायते म्रियते वा विपश्चि"दित्यादिना, प्राप्यस्य परस्य ब्रह्मणो विष्णोः स्वरूपम् "अणोरणीया"नित्यादिना "क इत्था वेद यत्र स" इत्यन्तेनोपदिशन्मध्ये

"नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन"—

इत्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह। "ऋतम्पिबन्ता"विति

१ निर्दिश्येति लि० ।
२ धीरो न शोचतीति—इति लि पु ।
३ प्राप्येति अत्र नास्ति लि पु । ४ भूताद्भव्याच्चेति लि पु० ।
५ विलक्षणे क्रमे पृष्टे इति लि पु० ।

चोपास्यस्योपासकेन सहावस्थानां[1]स्तूपासतामुक्त्वा "आत्मानं रथिनं विद्धी"त्यादिना "दुर्गं पथस्तत्कवयो वदन्ती"त्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय "अशब्दमस्पर्श"मित्यादिनोपसंहृतम् । अतस्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्च । तस्मान्नेह तान्त्रिकस्याऽव्यक्तस्य ग्रहणम् ।

**महद्वच्च ॥ ७ ॥**

यथा "बुद्धेरात्मा महान् पर" इत्यत्रात्मशब्देन सामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यते, एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् ।

आनुमानिकाधिकरणं समाप्तम् ॥ १ ॥



अथ चमसाधिकरणम् २। **चमसवदविशेषात् ॥ ८ ॥**

अत्राऽपि तन्त्रसिद्धप्रक्रिया निरस्यते, न ब्रह्मात्मकानां प्रकृतिमहदहङ्कारादीनां स्वरूपम्, श्रुतिस्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात् । यथा ऽऽथर्वणिका अधीयते—

"विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ॥
ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ।
सूयते पुरुषार्थं च तेनैवाधिष्ठितं जगत् ॥
गौरनाद्यन्तवती सा जनित्री भूतभाविनी ।
सितासिता च रक्ता च सर्वकामदुघा विभोः ॥
पिबन्त्येनामविषमामऽविज्ञाताः[2] कुमारकाः ।
एकस्त्वपिबते[3] देवस्वच्छन्दोऽत्र वशानुगः (गाम्) ॥
ध्यानक्रियाभ्यां भगवान् भुङ्क्ते ऽसौ प्रसहद्[4]विभुः ।
सर्वसाधारणीं दोग्ध्रीं पीयमानां तु यज्वभिः ॥

१ सहावस्थानां सूपास्यतामिति मु पु पाठः ।
२ मविषममात्मविज्ञाता इति लि पु पाठो न युक्तः ।
३ एकस्तु पिबत इति लि पु, अविज्ञाता कुमारकाः एकस्तु पिबते—इत्युपनिषदि पाठः । ४ प्रसभमिति पु॰ द्वये ऽपि पाठः ।

"चतुर्विंशतिसङ्ख्यात[1]मव्यक्त व्यक्तमुच्यते" ।—

इत्यत्र प्रकृत्यादीना स्वरूपमभिहितम् । यदात्मकाश्चैते प्रकृत्यादयः स परमपुरुषोऽपि

"त षड्विंशक[2]मित्याहुः सप्तविशमथापरे ।
पुरुष निर्गुण साख्यमथर्वशिरसो विदुः"—

इति प्रतिपाद्यते । अपरे चाथर्वणिका "अष्टौ प्रकृतयः षोडश विकारा" इत्यधीयते । श्वेताश्वतराश्चैव प्रकृतिपुरुषेश्वरस्वरूपमामनन्ति—

"सयुक्तमेतत् क्षरमक्षर च
व्यक्ताव्यक्त भरते विश्वमीशः ।
अनीशश्चा[3]ऽन्यो बध्यते भोक्तृभावाज्
ज्ञात्वा देव मुच्यते सर्वपाशैः[4] ॥
ज्ञाज्ञौ द्वावजावीशनीशा—*
वजा ह्येका भोक्तृभोगार्थयुक्ता ।
अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता
त्रय यदा विन्दते ब्रह्ममेतत्[5] ॥
क्षर प्रधानममृताक्षर हरः
क्षरात्मानावीशते देव एकः ।
तस्याभिध्यानाद्योजना[6]त्तत्त्वभावा-
द्भूयश्चान्ते विश्वमायानिवृत्ति"रिति ।

तथा,

"छन्दासि यज्ञाः क्रतवो व्रतानि
भूत भव्य यच्च वेदा[7] वदन्ति" ।

१ सङ्ख्याकमिति मु पु॰ ।  २ षड्विंशकमिति मु पु ।
३ अनीशश्चात्मा बध्यते इति पा॰ ।  ४ सर्वपाशैरिति लि पु॰ ।
* वीशनीशौ, छान्दसो ह्रस्वः, ईशानीशावित्यर्थ इतीशावास्योपनिषद्भाष्ये । ईशानीशावित्येव तु पाठस्तत्रतत्र ।  ५ ब्रह्म चैतदिति मु॰ पु॰ ।
६ तस्याभिधानायोजनादिति लि॰ पु॰ ।  ७ देवा इति पा॰ ।

"अस्मान्मायी सृजते विश्वमेतत्
तस्मिँश्चान्यो मायया सन्निरुद्धः ॥
मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जग"दिति ।

तथोत्तरत्राऽपि—

"प्रधानक्षेत्रज्ञपतिर्गुणेशः
संसारमोक्षस्थितिबन्धहेतु"रिति ।

स्मृतिरपि—

"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥
कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषस्सुखदुःखानाम्भोक्तृत्वे हेतुरुच्यते ॥
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" ॥
"सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम्" ॥ तथा,
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्" ॥
"प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्" ॥
"मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय ? जगद्विपरिवर्त्तते" इति ।

तस्माद्ब्रह्मात्मकत्वेन कापिलतन्त्रसिद्धाः प्रकृत्यादयो निरस्यन्ते ॥

श्वेताश्वतरोपनिषदि श्रूयते—

"अजामेकां लोहितशुक्लकृष्णां

बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनाम्भुक्तभोगामजोऽन्य" इति ।

तत्र सन्देहः—किमस्मिन्मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयत उत ब्रह्मात्मिकेति । किं युक्तम् । केवलेति । कुतः । 'अजामेका'मित्यस्याः प्रकृतेरकार्य्यत्वश्रवणाद् 'बह्वीः प्रजाः सृजमाना सरूपा' इति स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्टृत्वश्रवणाच्चेत्येवम्प्राप्तेऽभिधीयते—

'चमसवदविशेषा'दिति,

नाऽत्र तन्त्रसिद्धा प्रकृतिरभिधीयते । कुतः । न जायत इत्यजेत्यजात्वमात्रप्रतिपादनात्, तन्त्रसिद्धाऽब्रह्मात्मकाऽजाग्रहणे विशेषाप्रतीतेः । 'चमसवत्,' यथा "ऽर्वाग्बिलश्चमस ऊर्द्ध्वबुध्न" इत्यस्मिन्मन्त्रे चमसस्य भक्षणसाधनत्वमात्रं चमसशब्देन प्रतीयत इति न तावन्मात्रेण चमसविशेषप्रतीतिः । यौगिकशब्दानामर्थप्रकरणादिभिर्विनाऽर्थविशेषनिश्चयाऽयोगात् । तत्र च यथा "इदन्तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्द्ध्वबुध्न" इत्यादिना वाक्यशेषेण शिरसश्चमसत्वनिश्चयः, तथा ऽत्राऽप्यर्थप्रकरणादिभिरेवाजा निर्णेतव्या । न चाऽत्र तन्त्रसिद्धाऽजाग्रहणहेतवोऽर्थप्रकरणादयो दृश्यन्ते । नचास्याः स्वातन्त्र्येण स्रष्टृत्वं प्रतीयते, 'बह्वीः प्रजाः सृजमाना'मिति स्रष्टृत्वमात्रप्रतीतेः । अतो ऽनेन मन्त्रेण नाऽब्रह्मात्मिका ऽजा ऽभिधीयते ।

ब्रह्मात्मिका[1]ग्रहणे एव विशेषतो हेतुरस्तीत्याह—

**ज्योतिरुपक्रमा तु[2] तथा ह्यधीयत एके ॥ ९ ॥**

'तु'—शब्दोऽवधारणार्थः । ज्योतिरुपक्रमैवैषा ऽजा । ज्योतिर्ब्रह्म, 'तन्देवा ज्योतिषां ज्योतिः', 'अथ यदतः परो दिवो ज्योतिर्दीप्यत' इत्यादिश्रुतिप्रसिद्धेः । ज्योतिरुपक्रमा[3] ब्रह्मकारणिकेत्यर्थः । तथा ह्यधीयत एके, हि-

१ ब्रह्मात्मिकाजा इति पाठः ।
२ रुपक्रमादिति सु॰ लि॰ च पाठो न तु युक्तः ।
३ रुपक्रमादिति लि॰ पु॰ ऽत्रापि ।

हेतौ[1], यस्मादस्या अजाया ब्रह्मकारणकत्वमेके शाखिनस्तैत्तिरीया अधीयते—

"अणोरणीयान्महतो महीया-
नात्मा गुहाया निहितो ऽस्य जन्तो"रिति—

हृदय उपास्यत्वेन[2]सन्निहित ब्रह्माभिधाय 'सप्त प्राणा' प्रभवन्ति तस्मा"दित्यादिना सर्वेषा लोकाना ब्रह्मादीनाञ्च तत उत्पत्तिमभिधाय सर्वकारणभूताऽजा तत उत्पन्नाऽभिधीयते ।

"अजामेका लोहितशुक्लकृष्णा
बह्वी प्रजा जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनाम्भुक्तभोगामजोऽन्यः ॥ इति ।

सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या[3] तदात्मकत्वोपदेशे प्रक्रियमाणे ऽभिधीयमानत्वात्प्राणसमुद्रपर्वतादिवदेषाऽप्यजा बह्वीना सरूपाणा प्रजाना स्रष्ट्री कर्म्मवश्येनाऽऽत्मना भुज्यमानाऽन्येन विदुषाऽऽत्मना त्यज्यमाना च ब्रह्मण उत्पन्ना ब्रह्मात्मिका ऽवगन्तव्येत्यर्थः । अतो वाक्यशेषाच्चमसविशेषवच्छाखान्तरीयादेतत्स्वरूपात्प्रत्यभिज्ञायमानार्थाद्वाक्यान्नियमिता ऽजा ब्रह्मात्मिकेति निश्चीयते । इहाऽपि प्रकरणोपक्रमे, किं कारणम्, ब्रह्मेत्यारभ्य

"ते ध्यानयोगाऽनुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढा"मिति—

परब्रह्मशक्तिरूपाया अजाया अवगतेः । उपरिष्टाच्च—

"अस्मान्मायी सृजते विश्वमेतत्
तस्मिँश्चान्यो मायया सन्निरुद्धः ॥
मायान्तु प्रकृति विद्यान्मायिनन्तु महेश्वरम्" ।

१ हीति हेताविति लि पु ।
२ जन्तोर्निहित गुहायामिति हृदयगुहायामुपास्यत्वेनेति मु पु पाठ ।
३ उत्पत्ति—इति लि पु० ।

च्छरीरादुत्क्रामति स तदा वागादिभिः प्राणैः सहोत्क्रामतीति मरणसमय उत्क्रान्तिः श्रूयते । 'ये के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती''ति, "तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मण''इति गत्यागती श्रुयेते । इदं चात्मनो विभुत्वे न सम्भवतीत्यणुत्वं परिशिष्यते, शरीरपरिमाणस्यात्मनो नित्यत्वविरुद्धत्वेनासम्भवादिति ॥

## स्वात्मना चोत्तरयोः ॥ २ । ३ । २० ॥

यद्यप्युत्क्रान्तिर्देहस्वाम्यनिवृत्तिरूपा विभुत्वेऽपि सम्भवति, तथाऽप्युत्तरयोर्गत्यागत्योः स्वात्मना जीवात्मना सम्बद्धत्वादणुत्वमित्यर्थः ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २ । ३ । २१ ॥

ननु नायं जीवोऽणुः । अतच्छ्रुतेरनणुत्वश्रुतेः "सवा एषमहानज आत्मा सत्यं ज्ञानमनन्तं ब्रह्मे''त्यादिना महत्त्वश्रुतेरिति चेन्न । इतराधिकारात् । इतरस्य ब्रह्मणः सर्वेषु वेदान्तेषु प्रधानतया ज्ञेयत्वेन प्रकृतत्वात्तस्यैव महत्त्वश्रुतिरित्यर्थः ॥

## स्वशब्दोन्मानाभ्यां च ॥ २ । ३ । २२ ॥

"एषोऽणुरात्मा चेतसा वेदितव्य'' इति स्वस्याणुत्वस्य वाचकशब्दात्, जीवोऽणुः "वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः स चानन्त्याय कल्पत'' इत्युन्मानाच्च । सर्वेभ्यः स्थूलपरिमाणेभ्य उद्धृत्य मानमुन्मानमत्यन्तापकृष्टपरिमाणमिति यावत् । तस्मादित्यर्थः ॥

नन्वात्मनोऽणुत्वे जाह्नवीतोयनिमग्नस्य देहव्यापिशैत्योपलब्धिविरोध इत्यत आह ।

**अविरोधश्चन्दनवत् ॥ २ । ३ । २३ ॥**

यथा चन्दनबिन्दुः शरीरैकदेशस्थः सर्वशरीरव्यापिसुखं जनयति, तथा जीवोऽपि देहव्यापिनं शैत्याद्युपलम्भं करिष्यतीत्यविरोध इत्यर्थः ॥

**अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २ । ३ । २४ ॥**

ननु नात्र चन्दनदृष्टान्तः । अवस्थितिवैशेष्यात् । प्रत्यक्षेण चन्दनबिन्दोरेकदेशेऽवस्थितिर्ज्ञायते, जीवस्य तु नैवमित्यतुल्यत्वादित्यर्थः । तथा च व्यापिशैत्याद्युपलम्भरूपकार्येण महत्त्वकल्पनं युक्तमिति शङ्काऽभिप्रायः । निराकरोति "ने"ति । कुतः । अभ्युपगमाज्जीवाणुत्वस्य । कथमभ्युपगम्यते । तत्राह "हृदिही"ति । हि यतोऽल्पपरिमाणे हृदि जीवः पठ्यते "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इत्यादौ । तस्माज्जीवस्याणुत्वं श्रुत्याऽभ्युपगम्यत इत्यर्थः । अतो न दृष्टान्तवैषम्यमिति भावः ॥

**गुणाद्वा लोकवत् ॥ २ । ३ । २५ ॥**

आत्मनोऽणुत्वेऽपि तन्निष्ठज्ञानगुणस्य व्यापकत्वाङ्गीकाराद्व्यापकगुणाद्वा व्यापिकार्यं भविष्यति । लोकवद्व्यापिप्रभागुणकप्रदीपादिवत् । गृहनिष्ठदीपस्याल्पत्वेऽपि प्रभाऽऽत्मकगुणवशाद्यथा गृहव्यापिप्रकाशादिकार्यं जायते तद्वदित्यर्थः ॥

ननु ज्ञानस्य व्यापकत्वेऽणुजीवव्यतिरेकेणावस्थानं वक्तव्यम् । तदयुक्तं, गुणिव्यतिरिक्तदेशे गुणस्यावस्थाना-

दर्शनात् । न च दीपप्रभान्यायः, प्रभाया दीपसंयुक्तद्रव्यान्तरत्वादित्यत आह ।

**व्यतिरेको गन्धवत् ॥ २ । ३ । २६ ॥**

यथा गुणस्यापि गन्धस्य गुणिव्यतिरेकेण वृत्तिः, पुष्पपेटिकातो दूरस्थितस्य पुंसो गन्धोपलम्भदर्शनात् । तद्वद्गुणिव्यतिरेको ज्ञानस्येत्यर्थः ॥

**तथा च दर्शयति ॥ २ । ३ । २७ ॥**

आराग्रात्मनश्चैतन्यगुणेनैव देहव्याप्तिरित्यत्र श्रुतिमाह सूत्रकारः । "स तथा चे"ति हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय, "आलोमभ्य आनखाग्रेभ्य" इति चैतन्यगुणेन सर्वदेहव्यापित्वं दर्शयतीति सूत्रार्थः ॥

तत्रैव श्रुत्यन्तरार्थसूत्रम् ।

**पृथगुपदेशात् ॥ २ । ३ । २८ ॥**

"प्रज्ञया शरीरं समारुह्ये"त्यात्मज्ञानयोः कर्तृकरणभावेन पृथगुपदेशाद्व्यापिगुणद्वाराऽस्य जीवस्य शरीरव्याप्तिर्गम्यते । एनमेवाभिप्रायमुपोद्बलयति "तदेषां प्राणानां विज्ञानेन विज्ञानमादाये"ति च कर्तुः शारीरात्पृथग्विज्ञानस्योपदेशः । विज्ञानमिन्द्रियाणां ज्ञानशक्तिं विज्ञानेन चैतन्यगुणेनादाय शेत इत्यर्थः ॥

तथा च व्यापकं ज्ञानं जीवस्त्वणुरिति महत्त्वश्रुतीनां बाध इति प्राप्ते जीवाणुत्वस्यौपाधिकत्वान्न वास्तवापरिच्छिन्नत्वश्रुतिबाध इति सिद्धान्तयति ।

**तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २ । ३।२९ ॥**

"तु" शब्दः कृतपूर्वपक्षनिरासवाचकः । अणुर्जीवः किं ब्रह्मणस्तत्त्वान्तरं, उत विकारः, आहोस्विद्ब्रह्माभि-

न्नः । नाद्यः, एकविज्ञानात्सर्वविज्ञानप्रतिज्ञाबाधात् । न द्वितीय इत्युक्तम् । तस्मात्सर्वश्रुत्यनुसारी तृतीयः पक्षः परिशिष्यते । तथा च ब्रह्मणोऽनवधिकमहत्त्वावगमाज्जीवोऽप्यनवधिकमहत्त्ववान्, "स वा एष महानज आत्मा योऽयं विज्ञानमयः"इति विज्ञानमयस्य जीवस्य स्वतो महत्त्वावगमाच्च । "एषोऽणुरात्मा चेतसा वेदितव्य"इत्येतन्न जीवविषयं, वेदितव्यत्वश्रवणात् । किं तु चक्षुराद्यगोचरत्वेन दुर्विज्ञेयब्रह्मविषयम् । "वालाग्रशतभागस्ये"ति वाक्यं तु जीवस्यौपाधिकमणुत्वमनूद्य "स चानन्त्याय कल्पत"इति वाक्यशेषेणानन्त्यमपरिच्छिन्नत्वं बोधयति । किं च आत्मनोऽणुत्वे देहव्याप्त्युपलम्भो न स्यात् । न च चन्दनबिन्दुदृष्टान्तः, तस्य सावयवत्वेनावयवद्वारा देहव्यापित्वसम्भवात् । नापि व्यापिज्ञानाद्व्यापिकार्यसम्भवः, गुणिव्यतिरेकेण गुणस्यावस्थानायोगेन व्यापिज्ञानस्यासम्भवात् । न च गन्धन्यायेन गुणस्य ज्ञानस्य गुणिव्यतिरेकसम्भवः, गन्धस्यापि गुणत्वेन साश्रयस्यैवावगमनाङ्गीकारात् । अन्यथा गुणत्वव्याहतेर्गन्धस्य द्रव्यत्वेन तव दृष्टान्तो भवेत् । "प्रज्ञया शरीरं समारुह्ये"त्येतदपि प्रज्ञया बुद्ध्याख्यान्तःकरणेनेति व्याख्येयम् । कथं तर्हि जीवेऽणुत्वव्यपदेशः । तद्गुणसारत्वादिति ब्रूमः । तस्या बुद्धेर्गुणा अणुत्वोत्क्रान्तिगत्यागतिसुखदुःखादयस्ते गुणाः सारः प्रधानं यस्य स तथा तस्य भावस्तत्त्वं तस्मात्तद्व्यपदेशोऽअणुत्वादिव्यपदेशो न स्वाभाविकः, प्राज्ञवत् । प्राज्ञस्य परमात्मनः सगुणोपासनेषु "दहरोऽस्मिन्नन्तराकाशः" "अणीयान्व्रीहेर्वा यवाद्वे"त्यादिषूपाधिवशाद्यथाऽणुत्वादिकं व्यपदिश्यते तद्वदित्यर्थः ॥

नन्वात्मन्यणुत्वादिसंसारस्य बुद्ध्युपाधिकत्वे कदाचिदात्मनो बुद्ध्या वियोगे संसारो न स्यादित्यत आह ।

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्॥२।३।३०॥**

बुद्धिसंयोगस्य यावत्संसार्यात्मभावित्वान्न पूर्वोक्तदोषः । संयोगस्य यावदात्मभावित्वं कुत इत्यत आह "तद्दर्शना"दिति । देहवियोगेऽपि बुद्धिसंयोगस्य श्रुतौ दर्शनाद्यावदात्मभावित्वमित्यर्थः । "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीवे"त्यादिका श्रुतिः । विज्ञानमयो बुद्धिप्रधानो जीवो बुद्ध्या समानः सन्निममसुं च लोकमनुसञ्चरति । तदेवाह "ध्यायतीवे"ति । बुद्धौ ध्यायन्त्यां स्वयं ध्यायतीव, चलन्त्यां चलतीव । न वस्तुतो ध्यानादिरस्तीत्यर्थः । भ्रममूलकस्य बुद्धिसंयोगस्य सत्त्वसाक्षात्कारपर्यन्तमवस्थानाद्यावदात्मभावित्वमित्यपि द्रष्टव्यम् ॥

ननु सुषुप्तौ ब्रह्मसम्पत्तिकार्यनाशयोरभ्युपगमान्न बुद्धिसंयोगस्य यावदात्मभावित्वमित्यत आह ।

**पुंस्त्वादिवत्त्वस्य सतो ऽभिव्यक्तियोगात् ॥ २ । ३ । ३१ ॥**

यथा बाल्ये पुंस्त्वादेस्सत एव यौवनेऽभिव्यक्तिः, एवं बुद्धिसंयोगादेः सुषुप्तौ सूक्ष्मात्मना सत एवाभिव्यक्तिसम्भवाद्यावदात्मभावित्वं न विरुद्धमित्यर्थः ॥

ननु बुद्ध्यपरपर्यायान्तःकरणे किं प्रमाणं, यत्प्रयुक्तः संसारः स्यादित्यत आह ।

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ २ । ३ । ३२ ॥**

इदमन्तःकरणमवश्यमभ्युपगन्तव्यम् । अन्यथा मनसोऽनभ्युपगमे सर्वेषामिन्द्रियाणां स्वस्वविषयसन्निधानदशायां नित्योपलब्धिप्रसङ्गो युगपत्सर्वविषयोपलब्धिप्रसङ्गः, मनोव्यतिरिक्तज्ञानसामग्र्याः सत्त्वात् । यदि सत्यामपि सामग्र्यां फलाभावस्तदा नित्यानुपलब्धिप्रसङ्गः, एकस्याप्युपलब्धिर्न स्यादित्यर्थः । अथ वैकस्योपलब्धिमितरेषामनुपलब्धिमिच्छता ज्ञानसामग्रीमध्येऽन्यतरस्यात्मन इन्द्रियस्य वा नियमः शक्तिप्रतिबन्धोऽङ्गीकर्तव्यः । स न सम्भवति, निर्धर्मक आत्मनि शक्तेरभावात् । नापीन्द्रियस्य शक्तिप्रतिबन्धः, प्रतिबन्धकाभावात् । तस्माद्व्यासङ्गस्थल इच्छैव नियामिकेति वक्तव्यम् । इच्छा च नात्मनः, निर्गुणब्रह्माभिन्नत्वस्य श्रुतिशतेभ्यः प्रतिपादनात्, "कामः सङ्कल्प" इत्यादिश्रुत्या मनोधर्मत्वस्येच्छादाववगतत्वाच्च । तस्माद्व्यासङ्गनियामिकेच्छाऽन्यथाऽनुपपत्त्या श्रुत्या च सिद्धमन्तःकरणम्, यत्प्रयुक्तश्चात्मनि संसार इति ॥

तद्गुणसारत्वमेवात्मनः कर्तृत्वसाधनेन प्रपञ्चयति ।

**कर्ता शास्त्रार्थवत्त्वात् ॥ २ । ३ । ३३ ॥**

अत्रात्मनोऽसङ्गत्वश्रुतीनां कर्तुरिष्टसाधनबोधकविधिवाक्यैर्विरोधसन्देहे सांख्योक्तबुद्धिकर्तृत्वव्यावर्तनेनात्मन एव कर्तृत्वमत्र साध्यते । तच्च कर्तृत्वमौपाधिकमित्युत्तराधिकरणे वक्ष्यत इति न विरोध इत्यभिप्रायेण सिद्धान्तयति "कर्ते"ति । आत्मैव कर्ता, न बुद्धिः, कर्तुर-

पेक्षितोपायबोधकविधिशास्त्रस्यार्थवत्त्वात् । आत्मनः कर्तृत्वे विधिशास्त्रमर्थवद्भवति । अन्यथा बुद्धिः कर्त्री, आत्मा फलभोक्तेति कर्तुरपेक्षितोपायबोधकशास्त्रमनर्थकमेव स्यात् । तस्मान्न केवलबुद्धेः कर्तृत्वं, किं त्वात्मन इति ॥

विहारोपदेशात् ॥ २ । ३ । ३४ ॥

"स ईयतेऽमृतो यत्र काम"मिति, "स्वेशरीरे यथाकामं परिवर्तते" इति च जीवप्रकरणे स्वप्नावस्थायां विहारस्य सञ्चरणस्योपदेशाज्जीवस्य कर्तृत्वमित्यर्थः । अकर्तुः सञ्चरणायोगादिति भावः । यत्र स्वप्नेऽमृतः स जीवः कामं विषयानीयते गच्छतीत्यर्थः । परिवर्तते विहरति ॥

किञ्च ।

उपादानात् ॥ २ । ३ । ३५ ॥

"प्राणानां विज्ञानेन विज्ञानमादाये"त्यात्मनो ग्रहणशक्त्युपादानश्रवणादकर्तुरुपादानायोगादात्मनः कर्तृत्वमित्यर्थः । प्राणानामिन्द्रियाणां विज्ञानेन मनसा तज्जन्यबुद्ध्या वा विज्ञानं ग्रहणशक्तिमादाय स्वापे हृदयं गच्छतीति योजना ॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ २ । ३ । ३६ ॥

"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे"ति लौकिकवैदिकक्रियायां विज्ञानशब्दवाच्यस्यात्मनः कर्तृत्वव्यपदेशाच्चात्मनः कर्तृत्वमित्यर्थः । यज्ञं सङ्कल्पम् । ननु विज्ञानशब्दो बुद्धिपरो, न जीवपर इत्यत आह "न चेदि"ति । विज्ञानशब्दो जीवपरो न चेत्तर्हि निर्देशविप-

र्थयः स्यात्। बुद्धेः करणत्वेन कर्तृत्वव्यपदेशो "विज्ञानं यज्ञं तनुत" इति न स्यात्। किं तु "विज्ञानेने"ति स्यादित्यर्थः ॥

ननु स्वतन्त्रस्यात्मनः कर्तृत्वेऽनिष्टं न कुर्यात्किं त्विष्टमेव कुर्यादित्यत आह ।

**उपलब्धिवदनियमः ॥ २ । ३ । ३७ ॥**

यथोपलब्धौ स्वतन्त्रोऽप्यात्मेष्टमनिष्टं चोपलभते तद्वदिष्टमनिष्टं च सम्पादयिष्यतीत्यनियम इत्यर्थः । अयं भावः । स्वातिरिक्तकरणानपेक्षस्वरूपं स्वातन्त्र्यं तावन्न सम्भवति, ईश्वरस्यापि तदभावात्। किं तु सकलकारकप्रेरकत्वम् । तथा च तेषु कारकेष्वनिष्टसाधनेष्वपीष्टसाधनत्वभ्रमादनिष्टमपि प्राप्नोतीति ॥

**शक्तिविपर्ययात् ॥ २ । ३ । ३८ ॥**

इतश्च बुद्धिव्यतिरिक्तो जीवः कर्ता, न बुद्धिः । अन्यथा बुद्धेः कर्तृत्वे करणशक्तिविपर्ययात्, करणशक्तिर्हीयेतेति यावत् । न चेष्टापत्तिः, करणसहितस्यैव कर्तुर्लोके कार्यकारित्वदर्शनात् । बुद्धेरपि करणान्तरं कल्पनीयं स्यात् । तथा च नाममात्रे विवादो, न वस्तुनि, करणव्यतिरिक्तस्यैव त्वयाऽपि कर्तृत्वाभ्युपगमादिति ॥

इतश्च बुद्धिव्यतिरिक्तो जीवः कर्ता ।

**समाध्यभावाच्च ॥ २ । ३ । ३९ ॥**

आत्माकारवृत्तिर्विद्यमानाऽप्यसतीव यत्र यत्र भवति स समाधिशब्देनोच्यते । तस्य समाधेरात्मनोऽकर्तृत्वेऽभावप्रसङ्गात्समाध्यन्यथाऽनुपपत्त्याऽऽत्मनः कर्तृत्वमित्यर्थः । समाधिग्रहणं श्रवणमनननिदिध्यासनानामुपलक्षणम् ॥

एवं बुद्धिव्यतिरिक्तात्मनः सिद्धं कर्तृत्वम् । तच्च न स्वाभाविकं, किं त्वौपाधिकमित्याह ।

**यथा च तक्षोभयथा ॥ २ । ३ । ४० ॥**

पूर्वं सांख्याभिमतबुद्धिकर्तृत्वनिरासेनात्मनः कर्तृत्वं समर्थितम् । तत्किं स्वाभाविकमौपाधिकं वेति सन्देहे पूर्वोक्तशास्त्रार्थवत्त्वादिभिरेव हेतुभिः स्वाभाविकमित्यस्त्यसङ्गत्वश्रुतिविधिशास्त्रयोर्विरोध इत्यस्याधिकरणस्य पूर्वपक्षः । नन्वेतस्य पूर्वपक्षस्यैतदधिकरणनिरस्यत्वे पूर्वाधिकरणं व्यर्थमिति चेन्न । तस्य बुद्धिकर्तृत्वनिरासेनैतदधिकरणविषयकर्तृत्वप्रतिपादकत्वान्न व्यर्थतेति । तत्रेदमुत्तरम् । न तावत्कर्तृत्वं स्वाभाविकम्, श्रुतावौपाधिकत्वेन कर्तृत्वस्य स्फुटीकृतत्वात् । तथा हि, आकाशे विपरिपततः श्येनस्येवात्मन उपाधिकृतं श्रमं स्वप्नजागरितयोः श्रावयित्वा सुषुप्तौ लीनोपाधिकस्य तस्यात्मनः परमानन्देन सम्परिष्वक्तस्य श्रमाभावं श्रावयति "तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तर"मित्यारभ्य, "एषाऽस्य परमागतिरेषाऽस्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द" इत्यन्तेन । तदेतत्प्राप्तं, ब्रह्मास्य जीवस्यात्मकामम् । कामशब्दः कामयितव्यपरः । सर्वत्र स्वरूपेण कामयितव्यमित्यर्थः । तत्र हेतु "राप्तकाम"मिति । आप्तकामत्वे हेतु "रकाम"मिति । यतः परं काम्यं नास्ति तदकामम् । अशेषशोकसंसर्गशून्यत्वादप्याप्तकामत्वमित्याह "शोकान्तर"मिति । शोकादन्तरं भिन्नमित्यर्थः । शोकं दुःखमन्तरयति निवारयतीति वा । उक्तस्य सुषुप्त्यात्मस्वरूपस्य परपुरुषार्थमाह "एषे"त्यादिना । एतदेवाभिसन्धाय भगवान्सूत्रकारो दृष्टान्तेनौ-

पाधिकं कर्तृत्वमाह "यथा च तक्षोभयथे"ति । यथा तक्षोभयथा वास्यादिकरणान्यपेक्ष्य कर्ता दुःखी भवति, अनपेक्ष्य तु स्वरूपेणाकर्ता सुखी भवति, तथाऽऽत्माऽपि बुद्ध्यादीनि करणान्यपेक्ष्य कर्ता संसरति, अनपेक्ष्य तु स्वभावतोऽकर्ता परमानन्दः । "च" शब्दस्त्वर्थः स्वाभाविककर्तृत्वनिरासं ब्रूते । शास्त्रार्थवत्वादित्यादिहेतवश्च कर्तृत्वं विनाऽनुपपन्नास्तत्साधयन्ति, न तु कर्तृत्वस्य स्वाभाविकत्वमपि, तद्विनाऽनुपपत्तेरभावात् । यदुक्तं "विज्ञानं यज्ञं तनुत" इति बुद्ध्यतिरिक्तात्मनः कर्तृत्वव्यपदेश इति, तन्न, विज्ञानशब्दस्य चिदध्यस्तबुद्धौ रूढत्वात् "स एषवाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञ" इति श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिजन्यत्वावगमात्, अत्रापि यज्ञसाधनं विज्ञानं बुद्धिरेवेत्यवधारणाच्च । चित्तेन ध्यात्वा वाचा मन्त्रोक्तया यज्ञो जायते । तेन चित्तस्य वाचश्च पूर्वोत्तरभावो यज्ञ इति श्रुत्यर्थः । तस्मादौपाधिकमात्मनः कर्तृत्वमिति सिद्धम् ॥

## परात्तु तच्छ्रुतेः ॥ २ । ३ । ४१ ॥

यत्पुनरौपाधिकं जीवस्य कर्तृत्वमुक्तं तत्किमीश्वरायत्तं न वेति सन्देहे, जीवस्य करणादिपौष्कल्यादेव कर्तृत्वसिद्धेस्तस्येश्वरायत्तत्वं नेति प्राप्तम् । न च "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष ह्येवासाधुकर्म कारयति तं यमधो निनीषते" इति श्रुत्येश्वरायत्तत्वं कर्तृत्वस्येति वाच्यम् । तथात्वे विधिनिषेधस्थान ईश्वर एवाभिषिक्त इति विधिनिषेधशास्त्रवैयर्थ्यं स्यात् । इति प्राप्ते ब्रूमः । "तु" शब्देन पूर्वपक्षं निरस्य प्रतिजानीते "परा"दिति । परमेश्वरादेव जीवस्य कर्तृत्वादिसंसारस्य मोक्षस्य च सिद्धिर्भवितुमर्हति । कुतः ।

तच्छ्रुतेः कर्तृत्वादेरीश्वरायत्तत्वश्रुतेः । "एष ह्येव साधु कर्म कारयति" "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयती"त्याद्याया इत्यर्थः ॥

नन्वीश्वरस्य कारयितृत्वे धर्ममेव कारयेत्, नाधर्मम् । अन्यथा केनचित्पुंसा धर्मं केनचिदधर्मं कारयतो वैषम्यनिर्दयत्वे स्यातामित्यत आह ।

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ २ । ३ । ४२ ॥**

"तु" रुक्तशङ्कानिरासार्थः । जीवेन कृतो यः प्रयत्नो धर्माधर्मलक्षणस्तदपेक्ष एवेश्वरोऽन्यस्मिन्नपि जन्मनि धर्मादिकं कारयति, तदपेक्षस्सुखादिफलं ददाति । तेन वैषम्यनैर्घृण्ये न प्रसज्येते । अनादित्वात्संसारस्य पूर्वजन्मकृतधर्माद्यपेक्षा युक्तैव । नन्वीश्वरस्य कृतप्रयत्नापेक्षत्वं कुत इत्यत आह "विहिते"ति । ईश्वरस्य कर्मसापेक्षत्वे खलु "ज्योतिष्टोमेन स्वर्गकामो यजेत" "ब्राह्मणो न हन्तव्यः" इत्याद्ययोर्विहितप्रतिषिद्धयोर्वैयर्थ्यं भवति । अन्यथा विधिनिषेधशास्त्रमनर्थकमेव स्यात् । धर्मकृतो दुःखमधर्मकृतश्च सुखं सम्पादयेदित्यादिदोष "आदि" शब्दार्थः । तस्मादीश्वर एव पूर्वकृतसुकृताद्यनुसारेण धर्मादिकारयिता तदनुसारेण फलदाता चेति सिद्धम् ॥

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ २ । ३ । ४३ ॥**

एवं तावन्नित्यः स्वप्रकाशोऽकर्ताऽऽत्मेत्युक्तम् । तस्य सिद्धाभेदयोग्यत्वस्यात्र ब्रह्माभेदः साध्यते । अत्र "य आत्मनि तिष्ठ"न्नित्यादिभेदश्रुतिजातस्य "तत्त्वमसी"

त्याद्यभेदश्रुतिजातस्य च विरोधसन्देहे, समबलत्वादस्ति विरोध इति प्राप्तम् । भेदं विना पूर्वोक्तस्य जीवेश्वरयोरुपकार्योपकारकभावस्य स्वामिभृत्यवत्सम्बन्धसापेक्षस्यानुपपत्तेः, अभेदं विना "तत्त्वमसी"त्यादेरनुपपत्तेः, इत्यनयोः समबलत्वम् । न चोभयविधिश्रुतिभ्यामंशांशिभावाङ्गीकारान्न विरोध इति वाच्यम्, ईश्वरस्य निरंशत्वात् । इत्यस्ति विरोध इति प्राप्ते ब्रूमः "अंश"इत्यादि । जीव ईश्वरस्यांश इवांशः, न तु स्वाभाविकोंऽशः, ईश्वरस्य "निष्कल'मित्यादिनिरंशत्वश्रुतिविरोधात् । अत ईश्वरस्य कल्पितांशो जीवः । कुतः पुनर्जीवेश्वरयोरंशांशिभावः। भेदाभेदश्रुतिभ्यामित्याह "नाने"त्यादिना "एके" इत्यन्तेन सूत्रेण । "य आत्मनि तिष्ठ"न्नित्यादिना जोवेश्वरयोर्नानाव्यपदेशाद्भेदव्यपदेशादन्यथा चाप्यनानात्वस्यापि व्यपदेशादित्यर्थः । तथा ह्येके शाखिन आथर्वणिकाः "ब्रह्म दाशा ब्रह्म दासा ब्रह्म कितवाः" इत्यादिना ब्रह्मणो दाशदासकितवादिभावमामनन्ति । तस्मादनानात्वस्याभेदस्य व्यपदेश इत्यर्थः । दाशाः कैवर्ताः । दासा भृत्याः । कितवा द्यूतकृतो धृष्टाः । तस्मात्प्रत्यक्षसिद्धभेदानुवादेन श्रुतीनामभेदपरत्वात्कल्पितभेदवानंशो जीव इति ॥

**मन्त्रवर्णाच्च ॥ २ । ३ । ४४ ॥**

"पादोऽस्य विश्वा भूतानी"ति मन्त्रवर्णादपि जीवोंऽश इत्यर्थः । भूतानि स्थावरादयो जीवाः । पादोंऽश इत्यर्थः ॥

**अपि च स्मर्यते ॥ २ । ३ । ४५ ॥**

किं च, ईश्वरांशत्वं भगवद्गीतासु "ममैवांशो जीव-

लोके जीवभूतः सनातन" इति स्मर्यते । तस्मादीश्वरांशो जीवः ॥

ननु जीवस्येश्वरांशत्वे जीवगतदुःखेनेश्वरस्य दुःखित्वं स्यात्, पादादिगतदुःखेनाङ्गिनो देवदत्तस्य दुःखित्वदर्शनादित्यत आह ।

**प्रकाशादिवन्नैवं परः ॥ २ । ३ । ४६ ॥**

यथा जीवो दुःखी नैवं परमात्मा दुःखी, प्रकाशादिवत् । यथा सौरश्चान्द्रमसो वा प्रकाशो नभो व्याप्य वर्तमानो वक्रकाष्ठाद्युपाधिकृतवक्रभावमापन्नोऽपि न वस्तुतो वक्रभावं प्रतिपद्यते यथा चाकाशो घटादिषु गच्छत्सु गच्छन्निव न वस्तुतो गच्छति तद्वदित्यर्थः । बिम्बप्रतिबिम्बयोरीश्वरजीवयोर्भेदस्य सत्त्वान्न जीवदुःखेनेश्वरस्य दुःखित्वम्, उपाधेरुपहितपक्षपातित्वादिति भावः ॥

जीवदुःखेनेश्वरस्य दुखिःत्वाभावे स्मृतिमप्याह ।

**स्मरन्ति च ॥ २ । ३ । ४७ ॥**

"तत्र यः परमात्माऽसौ स सत्यो निर्गुणः स्मृतः ।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ।"

इत्यादिना व्यासादयो जीवदुःखेनादुःखित्वमीश्वरस्य स्मरन्तीत्यर्थः । "च" शब्देन "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती" त्याद्या श्रुतिः सूचिता ॥

ननु "नान्योऽतोऽस्ति द्रष्टा" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिना जीवेश्वरभेदमात्रप्रतिषेधात्सर्वभूतेषु चैतन्यस्याखण्डैकरसत्वात्कथं 'मित्रं सेवितव्यं' 'शत्रुः परिहर्तव्यः' इत्यादिलौकिकानु-

ज्ञापरिहारौ स्याताम्, कथं वा 'ऋतौ भार्यामुपेयात्' 'गुर्वङ्गनां नोपगच्छेत्' इत्यादिवैदिकानुज्ञापरिहारौ सङ्गच्छेते ग्राह्यत्याज्यभेदाभावादित्यत आह ।

**अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ २ । ३ । ४८ ॥**

उक्तौ लौकिकौ वैदिकौ वाऽनुज्ञापरिहारौ सर्वत्रात्मन एकत्वेऽपि शरीरसम्बन्धात्सङ्गच्छेते । देहसम्बन्धस्तादात्म्यम् । तत्तद्देहविशिष्टत्वेनात्मभेदादस्ति ग्राह्यत्याज्यभेदो ज्योतिरादिवत् । यथा ज्योतिषो वह्नेरेकत्वेऽपि श्मशानसम्बन्धी वह्निः परिहार्यो नेतरः, यथा वा सौरप्रकाश एकोऽप्यमेध्यादिसंयुक्तः परिहार्यो नेतरः, एवमात्माऽपीत्यर्थः ॥

ननु तथाऽपि सर्वशरीरेषु कर्म कर्तुश्चैतन्यस्यैकत्वादेकदेवदत्तशरीरावच्छेदेन कर्मकरणे धर्मादिकं यज्ञदत्तशरीरावच्छेदेनापि जायेतेत्यत आह ।

**असन्ततेश्चाव्यतिकरः ॥ २ । ३ ४९ ॥**

परिच्छिन्नान्तःकरणोपाधिकस्य कर्तुः परिच्छिन्नस्य देवदत्तात्मनो यज्ञदत्तशरीरेणासन्ततेरसम्बन्धाद्धर्मादेरव्यतिकरः । देवदत्तस्य यज्ञदत्तशरीरावच्छेदेनापि धर्मादिप्रसङ्गो नास्तीत्यर्थः ॥

**आभास एव च ॥ २ । ३ । ५० ॥**

यथाऽनेकघटजलप्रतिबिम्बितानां सूर्याभासानां मध्य एकस्मिन्सूर्याभासे कम्पमाने सूर्याभासान्तरं न कम्पते, एवमीश्वराभास एवायं जीव इति नैकस्मिञ्जीवे धर्मादिसम्बन्धिनि जीवान्तरस्य धर्मादिसम्बन्धइत्यर्थः । किं च,

येषां सांख्यादीनां बहवो विभवश्चात्मानः सर्वशरीरसम्बन्धिनस्तेषामेव धर्मादि साङ्कर्यं प्राप्नोति । तथा हि सांख्यमते तावद्भोगसाधनप्रधानसन्निधानस्य सर्वात्मनामविशिष्टत्वादेकस्यात्मनः सुखादिसम्बन्धे सर्वात्मनां सुखादिसम्बन्धः स्यात् । एवं न्यायमतेऽपि देवदत्तात्मनः सुखादिहेतुमनस्संयोगस्य सर्वात्मनामविशिष्टत्वात्फलानियमः स्यादेव ॥

नन्वदृष्टनियमात्फलनियम इति चेत्तत्राह ।

**अदृष्टानियमात् ॥ २ । ३ । ५१ ॥**

सांख्यमते प्रधानसमवेतमदृष्टम् । ततश्च प्रधानस्य सर्वसाधारण्याददृष्टस्याप्यनियमात्फलानियमस्तदवस्थः । न्यायमतेऽप्यदृष्टहेतुमनःसंयोगस्य सर्वात्माविशेषादिदमस्यादृष्टमस्य नेत्येवंरूपस्यादृष्टनियमस्याभावात्फलानियम इत्यर्थः ॥

नन्वहमिदं फलं प्राप्नवानीदं परिहरिष्यामीदं करिष्य इदं न करिष्य इत्येवंरूपाभिसन्ध्यादयः प्रत्यात्मनियताः सन्तः स्वप्रयोज्यादृष्टनियमहेतवो भविष्यन्तीत्यत आह ।

**अभिसन्ध्यादिष्वपि चैवम् ॥ २ । ३ । ५२ ॥**

अभिसन्ध्यादिष्वपि साधारणमनस्संयोगसाध्येष्वदृष्टवदनियम इत्यर्थः ॥

**प्रदेशादिति चेन्नान्तर्भावात् ॥ २ । ३ । ५३ ॥**

नन्वात्मनां विभुत्वेऽपि स्वस्वशरीरावच्छिन्न एवात्मप्रदेशेऽभिसन्ध्यादिहेतुमनस्संयोग इति भवत्यभिसन्ध्यादिनियम इति चेन्न । सर्वात्मनां सर्वशरीरेष्वन्तर्भावादस्यात्मन इदं शरीरमित्यत्र नियामकाभावादस्यात्म

नोऽस्मिन्शरीरे प्रदेश इति प्रदेशकल्पना न सम्भवती- त्यर्थः । तस्मादस्मत्पक्ष एव सकलदोषाभाव इति सिद्धम् ॥

॥ इति द्वितीयाध्यायस्य तृतीयः पादः ॥

---

एवं महाभूतजीवविषयश्रुतिविरोधं परिहृत्य लिङ्ग- शरीरविषयश्रुतिविरोधं परिहर्तुं पादान्तरं करिष्यमाणः पूर्वाधिकरणे कर्तृस्वरूपावधारणेन बुद्धिस्थानां कर्त्रुपकर- णानामिन्द्रियाणामुत्पत्तिं साधयति ।

**तथा प्राणाः ॥ २ । ४ । १ ॥**

अस्मिन्नपि पादे पूर्वपक्षे श्रुतीनां मिथो विरोधेनाप्रा- माण्याद्ब्रह्मसमन्वयासिद्धिः फलम्, सिद्धान्ते तासामवि- रोधेन प्रामाण्यात्समन्वय सिद्धिरिति बोध्यम् । तत्र ताव- "दात्मन आकाशः सम्भूत" इत्याद्युत्पत्तिप्रकरणेष्विन्द्रि- याणामुत्पत्तिर्न श्रूयते । क्वचिच्च, "ऋषयो वाव तेऽग्रेऽस- दासीत् । तदाहुः के ते ऋषय इति । प्राणावाव ऋषयः" इत्यत्र सृष्टेः प्रागिन्द्रियाणां सद्भावश्रवणादनुत्पत्तिरिति भाति । क्वचित्तु, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथिवी" त्यादावुत्पत्तिरिन्द्रियाणां श्रूयते । एतासां श्रुतीनां मिथो विरोधोऽस्ति न वेति सन्देहे, विनिगमनाभावादस्ति विरोध इति प्राप्ते, सृष्टेः पूर्वमिन्द्रियसद्भावश्रवणादुत्पत्तिश्रुतिर्गौणीत्यविरोध इत्ये- कदेशिना सिद्धान्तितम् । तं दूषयति "तथे"ति । तथा "एतस्माज्जायते प्राण" इत्याद्युदाहृतवाक्यस्याकाशादि- वत्प्राणा इन्द्रियाणि जायन्ते । उत्पत्तिश्रुतेरविशेषादि- त्यर्थः ॥

यदुक्तं सृष्टेः प्रागिन्द्रियसद्भावश्रवणादुत्पत्तिश्रुति- गौणीति तत्राह ।

चमूचक्रमिति सैन्यमण्डलमिति भाव । अञ्जनेति । अञ्जनस्य पुञ्जवत् समूहवत् छवि कान्ति यस्य तत्तथाभूत शरीर यस्य स ॥

वक्ष:स्थल इति । नीलस्य तन्नाम्न वानरस्य करेण उत्क्षिप्तेन प्रक्षिप्तेन नीलाचलस्य शिखरेण वक्ष स्थले हृदये झगिति शब्दपुर स्सर कृतप्रहार आहत लङ्केश्वर रावण हरिणेक्षणाना मृगीदृशा वसन्ते यन्नीलोत्पलप्रहरण क्रीडाया तन्नून स्मरति । कामिनीकृतनीलोत्पलप्रहरणमिव सुखसह नीलकृतपर्वतप्रहरण रावणस्येति भाव । स्मरणमलङ्कार: । वसन्ततिलक वृत्तम ॥ २६ ॥

(१३८)नीलोऽयमिति । अय नील वानर दशमुखस्य रावणस्य पाणय एव पङ्कजानि तेषामङ्केषु कोटरेषु भ्रमन् सन् कमलगर्भेषु भ्रमरस्य तुला समता विभर्ति वहति । पुन एकोऽपि नील दशसु रावणशिरस्थकिरीटपीठिकासु द्राक झटिति प्रेङ्खन् चलन् सन् इन्द्रनीलस्य मणेर्लीला शोभामनुभवति । रावणमुकुटखचितेन्द्रनील मणिरिव भातीति भाव । एतेन रावणशरीरापेक्षया नीलशरीरस्य अल्पिष्ठत्वं प्रदर्शितम । प्रहर्षिणी वृत्तम ॥ २७ ॥

स्वामीति । स्वामिन रामस्य पक्षपाती ।

येयमिति । क्रूरेण निर्दयेन रक्षसा रावणेन या शक्ति शस्त्रविशेष विभीषणे विभीषणहननार्थ मुक्ता आक्षिप्ता सा शक्ति प्रिया वल्लभा इव लक्ष्मणेन निजवक्षसा हृदयेन गृहीता विभीषणश्च रक्षित इति भा'व ॥ २७ ॥

रामस्यावस्था वर्णयन्नाह—वर्षन्निति । चापच्युतै धनुर्मुक्तै साय कै बाणै: दशमुख रावण समन्तत सर्वत वर्षन् । पुन:अङ्कनिहित क्रोडे कृत विसञ्ज्ञ नष्टचेतनं लक्ष्मण नेत्रच्युतैरश्रुभि वर्षन् सन् । कपीना दृश नेत्राणि हर्षशोकाभ्या तरलाः चञ्चलाः कुर्वन् । पूर्वं रावणोपरि शरवर्षपात दृष्ट्वा तेषा हर्ष पश्चात लक्ष्मणोपर्यश्रुवर्षपात दृष्ट्वा शोकश्च । एव कुर्वन् सन् राम अमला स्वच्छा केलि विलसित ययो तौ तयो: तथाभूतयो वीरकारुण्यरसयोर्व्यामिश्रता मिश्रीभाव गाहते । एतत तर्कय । शार्दूलविक्रीडित वृत्तम् ॥२८॥

(१३९) नि सञ्ज्ञ लक्ष्मण प्रति रामचन्द्र आह—हा वत्सेति । हा वत्स लक्ष्मण नेत्रपद्मे विकासय उन्मीलय । यत इदं वक्ष्यमाण समस्तं सकल युगपत एककालावच्छेदेनैव अस्त क्षय मा गात् गच्छतु । तव मरणादिति भाव । कि तत्सकलमित्यपेक्षायामाह—भाग्यमिति । दिवाकरकुलस्य सूर्य्यवंशस्य भाग्यम् उदयोन्मुखत्वम्, रामस्य जीवितम्, ऊर्मिलाया: लक्ष्मणपत्न्या: नयनाञ्जनं च । विशेषोऽलङ्कार: । वसन्ततिलक वृत्तम् ॥ ३० ॥

सुग्रीवं प्रति रामचन्द्र आह—अयि राघवाविति। अयि राघवौ रामलक्ष्मणोभयपरत्वाद्द्विवचनम् इति सुधावन्मधुर पौरमुनिलोकाना वच वचन विनिपीय श्रुत्वा। अयि राघव लक्ष्मणमरणात् केवलरामपरत्वादेकवचनम इति गरलसदृश विषतुल्य वच. अद्य रामहतक' भाग्यहीनो रामः कथं केन प्रकारेण पिबतु। प्रमिताक्षरा वृत्तम्॥ ३१॥

कनीयस्या इति। कनीयस्याः मातुः सुमित्रायाः कृतचरणपातः अहं अयोध्याप्रत्यवगमनानन्तर कृतसुमित्राप्रणामोऽहं मत्वाश्वं लक्ष्मणोचितासिष्टाने तस्या नयनयोः विफलप्रसरितनेनं लक्ष्मणादर्शनाद्वैफल्य कथ सहिष्ये। अथवा एतत्पापम अनिष्टं शान्तम। यतः यदि चेदहं कठिन' कठोरहृदय इव जीवितुमना जीवितुं मनो यस्य स.। तुंकाममनसोरपीत्यनेन मलोप'। तदापि वत्स लक्ष्मण विना अयं राम. पुनः अयोध्या प्रविशति किम्। कदाप्यहमयोध्या न गच्छामीति भाव। शिखरिणी वृत्तम्॥ ३२॥

करुणेति। करुणया एकार्णव। करुणासमुद्रे मग्नमेव समस्तं जगदिति भावः।

(१४०) लङ्केश्वरेति। लङ्केश्वरेण सह कृतं सन्धानमैकमत्यं येन स अथ च करे कलित शैलस्य पर्वतस्य शिखर येन सः तथाभूतः।

महौषधीनामिति। महौषधीनाम आधारं गन्धमादननामानं भूधर पर्वतम। आदाय गृहीत्वा मारुति हनूमान् लक्ष्मणस्य प्राणानां त्राणाय रक्षणाय अभ्येति आगच्छति॥ ३३॥

आमोदमिति। महौषधीना गन्धमादनस्थानाम् आमोदं गन्धम् आघ्राय सौमित्रिः लक्ष्मण उन्मीलिते पद्मनेत्रे यस्य स तथाभूतः सन् भूयः पुनरपि चक्रीकृत' आरोपित' चारुः चाप येन स कुण्डलीकृतकोदण्ड' राम परिपूर्णः कामोऽभिलाषः यस्य स तं तथाभूतं करोति। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः॥ ३५॥

रामरणेति। रामेण सह रणे यत्कौतूहलं तेन स्फुरत् भुजमण्डल यस्य स निशाचराणाम् आखण्डलः इन्द्रो रावण। तुलेति। तुलायाम अधिरोह'। समाना खलु विजयसम्भावना उभयोरिति भाव। अनेकेति। अनेकैर्वीरै बालिकार्त्तवीर्यप्रभृतिभि परिभूतस्य अनेकवार पराजितस्य। न कदाचिदपि तुल्यता रामरावणयोरिति भाव.।

(१४१) विन्यासमिति। नाकनारीणा स्वर्नारीणां कुचकलशेषु लसन्तः शोभमानाः ये कुङ्कुमस्यासङ्गा' कुङ्कुमचर्च्चितानि तेषा विन्यासम् अस्पृष्टेव करस्पर्श विनैव मार्ष्टुं क्षालितुम्। अधिकलङ्ककनायां

खड्गयुद्धविद्यायां कोविदः पण्डितः कः विदग्धः पटुः । दशकण्ठं विना कोऽन्यो विदग्धः अस्मत्स्वैव चालितुमिति भावः । पुनः भिन्नानि खण्डितानि यानि स्वर्गभाना देवगजाना कुम्भस्थलानि तेभ्यो बहल प्रभूत यथा स्यात्तथा गलन्ति पतन्ति यानि मौक्तिकानि तैः व्यक्तो हासः उज्ज्वलता यस्य सः । अथ च त्रिदशपतेरिन्द्रस्य यश एव यश्चन्द्र तं हन्ति नाशयति यः स एवम्भूतः चन्द्रहास दशकण्ठं विना कस्य कराग्रे अक्रीडत् विलसितोऽभूत् । स्रग्धरा वृत्तम ॥ ३५ ॥

रावणस्य पराक्रम वर्णयन्नाह–**किं ब्रूम इति** । निजचमूनां स्वसैन्यानां रक्षायां कपाटीभवत् कपाट इव रक्षन् यो वक्ष पीठः हृदयदेशः तस्मिन् पतन्तो हन्यमानाः ये कठोरकुलिशाः इन्द्रप्रक्षिप्त वज्रादय तेषामाघातेषु जातस्मितम अनादरेणेषद्धसितम् । एवम्भूत दशकण्ठ कि केन प्रकारेण ब्रूमो वर्णयामः । पुनः व्योम्न यः आभोगः देश स एव यत्सर तस्मिन् विलासिनि शोभिनि एवम्भूते यस्य रावणस्य पाणिपङ्केरुहा करकमलानां वने । शिरसि शिखरे स्थित इन्दुकलिकोत्तंस इन्दुकलिका नवचन्द्रखण्डम उत्तंस शिरोभूषणं यस्य स बालचन्द्रशेखरः शिवः यस्य स तेन तथाभूतेन कैलासेन हंसायित हंस इवाचरितम । हेलयैव धृतोऽनेन कैलासइति भावः । अस्य ऊर्ध्वोत्क्षिप्तकरे सशिवः कैलासस्तथा स्थितो यथा हंसः कमलवने इति रूपकम । शार्दूलविक्रीडित वृत्तम् ॥ ३७ ॥

राक्षसगणो रावणं स्तौति–**हेलेति** । हेलया अनायासेन उन्मूलितः चन्द्रचूडगिरिः कैलासो यैस्ते । त्रैलोक्ये जगत्त्रये दत्ता कृता आपत् विपत्ति यैस्ते । लङ्कायाः आतङ्क शत्रुभय हरन्ति ये ते । पुनः पुरन्दरपुरस्त्रीणा स्वर्नारीणां वृन्दस्य समूहस्य वन्दीकृत वन्धनकर्तारः । पुन वैदेह्याः जानक्याः कुचकुम्भे ये कुङ्कुमरसाः तेषा व्यासङ्गे सस्पर्शे बद्धा स्पृहा यैः । ते एवम्भूताः जयिनो विजयिनः दशकण्ठस्य दोष्णां केलयः विलसितानि उत्कण्ठया सहित यथा स्यात्तथा खेलन्ति क्रीडन्ति । शार्दूलविक्रीडित वृत्तम् ॥ ३८ ॥

वानरगणो विपरीतेन राम स्तौति–**हेलोन्मूलितेति** । हेलया अनायासेन उन्मूलित खण्डितं चन्द्रचूडस्य शिवस्य धनुर्यैस्ते । त्रैलोक्ये दत्तम् अभयं यैस्ते । लङ्कायाः आतङ्क भय कुर्वन्ति ये ते । पुरन्दरपुरस्त्रीवृन्दस्य बन्दी बन्धनं मोचयन्ति ये ते । वैदेह्या कुचकुम्भेषु ये कुंकुमरसाः तेषा व्यासङ्गे लब्धः उत्सवो उत्साहो यैस्ते । एवम्भूता जयिनः रघुनन्दनस्य दोःकेलयः उत्कर्षेण सहित यथा स्यात्तथा खेलन्ति । रावणविषये सोत्कण्ठमिति विशेषण तस्य रामेण कृत पराभव व्यनक्ति । रामविषये तु सोत्कर्षमिति विशेषणमगूढव्यङ्ग्यमेव । शार्दूलविक्रीडित वृत्तम् ॥ ३९ ॥

(१४२) **पुरुहूतेति** । पुरुहूतस्य इन्द्रस्य रथः ॥ रावण प्रति राम

आह-पूर्वमेवेति । पूर्वं परलोकं प्रयातानां खरमारीचबालिनां सौज
न्येन सुजनभावेन प्रीत्या मुग्धो लुब्धः सन् तेषां पन्थानम् अधिवर्तितुम्
अनुगन्तुम् ईहसे वाञ्छसि किम्? त्वमपि मद्बाणेन परलोकं
गन्तुमिच्छसीति भावः ॥ ४० ॥

रामं प्रति रावण आह—खर इति । खरः तन्नामको राक्षसः ।
कीदृशः वीरः । बाल्यपि कपिः वानरः अतो न तस्यापि वीरेषु गणना ।
मारीचहतकोऽपि कुरङ्गो हरिण एव । एतान् अवीरान् क्षुद्रपशुमह
शान् कथमपि येन केन प्रकारेण हत्वा कथं दृप्यसि गर्वितो भवसि ।
सुरपुरोऽरीन्द्राणां देवगजानां हेलया अनायासेन रचितं सम्पादितं
कदनं पीडा येन स तथाभूतः दशवदननामा पञ्चवदनः सिंहः अयं
मम प्राप्तः समागत इति पश्य ॥ शिखरिणी वृत्तम् ॥ ४१ ॥

पुनराह रावणः—कालीति । काल्याः यः केसरी सिंहः तस्य केश
राज्वलसटया सटाबालेन साटोपं यथा स्यात्तथा सम्पादितो यः क्रीडा-
चामरः तस्य तदुद्भवस्य कोमलानिलस्य मृदुपवनस्य लवेन आचान्ताः
अपसारिताः अभाम्भःकणाः श्रमस्वेदबिन्दवः यस्य सः तथाभूतः
श्रीमान् एष दशाननः विजयते । तस्यास्य मम पञ्चाननव्यापारप्रति
पादनेन पञ्चाननपराक्रमोपमानसमारोपेण कीदृग् यशःप्रशंसा
समुन्मीलति भवति । पञ्चाननपराक्रमसादृश्यसमारोपणं लघूकरणा
मेव दशाननस्येति भावः । आननसंख्याया द्विगुणत्वात् । शार्दूलवि
क्रीडितं वृत्तम् ॥ ४२ ॥

वक्तुकाम इति । वक्तुं कामः इच्छा यस्य सः । तुकाममनसोरपी-
त्यनेन मलोपः ॥

(१४३) रावणं प्रति लक्ष्मण आह दूरोन्मुक्तेति । दूरादुन्मुक्तः
त्यक्तः मदः गर्वः येन स तथाभूतः सन् विभीषण इव स्वच्छन्दं यथेष्टं
यथा स्यात्तथा न्यञ्चन् नमन् शिरःशेखरवरः मौलिमुकुटं यस्य सः
तथाभूतः भूत्वा रामस्य चरणारविन्दे भृङ्गः भव । भृङ्ग इव अरविन्दे
त्वं सानन्दं रामपादयोः पतेति भावः । अथ वा रे नक्तञ्चर निशा
चर यद्येवं न रोचते तुभ्यं तर्हि कुम्भकर्ण इव कर्णान्तं कर्णपर्यन्तं
चक्रीभवन् आकर्षणे कुण्डलितः यश्चापः तस्य उत्सङ्गात् क्रोडात्
विमुक्ताः प्रक्षिप्ताः ये बाणाः तेषां तदुत्पन्ने दहने अग्नौ सद्यः पतङ्गः
भव । किमधिकालापेन विभीषण इव रामस्य वशवर्ती भूत्वा प्राणान्
धारय अथ वा कुम्भकर्ण इव तेन युद्धे जीवनं हारय । द्वावपि पन्था-
नौ ते भ्रातृसम्मतावेवेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४३ ॥

निशामुखायितमिति । निशामुखमिव सन्ध्यासमय इवाच
रितम् । निजविशिखेति । निजविशिखानां बाणानां ये मयूखाः
किरणाः तेषां धारया जालेन अन्धकारं निवारयता अपसारयता

चन्द्र इवाचरितम। निकृत्तचापमिति। निकृत्त' खण्डितः चापः यस्य स तम॥

रावण प्रति रामचन्द्र आह–निकृत्तेति। खण्डितचापोऽसीति कारणात सक्षोभेन भयजन्येन तरसा तरल चञ्चल मा भव किङ्कर्तव्यताविमूढ' मा भव। यत रे अन्यदपि शस्त्र स्वैर यथेच्छया समरे कुरु शस्त्रान्तरप्रहार कुरु मा विमूढ भवेति भाव ॥ ४४ ॥

स्वखड्ग वर्णयन्नाह रावण –आकर्णितं इति। दशाननस्य बाहुदण्डा एव ये श्रीखण्डा' चन्दनवृक्षा तेषा यत्कानन वन तस्य य फणी सर्प नवचन्द्रहास मम खड्ग तव आकर्णित किम। लोऽर्हसत्वात्सर्पसाम्यम। येन चन्द्रहासेन मम खड्गेन स्वर्लोके या लोलनयना. चञ्चलनेत्रा स्त्रिय' तासा मुखचन्द्राणा हास स्वनाम्नि चन्द्रहास इति नाम्नि भव यत साम्य तुल्यता तज्जनितेन रुषा क्रोधेन पीत' विनाशित'। सुरलोकपराजयात् सर्वासा तत्रत्याना ललनाना मुखहास निवारित.। सुरलोकपराभवे च कारणम् मम खड्गस्य चन्द्रहासस्य क्रोध एव। स च क्रोधः चन्द्रहासनामसाम्यजन्य एव ॥ वसन्ततिलक वृत्तम् ॥ ४५ ॥

लीलेति। लीलया हेलया दलित' खण्डितः चन्द्रहास येन सः ततश्च सोत्प्रास सोल्लास' ॥

(१४४) राम साक्षेप रावणमाह अयीति। खिद्यते खिन्नो भवति स्वकीयशस्त्रनाशेनेति भाव ॥

स्वखेदमन्यथयन् निजपराक्रम वर्णयति रावण'–विध्वस्ता इति। मम दशभि भुजै दश दिश. प्रत्येकम एकैनैक यथा स्यात्तथा विध्वस्ता पराजिता। गिरीणा पर्वताना प्राग्भार कठोरता भजन्ते ये ते तथाभूता सन्त. मम अपरे दश भुजा केवल भारायैव अकार्यतया। यत शशिमौलि. शिव आराध्य पूजनीय एव न योद्धव्य, नारायण. विष्णुश्च अम्बुधिजले समुद्रे निद्राति स्वपिति, अत' नासौ योधन विषय'। अनयोरन्यत् सर्वमपरैरेव दशभि भुजै जितम्। अत अनया किकर्तव्यतया दशभुजकर्तव्यान्वेषणव्यग्रचित्ततया लङ्केश्वर' खिद्यते, न पुन शस्त्रनाशेन भयेन वेति भाव.। खण्डितेष्वपि शस्त्रेषु अधुना मम दश भुजा अकिञ्चित्करा एव वर्तन्ते तैश्च त्वा योत्स्य इति हृदयम् ॥ शार्दूलविक्रीडित वृत्तम् ॥ ४६ ॥

वचनमात्रमिति। पराक्रमादर्शनेन ज्ञायते यत्पराक्रमवर्णन लङ्केश्वरस्य वागाडम्बरमात्रमेवेत्यर्थ' ॥

रावणपराक्रमं वर्णयन्नाह–धनुरिति। धनुर्निस्त्रिंशादीनि चाप करवालप्रभृतीनि यानि प्रहरणानि शस्त्राणि तेषा गणस्य समूहस्य

छेदेन खण्डनेन कुपितः दशास्यः रावणः रघुपतेः शराणां श्रेणीभिः दलितान् कृत्तान् स्वान् निजान् मूर्ध्नः शिरांसि एकैकैः प्रत्येकैः करैः भृशं यथा स्यात्तथा युगपदेककालावच्छेदेन आदाय गृहीत्वा अन्यैरन्यैः इतरैः दशभिः भुजैः तान्येव शिरांसि क्षिपन् रामोपरि दोष्णां बाहूनां विंशतिमपि सफलयति । दशभिरादानं दशभिश्च प्रक्षेप इति भाव । रामेण कृत्ते शिरसि मस्तकान्तरमङ्कुरितं हरप्रसादेन अतो निकृत्तानि शिरांस्येव शस्त्ररूपेण गृहीत्वा रामोपरि क्षिपतीति ध्येयम् ॥ शिखरिणी वृत्तम् ॥ ४७ ॥

**एतानीति** । सुत्रिशिखैः तीक्ष्णबाणैः कृत्तानि एतानि अस्य राक्षसपतेः रावणस्य शिरांसि दिवौकसां देवानां पतेरिन्द्रस्य भीतिपुलकैः भयजनितरोमाञ्चैः सह यथा यथा उद्गच्छन्ति पुनः पुनरुत्पद्यन्ते । तथा तथा रावणस्य कण्ठानां छेदे यः विनोदः चित्तप्रसादः तस्मिन् यत् कौतुकं तस्य भरेण भारेण व्यग्रीभवत् चेतः चित्तं यस्य सः तस्य रघुपतेः अन्तः प्रमोदस्य आनन्दस्य ऊर्मयः तरङ्गाः उन्मीलन्ति प्रादुर्भवन्ति । शत्रोर्नितान्तमरणे नातीव हर्षो यथार्थवीराणामिति अत एव रावणशिरसां पुनरुद्गमे प्रमोदो रामस्य । सहोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ३८ ॥

**निशाचरेति** । निशाचरेन्द्रेण रावणेन वन्दीकृताः याः सुरसुन्दर्यः स्वर्नार्यः तासां दर्शनं दुर्लभमस्माकम् यतोऽस्य मरणं न सम्भाव्यते हरप्रसादोद्गतनिकृत्तशिरस्त्वात् ॥

(१४५) **अन्त सान्द्रेति** । अन्तः हृदये सान्द्रं यथा स्यात्तथा वसन् यः महेश्वरः शिवः तस्य शिरसि यः शीतांशुलेखः चन्द्रबिम्बं तस्मिन् उल्लसन् यः पीयूषद्रवः अमृतस्यन्दः तस्य शीकरस्य कणस्य यः व्यतिकरः सम्बन्धः तस्य यः प्राग्भारः गुरुता तं भजन्ते ये तेषां तथाभूतानामिव । रामचन्द्रस्य विशिखैः बाणैः भूयोभूयः पुनः पुनः छिन्नानामपि पुनः उद्गच्छतां निशाचरेन्द्रस्य रावणस्य शिरसां काऽप्यन्येव अनिर्वचनीया कान्तिः समुज्जृम्भते । शिरसां पुनरुद्गमनस्य कारणं रावणहृदयस्थशिवशेखरचन्द्रस्यामृतेन सम्बन्ध एव । ततश्च नवोद्गतशिरसां काऽप्यनिर्वचनीया कान्तिरित्यर्थः । उत्प्रेक्षाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४६ ॥

रावणस्य चित्तवृत्तिं वर्णयन्नाह—**अयमिति** । अयं रघुपतिः रावणस्य शिरसां छेदे आसक्तः दत्तचित्तः रावणस्य पृथु पीनं हृदयपीठं यावन्न व्यथयति तावत्तावदयं दशमुखः उच्चैः मुदं वहति । यतः किल तस्मिन् मम हृदये मत्प्रणयपात्रभूता जानकी निवसति तच्च हृदयं न व्यथितमिति सचिन्त्येति भावः ॥ शिखरिणी वृत्तम् ॥ ५० ॥

**किं क्रीडसीति** । शरस्तोमैः शरनिकरैः किं क्रीडसि वृथा शिरश्छेदनं करोषि । एकेनैव सम्यक् प्रयुक्तेन प्रक्रियया बाणेन मः कामं

मनोऽभिलाष परिपूरय यशसा स्वकीर्त्या जगत्त्रयं च परिपूरय। शीघ्रमेव रावण निहत्य अस्मान् कृतार्थीकुरु उज्ज्वला च कीर्ति लभस्वेति भावः। दीपकमलङ्कारः॥ ५१॥

रामोत्साहकान् देवान् भीषयन्स्वभुजान् प्रत्याह रावण **मुक्त्वैकामिति**। हरशेखरप्रणयिनी हरशिर शायिनी पीयूषभानोः चन्द्रस्यैका कला मुक्त्वा सन्त्यज्य। हरशिरःस्थितत्वेन रावणपूज्यत्वात्तस्याः। दिक्पालानामिन्द्रादीना या आवलि श्रेणी तस्या मौलौ शिरसि ये मण्डनमणयो भूषणरत्नानि तान् सर्वान् गृहाण। रामचन्द्रप्रोत्साहकान देवगणान प्रति विभीषिकेय रावणस्य। तैश्च मणिभिः रचिता सम्पादिता काञ्ची मेखला चिराय चिरकालपर्यन्तं जानकी वहतु परिदधातु। अनायासाशीर्वचनमेवैतद्रामस्य। किमिव कुर्वती जानकीत्यपेक्षायामाह—**गायन्तीति**। कमनीयानि मनोज्ञानि यानि शिञ्जितानि रणितानि तेषां भरैः रणितपूर्ण यथा स्यात्तथा मम विक्रमस्य पराक्रमस्य आडम्बर तूर्यशब्दं गायन्ती। शार्दूलविक्रीडित वृत्तम्॥ ५२॥

(१४६) **समयेत**। समयं कार्योचितं कालं जानाति यः सः। **भुजेति**। यतोऽधुना ते शस्त्राणि भृत्यवर्गाश्च निपातिता इत्यर्थः॥

रावणनिपात वर्णयन्नाह—**विकचेति**। विकचानि प्रफुल्लानि यानि कुसुमानि तेषा यः स्तोम समूह तेन आकीर्णे परिस्तीर्णे अनल्पे विस्तृते शशिमणिशिलातल्पे चन्द्रकान्तमणिनिर्मितपर्यङ्के परागेण पुष्पमकरन्देन भूषितः मकरन्दधूसरदेहः इन य रावणः लीलया सहित यथा स्यात्तथा अशेत शयन कृतवान। स एव अथ दशमुखः रघुनन्दने क्षण कोपारूढे कुपिते सति धूलिच्छटाभिः भूधूलिसमूहैः परिधूसर धूसरगात्र सन् भुवि शेते। रामबाणेन हतः रावण इति भावः। हरिणी वृत्तम्॥ ५३॥

जानकी वर्णयन्नाह—**उद्दामेति**। उद्दामानामुज्ज्वलानां हेतीनां शिखानां वलयैः समूहैः परिदीपिताः उज्ज्वलिताः आशा दिशः येन सः तम्। हेति शिखा स्त्रियामित्यमरः। तथाभूत हुताश वह्निं रामचन्द्रोपस्थापितदिव्यरूपेण प्रविश्य जनकेन्द्रसुता जानकी समधिका द्युति शोभामावहन्ती भजन्ती दिवाकरस्य सूर्यस्य प्रातर्मयूखकलिका इव बालकिरण इव प्रत्युद्गता इति पश्य। अनतितप्तत्वादवलोकनीयत्वाच्च बालसूर्यस्य दृष्टान्त। वसन्ततिलक वृत्तम्॥ ५५॥

**असमेति**। नास्ति समः तुल्य यस्य स तेन अद्वितीयेन समरेण युद्धेन कदर्थित विकलीकृतम्।

**कर्णेति**। रावणमरणवृत्तान्तमित्यर्थः। पुलोमजायै इन्द्राण्यै॥

**अम्बरेति** । अम्बरस्य आकाशस्य मणि सूर्य इति यावत् ।

**चरमेति** । चरमाचलस्य पश्चिमाचलस्य चूड शिखरम । सन्ध्यागम एव समय इति भावः ॥ **पश्चिमेति** । पश्चिमस्य पयोधेः समुद्रस्य बेला तीरम् । आगतैव सन्ध्येति भावः ।

(१४७) सन्ध्यागमनं वर्णयन्नाह-**उद्दामेति** । उद्दामा उन्मत्ता ये दिग्द्विरदाः दिग्गजा तेषा चञ्चला चाल्यमाना. ये कर्णपूराः तैः गण्डस्थलेषु उच्चलन्तो ये अलीना मधुकराणा स्तवका समूहा तेषा माकृतिरिवाकृति. स्वरूप येषा तानि । पुन. मीलत्नभ. आकाशो येषु तानि । आकाशव्यापीनीति भाव । पुनः मृगनाभेः कस्तूरिकायाः समाना भा कान्ति येषा तानि । एवम्भूतानि तमासि विलसन्तितमाम् । पाणिनिसूत्र ५ । ४ । ११ । वसन्ततिलक वृत्तम् ॥ ५५ ॥

**निशाचरेति** । निशाचराणा राक्षसाना चक्रं समूहमनुकरोति यः तेन तिमिरस्य अन्धकारस्य निकरेण समूहेन ॥ **समुन्मीलितमिति** । राक्षसोत्सारणाय यथा रामनाराच तथैवान्धकारापसारणाय तुहिनकरस्य चन्द्रस्य किरणप्रकरः किरणजालमिति भावः ।

चन्द्रोदय वर्णयन्नाह-**क्षीराब्धेरिति** । क्षीराब्धेः क्षीरसमुद्रस्य लहरीषु फेनेन समुद्रफेनेन धवला स्वच्छा पुन चन्द्रोपलेषु चन्द्रकान्तमणिषु स्रवतः द्रवत पाथस जलस्य सीकराः लवा येषु ते । पुन विकासिना प्रफुल्लाना कुमुदाना क्रोडेषु गर्भेषु रजसा तन्मकरन्देन पिञ्जरा कपिशायमाना. । पुनश्चकोराणा चञ्चुगह्वरे चञ्चूपुटेन छिन्नप्ररूढा आदौ चञ्चूपुटसङ्कोचेन छिन्नाः पुन तद्विकासेन प्ररूढाः वृद्धिगता. । पुन प्रियेभ्य कान्तेभ्य विप्रयुक्ताना रमणीना गात्रे भ्रमत्कुर्वन्त अपूर्वा वृत्तीर्जनयन्त । एवम्भूता. सुधाशो चन्द्रस्य कराः किरणा उन्मीलन्ति प्रादुर्भवन्ति । तत्तदाधारे विभिन्नरूपा. करा इति तेषा लोकोत्तररमणीयता व्यनक्ति । शार्दूलविक्रीडित वृत्तम ॥ ५६ ॥

**शंकरेति** । शङ्करस्य शिवस्य अर्धतनौ बद्धायाः पार्वत्या कुकुमलिप्त यत कुचकोरक कुचकुड्मल तस्यैवाकृतिरिव आकृति यस्य स तथाभूत. शशी चन्द्र उन्नमन् बन्धने उन्नतीभवन् यः पद्मकोश. कमलकलिका तस्मिन् या कराणा स्वकिरणाना लीला चमत्कार तेन सूच्यते । चन्द्रकरस्पर्शेन मुकुलितप्राया कमलिनी कुचकोरकाकृति चन्द्र सूचयति आकृतिसाम्यादिति भावः । शङ्करेत्यादि विशेषणाच्च व्यर्थम् यतः चन्द्रस्य एकस्य एकएव कुच उपमानम् तच्च शिवार्धाङ्गन्या पार्वत्यामेव सम्भवति ॥ स्वागता वृत्तम ॥ ५७ ॥

**ध्वान्तौघ इति** । शितिकण्ठस्य शिवस्य कण्ठवत श्यामं महः कान्ति यस्य सः तस्मिन् तथाभूते ध्वान्तौघे तिमिरनिकरे प्रतीचीमुखं पश्चिमा दिश प्राप्ते सति । अथ त्र दुग्धलहरीवन्मुग्धे सुन्दरे

विधो चन्द्रस्य धामनि कान्तौ प्राचीं पूर्वां दिशम अञ्चति शोभ यति सति कोकचकोरयो चक्रवाकचकोरयो. क्रमेण शोकरभसाभ्यां विषादहर्षाभ्यां म्लानप्रसन्नौ खिन्नप्रफुल्लौ यौ उल्लसन्तौ दृक्पातौ तयोरूर्मिकदम्बे तरङ्गितै चुम्बितमिव चित्रितमिव त्रैलोक्य जगत्त्र यमाभासते शोभते ॥ उदिते चन्द्रे चक्रवाको वल्लभावियोगात् म्लानिं चकोरश्च सयोगात हर्ष भजते । तत्र खिन्नकोकदृक्पातेन तम· प्रस न्नचकोरदृक्पातेन चोद्योत इति भाव । यथासख्योत्प्रेक्षयोरङ्गा ङ्गिभाव· सङ्कर: । शार्दूलविक्रीडित वृत्तम ॥ ५८ ॥

(१४८) सन्ध्यासमये प्रथमत्तभसस्ताम्रताम्पश्चाच्च श्वेततामुत्प्रेक्षमा- णआह–**शीतांशुरिति** । शीतांशुश्चन्द्र एव य स्फटिकालबालवलय: स्फाटिकवृत्ताधारमण्डलं तस्मिन् उल्लसन्तो जायमाना या कौमुदी चन्द्रिकारूपा वल्ल· लता तस्या नूतना नवोद्गता ये पल्लवा· तै· अञ्चित शोभितमिव वण ताम्रतामीषद्रक्तता प्राप्य पुनस्तत्पश्चात् चञ्चन् इतस्ततो भ्रमन् यो मत्तश्चकोर तस्य चञ्चुघटनया छिन्न खण्डित: योऽग्रकाण्ड लताग्रभाग· तस्मात स्रुत स्रवन् य· क्षोरस्यन्द: रसनि र्झर तेन निरन्तरमनवरतं यथा स्यात्तथा आसुतमिव श्वेतमुज्ज्वल सत वियद् गगनतल भासते शोभते। उत्प्रेक्षाऽलङ्कार । शार्दूलविक्री डित वृत्तम ॥ ५९ ॥

**पश्योदेतीति** । वियोगिना कान्ताविरहव्याकुलानां दिनमणि: सूर्य उत्तापकत्वात् । शृङ्गारस्य दीपमणि शृङ्गाररसस्य प्रधानोद्दी पकत्वात् । प्रौढोऽनङ्ग कन्दर्प एव यो भुजङ्ग सर्प तस्य मस्तकमणि· फणास्थ मणि कामदेवशिर शेखर इति यावत । चण्डीशस्य शिवस्य चूडामणि· शिरोरत्नम । तारा एव यानि मैाक्तिकानि तासा तन्निर्मिते हारे मालाया नायकमणि· मध्यवर्ती मेरुनाम्ना प्रसिद्ध मणि: । कन्द र्पसीमन्तिन्या· मदनमहिलाया: काञ्च्या मेखलाया मध्यमणि· प्रधा नरत्नम । चकोररमण्याश्च चिन्तामणि तासामभीप्सितसाधकत्वात् । एवम्भूत चन्द्रमा उदेति इति पश्य । उत्प्रेक्षा । शार्दूलविक्रीडित वृत्तम ॥ ६० ॥

**स्वैरमिति** । कैरवाणा कुमुदाना कोरकान कुड्मलानि स्वैर यथेष्ट विदलयन विकासयन् । यूना युवजनाना मन: खेदयन् शृङ्गा रोद्दीपनेन । अम्भोजानि कमलानि निमीलयन मुकुलयन् । मृगदृशा स्त्रीणा मान प्रियापराधजन्यमैानादिधारण समुन्मीलयन शृङ्गारो- द्दीपकत्वात् शिथिलयन् । ज्योत्स्ना प्रभा कन्दलयन् अङ्कुरयन् उत्पा दयन् । दिश· आशा·धवलयन स्वच्छीकुर्वन् । वारिधीन् समुद्रान् उद्वेलयन् उत्फालयन् । कोकान् चक्रवाकान ('कोकश्चक्रश्चक्रवाक' इत्यमर·) आकुलयन् प्रियविश्लेषात् खेदयन । तम· अन्धकार कवल यन् ग्रासयन् अपसारयन् । इन्दुश्चन्द्र समुज्जृम्भते उल्लसति । विशे षोऽलङ्कार· । शार्दूलविक्रीडित वृत्तम् ॥ ६१ ॥

मयूखेति । मयूखाः किरणा एव ये नखरा नखाः तैः त्रुटत् स्फुटत् यत् तिमिरकुम्भिनः अन्धकाररूपगजस्य कुम्भस्थलं तस्मादुच्छलत्तरलतारकाऽपटेन प्रक्षिप्तचलत्तारागणमिषेण कोणे प्रक्षिप्ताः मुक्तागणाः येन सः । पुनः पुरन्दरस्य या हरित् दिशा 'आशाश्च हरितश्च ताः' इत्यमरः पूर्वादिक् सैव या दरी कन्दरा तस्याः कुहरगर्भे कोटरान्तः पूर्वं सुप्तः पश्चादुत्थितः अस्तुषारकर एव हिमकरः चन्द्र एव केसरी सिंहः सः । गगनमेव यत् काननं तदवगाहते । चन्द्रः सिंहः, किरणा नखा, तमो गजः, तारागणो मुक्तासमूहः, पूर्वा दिक् कन्दरा सूर्यसमये सिंहस्य स्वापः, सूर्यास्तमने तस्योत्थानम् । इति साङ्गरूपकम् । पृथ्वी वृत्तम् ॥ ६२ ॥

य इति । यः शशी प्राच्याः दिशः नायिकारूपायाः श्रीखण्डेन चन्दनेन रचितं यत् तमालपत्रं तिलकरूपं तद्वदाचरति लोकाह्लादकत्वात् । स्मरक्ष्मापतेः मदनमहीपतेः पाण्डुच्छत्रमिव आचरति । कामोद्दीपकत्वात् । वियतः आकाशस्य या लक्ष्मीः शोभा सैव या कुरङ्गीदृक् हरिणनेत्रा नायिका तस्याः दन्तपत्रमिव कर्णभूषणमिव आचरति । आकाशप्रकाशकत्वात् । रतेः स्मरपत्न्याः केल्यर्थं यत् भवेत् सहस्रपत्रं शुक्लकमलं तद्वदाचरति रतिप्रोत्साहकत्वात् । किं च क्षपा योषितः रात्रिरूपनायिकायाः क्रीडायां यद्राजतं रजतनिर्मितं सीधुपात्रं मद्यपानभाण्डं तद्वदाचरति । उन्मादकत्वात् । सोऽयं जगतः संसारस्य नेत्रमिव आचरति । प्रकाशकत्वात् । उत्प्रेक्षारूपकयोः संकरः । शार्दूलविक्रीडितं वृत्तम् ॥ ६३ ॥

(१४९) सितकिरणेति । तिमिरादन्धकाराद्यः विरहः विश्लेषः तस्य तदुद्भवः यः तापः तेन व्याकुलाम् । सितकिरणः चन्द्रः एकः कपोलः यस्याः सा ताम् आलिः स्वसखी व्योमलक्ष्मीमाकाशशोभामालोकयन्ती रजनिः रात्रिः अमलतारा एव ये शीकराः जललवाः तैः सिक्तम् अस्याः व्योमलक्ष्म्याः गात्रं शरीरं चन्द्रिकैव यच्चन्दनं तेन परिमलयति सुगन्धं करोति । यथा पतिवियुक्ता नायिका सखीजनः जलेन संसिच्य चन्दनेन तस्याः शरीरं लेपयति तथा रात्रिरपि व्योमलक्ष्मीमिति भावः । तारागणः जलं चन्द्रिका चात्र चन्दनम् । उत्प्रेक्षाऽलङ्कारः । मालिनी वृत्तम् ॥ ६४ ॥

सीतामुखं मनसि कृत्वाऽऽह रामः इन्दुरिति । अयमिन्दुरयमिन्दुरिति दुराशया किं प्रयोजनम् । नायमाकाशगतो यथार्थमिन्दुरिति भावः । अयं च पयसः जलस्य बिन्दुरेव आकाशे विलोक्यते । अनतिसुन्दरत्वात् । ननु यत् मृगीदृशः सीतायाः इदं दृश्यमानं कोमलस्निग्धः अमलः स्वच्छकान्तिः कपोलः यस्मिन् तत् तथाभूतमाननं मुखं विजयते सर्वोत्कर्षेण वर्तते । अत्र व्यतिरेकाङ्गोऽपह्नुतिः । स्वागता वृत्तम् ॥ ६५ ॥

तुच्छेति । स्वकीर्तिवर्णनं शिथिलयन् स्वकीयमुत्तमनायकत्वं पुष्णाति रामचन्द्र ।

रामचन्द्रोक्तिमन्यथयन्नाह विभीषण -यदुक्तमित्यादि । त्रिलोकव्यापित्व कीर्तेः प्रदर्शयन्नाह—समुन्नतेति । हरकिरीटस्य कोट्या मग्रभागे नायकरत्नमिव स्फुरन् य तुषारकर चन्द्र तस्य या कन्दली अङ्कुर तस्य यः किरणपूर किरणजाल तद्वद गौर स्वच्छ त्वदीय यश । समुन्नत य घनस्तनस्तबक पीनकुचकुड्मलम् तस्मिन् चुम्बि स्पृशत् तुम्बीफल यस्या सा तथाभूता क्वणन्ती शब्दायमाना वीणा यस्या सा तया विबुधलोकवामभुवा स्वर्नार्या उपगीयते । अतो ज्ञात त्रिलोकीतलमेव धवलित त्वद्यशसा न पुनर्मेदिनीमात्रमिति भाव । पृथ्वी वृत्तम् ॥ ७० ॥

किष्किन्धानाथेति । किष्किन्धानाथस्य सुग्रीवस्य मतम मद्विक्रमवर्णनरूपमेवानुगत । सुग्रीव इव त्वमपि तुच्छप्रायमेव जल्पसीति भाव ॥

(१५१) संरम्भेति। संरम्भेण रभसेन उद्रिक्तस्य अवलिप्तस्य नक्तसमय रात्रिसमय एव य दशमुख रावण तस्य यत उच्चण्ड प्रचण्डं दोर्दण्ड तस्य हेलाया लीलाया कैलास । यथा रावणबाहुभिरुद्धृत कैलास तथैव अय चन्द्र रात्रिसमयेनेति भाव ।पुनः सप्रलोक्या य जय तेन मुदितः हर्षित य मनोजन्मा मदन तस्य वादित्रशङ्खः वादनशील शख । पुन लोलाक्षीणा चञ्चलनयनाना या गंडपाली कपोलप्रदेश तस्य य लवणिमा लावण्य तस्य जलधे समुद्रात् उद्धृत फेनपिण्ड । एवम्भूत विरहिणा प्रियविरहितानां दत्ता शङ्का येन स तथाभूत शशाङ्क चन्द्र व्योम्न आकाशस्य अवकाश विशति इति पश्य । रूपकोत्प्रेक्षयो सङ्कर । स्रग्धरा वृत्तम् ॥ ७१ ॥

अयमिति । अयं रजनीवल्लभ चन्द्र प्रज्ञाया योगाभ्यासजनितज्ञानस्य य परिचय तेन पराधीन मन यस्य स तस्मात् एवम्भूतात् योगाभ्यासनिरतचित्तात् अत्रे तन्नामकमुने अजनि प्रादुरभूत् इति कोय भ्रम । यत खलु स सुधानामाधार चन्द्र रत्याः स्वपत्न्या य बिम्बाधरसुधारस तस्य आसेकेन स्निग्ध कोमल तस्मात्तथाभूतात् पुष्पधनुष कामदेवस्य नयनादजनि न तु शुष्कमुनिनयनादिति भाव ॥ चन्द्रमसो रत्युद्दीपकत्वमेव रामचन्द्रोक्तिमूलम ॥ अपह्नुतिरलङ्कार । शिखरिणी वृत्तम ॥ ७२ ॥

आनन्दमिति । अयमिन्दु कुमुदादीनामानन्द कन्दलयन् सञ्जनयन् अम्बराभोगं गगनप्रदेश लङ्घयति हनूमान् सागरमिव । यथा हनूमान् सागर ललङ्घे तथैवेन्दु गगनमिति भाव ॥ अयोध्यागमनोद्घाताय हनूमद्वृत्तोपोद्घात ॥ ७३ ॥

**सुलक्षणेति** । शोभनानि लक्षणानि यस्य स तत्सम्बुद्धौ । **रघुकुलेति** । रघुकुलकुटुम्बस्य य सन्ताप खेद तस्य शमनाय शान्त्यै चन्दन ॥ **बन्धुमिति** । भरतादीनित्यर्थ ।

**त्रिभुवनेति** । त्रिभुवनप्रधानवीर रावण । शत्रौ बहुमानं वीररसस्य मुख्य प्राण ॥

(१५२) **किष्किन्धेति** । किष्किन्धापति बालि. माहिष्मतीपति कार्तवीर्य, ताभ्यां समभागेन विभक्ता स्वायत्तीकृता लक्ष्मी वीर्यातिशय यस्य स । एवम्भूतोऽपि रावण कथ त्रिभुवनैकवीरपदभागित्यर्थ ।

बाले उत्कर्षं सूचयन्नाह—**तादृगिति** । तादृशो प्रसिद्धवीर्ययो कठोरयो भुजयो यत यन्त्र तस्य निपीडनेन बालिकृतेन दशकण्ठस्य कण्ठे नि शब्दतामुपगते यत कीर्ते. घोषणं ख्यापन चतुर्णा समुद्राणां बेलासु तटेषु अकारि कृत स तथाभूत कपीन्द्र बालि. किं वचसां विषय । तादृक्कण्टदमनेन विख्यापिता यस्य कीर्ति स बाली वचसा मतीत एव अतो न गण्यते इति भाव । नि शब्दतामुपगते घोषण मकारीति विरोधाभास । वसन्ततिलक वृत्तम ॥ ७४ ॥

कार्तवीर्यस्योत्कर्षं वर्णयन्नाह—**कोपेति** । कोपेन प्रदीप्ते लोचने एव दीपौ तयोर्यो वह्नि तेन निर्भिन्नमपसारित सान्द्रं घनं तिमिरम् अन्धकार यस्मिन स तस्मिन एवम्भूते यस्य कार्तवीर्यस्य काराकुटीर कुहरे कारागारगह्वरे दशाननोऽपि वसति स्म सोऽय हैहयपति कार्तवीर्य न वाचा विषय । अवाग्गोचरवीर्य एव कार्तवीर्य इति भाव । वसन्ततिलक वृत्तम ॥ ७५ ॥

रावणस्य वीर्यातिशयं वर्णयन्नाह—**यस्य द्रागिति** । करबालेन खड्गेन कृत्तानि छिन्नानि शिरांसि यस्य स तस्यैवम्भूतस्य यस्य रावणस्य कण्ठालवालस्थलीम् कण्ठाना भूतपूर्वस्थानानि चूडाचन्द्रमसं स्वशिरस्थचन्द्र निपीड्य तन्निसृतै सुधानिर्झरै अमृतप्रवाहै निविडं प्रभूत यथा स्यात्तथा सिञ्चन् हर शिव शशिखण्ड मण्डनं यस्य स चन्द्रभूषण इति स्वां निजां ख्याति नाम कृतार्थाम सप्रयोजना मेने । दशवदनकण्ठस्थलामृतसेकसम्पादकत्वात्प्रयोजनवत्त्व चन्द्रस्य । स एवम्भूतो दशकन्धर रावण गिरा वाचा पन्थान कथङ्कार केन प्रकारेण गाहते । नैवायमपि वाग्गोचरपराक्रम इति भाव । रिपुश्लाघाऽपि वीर्योत्कर्षायैव वीराणाम ॥ शार्दूलविक्रीडित वृत्तम ॥

**त्रिकूटेति** । त्रिकूटगिरे लङ्कासमीपस्थस्य य शिखर तस्य कण्ठीरवस्य सिंहस्य । लोकादुत्तराणि उत्कृष्टानि ।

रावणस्य पराक्रमान्तरं वर्णयन्नाह—**यद्दो'शायिनीति** । यस्य रावणस्य दो शायिनि करतलवर्तिनि चन्द्रशेखरगिरौ कैलासे सति।

भारस्य कैलासजन्यस्य गवताराद‍पसारणात उत्तमन्ती या नागाधी-शस्य भूमण्डलाधारभूतस्य शेषस्य फणावली फणापङ्क्ति तस्या ये मणय तेषा पूरे समूहे समुन्मीलति प्रज्वलति सति । चतस्रोऽपि दिश तुल्यमेव युगपदेव अकाले बालतपनवत् ताम्रा नवोदितसूर्य-वद्रक्ता जाता । तुषारकिरण चन्द्रोऽवतस शिरोभूषण यस्य स तस्य शिवस्यापि तिस्र दृश नेत्राणि रुषा क्रोधेन ताम्रा जाता इत्यभिसन्धि । शार्दूलविक्रीडित वृत्तम ॥ ७७ ॥

(१६३) विमानवेगं प्रशसन्नाह—एष म इति । एष रथो विमानं मूर्तिमान् विग्रहवान् मनोरथो मन काम इव मे मनसि भासते प्रति भाति । यस्याधिरोहलीलयैव अधिरोहणमात्रेणैव दूरमागतवतामपि श्रम पथगमनजन्या क्लान्तिर्नास्ति ॥ रथोद्धता वृत्तम् ॥ ७८ ॥

लक्ष्मणोक्ति समर्थयमान आह उल्लङ्घ्येति । नीरधि समुद्रमुल्लघ्य दण्डकान्यरण्यानि च अतीत्य मेकलस्य पर्वतविशेषस्य सुता नर्मदा कलिन्दस्य सुता यमुना च व्यतीत्य शिखण्डिशतै मयूरवृन्दै खण्डि-तानि शाखिना वृक्षाणा खण्डानि यस्मिन् तत्तथाभूत चित्रकूट वय प्राप्ता आगता । वसन्ततिलक वृत्तम् ॥ ७९ ॥

सत्येति । सत्य यथार्थ प्रसाद यस्या सा । यत् किल मत्प्रा र्थितानुसारेण पुनरपि निजकुटुम्बेभ्य सूर्यवशजेभ्योऽस्मभ्य दत्तदर्शना ऽसि नयनगोचरीभूताऽसि ॥

निर्मुक्तेति । निर्मुक्ता विरोधा सहजवैराणि यैस्ते तथाभूता श्वापदा जन्तव यस्मिन तत् तथाभूत भारद्वाजस्य महर्षे. आश्र-मपदम दृश्यत इति शेष ॥

श्वापदानामुन्मुक्तविरोधत्व प्रकटयन्नाह—व्याजृम्भमाणेति । व्याजृम्भमाण विवृत वदनं मुख यस्य स तस्य हरेः सिंहस्य केसर सटाः एके कलभाः करिशावका करेण शुण्डादण्डेन कर्षन्ति । न च तस्य तेन क्रोध इति भाव । अन्ये कलभा. केसरिकिशोरकै सिंह-शावकैः आदौ पीत पश्चान्मुक्त यत मृगेन्द्रवनिताया सिंह्या स्त-नात् जातं दुग्ध तत् पिबन्ति निर्भयमिति भाव । वसन्ततिलक वृत्तम् ॥ ८० ॥

उक्तमेवार्थ पुष्कलयन्नाह—क्रीडन्माणवकेति । क्रीडतां खेलतां माणवकाना मुनिवटूनाम अघिताडनशतै विपुलचरणाघातै उज्जा गरस्य विगतनिद्रस्य शार्दूलस्य व्याघ्रस्य नखाङ्कुरेषु मृग. कण्डूविनोद कुरुते निजाङ्गानि कण्डूयति । किञ्च चञ्चन् चन्द्र पुच्छे चन्द्राकारो यस्य स तस्य तथाभूतस्य शिखण्डिनो मयूरस्य तुण्डघटनया चञ्चु विन्यासेन निर्मोकात् कञ्चुकात् निल्वयिनीत निर्मोचितो बहिर्भूत पन्नग. सर्पः प्रसुप्तस्य नकुलस्य श्वासानिल पिबति निःशङ्कमिति भाव. । 'समौ कचुकनिर्मोकावित्यमरः' । शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥

(१५४) चक्रवाकेति । चक्रवाकरमण्या संरम्भस्य क्रीडायास्समयः ॥

चन्द्रास्तमनं सूर्योदयं च वर्णयन्नाह—एत इति । केतकधूलिवत् धूसरा पिङ्गला रुक् कान्तिर्येषां ते तथाभूताः जराजर्ज्जराः दीर्घकालवर्त्तनेन जर्ज्जरिताः शीतद्युतेः चन्द्रस्य अंशवः किरणाः पश्चिमस्य जलधेः समुद्रस्य तीरम् प्राप्ताः । अस्तप्राय एव चन्द्र इति भावः ॥ अपि पुनः तारुण्यभाजः तरुणस्य नवोदितस्य तरणेः सूर्यस्य कराः किरणाः विकसन्ती प्रफुल्ला या सरोरुहवनी कमलवनं तस्याः दृक्पातेन प्रकाशेन सम्भाविताः सम्मानिताः सन्तः प्राच्यां दिशि रागं रक्तता पक्षे अनुरागम् उदीरयन्ति व्यञ्जयन्ति । शार्दूलविक्रीडितं वृत्तम् ॥ ८२ ॥

सद्य इति । त्विषामीश्वरं रुचिपतिं देवं सूर्यं सद्यः साक्षात् सघटमानं सूर्योदये सयुज्यमानं यत्कोकमिथुनं चक्रवाकयुगुलं तस्य व्याजेन मिषेण पीनस्तनद्वन्द्वेन व्यञ्जितं व्यक्तीकृतं यद्यौवनं तेनोज्ज्वला रुक् कान्तिर्यासां ताः एवम्भूता दिश एव कन्यकाः ताः निर्माय । दिक्कन्यकानां चक्रवाकरूपस्तनयुगलं व्यक्तीकृत्येत्यर्थः । पुनः दुर्द्देवस्य दौर्भाग्यस्य अक्षरमालिकामिव लिपिं पङ्क्तिमिव भृङ्गावली कमलगर्भगता भ्रमरपङ्क्तिं झगिति हठात् आकृष्य । स्ववल्लभायाः कमलिन्याः दौर्भाग्यमपसार्य्येति भावः । अम्बुजिनीजनस्य कमलगणस्य लक्ष्मीं शोभां तनुते । उदिते रवौ कमलवनं विकसितं तदन्तर्गताः भ्रमराश्च निर्गता इत्यर्थः । समासोक्तिरलङ्कारः । अलीकरोषतिरस्कृतक्रोधापगमानुगृहीतरमणीचरितमेवात्राप्रकृतम् । शार्दूलविक्रीडितं वृत्तम् ॥ ८३ ॥

उन्मीलन्तीति । तीव्रद्युतेः सूर्यस्य अंशवः किरणाः उन्मीलन्तीति सम्बन्धः । कथम्भूता अंशवः इत्यपेक्षायामाह–निशेत्यादिना । निशा रात्रिरेव या निशाचरवधूः तस्याः प्रोच्चाटनाय निर्वासनस्य मान्त्रिकाः मन्त्रज्ञाः । पुनः सायङ्काले सालसं यथा स्यात्तथा प्रसुप्तं मुकुलितं यत् पङ्कजवनं तस्य प्रोद्बोधने उद्बोधने विकासने वैतालिकाः बोधकराः । 'वैतालिका बोधकराः' इत्यमरः । पुनः फुल्लतो विकासमानस्य पङ्कजस्य कोशात् अन्तर्गर्भात् प्रोज्झतायाः निर्गतायाः भृङ्गावल्याः मधुपश्रेण्याः झाङ्कारो गुञ्जितमेव यः प्रणवः ॐकारः तस्य उपदेशे गुरवः । रूपकम् । शार्दूलविक्रीडितं वृत्तम् ॥ ८४ ॥

आयान्त्या इति । आयान्त्याः समागच्छन्त्याः दिवसश्रियः दिनशोभारूपनायिकायाः पादतलस्य यः स्पर्शः तस्य अनुभावात् प्रभावात् इव व्योम आकाशमेव यः शोकतरुः तस्य नवीनकलिकागुच्छः अरुणदिवाकररूपः समुज्जृम्भते । दिनशोभारूपनायिकायाःपादस्पर्शात् आकाशरूपाशोकतरोः नवोद्गतकुसुमस्तवक एवादित्य इति भावः उक्तः । च, "स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति बकुलः सीधु-

गण्डूषसेकात्पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्म्मवाक्यात्पटुमधुहसनाच्चम्पको वक्त्रवाताच्चूतो गीताच्च मेरुर्विकसति हि पुरो नर्तनात्कर्णिकार" इति । पुन आशा एव या कुरङ्गीदृश तासा दिगङ्गनानां अवतंसविभ्रमं कर्णभूषणशोभा आतन्वन् सम्पादयन् सन् उन्मीलन् उदयन् यस्तरुणप्रभाकर सूर्य्यः तस्य कराणा किरणाना स्तोमः समूहः समुद्भासते देदीप्यते । रूपकम् । शार्दूलविक्रीडित वृत्तम् ॥ ८५ ॥

(१५५) **एतदिति** । चक्रवाकसुदृशा, चक्रवाकीना आश्वासनादायिन आश्वासकाः सुखदायका. । प्रौढध्वान्त. निविडोऽन्धकार एव य. पयोधि' समुद्र तस्मिन् मग्ना या जगती भुवन तस्यै दत्त आलम्बो त्सव प्रकाशो यैस्ते तथाभूता. पुन दिङ्मृगदृशा दिगङ्गनाना य' काश्मीरपङ्कोदक कस्तूरिकापङ्क तेन व्यात्युच्या जलक्रीडाया चतुरा पटव. पुन सरोरुहवनस्य या श्री शोभा तया केलि क्रीडा कुर्वन्ति ये ते एवम्भूता दोप्राशो सूर्यस्य करा किरणा विकसन्ति प्रकाशन्ते । एतत् तर्कय । शार्दूलविक्रीडित वृत्तम् ॥ ८६ ॥

**शिथिलयतीति** । सराग रक्त. पक्षे अनुरागवान अर्क सूर्य कमलिन्या नलिन्या. पक्षे पद्मिनीनायिकायाः कमलमुकुलमेव या नीवीग्रन्थिमुद्रा ता यावत् करेण किरणेन पक्षे हस्तेन शिथिलयति विकाशयति पक्षे श्लथयति मोचयति । तावत मञ्जुशब्दा मधुरवाणी सती प्रविकसन्ती बहिरागच्छन्ती अलिमाला भ्रमरपङ्क्ति कामिनीव कामिना रागिणा गुञ्जितै' झाकारै मुद हर्ष उच्चै. प्रभूत जनयति । उपमारूपकसमासोक्तीना सङ्करः । मालिनी वृत्तम ॥ ८७ ॥

**पूर्वगिरीति** । पूर्वगिरेः उदयाचलस्य पद्मराग मणिविशेषः । पुन प्रकटीकृत. विरोधप्रकटनन्यायेन नयनस्य शीतल' स्वभाव' येन स. । कुङ्कुमेन कृत अङ्गराग' यस्य स । एवम्भूत' नलिनीजनस्य कमलस्य वल्लभः प्रिय देव. सूर्य्य' उन्मीलित एवेति पूर्वेण सम्बन्ध' ॥ ८८ ॥

गङ्गामुद्दिश्याह **तरलतरेति** । तरलतरतरङ्गाणा चञ्चलवीचीना या भङ्गहेला चलनक्रीडा तस्या. य' बहल विस्तृतः विलासः तस्मिन् विलोला चञ्चला हंसमाला मरालपङ्क्ति यस्या सा सुराणां नराणा च मङ्गलकारिणी कल्याणकरी पापोद्धारिणी मे अम्बा भागीरथी अमरपुरतरङ्गिणी स्वर्णदी गङ्गा न दूरे समीपवर्तिन्येव लक्ष्यत इत्यर्थः ॥ पुष्पिताग्रा वृत्तम ॥ ८९ ॥

**अदूर इति** ॥ निकट इत्यर्थ. ।

**रघुकुलेति** । रघुकुलमङ्गलस्य रघुवंशकल्याणस्य योऽङ्कुरः प्रादुर्भाव तस्य प्ररोहाय वृद्धये या केदारधरणी कृषिभूमि तस्या तरङ्गिणी नदी जलदात्री वृद्धिकरी च । यथा केदारवाहिनी नदी क्षेत्रगतान

ॐ श्रीरस्तु ।

श्रीमते हयग्रीवाय नमः ।

श्रीमते निगमान्तमहागुरवे नमः ।



# सङ्कल्पसूर्योदयः



**श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।**
**वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥**

वरदार्यमहं वन्दे वरणीयगुणाकरम् ।
वनस्पतीनामपि यद्वाणी वाचस्पतित्वदा ॥
त्रय्यन्तगूढं तत्वानां त्रिकं तद्वत्प्रसादतः ।
स्फुटं पश्यति मन्दोपि तं वेदान्तगुरुं भजे ॥
वेदान्तोत्तसभूतस्यावेदान्ताचार्यसूक्तयः ।
क्रियासमभिहारेण कुर्य्यासुश्श्रेयसान्ततिम् ॥
क्वाहं मन्दमतिः क्वासौ वेदान्तार्यगिरां गतिः ।
साहसं महदेतन्मे क्षन्तुमर्हन्ति सत्तमाः ॥

इह खलु भगवानशेषशेषी श्रीमान्नारायणस्तापत्रयातुरसकलसंसारिचेतनोज्जिजीविषया शेषोपनिषदुद्घोषितान्तत्वहितपुरुषार्थान सम्यक्प्रदर्शयितुकामः शठरिपुनाथयोगिवामुनाचार्ययमीन्द्रप्रमुखानवतार्य तत्तत्प्रणीतानेकप्रबन्धमुखेन समीचीनज्ञानमुत्पाद्य कांश्चित् कृतार्थान्विधाय तत्तत्समयमतिलंघ्य जातानां दुर्दशामवेक्ष्य कारुण्यपरवश स्वयमेव कविकथककसठोरवदेशिकात्मनावततार ।

अत्रेय कथानुसन्धेया । पुराकिल भगवान् श्रीवेङ्कटेशस्तोण्डमाञ्चक्रवर्त्तीनाम्ना परमभागवतेन सह सम्भाषमाणश्चिरमवर्त्तत । तदानी भगवस्तव प्रतियुगं साधुपरित्राणादिसिद्ध्येवतारास्सन्ति किल । अस्मिन्युगे कोवतार इति राज्ञापृष्टस्समुवाच ।

**यद्भक्तिप्रचयात्मके दिनमुखे दृष्टिक्षमः क्षेत्रिणः**
**क्षिप्रं संसृतिशर्वरीं क्षिपति यत्सङ्कल्पसूर्योदयः ।**

राजन्विश्वामित्रगोत्रे वेदान्तार्य इति भविष्यामि स च मद्वंशज इति ज्ञापः
वेङ्कटनाथ इति मन्नामा भविष्यतीति । स च पुनराह भगवन्त तर्हि मम सदानुसः
किञ्चित्तद्विषय पद्यं त्वयोपदिश्यतामिति । तदैवमुक्तवते राज्ञे । श्रीमान्वेङ्कटनाथ
इत्यादिक पद्यमुपादिशत् भगवान् तदाप्रभृत्येतत्सात्त्विकैरनुसन्धीयत इति । स
विंशत्यब्दे विश्रुतनानाविधविद्यस्त्रिंशद्वारं श्रावितशारीरकभाष्य श्रीरङ्गराजदिव्याः
लब्धवेदान्ताचार्यपद कवितार्किकसिंहदेशिकस्तत्तदन्तेवासिमनोरथपूर्त्तये संस्कृतद्रावि
त्मनानेकान् प्रबन्धान् विरचय्य तदनधिकारिजनानुजिघृक्षया सङ्कल्पसूर्योदया
तत्त्वोपायपुमर्थप्रकाशनप्रकटितपाटव नाटकवरं निरममीत । तस्येदमाद्यमनवद्य पद्यं

यद्भक्तीत्यादि–नारायणो मे समस्तविपदुत्तारायास्त्विति सम्बन्धः–नारा
इति देवताविशेषनिश्चयः–नारायणशब्देन तत्पुरुषबहुव्रीहिसमासद्वयावगत
त्सल्यस्वामित्वसौशील्यसौलभ्याद्यनन्तकल्याणगुणगणाःपरमपुरुषेऽहि प्रतीयन्ते । एत
दृशगुणवत्तास्य कथमित्यत आह ।

श्रीमानिति–अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजेत्युक्तरीत्याः
श्रिय' पतित्वादेवायमुत्कर्ष. मदुपाश्रियो नित्ययोगः प्रतीयते–लक्ष्मीविशिष्टस्य
विपन्निरासकपूर्वं रक्षकत्व–

लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया ।
रक्षकस्सर्वसिद्धान्ते वेदान्तेषु च गीयते ॥ इत्युक्तेः ।

विपच्छब्दश्च प्रारीप्सितग्रन्थपरिसमाप्तिप्रतिबन्धकपरः–सांसारिकक्लेशप
वा–तेषामुत्तरायनिस्तरणायास्तु । आशिषि लोट् । कीदृश इत्यत आह । यदित
दिना । यद्विषयाभक्तिर्यद्भक्तिस्तस्याः प्रचय उत्कर्षस्तदात्मके तत्स्वरूपे दिनमुखे प्रत्यू
प्रत्यूषोऽहर्मुख कल्यमित्यमरः–दृष्टिक्षमः दर्शनयोग्य' यस्य भगवतस्सङ्कल्पः मोक्षयिष
मीत्येवं रूपः स एव सूर्यः तस्योदयः उत्पत्ति क्षेत्रिणः जीवस्य–क्षेत्रशब्दश्शरीरवाचं
**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते** इत्युक्तेः–कर्मकृतशरीरभाजो बद्धचे
नस्येत्यर्थः–

संसृतिस्संसरणं सैव शर्वरी तां क्षिप्रं क्षिपति नाशयति सूर्योदयस्य दिनमु
दृश्यत्वं शर्वरीनाशकत्वं च स्वभावः–तत्त्वैः चेतनाचेतनवस्तुभिः अस्त्रविभूष
अस्त्ररूपैर्विभूषणरूपैश्चाधिगतस्सेवितः यथोक्त भगवता पराशरेण ·

आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्त्ति कौस्तुभमणिस्वरूप भगवान्हरिः ॥
श्रीवत्ससंस्थानधरमनन्ते च समाश्रितं ।
प्रधान बुद्धिरप्यास्ते गदारूपेण माधवे ॥

तत्त्वैरस्त्रविभूषणैरधिगतस्वाधीननित्योन्नतिः
श्रीमानस्तु समे समस्तविपदुत्ताराय नारायणः ॥१॥

भूतादिमिन्द्रियादिं च द्विधाहङ्कारमीश्वरः ।
बिभर्त्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम् ॥
चलस्वरूपमत्यन्तजवेनान्तरितानिल ।
चक्रस्वरूपं च मनो धत्ते विष्णुःकरे स्थितम् ॥
पञ्चरूपा तु या माला वैजयन्ती गदाभृतः ।
साभूतहेतुसंघातभूतमाला च वै द्विज ॥
यानीन्द्रियाण्यशेषाणि बुद्धिकर्मात्मकानि वै ।
शररूपाण्यशेषाणि तानि धत्ते जनार्दनः ॥
बिभर्त्ति यच्चासिरत्नमच्युतोऽत्यन्तनिर्मलम् ।
विद्यामयन्तु तज्ज्ञानमविद्याचर्मसंस्थितं ॥
इत्थं पुमान्प्रधानं च बुद्ध्यहङ्कारमेव च ।
भूतानि च हृषीकेशे मनस्सर्वेन्द्रियाणि च ॥
विद्याविद्ये च मैत्रेय सर्वमेतत्समाश्रित ।

स्वाधीना स्वायत्ता नित्याचोन्नतिरुच्छ्रायो माहात्म्यं यस्य स तथोक्तः-ननु स्वरूपाविर्भावस्य हि पुरुषार्थत्व कथ अपुरुषार्थभूतस्य विपदुत्तारस्याशीर्विषयत्वमुच्यते। यद्यप्यस्यापुरुषार्थता तथापि तत्पूर्वभावित्वेन तदुत्पादकस्य तथात्वोपपत्ते. प्रकृतिसम्बन्धापाये स्वरूपाविर्भावस्स्वयमेव सिद्ध्यति। तदुक्त-

यथा न क्रियते ज्योत्स्नामलप्रक्षालनान्मणेः ।
दोषप्रहाणान्नज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः । इति ॥

किं च तापत्रयातुरस्य तन्निवृत्तिरेव प्रथममाशासनीया।
यथा दुस्सहे कारागृहे निगलितस्य राजपुत्रस्य राज्यलाभादपि निगलविगलनमेव पुरुषार्थो भवति । सेयं अष्टादशपदानान्दी-यथोक्त-

नान्दीपदैर्द्वादशभिरष्टाभिर्वाप्यलंकृता ।
अष्टादशपदावापि द्वाविंशतिपदापि च । इति ॥

लक्ष्ये यत्र श्रुतिमितगुणाकृष्टिलब्धावधानैः
प्रत्यग्बाणः प्रणवधनुषा सत्ववद्भिः प्रयुक्तः ।
मध्ये वक्षः स्फुरति महसा पत्रलः कौस्तुभात्मा
पद्माकान्तस्स भवतु दयादुग्धसिन्धुश्श्रियै वः ॥२॥

श्रीशब्दप्रयोगान्मङ्गलशंसनीत्व । पवित्राणां पवित्र यो मङ्गलाना च मङ्गल मिति । परममङ्गलभूतस्य भगवतो नारायणस्याभिधानाच्च सङ्कल्पसूर्योदयस्सस्तुतिशर्वरी क्षिपतीति काव्यार्थसूचनं । भक्तिप्रचयशब्देन तैलधारावदविच्छिन्नस्मृतिसन्तानरूप महरहरभ्यासाधेयातिशय प्रत्यक्षसमानाकार निदिध्यासनं प्रतोयते–तत्तद्वाक्यजन्यज्ञान मात्रान्मोक्षं प्रत्युक्ता. ।

नारायणस्यैव विपदुत्तारकत्वकथनात् पाशुपतनिरास सत्वैरस्त्रविभूषणैर धिगत इत्यनेन भगवतो विग्रहमनभ्युपगच्छन्तः प्रतिक्षिप्ता. श्रीमानित्यनेन श्रियोनुपा यत्ववादिनो व्युदस्ता· ॥ १ ॥

एवं भगवतो भक्तिलभ्यत्वमुक्त्वा किञ्चनाधिकारप्रपदनलभ्यत्व प्रतिपादयति ।
लक्ष्य इति–तदुक्त ।

भक्त्या परमया वापि प्रपत्त्या वा महामते ।
प्राप्योहं नान्यथा प्राप्यो मम कैङ्कर्यलिप्सुभिः ॥

इति . अत्र भक्त्या प्रपत्त्यावेति विकल्पश्शक्ताशक्तविषयः ।
प्रणवो धनुश्शरीह्यात्मा ब्रह्मतल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्य शरवत्तन्मयो भवेत् ॥

इति–अत्र श्रुतमेवार्थमनेन श्लोकेनाह श्रुतयस्सद्विद्यादिकास्तासुमिता उपात्ताः ये गुणाः आनन्दादयः तेषामाकृष्टिरुपसंहारस्तस्या लब्धावधानैः प्राप्तैकाग्र्यैः– धानुष्कपक्षे । श्रुतिश्श्रोत्र तन्मितं तत्पर्यन्त यो गुण. ज्या तस्याकृष्टिराकर्षणं तस्मिन् लब्धा वधानैः । सत्ववद्भिस्सत्वगुणनिष्ठैरन्यत्र बलवद्भि. । लक्ष्ये शरव्ये यत्र भगवति प्रणवधनुषाप्रयुक्तः निक्षिप्तः प्रत्यक् जीवः स एव बाणः मध्ये वक्षः वक्षसो मध्ये महसा कान्त्या पत्रलः पत्रवान् कौस्तुभात्मा कौस्तुभस्वरूपस्स्फुरति प्रकाशते-कौस्तुभस्य जीवा धिष्ठातृत्वात् । दयादुग्धसिन्धु दुग्धशब्देन भोग्यत्व सिन्धुशब्देनापरिच्छिन्नत्व च सूच्यते . सः पद्माकान्त. श्रीवल्लभः व· युष्माक श्रिये संपदे अत्र श्रीशब्दो मुक्तैश्वर्यं लक्षयति · सदेव हि अत्र प्रधानप्रतिपाद्य भवतु । इयमपि अष्टादशपदा । अत्रापि श्रीशब्दः प्रयुक्त· पूर्वरङ्गस्य द्वाविंशदङ्गस्याङ्गान्तराणा नटैरेव प्रयोज्यत्वकथाश्रयत्वा भावाच्च नान्दीरूपस्य तु काव्यार्थसूचकत्वान्नान्दीश्वरप्रियत्वाच्च नाट्यादौ कविभिरव श्यकर्तव्यत्वं । तदुक्त ·

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
तेषामवश्य कर्तव्या नान्दीनान्दीश्वरप्रिया ॥

इति । अस्याश्चेद लक्षण ।

## नान्द्यन्ते सूत्रधारः ।

आदिष्टोऽस्मि निखिलसुरासुरकोटीरमणिनिकरनीराजितपादपीठस्य, शरणागतपरित्राणसप्ततन्तुदीक्षितस्य, सरसीरुहवासिनीसहचरितधर्मणः, ससरणदवदहनतापनिर्वापणवलाहकस्य, सर्वेश्वरस्य भगवतः श्रीरङ्गवृषगिरिसत्यव्रतयदुगिरिपुरुषोत्तमपाण्डुरङ्गप्रभृतिषु दिव्याभिव्यक्तिप्रदेशेषु यथाभिमतयात्रोत्सवसेवाहेवाकविहितगतागतचटुलचरणनलिनधूलीपटलपविचित्रितक्ष्मातलैः यदृच्छया महदृधान्तरीपमध्यमध्यासीनैः, शेषशेषाशनगरुडनिर्विशेषैः अशेषजनसभावनीयैः असंभवदवद्यगन्धैः अभिजनविद्यासमुचितसदाचारशीलशालिभिः, अनादिमायामहावर्तबम्भ्रम्यमाणबाह्यकथकरभावनमथनगन्धसिन्धुरैः, अधिजिगमिषितमुक्तिघण्टापथैः, अखण्डदिङ्मण्डलशिखण्डकैः, औपनिषदरहस्योपदेशदेशिकैः, अवगतसकलकलाकलापैः, अत्रभवद्भिरार्यमिश्रैः—यदुत

---

आशीर्नमस्क्रियारूप श्लोकः काव्यमुखोदितः ।
नान्दीति कथ्यते तस्या पदानां नियमोऽपि वा ॥
मङ्गल्यशङ्खचक्राब्जकोककैरवशंसिनी । इति ॥ २ ॥

एवं नान्दीं प्रयुज्य प्रस्तुतार्थप्रकटनाय तदाकारमेव नटान्तरं प्रवेशयति-नान्द्यन्ते सूत्रधार इति नान्दीप्रयोगान्ते तस्मिन्यवनिकां प्रविष्टे तादृश एवान्योऽरङ्गं प्रविश्याहेत्यर्थः । तदुक्तं ।

पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरं काव्यार्थं स्थापयेन्नटः ॥

पूर्वरङ्गं तदङ्गभूतां नान्दीं किमाहेत्यत आह ।

**आदिष्टोऽस्मीत्यादि**—कोटीर शब्दः किरीटवाची किरणैर्नीराजितं पादपीठं यस्य सः तथोक्तः तस्य भगवत्पादपीठनिकटे प्रणमतां सुरासुराणां मकुटतटीप्रत्युप्तमाणिक्यघृणयस्तस्य नीराजनं कुर्वाणा इव परितः प्रसरन्ति-तत एवमुक्तं न वाच्यं सुरास्तावत् भगवन्तं प्रति प्रणतिं कुर्वन्तु कथमसुराः प्रणमन्तीति प्रह्लादादीनामिवासुरेष्वपि केषाञ्चित्सम्भवात् । सप्ततन्तुर्यज्ञः । सरसीरुहवासिन्या सहचरितस्सहानुष्ठितः धर्मश्शरणागतपरित्राणरूपो यस्य सहचरितधर्मा तस्य निर्वापणं प्रशमनं दिव्याश्चते अभिव्यक्तिदेशाश्चेति कर्मधारयः तेषु यात्रावीथीषु सञ्चरणं तन्वन्त उत्सवा यथाभिमतमभिमतमनतिक्रम्य तेषां सेवा दर्शनप्रणामादिः तस्या हेवाकोऽभिलाषः

ललितमनसां प्रीत्यै बिभ्रद्रसान्तरभूमिकां
अनवमगुणो यस्मिन्नाट्ये रसो नवमः स्थितः ।
जननपदवीजङ्घालार्तिच्छिदानुगुणीभव
न्नटपरिषदा तेनास्वादं सतामुपचिन्विति ॥ ३ ॥

परिगृहीता च मया भरतमतोपाध्यायस्य सन्मार्गवर्धनस्यान्तेवासिनस्सन्तोषपालकनामधेयस्य शैलूषचक्रवर्तिनः पुत्रेण, प्रतिभटकुशीलवकुञ्जरकण्ठीरवेण वैकुण्ठविनोदिना सप्रतिज्ञविदुषामाज्ञा, दिव्यप्रयोगदिदृक्षादत्तक्षणाविचक्षणाश्च समुदितास्सामाजिकाः——तथाहि

---

मरुद्वृधा कावेरी तस्या अन्तरीपं द्वीपं । शेषाशनसेनेशः समुचितस्ववर्णाश्रमयोस्समुचितस्सदाचारस्सद्भिरनुष्ठित आचारश्शीलं स्वभावं । अनादिमाया प्रकृतिः-अजामेकां इति श्रुतेरनादित्व तस्या' मायां तु प्रकृतिं विद्यात् । इति श्रुतेर्मायाशब्दवाच्यत्वं च तस्याः आवर्त्ताः भ्रमयः गतागतानि बाह्या' अवैदिकाः (कुत्सितादृष्टिः दर्शनं येषां ते कुदृष्टयः) प्रामाण्यमभ्युपगच्छन्त इव तद्विरुद्धार्थवादिनः गन्धसिन्धुरैः गन्धहस्तिभिः। अधिजिगमिषतः अधिगन्तुमिष्ट' मुक्तैः घण्टापथं घण्टावान्मार्गं महापथः । अखण्डदिङ्मण्डलशिखण्डकैः अशेषदिक्चक्रचूडाभूतैः । औपनिषदं यद्रहस्यं भगवत्स्वरूपरूपादि-एतद्वै महोपनिषद देशानां गुह्यमित्युक्तं प्रपदन वा तदुपदेशे देशिकैः स्वभावभिज्ञैः । कलापः समूहः अत्रभवद्भिः पूज्यैः आर्यमिश्रैः श्रेष्ठतमैरित्यर्थः । आदिष्टोस्मीति पूर्वेणान्वयः ।

कथमित्यपेक्षायामाह ।

यद्युतेति—यत किलेत्यर्थ. । ललितं मृदु मनोयेषां ते तथोक्ताः सोपक्रमणा वेदान्तविचाराक्षमचेतसामिति यावत् । प्रीत्यै रसान्तरस्य वीररसस्य भूमिकां वेषं बिभ्रत् । अनवमाः अक्षुद्राः गुणा यस्य स तथा—अस्यानवमगुणत्वमुपरिष्टादुच्यते असभ्यपरिपाटिकामित्यादिना नवमोरसश्शान्तः । शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः । बीभत्सरौद्रशान्ताख्या रसा इत्युक्तेः । यस्मिन्नाट्ये स्थितः स्थायी भवति । जननपदवी संसारमार्गः तत्र जंघालानां धावतामार्त्तिं तापत्रयजन्या छिनत्तीति छित् नगुणाः विवेकादयः तत्भावापन्ननटानां परिषत् समूहो यस्मिंस्तेन । नान्येन । सतामास्वादं रसानुभवजनितसन्तोषमुपचिनु वर्धयेति यत् । स एवादेश इत्यर्थ. ॥ ३ ॥

स च मयांगीकृत इत्याह . परिगृहीति । भरतमतं । भरतमुनिप्रणीतं शास्त्रं तस्य उपाध्यायः अध्यापकः तस्य सन्मार्गवर्धन इति तस्य नाम । वैकुण्ठविनोदिना वैकुण्ठेन भगवता विनोदः कालयापनमस्यास्तीति तद्विनोदि तेन । सामाजिकसंपत्तिमाह । दिव्यइति । दिव्य अद्भुत' प्रयोग' कथासन्दर्भः तस्य-दिदृक्षा द्रष्टुमिच्छा तया दत्तक्षणा दत्तोत्सवा कृतोत्साहा इत्यर्थ । तेषा सरुद स्तौति-

अवधारितनाट्यदेशिमार्गै
रसमीचीनपराङ्मुखैरमीभिः ।
भरतागमदैवतैरिवैषा
परिषत्संप्रति भासते महद्भिः ॥ ४ ॥

तदहमशेषविद्यास्थानसंपदुपलम्भिनीमभूतपूर्वबहुविधभूमिकापरिग्रहैरप्यतिरस्कृतपारम्यामनवबोधजलधिकुक्षिंभरीमनन्यभक्त्युन्मीलिनी मादिमां देवतामभिगच्छामि ।

---

अवधारितेति—अवधारितौ निश्चितौ नाट्ये वर्त्तमानौ देशिमार्गौ यैस्तैः आद्यं पदार्थमिनयोमार्गो देशी तथा परमिति तयोर्लक्षणं तु । असमीचीनेभ्यः शास्त्रेभ्यः पराङ्मुखैः । भरतागमस्यभरतशास्त्रस्य दैवतैरिव स्थितैः देशिकैरिवेति पाठान्तरं महद्भिः साध्वसाधुविचारनिपुणैः ॥ ४ ॥

स्वकृत्यमाह तदित्यादिना—। तत् यस्मात् आर्यमिश्राः देशस्याङ्गीकारः सामाजिकसम्मेलनं च जात . तस्मादित्यर्थः । विद्या ज्ञानं तस्य स्थानानि शास्त्राणि ज्ञानजनकत्वेन शास्त्राणां तत्स्थानत्वोक्तिः अशेषाणि च तानि विद्यास्थानानि च तान्येव सम्पत्तस्या उपलम्भिनी प्रापिका . भूतपूर्वाः पूर्वमुत्पन्नास्ता न भवन्तीति अभूतपूर्वाः । बहुविधाश्च भूमिकाः तासां परिग्रहे स्वीकारेऽपि भूमिका शब्देनावतार उच्यन्ते । ततश्चावताराणां ऐच्छिकत्वात्तत्गतदोषास्पृष्टत्वं च भगवतस्सूच्यते । गीतं ह्येतत् भगवता ।

अजोऽपि सन्नव्ययात्माभूतानामीश्वरोऽपिसन् ।
प्रकृतिं स्वामधिष्टाय सम्भवाम्यात्ममायया ॥

इति । अत्र मायाशब्दस्सङ्कल्परूपज्ञानवाची । मायावयुनं ज्ञानमिति निघण्टुपाठात् । अतिरस्कृत अतिरोहितं पारम्यं परत्वं यस्यास्सा तथा । जटायु घण्टाकर्णादीनां मोक्षप्रदानादिदर्शनात् अबोधशब्देन ज्ञानानुदयान्यथाज्ञान विपरीतज्ञानान्युच्यन्ते । तदन्यतद्विरुद्धतदभावेषु नञोवर्तमानत्वात् स एव जलधिस्तेन कुक्षिम्भरी उदरम्भरीं तत्प्राणाशनीमित्यर्थ ।

अनन्याः प्रयोजनान्तरविमुख्याः भक्तेरुन्मीलिनीं उत्पादयित्री

नाहं वेदैर्नतपसा न दानेन न चेज्यया ।
भक्त्यात्वनन्ययाशक्यअहमेव विधोऽर्जुन ।
ज्ञातु द्रष्टुञ्च तत्वेन प्रवेष्टुञ्च परन्तप ॥

इत्यत्रोक्तानन्यभक्तिरेवात्र विवक्षिता । आदिमां सकलजगत्कारण-

प्राची संध्या काचिदन्तर्निशायाः
प्रज्ञादृष्टेरंजनश्रीरपूर्वा ।
वक्त्री वेदान् भातु मे वाजिवक्त्रा
वागीशाख्या वासुदेवस्य मूर्तिः ॥ ५ ॥

अंजलिं बध्वा ।

देवो न श्शुभमातनोतु दशधा निर्वर्तयन् भूमिकां
रंगे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः ।

---

भूता देवतां । अत्र देवता शब्दस्साधारणोपि देवताविशेष नारायणो वर्तते । अन्यथा आदिमामित्येतच्चोपपद्यते. तस्यैव जगत्कारणत्वात् । नारायणाद्ब्रह्मा जायते- नारायणाद्रुद्रो जायते सर्वाणि भूतानि नारायणादेवसमुत्पद्यन्ते नारायणे प्रलीयन्ते । इत्यादि श्रुतेः ।

विष्णोस्सकाशादुद्भूतं जगदत्रैव च स्थितं ।
स्थितिसयमकर्त्तासौ जगतोस्यजगच्चसः ॥

इति स्मृतेश्च । अभिगच्छामि नमस्करोमि इत्यर्थः ।

उक्तमेवानुतिष्ठति .

**प्राचीति**–। अन्तर्निशायाः मनसि वर्त्तमानाया अज्ञानरूपायारात्र्याः मनसि वर्त्तमानमज्ञानं रात्रिरिव पदार्थविवेचनासामर्थ्यमापादयतीति तदुक्तिः । प्राची पूर्वा सन्ध्या प्रातस्सन्ध्येत्यर्थः काचिदित्यनेन ततो वैलक्षिण्य प्रतीयते । यद्वा निशाशब्दस्तत्सम्बन्धि तिमिरमुपलक्षयति । प्रज्ञैव दृष्टि तस्याः अपूर्वा अभूतपूर्वा अञ्जनश्रीः अञ्जनसम्पत्त्वेवान्वक्त्री अध्यापयित्री । योवै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । इति श्रुतेः । वाजिनो वक्त्रमिव वक्त्र यस्याः तथोक्ता वागीश इत्याख्यानाम तस्यास्सा यथोक्ता वासुदेवस्य मूर्त्तिः दिव्यविशेषः मे भातु स्फुरतु प्रार्थनायालोट् . मनसीति विशेषः ॥ ५ ॥

एवं प्रार्थितवतो अस्य हृदये भगवान्हयग्रीवः स्वविग्रहं प्राचीकशत् । तदनु भवजनिते सन्तोषभक्तितमे तमञ्जलिकरणे समचूचुदतां ।

तत्कृतवानित्याहाञ्जलिं बध्वेति ।

अशेषविद्यास्थानसंपदुपलम्भिनी हयग्रीवमूर्त्तिं प्रणम्य बहुविधभूमिकापरिग्रहेप्यतिरस्कृतपारम्यमित्युक्तवैभव भगवन्तं प्रार्थयते ।

**देव इति**–। देवः क्रीडापरः अनेनावताराणां क्रीडाकार्यं व्यज्यते । भूमिकां प्रादुर्भावं दशधा निर्वर्त्तयन्नाचरन् दशधेत्युपलक्षणं सहस्रश इत्यर्थः । अजायमानो बहुधाविजायते । इति हि श्रूयते । बहूनि मे व्यतीतानि जन्मानि तव चार्जुन इति स्मर्यते च । लब्धनिर्भररसैः लब्धा निर्भराः पूर्णा रसा श्रृङ्गारादयो यैस्तैः ।

**यद्यपि स पूर्वमपेक्षितः, प्रतिपत्तिस्त्वस्य पश्चादेव, अनुष्ठानापेक्षत्वात्, तथा च क्रमपर्य्यन्तात्परा निरूपणेति ।**

क्षितत्वाद्द्राव्यस्य स्वर्गकामपदस्य 'दण्डी प्रैषानन्वाहे'तिवद्विशेषणप्रधानतामापादयतीत्युपपादित भावनाविवेके ।

स्यादेतत् । यथा प्रथममपेक्षितत्वाद्द्राव्यस्य स्वर्गकामपदं तत्परमेवं नियोगेन नियोज्यस्य प्रथमपेक्षितत्वान्निमित्तश्रुतयोऽपि नियोज्यपरा. प्रसज्येरन्, वक्तव्यो वा विशेष इत्यत आह—यद्यपि सोऽधिकारी नियोज्य' पूर्वमपेक्षितः प्रतिपत्तिस्त्वस्याऽधिकारिणः साङ्गप्रधानप्रतीतेः पश्चादेव । इदमत्राकूतम् । न हि प्रथममपेक्षित इत्येव प्रथमं प्रतीयते । अपि तु यच्छक्यप्रतिपत्ति । शक्यप्रतिपत्ति च भाव्यं, न च सा तादृशाऽधिकारिविशेषणमिति । कुत. ? अनुष्ठेयज्ञानाऽपेक्षित्वादधिकारविशेषस्य । नो खल्वर्थिमात्रं निमित्तमात्र वा ऽधिकारिविशेषणतां प्रतिपद्यते। मा भूत् पङ्गुशूद्रादीनामधिकारः, किं तु यथाविनियोगमधिकारव्यवस्थितेर्निखिलाङ्गोपेतप्रधानोपसंहारसमर्थो ऽधिकारिविशेषः । तथा च पङ्गुशूद्रादीनामनधिकारः । सामर्थ्यं च तद्गोचराऽधीननिरूपणक्रमपर्यन्ताङ्गग्रामोपेतं च प्रधानं तद्गोचर इति तज्ज्ञानमपेक्षते । ततश्च प्रथममपेक्षितोपि नियोज्यो न द्रागित्येवाऽवगन्तुं शक्यतइति भावनाकर्त्तव्यता निमित्तफलं करणेतिकर्तव्यतां परिज्ञाय पश्चान्निरूप्यतइति युक्तम् । महर्षेरपि क्रमलक्षणाऽनन्तरमधिकारलक्षणं प्रणयत एतदेव संमतमित्याह—तथा चाऽस्याधिकारविशेषस्य क्रमपर्यन्तात्प्रधानाङ्गग्रामगोचरविचारात्परा विचारणापि । एतेन ज्ञाप्यज्ञापकभावसम्बन्धान्निरूप्यस्याऽवसरलक्षणं सम्बन्धं ये नाऽधिकारलक्षणस्याचक्षते ते निरस्ता वेदितव्याः । पूर्वेषामधिकारगोचरविचारद्वारेण ज्ञापकत्वादेतस्य ज्ञाप्यत्वात् । न चैकेनैव

**नन्वेवं विधिमति सर्वत्रेष्टाऽनुबन्धादुत्पत्तिचोदनाऽभावः। तथा च परस्पराऽनपेक्षत्वात्सन्निधावपि न फलार्थेन पुनः श्रुतिरिति सर्वत्र कर्म्मभेदः स्यात्। क्रत्वर्थश्च न** लक्षणार्थेन ज्ञापकेन भवितव्यमिति कश्चिन्नियमहेतुरस्ति। तदाहुरत्रभवन्तो वार्त्तिककारमिश्राः 'कार्ये ज्ञाने ऽधिकारः स्यात्'। क्रमपर्यन्ताङ्गग्रामसहितं च प्रधानं कार्यमुक्तमिति सर्वं रमणीयं स्थितं तावत्। समीहितसाधनतायामपि विधौ यदा शक्नुयादित्युपबन्धः काम्ये यथा शक्नुयादिति तु नैमित्तिक इति समीहितसाधनतैव तत्र विधिरिति।

तत्र चोदयति—नन्वेवं विधिमति सर्वत्रेष्टाऽनुबन्धादुत्पत्तिचोदनाभावः। अयमर्थः। समीहितसाधनता चेद्विधिः स च लिङाद्यर्थ इति 'यदाग्नेयो ऽष्टाकपाल' इत्यादिषूत्पत्तिचोदनास्वपि विधिप्रतिपत्तेस्तस्य च समीहितसाधनात्मकत्वात्तत एव फलाऽवगतेर्दर्शपूर्णमासाभ्यां स्वर्गकाम इतिवदधिकारचोदनात्वादुत्पत्तिचोदनाऽभावप्रसङ्ग इति।

भवतूत्पत्तिचोदनाभावः, किमेतावतेत्यत आह—तथा च परस्पराऽनपेक्षत्वात्सन्निधावपि न फलार्थेन पुनः श्रुतिरिति सर्वत्र कर्मभेदः स्यात्। अयमर्थः। उत्पत्तिवाक्यानां खलु कर्मस्वरूपप्रतिपादनपराणां तद्रूपस्याऽन्योत्पादे स्वाभाव्यादुत्पाद्यमाकाङ्क्षितं, कर्मफलसम्बन्धप्रतिपादनपराणां च वाक्यानां स्वरूपप्रज्ञापनमपेक्षमाणानां परस्परसम्बन्धसम्भवादुत्पत्तिवाक्यविहितकर्मसन्निधौ तस्यैव कर्मणः फलसम्बन्धार्थेन पुनः श्रुतिः फलवाक्यउपपद्यतइति न कर्मान्तरं कल्प्येत। यदा तु समीहितोपायतैव विधिस्तदा तत एवोत्पाद्यप्रतिलम्भान्न तस्य फलवाक्याऽपेक्षा ऽस्ति। फलवाक्यमपि च तद्वाक्योपात्तफलाऽवरुद्धं कर्मफलान्तरसम्बन्धाय नाऽपेक्षितुं क्षमत-

**स्यात् । दध्ना जुहोतीति च न गुणफलसंबन्धः स्यात् । न चाऽन्यत् सुखादिष्टं, तच्च स्वर्ग इति स्वर्गाऽवरोधात्पश्वाद्यवकाशो दुर्लभः । उपादानाद्वा तेऽपि स्युः । नित्यस्तु**

इति कर्मान्तरमेव फलसम्बन्धाय कल्पयतीति सर्वत्र कर्मभेदप्रसङ्ग इति । प्रसङ्गान्तरमाह–क्रत्वर्थश्च न स्यात्प्रयाजादि । न जातु श्रुत्युपात्तसमीहितफलप्रतिलम्भे प्रकरणलब्धकरणोपकारलक्षणफलसंबन्धसंभवः । श्रुतेः प्रकरणाद्बलीयस्त्वादिति भाव ।

प्रसङ्गान्तर समुच्चिनोति– दध्ना जुहोतीति च गुणस्य दध्नः समीहितेन फलेन सबन्ध स्यात् । इह हि प्राप्ताऽप्राप्तविवेकेन दध्नेन्द्रियकामस्येत्यत्र नैतावता होमो निष्फलस्तस्यापि स्ववाक्यसमधिगतफलत्वेन तद्वत्त्वात् । न च प्रकृतात्कर्मान्तर दधि फलविशिष्टं विधीयतइति साम्प्रतम् । न खलु तदानीमेव तस्यैव कर्मणः फलोद्देशेन विधेयता दधिविधौ चोद्देश्यता सभवति । तस्मात्प्रकरणलब्धहोमाश्रयस्य दध्नः फलसम्बन्धप्रसङ्ग इति युक्तम् । किं च समीहितसाधनता चेद्विधिः समीहित च पुंसां सुखमेव न दुःखं नाप्यसुख द्वेषणादुपेक्षणाच्च । तच्चाऽनवच्छिन्न स्वर्ग एव । अवच्छेदे हि लौकिक स्यात् । न च 'चित्रया यजेत पशुकाम' इत्यत्र यजेतेति श्रुतेरेवाऽवऽच्छिन्न पश्वादिभिः समीहितमवगम्यते । न च पशुकामपदसम्बन्धादवच्छेद,स्तस्य पदान्तरपर्यालोचनया वाक्यसमधिगम्यत्वात्स्वर्गस्य च श्रुतिमात्रात्प्रतीतेर्बलीयस्त्वात् । स्वपदोपात्तसमीहितरूपभाव्यलाभेन च भावनया ऽनपेक्षितत्वात् । यथाश्रुतपुरुषविशेषणत्वेन व्यवस्थान न भाव्यपरत्वमिति स्वर्गावरोधात्पश्वादीनां चित्रादिष्वसंबन्धप्रसङ्ग इत्याह–न चाऽन्यत्सुखादिष्टम् । ततः किं ? तच्च स्वर्ग इति स्वर्गाऽवरोधात्पश्वाद्यवकाशो दुर्लभः। अथाऽन्यदिच्छत्यन्यत्करो-

**स्वर्गः स्यात् । तस्मात्किमित्यवशिष्टं भावनायाः ? पुरुषार्थतैव विशेषणम् । तथा ऽपि च निमित्ते कर्म्मैव साध्यम् । अन्यथा निमित्तफलयोरुपादेये वाक्यभेदः । जीवनेन होमो**

तीति विरोधः । न तावत्पुरुषविशेषणपरतामात्रपरेण पशुकामपदेनाऽस्याऽन्वयः । तत्र यदि फलतया नाऽन्वियात् प्रमत्तगीत प्रसज्येत । तस्मात्फलपरमेतदित्याह—उपादानाद्वा तेपि पश्वादयः स्युः । नित्यस्त्ववश्यंभावी तु स्वर्गः स्यात्तथापि समुच्चयो ऽनिष्टस्ते सज्यत इति भावः । स्वपक्षमुपसंहरति—तस्मात्किमित्यविशिष्टं भावनायाः? किमिति भावनाभाव्यमुपलक्षयति । तद्यदा समीहितसाधनता न विधिर्न पुरुषार्थतैव विशेषणं न पुरुषार्थेनैव विशेष्यते अपि त्वन्येनाऽपीत्यर्थः । क्व चित्पाठः—पुरुषार्थतैव विशेषणमिति । तत्र केभ्यश्चित्पदेभ्य उत्तरम् । ननु भवत्पक्षे ऽपि भावनैव विधिवद्भाव्यमुपस्थापयति पश्वाद्यवकाशो दुर्लभ इति पदानि तेभ्य उत्तरं पुरुषार्थेनैव विशेषणम् । अयमर्थः । अस्मन्मते हि भावनास्वाभाव्याद्भाव्यमात्रमेवाऽवगतमिति तद्विशेषापेक्षायामनुगुणतया पुरुषार्थेनैव पश्वादिनैव किमंशो विशेष्यतइति युक्तम् । त्वन्मते तु भाव्यविशेषणाऽपेक्षैव नास्ति । स्वर्गस्यैव तद्विशेषस्य प्रतीतिरिति । तथा च यदुक्तं नित्यसमसमीहितोपायो नैमित्तिककर्मेति तदपि निरस्तमित्याह—तथापि च किमंशस्याऽविशिष्टत्वे निमित्ते कर्मैव साध्यं न पुरुषार्थः । नैमित्तिककर्मभावना हि भाव्याकाङ्क्षा पुरुषार्थं च भाव्यमादातुमशक्ता धात्वर्थमेव स्वपदोपात्तमादाय निर्वृणोतीत्यर्थः । यदि पुनः पुरुषार्थो ऽस्या भाव्यो भवति ततः को दोष ? इत्यत आह—अन्यथा नित्यत्वसमीहितसाधनत्वे निमित्तफलयोरुपादेये च कर्मणि वाक्यभेदो । वचनव्यक्तिभेदात् । तमेव दर्शयति—निमित्ते सति कर्मैव विधेयं भावनाभाव्यतया ऽवसीयते इति । ईदृशं हि तत्र वचन व्यज्यते, जीवत्वे हि सति

**होमेन फलमिति वैरूप्यात् । द्वयोरुद्देश्ययोरेकवाक्याऽसमवायात् । न ह्येकस्मादशुभक्षयो ऽक्रियायामपायश्च सुलभः । एवं चाऽनङ्गत्वमेव प्रज्ञातत्वात्कर्म्मरूपस्य, न यथाशक्त्युपादानमिति ।**

निमित्ते होमः कर्तव्य इति । यदा तु फले कर्म विधीयते तदा फलस्य निमित्तवदसिद्धत्वात्साध्यत्वेन प्रतीते, तच्च कर्म चेत्साध्य तदोभयोरसबन्धादेकस्य त्वितरार्थत्वान्नेष्टं परनिष्पत्तयइति कर्मणः फल प्रति करणत्वेन सबन्धादीदृग्वचनं व्यज्यते होमेन फलमिति । तदिदं वैरूप्यम् । अतो वाक्यभेदः स्यात् । एतन्मा भूद्वैरूप्य, यत. फलमुद्दिश्य कर्म विधास्यतइत्यत आह—द्वयोरुद्देश्ययोरेकवाक्यासमवायात् । लोकाऽधीनाऽवधारणा हि वाक्यगतिः । लोके च प्रत्युद्देश्यं विधिवाक्यपरिसमाप्तिः । न खलु येनैव प्रयत्नेनैकमर्थं विधातुमेकमुद्दिशामस्तेनैवाऽपरमप्युद्देष्टुमीश्महइति स्वाऽनुभवसिद्धमेतत् । तस्माद् द्वयोरुद्देश्ययोर्नैकवाक्य[1]समवायसंभव इत्यर्थ । एकस्यैव ज्ञापकत्वविरोधात् निमित्तस्य विधिविशेषणत्वमपि न संभवतीत्यभिमान आचेप्तुरिति मन्तव्यम् । न चैवं वाक्यभेदप्रसक्तिः । इदं चाऽपर प्रसज्यतइत्याह—न ह्येकस्मादशुभक्षयो ऽक्रियायामपायश्च सुलभ[2]। यदा निमित्ते कर्म विधीयते न तदा फले विधातु शक्यते। न च तत्स्वरूपमात्रविधानं प्रेक्षावत्प्रवृत्तिहेतुरिति तदक्रियायामपायः कल्पनीय,स्तद्भयात्प्रवृत्तिसिद्धेः । यदा तु फले विधीयते तदा तदेव दुरितं क्षिणोतीति तदर्थमनेककल्पनागौरवप्रसक्तिरिति निमित्तेन कर्मैव भावनाभाव्य न समीहितमपि इत्याक्षेपः । एष चाक्षेपान्तरमपि प्रसूतइत्याह—एवं चाऽनङ्गत्वमेव नैमित्तिकस्य नाऽङ्ग सम्बन्ध इत्यर्थ. । कुतः? प्रज्ञातत्वात्कर्मस्वरूपस्य । उपकारकतया खल्वङ्गता व्याप्ता, सा चोपकारकता स्वरूपे कार्ये, वा स्यात् । न तावत्कार्ये क्रियाया उपकारकत्वे

१ नैकविधिवाक्य २ पु० पा । २ अपायश्च तुल्य. २ पु० पा ।

उच्यते—

**उत्पत्तिविनियोगार्थप्रयोगाऽधिक्रियात्मकः ।**
**सर्वो विधिस्तत्परताविशेषान्न विभज्यते ॥**

नैमित्तिकस्य कर्मणः कार्याऽभावादित्युक्तम्, पारिशेष्यात्कर्मस्वरूपजनकत्वमङ्गत्वं वाच्यं, न च तत्सम्भवति, प्रज्ञातत्वात्कर्मणः । उपायतो रूपतश्चोपकारकताव्याप्ता ऽङ्गता तदभावे न भविष्यतीत्यर्थः । न केवलमनङ्गत्व, मिद चाऽपरमापतितमित्याह—न यथाशक्त्यङ्गोपादानं नैमित्तिककार्ये ऽस्तीति । परिहरति—

उत्पत्तिविनियोगार्थप्रयोगाधिक्रियात्मकः ।
सर्वो विधिस्तत्परताविशेषान्न विभज्यते ॥

नापेक्षितोपायतायामपि विधौ उत्पत्त्याद्यभावः, सहसंभवेनाऽविरोधात् । सर्वस्यैव विधेरुत्पत्त्यर्थविनियोगार्थप्रयोगाधिक्रियात्मकत्वात् । नन्वस्मिन्पक्षे प्रयोगात्मकत्वमनुपपन्न, कर्त्तव्यताऽवगमो ह्यनुष्ठापयति, नेष्टसाधनतावगम. । न चेष्टसाधनतैव कर्त्तव्यता, कृतिसाध्यता हि सोच्यते । साधनता च सिद्धता, न च स्वभावविरुद्धयोर्दहनतुहिनयोरिव सिद्धतासाध्यतयोरेकत्वं शक्यसाधनं, चैलोक्यस्यैक्यप्रसङ्गात् । अपि च कर्त्तव्यता चेदभिमतसाधनता अभिमतमपि कर्त्तव्यत्वमविवादमित्यभिमतसाधनं स्यात् । निदाघसमयसबन्धिमध्यन्दिनाऽर्कविकीर्णखरतरकरनिकरनिपाताऽऽहितदुःसहसन्तापदूनतनवो हि पिहितगगनमण्डला बलाहकोन्नतिमाकस्मिकीमम्भः-संभारगम्भीरामभिनवतमालमालाभामतिरुचिरां रोचयन्ते, न च कर्त्तव्यतामस्या मन्यन्ते । न चाऽवग्रहविशोषितसस्यसीमानः कृषीवला यजमानसमर्पितामभिमतवर्षोपायभूतामपि कारीरीं कर्त्तव्यतया ऽवगच्छन्ति । तस्माद्विरोधाद्व्यभिचाराच्च नाऽभिमतोपायता कर्त्तव्यता ।

न चेत्कर्त्तव्यता कथमनुष्ठापयतीऽति न प्रयोगात्मको विधि-

**नेष्टसाधनतामात्रं विधि,रपि तु कर्त्तुः । एवंकारं च**

रित्यत आह–नेष्टसाधनतामात्र विधि,रपि तु कर्तुः । अयमर्थः । न वयमिष्टसाधनतामात्र कार्यता ब्रूमहे, यदेवमुपालभ्येमहि, किं तु कर्तुर्यदिष्टसाधन यत्तस्य कर्तव्यम्, अकर्त्तव्ये कर्तुस्तत्त्वाऽनुपपत्तेः । न च साध्यतासिद्धतयोर्विरोधो, भिन्नकालत्वात् । न खलु प्रवृत्तेः पूर्वं कर्मणः कृतता क्रियमाणता वा, किं तूपरितनस्य क्रियमाणता तदनन्तरस्य कृतता । शब्दश्च त्रैकाल्यवस्तुविषयत्वेन शक्नोति तस्य सिद्धतासमयवर्तिनीं साधनतां तत्पूर्वकालभाविनीं च कृतिव्याप्यता-मिदानीमसतीमप्यभिधातुम् । यदेव च कृतिव्याप्यं तदेव च कृति-साधन,मितिकर्तव्यतासाधनतयोः सामानाधिकरण्यमिष्टसाधन कर्त-व्यमिति । तदेव कर्तुरिष्टसाधनतां विधिं वदतां कर्तव्यतैकार्थसम-वायिसमीहितसाधनत्वमुक्त भवति, न कर्तव्यतामात्र, फलेऽपि कर्त-व्यताया अविशेषेण विधित्वप्रसङ्गात् । न च फलकर्तव्यता शब्दगो-चरः । स्वयमेव हि जानन्ति कर्तव्यं पुरुषा फलं, न च शब्दः फले पुरुषस्योत्साहमुत्पादयेत्, न च तदीहागोचरस्तत्साधन तु स्यात्, न च तद्भावेनाऽज्ञान प्रवृत्तिहेतु'रिति तज्ज्ञानमेव विधि' ।

किं कारण पुनरेवमभ्युपेयते? इत्यत आह–एवकारं प्रव-र्तनाप्रत्ययः[1] । इदमाकूतम् । ओदनकामः पचेत्, न सर्पायाऽङ्गुलि दद्यादित्युपदेशश्रवणसमनन्तरमुपदेष्टव्यस्य पुंसः पाके प्रवृत्तिमुरगाङ्गु-लिदानोद्यतस्य च ततो निवृत्तिमुपलभ्य बाला एवमवधारयन्ति नून-मस्य प्रवृत्तिहेतुगोचरः प्रत्यय उपजात इति । तथा हि । प्रवृत्तिरिय-मस्य पुंसः कारणवती प्रवृत्तित्वात्प्रवृत्तिवत् । प्रत्ययपूर्विका चेयं स्वतन्त्रप्रवृत्तित्वादस्मत्प्रवृत्तिवत् । कर्तव्यताकर्तव्यत्वैकार्थसमवा-यिहिताऽहितसाधनत्वगोचरश्च विवादाध्यासितः प्रत्ययः प्रवृत्तिहे-तुप्रत्ययत्वात् अस्मत्प्रवृत्तिहेतुप्रत्ययवत् । तथा हि । स्तनपानादौ

१ प्रत्यया' २ पु पा ।

प्रवर्तनाप्रत्ययः । अन्यथा प्रवृत्तिहेतुत्वाभावात् । स्वतो ऽन्यतो वा सिद्धे अत एवा ऽनपेक्षितव्यापारे समीहितसाधने ऽप्यप्रवृत्तेः । तदुक्तं "शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वा"-दिति । प्रयोक्तृफलसाधनतालक्षणत्वाच्छास्त्रस्येति । ततश्च विधिपर्य्यायाच्छास्त्रादनुष्ठानं कर्म्मणो ऽवगम्यते । अदृष्टा-कर्त्तव्यतैकार्थसमवायिनीं हितसाधनतामवगम्य प्रवृत्तोस्मि, दहनस-पर्काच्चा ऽकर्त्तव्यतैकार्थसमवायिनीमहितसाधनतामवेत्य निवृत्तोस्मीति कर्त्तव्यत्व कृत्यर्हत्व तदविरोधि चा ऽकर्त्तव्यत्वम् अधर्मवत् । एवविधे एव च हिता ऽहितोपायत्वे तादर्थ्यात्प्रवर्त्तनानिवर्तनाज्ञाने गोचरयतः । ते च प्रागसती शब्दज्ञानानन्तरमुपजायमाने तज्ज्ञान-मेव कारणतया स्वीकुरुतः । तस्मादेवं यतः प्रत्ययो भवति न त्वन्यथा, प्रवर्त्तनाप्रत्ययश्च प्रवृत्तिबीज, तस्मान्नेष्टसाधनतामात्र विधि-रपि तु कर्त्तुरिति सिद्धम् ।

अन्यथाकार कस्मान्न भवती ?त्याह—अन्यथा विधेः प्रवृ-त्तिहेतुत्वा ऽभावात् । कुतः ? स्वत. पुरुषप्रयत्नमनपेक्ष्य तत्क्षणस्फु-टत्कमलकुड्मलपरिमलोद्गारिणि नासा ऽग्रमधिरोहति मातरिश्वनि अन्यतो वा प्रयत्नवद्वैणिकवाद्यमानवल्लकीविपञ्च्यमाने पञ्चमध्वनौ नरान्तरश्रवणपथवर्त्तिनि सिद्धे ऽतएवा ऽनपेक्षितव्यापारे समीहितसा-धने ऽप्यप्रवृत्तेः । अत्र भवतो महर्षेरप्येतदभिमतमित्याह—तदुक्त शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादिति । कथमिदमनेनोक्त ? मित्याह—प्रयोक्तृफलसाधनतालक्षणत्वाच्छास्त्रस्य । ननु शास्त्रस्य तल्लक्षण न विधेरित्याशङ्कामपनयन्नुपसंहरति—ततश्च विधिपर्यायाच्छास्त्रादनुष्ठान कर्मणो ऽवगम्यते, ततश्च सिद्धः प्रयोगविधिरित्यर्थः । अस्तु तर्हि प्रयोगात्मकतामात्रं किमुत्पत्त्यर्थतये ? त्याह—अदृष्टार्थस्य शास्त्रा ऽऽय-

**र्थस्य च शास्त्राऽऽयत्ताऽनुष्ठानस्य स्वरूपविशेषो ऽपि । प्राग्विधेरप्राप्तेः । अपेक्षिते चाऽपेक्षितसाधनत्वाद्विनियोगः । प्रवर्त्यश्च कश्चिदधिकारी स्वामी यस्य तदिष्टसाधनम् । सर्वत्रापि च प्रतीयमाने ऽस्मिंश्चतुष्टये ऐदम्पर्य्यं भिद्यते । तेनोत्पत्त्यादिविधिवाक्यभेदः । तच्चैदम्पर्य्यं प्राप्त्युपपद्विशेष-**

त्तानुष्ठानस्य स्वरूपविशेषो ऽप्यवगम्यते । कुत ? प्राग्विधेरप्राप्तेः । विनियोगार्थता दर्शयति—अपेक्षिते चाऽपेक्षितसाधनत्वाद्विनियोग: । लिङादय: खलु विधौ स्मर्यन्ते, विधि: कर्तुरपेक्षितोपायता, ततश्च ते धातो: परे श्रूयमाणा स्वार्थस्य भावनाया: समीहितं भाव्यमुपनयन्ति, धात्वर्थस्य च भावनाऽनुरञ्जनस्य समीहिताऽर्थप्रवृत्तभावनाभाव्यस्य समीहितांशसाधनत्व समीहितभावनासाधनत्व वा तद्रूपस्य तस्य स्वतो ऽलाभात् श्रुत्यैवाऽभिदधतीति विनियोगार्थत्वम् । फलतद्भावनोपायत्वप्रतिपादनमेव हि तादर्थ्यप्रतिपादनमिति भाव: । अधिक्रियात्मकतां दर्शयति—प्रवर्त्यश्च कश्चिदधिकारी स्वामी यस्य तदिष्टसाधनमिति । प्रवर्त्तनात्मको हि विधिर्विविच्यमान: कर्तुरभिमतसाधनात्मा स्थापित: । स च प्रवर्त्तनीयं कर्त्तार यागाद्युपायजनितसमभिलाषे फलविशेषशालिनमधिकारिण कर्मणि स्वामिनमधिकुर्वन्नधिकार इत्युच्यते । अनधिकुर्वत. कर्तुरित्यभावात् । समीहितसाधनतामात्रस्य प्रवर्त्तनात्मकत्वाऽनुपपत्तेर्विधित्वव्याहतिप्रसङ्गात् ।

ननु सर्वस्य विधेश्चातूरूप्यादुत्पत्त्यादीनां मा भूत्परस्परविरोध, एकैकस्माद्वाक्यात्कार्त्स्न्येन चातूरूप्यस्य विधेरनुगमान्नोत्पत्त्यादिविधिवाक्यभेद इत्यत आह—सर्वत्र च प्रतीयमाने ऽस्मिंश्चतुष्टये ऐदम्पर्यं भिद्यते तेनैवोत्पत्त्यादिविधिभेद: । यद्यपि सर्वस्य विधेरेतच्चतुष्टयात्मकता तथापि वाक्याना वैचित्र्यात्सामर्थ्याऽभेदेन चतुर्ष्वेकैकपरत्वादुत्पत्त्यादिविधिवाक्यभेद इत्यर्थ: । तदेव वैचित्र्यमैदम्पर्यनिमि-

संबन्धात्। क्व चिच्चतुष्टयपरता; यथोद्भिदा यजेतेति। अन्यतः कस्य चिदलाभात्। फलपदसंबन्धाच्च। क्व चित्त्रिपरता, यथा ज्योतिष्टोमवाक्ये। उत्पत्तेरन्यतो लाभात्। क्व चिद् द्विपरता, यथा दर्शपूर्णमासवाक्ये। उत्पत्तिप्रयोगयोर-

न्तमादर्शयति—प्राप्त्युपपदविशेषसबन्धाद्भिद्यानइत्यनुषङ्गाच्चतुर्णामन्यतमस्याऽप्राप्तेः स्वर्गकामाद्युपपदविशेषसबन्धाच्चेत्यर्थः। तन्निमित्तानैदम्पर्यभेदानुदाहरति—क्व चिच्चतुष्टयपरता यथोद्भिदा यजेतेति। कुतः? अन्यतश्चतुर्णामपि विधिरूपाणा मध्ये कस्य चिदप्येकस्य लाभात्। ननु यजेतेति कर्मरूपस्य च समीहितसाधनतारूपविध्यभिधायिना च प्रत्ययेन समीहित प्रति विनियोगस्य चाऽवगमादुत्पत्तिविनियोगपरत्वमुपपन्नम्, अनुपपन्न त्वधिकारपरत्व, तत्स्वरूपाऽनवगमात्। न च प्रवर्तनात्मकेन विधिना ऽऽक्षिप्र प्रवर्त्यमात्रमधिकारीति साम्प्रत, सामान्यमात्रस्य तद्भावाऽभावात्। उक्त हि 'देवदत्त वा ऽनुद्दिश्य लिङादयः प्रवर्तन्ते' इति। पशुकामपद तद्विशेषायाऽल भावनाऽऽक्षिप्रभाव्यपरत्वात्। न चैकस्योभयपरत्वाऽसभवः। तथा च तदभावे न प्रयोगात्मकता विधेरित्यत आह—फलपदसम्बन्धाच्च। पशुकाम इति फलपदम्, तच्च विध्युपहिताया भावनाया भाव्यसमर्पणमप्यधिकारिविशेषाऽपेक्षायामर्थादधिकारिणमप्युपनयति। एव च कर्तृविशेषस्याऽभिमतसाधनता बुद्धिसिद्धा। तदेव कर्तारमधिकारिण प्रयोजयन्ति प्रयोगात्मकतामपि लभन्ते इति सिद्ध च चतुष्टयपरत्वम्।

त्रिपरता यथा ज्योतिष्टोमवाक्ये। उत्पत्तेरज्ञातकर्मरूपज्ञानस्याऽन्यतः[1] सोमेन यजेतेत्यतो वाक्यात् लाभात्। क्व चिद् द्विपरता अधिकारविनियोगपरता, यथा दर्शपूर्णमासवाक्ये। उत्पत्तेर्यदाग्नेयो ऽष्टाकपाल इत्यादिभ्यः प्रयोगस्य च पौर्णमास्यां पौर्णमास्या यजेतेत्येवमादिभ्यो ऽन्यत सिद्धे। क्व चित्त्रिपरता क्व चिद् द्विपरता

१ अज्ञातरूपकर्मज्ञानस्य २ पु॰ पा।

**न्यतः सिद्धेः । क्व चिदेकपरता, यथा ऽग्निहोत्रं जुहोति पौर्णमास्यां यजेतेति । न च फले विनियोगः । अनिर्दिष्टफलविशेषस्याऽशक्यप्रतीतित्वात् । तदनिर्देशे ऽधिकारिविशेषाऽप्रत्ययान्नाधिकारो ऽपि । अत एव न प्रयोगः । न ह्यप्रतिष्ठितेष्टसाधनभावे ऽनुष्ठानप्रत्ययः प्रतितिष्ठति नाऽनिरूपिताऽनुष्ठातृकः । तस्मात्फलवाक्यादेव प्रयोगप्रत्ययः ।**

वेति क्व चित्पाठः । तत्र त्रिपरतेति मतमुपन्यस्य द्विपरता वेति वाशब्देन निरस्य द्विपरता स्वीकृतेत्यर्थः । क्व चिदेकपरता यथा ऽग्निहोत्रं जुहोतीत्यत्र उत्पत्तिपरस्य पौर्णमास्यां पौर्णमास्यां यजेतेति प्रयोगपरता । ननु कथमग्निहोत्रवाक्यस्योत्पत्तिपरता ? यावता कर्तृसमीहितोपायता विधिमभिदधता आख्यातेन समीहितं प्रति होमस्य विनियोगः कर्तुश्चाधिकारस्तन्निबन्धनश्च प्रयोग उक्त एवेत्यत आह—न फले विनियोग. । कुतः ? अनिर्दिष्टफलविशेषस्याऽशक्यप्रतीतित्वात् ।

इदमत्राकूतम् । सत्यं विधिस्वाभाव्यात्समीहितमात्रं फलं, न त्वेतावता विनियोगो ऽनुष्ठानाङ्गं सेद्धुमर्हति । अनेनैतदिति हि स स्यात् । न चाऽसौ समीहितभेदाऽभिधायिपदमन्तरेणेति । अत एव नाऽधिकारपरता ऽपीत्याह—तदनिर्देशे फलविशेषाऽनिर्देशादधिकारिविशेषस्य तत्फलकामस्याऽप्रत्ययात् नाऽधिकारः । प्रयोगपरतां निषेधति—यतो न विनियोगो भूत्वा ऽधिकारः अत एव न प्रयोगः । कस्मात् ? न ह्यप्रतिष्ठितेष्टसाधनभावे कर्मणि विनियोगाऽभावे सत्यनुष्ठानप्रत्ययः प्रतितिष्ठति नाऽनिरूपिताऽनुष्ठातृकः । अनिरूपिताऽधिकारिविशेषो ऽनुष्ठानप्रत्ययः प्रतितिष्ठतीति पूर्वेण सम्बन्धः । तस्मात्फलवाक्यादेव प्रयोगप्रत्ययः । उपसंहरति—तेनाऽग्निहोत्रं जुहोतीति कर्मस्वरूपपरता विधेः । ननु च विधिस्वाभाव्यादितरे

तेनाऽग्निहोत्रं जुहोतीति कर्म्मस्वरूपपरता विधेः। इतरे त्वंशाः प्रतीता अप्यविवक्षिताः। पौर्णमास्यामिति त्वनन्यपरत्वात्प्रयोगभेदपरता। संमार्गप्रोक्षणादौ तूत्पत्तिविनियोगपरता। व्रीह्यादिमुखेन प्रकृतयजिकरणांशप्राप्तौ करणेऽपि सामान्यतः प्रतीयमाना नाऽविवक्षामर्हन्ति किं तु तत्सामर्थ्यादेव पिण्डपितृयज्ञवद्विशिष्टतां गमयिष्यन्तीत्यत आह—इतरे त्वंशाः प्रतीता अप्यविवक्षिताः। युक्तं पिण्डपितृयज्ञे विशेषाणामन्यतोऽसिद्धेस्तेषामभावे च विधेस्तत्त्वाऽनुपपत्तेः तद्विशेषाऽभिधायिशब्दकल्पनेति, इह तु सामाम्नातेभ्य एव वचनान्तरेभ्यो विनियोगाधिक्रियाप्रयोगाणां प्राप्तेर्विधिस्वाभाव्यात्प्रतीतानामविवक्षैव युक्तेति भाव। प्रयोगमात्रपरतामुदाहरति—पौर्णमास्यामिति त्वनन्यपरत्वात्प्रयोगभेदपरता। न खल्वेतत् उत्पत्तिपरम्, उत्पत्तेर्यदाग्नेयोऽष्टाकपाल इत्यादिभ्यो ऽवगतेः। नापि विनियोगाऽधिकारिपरत्वम्, अनयोर्दर्शपूर्णमासाभ्या स्वर्गकामो यजेतेत्यत एव सिद्धेः। प्रयोगोऽपि यद्यपि तद्वाक्यादेव सिध्यति तथापि न तद्भेदः सेद्धुमर्हति। तथा हि। दर्शपूर्णमासाभ्यामिति वचनं षण्णामपि यागानामेकप्रयोगतां गमयेत्, अस्मिंश्च पौर्णमास्यामिति वचने कालविशेषे पौर्णमास्यां पौर्णमासीसञ्ज्ञककर्मचयविधिपरे अमावास्यायामिति चाऽमावास्याकाले ऽमावास्याऽभिधानकर्मचयविधिपरे कालभेदतः प्रयोगभेदप्रतीतेः प्रयोगावच्छेदकत्वात्। कालस्य प्रयोगभेदपरतैवाऽनन्यलभ्यत्वात् तद्भेदस्योत्पत्तिवाक्याच्चाऽऽग्नेयादिस्वरूपमात्रचयाणां कालयोगोपकरणीभूताना करणानां तु तद्योगे तदङ्गानामपि तत्सहितानां करणत्वाद्विधिपरतां प्रकारान्तरेणाह—समार्गप्रोक्षणादौ तु उत्पत्तिविनियोगपरता।

अयमभिसन्धिः। दशापवित्रेण ग्रहं संमार्ष्टि व्रीहीन् प्रोक्षतीति समार्गः प्रोक्षणं च विधीयते, न च तत्स्वरूपमन्यतः प्राप्त-

विधिनैवाऽनुष्ठानसिद्धेः । अधिकृतस्य चाऽधिकारप्रत्ययामिति तत्प्रज्ञापनादुत्पत्तिपरता वाक्यस्य । न च प्रोक्षणादेरपेक्षितं प्रत्यन्यतो वाक्यादिदमर्थ्यमवगम्यते इति विनियोगपरतापि । न च सहसैव विधिदर्शनात्स्वर्गादि साक्षादपेक्षितं[1] गम्यते । यच्छक्नुयादित्युपबन्धाद्धि यदपेक्षितं प्रति यस्य सामर्थ्यमुपलभ्यते तेन तत्साधनीयम् । इह व्रीहीन् प्रोक्षतीति विध्युपहिता[2] प्रोक्षणभावना द्वितीयाश्रुत्यापादितप्राधान्यान् व्रीहीनापाततः साध्यतया स्वीकर्तुं प्रवृत्ता सती साक्षादपेक्षितत्वं तेषामनासादयन्ती परम्परया ऽपि पुरुषार्थमर्थयते । तद्यदि परम्परया ऽपि तन्नाप्नोति ततो विपरिवृत्य सक्तून् जुहोतीतिवद्विनियोगभङ्गेन प्रोक्षणाद्येव[3] साक्षादपेक्षितं कल्पयेत् । अस्ति तु पारम्पर्येणाऽपेक्षितप्रतिलम्भः । तथा हि । व्रीहिभिर्यजेति प्रकृतयागाऽनुवादेन साधनतया व्रीहयो विधीयन्ते । न च साक्षाद्यागसाधनत्वं तेषामुपपत्तिमत् । उत्पत्तिशिष्टपुरोडाशाऽवरोधात् । आग्नेयादीनां च सोमेन यजेतेतिवद् व्रीहिद्रव्यविशिष्टकर्मान्तरविधिगौरवात् । तस्मात्प्रकृताऽऽग्नेयादिसाधनीभूतपुरोडाशप्रकृतितया तेषां विधानमिति साम्प्रतम् । ततश्च फलवद्यागसाधनीभूतपुरोडाशद्रव्यप्रकृतितया व्रीहीणामपेक्षितत्वाद्विधिसामर्थ्याद् व्रीहिस्वरूपाऽतिलङ्घनेन लक्षणया फलवद्यागसंबन्धिना रूपेण संबध्यमाना. प्रोक्षणादयः संस्कारा व्रीहीन् प्रोक्षतीत्येवमादिभिरेव वाक्यैरपेक्षिते विनियुज्यन्ते । एवं च यवेष्वपि प्रोक्षणादय औपदेशिका एव । फलवद्यागसाधनीभूतपुरोडाशप्रकृतित्वस्योभयत्राविशेषादिति ।

अथ प्रयोगपरतापि कस्मान्न भवतीत्यत आह—व्रीह्यादिमुखेन प्रकृतयजिरूपकरणांशप्राप्तौ करणविधेरेवाऽनुष्ठानसिद्धेः । पौर्णमास्या पौर्णमास्येत्यमावास्यायाममावास्यया यजेतेत्यनेन पौर्णमास्येति चा मावास्ययेति च करणीभूतस्य प्रयोगभेदश्चोद्यते । न

१ स्वर्गादि साध्यत्वादपेक्षितम् २ पु पा० ।
२ व्रीह्युपहिता २ पा । ३ प्रोक्षणादेरेव १ पु पा ।

**त्। समिदादिषूत्पत्तिपरतामेव केचिन्मन्यन्ते। प्रकरणाम्नीतश्रुतिनिबन्धनत्वाद्विनियोगस्य। श्रुतिरेव त्विह विनियो-**

चाऽनितिकर्तव्यताकस्य तद्भाव इति करणमनुष्ठापयत्सेतिकर्तव्यताकमेवाऽनुष्ठापयति व्रीह्यादिमुखेनेति सन्निपत्योपकारकाणां द्वारविशेषं कथयति। अथ कस्मादधिकारपरता न भवती? त्यत आह—तदधिकृतस्य करणाऽधिकृतस्याऽधिकारप्रत्ययात्। फलवाक्यं हि फलसाधने विनियोजयत्फलार्थिनं कर्तारं तत्साधने ऽधिकरोति। साधनाऽनुप्रवेशिन्यश्चेतिकर्तव्यता इति फलविधिवाक्यसामर्थ्यादेव साधनाऽधिकृतस्याऽधिकारस्तदितिकर्तव्यतास्वपि तासामभावे तत्साधनताऽनवगतेरिति भावः।

अत्रैकदेशिमतमुपन्यस्यति—समिदादिषूत्पत्तिपरतामेव केचिन्मन्यन्ते। कुतस्तर्हि तेषां विनियोग? इत्यत आह प्रकरणाम्नीतश्रुतिनिबन्धनत्वाद्विनियोगस्य। अयमर्थः। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येतत्प्रधानभावनया लब्धसमीहितसाध्यतत्साधनायाश्च साधनोपकाराकाङ्क्षायां वचनमनुपपद्यमानं यदेव तत्सन्निधातुमुपनिपतति समिदादि अनवाप्तसमाहितभेदं तस्यैव स्वविषयसाधनोपकारकत्वादिदमर्थ्यापादकं वचनमुपकल्प्यैकवाक्यतां भजते इति प्रकरणाम्नीतैव श्रुतिरत्र विनियोजिका न पुनः समिधो यजतीत्यादिका। न ह्यस्याः श्रुतेः प्रधानेदमर्थ्यमवगम्यते समिदादीनाम्। तस्मादग्निहोत्रं जुहोतीतिवदुत्पत्तिमात्रपरता समिदादिवाक्यानामिति केचिन्मन्यन्ते।

अथ प्रकरणमेव कस्मान्न साक्षाद्विनियोजक? मित्यत आह—श्रुतिरेव त्विह विनियोजिका साक्षान्न प्रकरणमित्यवधारणा। इदमत्राकूतम्। कर्तव्यस्य हीतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणं, तच्च तदेदमर्थ्यापादनात्मकम्, ऐदमर्थ्यं च विनियोगः, यत्त्वनुपपद्यमानमुपपादकं कल्पयेत्तदेकवाक्यतां च गच्छेत्तदुपपादकमिति लोकसिद्धम्।

**जिका प्रकरणोन्नेया। विधिस्त्वयमेव विनियोगनिबन्धनः। ननु श्रुत्यादयश्च विनियोजकाः, किमत्र विधिना?। नैतत्। तादर्थ्यं हि विनियोगस्तच्च विधेः। श्रुत्यादयस्तु संब-**

न च विनियोगनिरूपणार्थेन प्रमाणान्तरेण वा वचनमनुपपन्नार्थमेकवाक्यतामुपैत्यपि तु वचनान्तरेणैव। अत एव वचनस्य परिपूर्णार्थाचिन्ये वचनमध्याहरन्तो दृश्यन्ते शाब्दा इति। यदि श्रुतिरेव विनियोजिका न प्रकरणं किमिति तर्हि श्रुतेर्भेदेन प्रकरणाख्यं प्रमाणमुपन्यस्तं महर्षिणे? त्यत आह—प्रकरणोन्नेया। यद्यपि श्रुतित्वेनाऽभेद तथापि प्रत्यक्षश्रुतिः श्रुतिरित्युच्यते, प्रकरणोन्नेयायां श्रुतौ तन्मूलत्वात्प्रकरणं विनियोजकमुच्यते इति भेदः।

तदिदमेकदेशिमतमुपन्यस्य दूषयति—विधिस्त्वयमेव विनियोगनिबन्धनः। तुशब्दः पूर्वपक्षं व्यावर्त्तयति। न प्रकरणोन्नीतश्रुतिर्विनियोजिका समिदादीनाम्, अपि तु तद्विधिः समीहितं प्रत्यैदमर्थ्यमापादयति तेषाम्। न चाऽग्निहोत्रं जुहोतीति समीहितभेदाऽनुपादानात् अविनियोजकत्वं, तदनुपादाने ऽपि विधिस्वाभाव्यादेव समीहितं प्रत्यैदमर्थ्याऽवगमात् तस्य च प्रकरणेन विशेषणात्। असति विधौ समानपदोपादानत्वेन धात्वर्थस्यैव भावनाभाव्यत्वप्रसङ्गात्समीहितं प्रत्यैदमर्थ्यानुपपत्तेः। अग्निहोत्रोत्पत्तिवाक्ये तु विधिस्वाभाव्यात्सत्यपि समीहितमात्रलाभे ऽन्यत एव तद्विशेषप्रतीतेर्न विनियोगपरतेत्युक्तम्। अतः समिदादिवाक्यानामुत्पत्तिविनियोगपरत्वमित्यर्थः। अत्र चोदयति—ननु श्रुत्यादय एव विनियोजकाः, किमत्र विधिना? अथातः शेषलक्षणमित्युपक्रम्य श्रुत्यादीनामेव तल्लक्षणत्वेन निर्देशादित्यर्थः। परिहरति—नैतत्। तादर्थ्यं हि विनियोगः। ततः किं? तच्च विधेः। अकिंचित्करास्तर्हि श्रुत्यादय इत्याह—श्रुत्यादयस्तु संबन्धमात्रहेतवः। ननु चैदमर्थ्यमेव सम्बन्ध

न्धमात्रहेतवः । संबन्धश्चाश्रयाश्रयिभावादिरनेकविधः । पारार्थ्यं तु विधेः । कथं तर्हि श्रुत्यादयो विनियोजकाः? विधिना प्रतिपाद्यमानपारार्थ्यो यस्य श्रुत्यादिभिः संबन्धितया ऽवगम्यते तदर्थं इति प्रत्ययात् । न चोभयलक्ष-

इत्यत आह–सबन्धश्चाश्रयाश्रयिभावादिरनेकविधः, शेषत्वलक्षणास्तु विधिगम्य एवेत्याह–पारार्थ्यं तु विधेः । यद्येवं कथं तर्हि श्रुत्यादयो विनियोजकाः? न जातु सबन्धमात्रप्रतिपादकत्व[1] विनियोजकत्वम्, अपि तु अत्यन्तपारार्थ्य[2]प्रतिपादनमित्यर्थः ।

उत्तर–विधिना प्रतिपाद्यमानपारार्थ्यो ऽवघातादिर्यस्य व्रीह्यादेः श्रुत्यादिभि संबन्धितया ऽवगम्यते सो ऽवघातादिस्तदर्थो व्रीह्याद्यर्थे इति प्रत्ययात् । इदमत्राकूतम् । श्रुत्यादयो न पारार्थ्यमवगमयन्ति । प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र मा भूत्प्रयाजशेषो गुणभूतो मा च भूवन् प्रधानहवींषि, विभक्त्योः करणकर्मत्वाऽभिधायित्वेन तदापादकत्वात् । यदा तु विध्यधीन पारार्थ्यं तदाऽभिघारयतीति विधानादभिघारणस्य समीहित प्रति तादर्थ्यप्रतिपादनात् प्रयाजशेषस्य च प्रयाजैदमर्थ्यापन्नस्याऽत्र हविष्षु शेषभावाऽभावात् प्रतिपत्तिविरोधात् । स्वरूपलक्षणायाश्चाऽप्रधानीभूतविभक्त्यर्थाऽनुरोधेन प्रधानीभूतप्रकृत्यर्थाऽन्यथाभावस्याऽन्याय्यस्य प्रसक्तेः । समापितप्रयाजस्य तु तत्रोपयुक्तस्य तच्छेषस्य होममात्राऽविरोधिनो रोचनीयत्वेन समीहितत्वाद्धविषां च वाक्यान्तरेण स्नेहनार्थोपस्तरणाऽभिघारणविधानात् पुनरभिघारणस्याऽदृष्टार्थत्वप्रसङ्गात् असमीहितत्वात् प्रयाजशेष हविष्षु क्षारयतीति वचनार्थः सपद्यते । ततश्च श्रुत्यादयः स्वसामर्थ्यात्सबन्धं प्रतिपादयन्तो विधिप्रतिपादित[3] पारार्थ्ये विशेषे व्यवस्थापयन्तः पारार्थ्ये प्रति प्रमाणमुच्यन्ते इत्यर्थः । महर्षिणाप्यथाऽतः शेषलक्षणमित्युपक्रम्य 'कर्माण्यपिजैमिनिः फला-

१ प्रतिपादनम् पु पा । २ अन्यत् २ पु पा॰ ।
३ विध्यापादितम २ पु॰ पा॰ ।

कन्दलीकारस्तु क्वचित्कर्मसंयोगौ संभूयापि संयोगमुत्पादयतः । तथा हि श्येनचरणक्रिया ततो विभागः श्येनावयविनि कर्मेत्येकः कालः । ततो विभागेन पूर्वसंयोगध्वंसोऽवयविकर्मणा च विभाग इत्येकः कालः । ततश्चरणस्याणुसंयोगः । एवमुभयकर्मजेऽपि संयोगानुप्रवेशो लक्षणीय इत्याह ।

त्रिविधस्यापि संयोगस्य नाशः क्वचिद्विभागात्क्वचिदाश्रयनाशात्क्वचित्तु अशुक्रविनाशसमकालं तन्त्वन्तरे कर्मचिन्तनात् क्वचिद्विभाभ्यामित्याहुः ।

विभागत्व जातिविशेषस्तत्त्ववान् विभागः । सोऽपि च संयोगवत्त्रिविधः ।

काणादास्तु विभागजो द्विविधः । कारणमात्रविभागपूर्वकः परमाण्वाकाशविभागः । द्वितीयस्तु हस्ततरुविभागजः कायतरुविभाग इत्याहुः । तत्र परमाणुकर्मणैव परमाण्वन्तरादिवत्समकालमेवोत्तरकालमेव वाकाशादपि विभागोत्पत्तेः । तस्य विभागजत्वे मानाभावात् ।

विनाशस्तु त्रिविधस्यापि क्वचिदुत्तरसंयोगात्क्वचिदाश्रयनाशादिति ।

परापरप्रत्ययासाधारणकारणे परत्वापरत्वे । ते च द्विविधे । दिक्कृते कालकृते च । तत्रैकस्यां दिश्यवस्थितयोः पिण्डयोः संनिकृष्टमवधिं कृत्वाऽयमस्माद्विप्रकृष्ट इत्येव परत्वावधारणे या बुद्धिरुत्पद्यते तां निमित्तमासाद्य पिण्डपरद्विक्प्रदेशसंयोगेनासमवायिना विप्रकृष्टे परत्वं जन्यते । विप्रकृष्टमवधिं कृत्वायमस्मात्संनिकृष्ट इति या मतिः तामासाद्य पिण्डसंनिकृष्टदिक्प्रदेशसंयोगेन संनिकृष्टे परत्वमिति दिक्कृतयोरुत्पत्तिः ।

कालकृतयोस्तु अनियतदिगवस्थितयोर्युवस्थविरयोरयमस्मात्प्रचुरतरकालजन्मेत्येव या युवानमवधिं कृत्वा स्थविरे विप्रकृष्टबुद्धिस्तां निमित्तमासाद्य स्थविरपरकालप्रदेशसंयोगेन स्थविरे परत्वम् । अयमस्मा-

दुत्पतरतपने परिस्पन्दान्तरितजन्मेत्येवमपेक्षाबुद्ध्यनुगृहीतेनापरकालप्रदेशसंयोगेन यूनि समवेतेन त्वपरत्वमुत्पद्यते । विनाशस्त्वनयोरपेक्षाबुद्धिसंयोगद्रव्यनाशात्पृथक् पृथक् । द्वाभ्यां द्वाभ्यां च सर्वेभ्यो विनाशः सप्तधा तयोरित्याचार्यैः संगृहीतः ।

गुरुत्वं पतनासमवायिकारणमतीन्द्रियम् । यावद्भूजलवृत्ति ।

केचित्तु नास्त्येव धूमे गुरुत्वम् । अन्यथा तत्कार्यस्य पतनस्यापत्तेः । न चालं धूमावस्थे तस्मिन् तद्दृष्टमेवेति वाच्यम् ।

द्रवत्वं स्यन्दनासमवायि । इदं च द्विविधम् । नैमित्तिकं सांसिद्धिकं च । आद्यं भूतेजसोर्घृतादिसुवर्णादिनोः । अन्त्यं जलमात्रवृत्ति । तत्राद्यस्योत्पत्तिविनाशप्रकारौ पार्थिवरूपाद्युत्पत्तिविनाशतुल्यौ । द्वितीयस्य तु गुरुत्ववदिति ।

स्नेहत्वजातिमान् स्नेहः । मृदादीनां संग्रहहेतुः । अस्यापि गुरुत्ववन्नित्यानित्योत्पत्तिविनाशप्रकाराः ।

बुद्धित्वजातिमती बुद्धिः । सा च नित्यानित्या च । आद्येश्वरस्य । अन्त्या जीवानाम् । पुनश्च सा द्विविधा । स्मृतिरनुभूतिश्च । अन्त्यापि द्विविधा भ्रमः प्रमा च । अनयोरप्याद्यस्तर्कसंशयविपर्ययभेदेन त्रिविधः । स्वप्नः पुनर्धर्मविशेषप्रभवश्चेत्प्रमायाम्, अधर्मविशेषप्रभवश्चेत् भ्रम एव निविशते ।

वैशेषिकाणां तु स्वप्नो अविद्यैव इति । स्वप्नवहनाडीमनःसंयोगजं ज्ञानं स्वप्नः ।

सा चेयं बुद्धिः परोक्षापरोक्षत्वाभ्यामपि द्वैविध्यं लभते । तत्राद्या चतुर्विधा । स्मृत्यनुमित्युपमितिशाब्दीभेदेन । सा चेयं बुद्धिरतीन्द्रियेति भाट्टाः । स्वप्रकाशेति प्राभाकरा, बाह्याश्च । तत्तत्स्वाविषयाया एव बुद्धेः स्वविषयव्यवहारहेतुत्वमेव स्वप्रकाशत्वमिति प्राभाकराणां मतम् । स्वाकर्मण एव स्वस्याः स्वविषयत्वमेव स्वप्रकाशत्वमिति नव्यप्राभाकराणां मतं बाह्यानां च । अस्माकं त्वनियमः । काचिदतीन्द्रिया यथा

---

१ अत्रत्यग्रन्थस्त्रुटितः ।

घटनिर्विकल्पिकादिका । का चित्तु स्वप्रकाशा । या सर्वविषयिका । अपरा तु परप्रकाशा प्रत्यक्षा च । मध्यापीश्वरधीरकर्मीभूतामेव स्वा विषयीकरोति । भगवति संस्काराद्यभावेन विषयीभूताया धियः परसमवेतक्रियाफलशालित्वाभावात् । योगजधर्मसामान्यलक्षणज्ञानलक्षणासंनिकर्षजन्या तु स्वकर्मीभूतामेव स्वा विषयी करोति । यस्याः स्वस्या सस्कारजननादिति ।

सेय बुद्धिः क्व चिद्धारावाहिक्यपि । यथा घटोऽयं घटोऽयमित्याकारा समानविशेष्यकान्यूनानतिरिक्तप्रकारा प्रत्यक्षबुद्धिः । यथा वा वन्हिव्याप्यधूमवत्त्वेन पर्वतस्य पक्षतायामनुमित्साधीना वन्हिव्याप्यधूमवानय पर्वतो वन्हिमानित्याकारा नाना धीरिति ।

ननु प्रथमे क्षण एव द्वितीयादिक्षणोत्पत्तिकानि ज्ञानानि कुतो नोत्पद्यन्ते । द्वितीयादिक्षणोत्पत्तिकज्ञानानामुत्पादनियामकः संनिकर्षविशेषः स तदा नास्तीति चेत् । अस्त्येवम् । किं तु तथाप्यनुमितावगतेः संनिकर्षविशेषकारणत्वेन इन्द्रियार्थसंनिकर्षाभेदेऽपि धारावाहिकज्ञानानि भिद्यन्त इति निबन्धविरोधश्चेति । अत्रोच्यते उत्तरोत्तरज्ञानोत्पत्तौ पूर्वपूर्वज्ञानाना सामान्यतः क्लृप्तकारणभावाना विशेषरूपेणापि कारणतायाः फलौचेयतया प्रथमे क्षणे तेषामभावान्न द्वितीयाद्युत्पत्तिः ।

स्वाश्रयसमानाधिकरणसमानकालीनसाक्षात्कारविषयताव्याप्यदुःखत्वेतरजातिमत्सुखम् । इद चतुर्विधम् । कि चिदाध्यासिकम् । यथा मृगयादिषु । कि चिदाभिमानिकम् । यथा चुम्बनादिषु । कि चिद्वैषयिकम् । यत्सुरभिमधुरगौरगान्धारादिसंनिकर्षाज्जायते ।

ननु संनिकर्षो न सुखहेतुः । सत्यपि तस्मिन् विषयाज्ञाने सुखानुत्पत्तेः । कि तु विषयज्ञाने सत्येव सुखोत्पत्तेर्ज्ञानमेव तथा । न त्वेवं योगिनामसत्यपि स्रक्चन्दनादिसंयोगे तदापत्तिः । न चेष्टापत्तिः । कायव्यूहेन्द्रियार्थनिर्माणवैय्यर्थ्यादिष्टानिष्टसाक्षात्कारस्यैकस्मिन्नेव शरीरे मनसैव सिद्धत्वादिति चेन्न । कायव्यूहं विना भोगयौगपद्यानुपपत्तेः । एकदैकावच्छेदेन नानासुखसाक्षात्काराभावात् ।

वस्तुतस्तु बहिरिन्द्रियलौकिकसन्निकर्षजसाक्षात्कारत्वेन हेतुत्वादिति चेत् । न । तादृशसाक्षात्कारस्येव साक्षात्कार ईदृशसन्निकर्षत्वेनापि हेतुत्वाद्विनिगमकाभावादिति दिक् ।

किंचिन्मानोरथिकम् । यथा भाविपुत्रजन्मदिवसोत्सवचिन्तनादिषु उत्पद्यमानमिति ।

ननु स्वप्नान्तिकं सुखं पञ्चमं स्यात् । अस्ति च तत्, स्वप्नसुखप्रतीतेर्बाधकं विना प्रमात्वात् । चन्दनादिसन्निकर्षस्तु सुखविशेषस्वहेतुरतो न कारणबाधोऽपि । कारणं च तत्र स्वाप्नो विषयसाक्षात्कार एवेति चेत् ? न । चन्दनादिसुखजातीयत्वस्यैव तत्रानुभवेनेतरकारणकत्वाकल्पने कारणबाधेन कार्यस्यासत्त्वात्प्रतीतेर्भ्रमत्वात् । न च स्वप्नो न सुखं न वा दुःखम् । यदि च तदुभयान्यतरसाधनमपि न स्याद्धर्माधर्मकार्यो न स्यात् । स्वीकृतं च तथात्वमन्यथा स्वप्नवैचित्र्यानुपपत्तेरिति वाच्यम् । स्वप्नस्य सुखदुःखसाक्षात्कारत्वेनादृष्टफलत्वात् ।

भोग एव ह्यदृष्टस्य प्रधानं प्रयोजनम् । न तु भुज्यमाने । अन्यथा भोगो न स्यात् । भुज्यमाने जनयितृत्वेव तन्नाशात् । तस्माच्च भोगस्यावश्यकत्वम् । अत एव टीका सुखदुःखबुद्ध्युत्पाद एव धर्माधर्मयोरुपयोगो न सुखदुःखोत्पाद इति । सुखमेव च धर्ममात्रजन्यशरीरोपभोग्यं स्वर्ग इत्युच्यते । सुखलक्षणमेव दुःखत्वेतरपदस्थानप्रक्षिप्तसुखत्वेतरपदं दुःखलक्षणम् ।

इदं च द्विविधमैहिकमामुष्मिकं च । आद्यं तु दुरीश्वरोपसर्पणादिप्रभवम् । अन्त्यमधर्ममात्रजन्यशरीरोपभोग्यं यं नरक इत्याख्यायते ।

इच्छात्वजातिमतीच्छा । सा च नित्याऽनित्या च । आद्या परमेश्वरस्य । अन्त्या जीवानाम् ।

द्वेषो नयनादिवैकृत्यहेतुर्गुणः । तस्य तु द्रोहः क्रोधो मन्युरक्षमाऽमर्ष इति भेदाः ।

प्रयत्नत्वजातिमान् प्रयत्नः । स एव च सरम्भ इत्युत्साह इति कृतिरिति सैव च पूर्वापरीभूता भावनेति चोच्यते । स च नित्यानित्यभेदेन द्विविध पूर्ववत् । अन्त्योऽपि पुनर्द्विविध । कश्चिज्जीवनयोनिः यः सुप्तस्य प्राणापानादिसतानप्रेरकः । यो वा प्रबोधकाले मनस इन्द्रियान्तरप्राप्तिहेतुः । कश्चिदिच्छायोनिः । यः पटाद्युपादाने तन्त्वादौ कुविन्दादेः करादिव्यापारहेतुः । अत्र चेष्टसाधनताज्ञान हेतुः । कृत्यसाध्यत्वबलवदनिष्टानुबन्धित्वज्ञाने तु प्रतिबन्धके इति टीकाकारानुयायिनः । कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वसमानाधिकरणेष्टसाधनताज्ञान तथेति मणिकृतः । फलज्ञान तु न प्रवर्त्तकम् । भिन्नविशेष्यकत्वात् । तदाहुराचार्याः "फलज्ञानस्याप्रवर्त्तकत्वादिति" । कश्चिद्द्वेषयोनिजः सर्पादौ रज्जुबुध्या तदुपादित्सोरय सर्प इत्याप्तवाक्यश्रवणादुत्तरमुत्पद्यमानः करादिसङ्कोचपलायनहेतुः । न चाय निवृत्तिरस्त्विति वाच्यम् । सुषुप्तौ तत्कार्यापत्तेरिति तु तत्त्वम् । स चाय निवृत्तिरिति विधारकप्रयत्न इति हानमिति च गीयते ।

सुखदुःखयोरसाधारणकारणतावच्छेदकजातिमन्तौ धर्माधर्मौ । विहितनिषिद्धक्रिये एव धर्माधर्माविति मीमासका. । मनस परिणामविशेषौ ताविति साङ्ख्या. । चित्तस्यैव चित्तान्तरेणाहिते शुभाशुभवासने ताविति शाक्याः । आर्हतास्तु कायारम्भकान्सूक्ष्मान् मूर्त्तिमन्तः पुद्गलनामधेयास्तावाचक्षते ।

सस्कारत्वजातिमान् सस्कारः । स त्रिविधः । वेगो भावना स्थितिस्थापकश्चेति । तत्र वेगः कश्चित्कारणगुणादुत्पद्यते । कश्चित्तु कर्मणः । स चापतनमेकोऽन्त्यसयोगनाश्यत्वात् । भावनाप्येवमन्तस्मृतिनाश्या जन्मन्येकस्मिन्नेकैव स्यादिति चेत् । सत्यम् । अत एवानुभव एव भावना हेतुरिति काणादः । तन्न । लाघवेनोत्तरसयोगत्वस्मृतित्वयोरेव नाशकतावच्छेदकत्वात् । तस्मान्नानैव । भावनाख्यस्त्वात्मगुण उपेक्षापेक्षाबुद्धीतरविशिष्टनिश्चयादुत्पद्यते । नश्यति तु कदाचित्स्मरणात् । कदाचिद्विरोधिसस्कारात् । यदाहुष्टीकाकृतः । तत्त्वसाक्षात्कार-

स्तु विपर्ययसाक्षात्कारं निवर्त्तयति। तज्जनिता च वासना विपर्ययवासनामिति । कदा चिद्रोगादितः । सा चोद्बुद्धैव स्मृतिमाधत्ते । उद्बोधश्च सहकारिलाभः । सहकारिणश्च सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इत्येव गणिताः । आद्यपदेन सम्बन्धिदर्शनं परिगृहीतम् । तच्च क्व चिन्निर्विकल्पकमपि । तथा च टीका । गृहीतसङ्केतस्य प्रथममालोचनेन शब्दसंसर्गरहितेनालोच्यमानेऽर्थे तस्यार्थभेदस्य शब्दभेदेन सम्बन्धाच्छब्दविषयः संस्कारः प्रबुध्यते । प्रबुद्धश्च शब्दः स्मृतिं जनयति । यदाहुः ।

यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् ।
पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षम इति ॥

स्थितिस्थापकस्तु पृथिव्यामेव । वन्हिपक्षकशक्त्यनुमानग्रन्थेऽत्रानुकूलत्वेन स्थितिस्थापकेनार्थान्तरवारणाय तत्र तदभावादिति कुसुमाञ्जल्युपायस्वरसात् । स्थितिस्थापकस्तु चतुर्विध इति गुणभाष्यं तु दर्शनान्तरीयमेव । अथ वा प्राभाकरमतेनैवोपायः । सिद्धान्तस्तु यथाभाष्यमिति । स चायं वर्त्तमानो घनावयवसंनिवेशविशिष्टेषु कालान्तरावस्थायिषु आश्रयमन्यथाकृतं यथावस्थितं स्थापयति । धनुःशाखासूत्रवस्त्रादिषु भग्नसवर्त्तितेषु तस्य कार्यमनुभूयते । नित्यानित्यनिष्पत्तयो गुरुत्वतुल्याः ।

शब्दत्वजातिमान् शब्दः ।

ननु शब्दे न प्रत्यक्षं मानम् । भेरीदेशजशब्दस्य श्रोत्रे संनिकर्षाभावादिति चेत् । तथापि कर्णनिदान आद्यः संनिकृष्ट एवेति स प्रत्यक्षः । भेरीदेशजास्तदारब्धाश्च कर्णासमवेता न प्रत्यक्षाः । किं तु वीचीतरङ्गन्यायेन भेरीदेशजशब्देनारब्धो मध्यमो वान्त्यो वा कर्णसमवेतः तस्यापि प्रत्यक्षत्वं संनिकर्षसत्त्वादशक्यापन्हवमिति । स चायं शब्दो द्विविधः । ध्वनिर्वर्णश्च । आद्यो मृदङ्गवंश्यादिनिमित्तकः । वायवीयाः संयोगविभागा एव हि ध्वनय इति शाबरं भाष्यम् । अन्त्योऽकारादिः । स्फोटोऽपि शब्दान्तरमिति भाष्यम् ।

स चायं शब्दः पुनस्त्रिविधः । संयोगजो विभागजः शब्दजश्चेति । तत्राद्यो वर्णः । कण्ठताल्वाद्यभिघातजतया संयोगज एव । ध्वनिस्तु भेर्याकाशादिसंयोगात्संयोगज इव वंशदलाकाशविभागाद्विभागजोऽपि । मध्या अन्त्याश्च सर्वे ध्वनयो वर्णाश्च शब्दजा एवेति विवेकः ।

तत्र च बुध्यादयः शब्दान्ता नित्यज्ञानेच्छाकृतिवेगस्थितिस्थापकवर्जं सर्वे ऽवच्छेदभेदवृत्तयः । तत्र च बुध्यादेः शरीरमवच्छेदकम् । धर्माधर्मभावनानामन्त्यशरीरात्यन्ताभावादत्यन्ताभावः । शब्दस्य तु वीणाबलकर्णादिकम् । एतेषु च रूपरसगन्धस्पर्शा येऽनुद्भूता ये चोद्भूता अप्यणुवृत्तयः तेऽतीन्द्रियाः । तथातीन्द्रियवृत्तिसामान्यगुणमात्रम् । आत्मैकत्वपरिमाणे अपि । आत्मैकत्वं प्रत्यक्षमित्येके मतम् । गुरुत्व धर्माधर्मभावनाजीवनयोनियत्ना अन्यदीयबुध्यादयस्त्वतीन्द्रिया एव । निर्विकल्पकमपि तथा । नरसोहाकार व्यवसायगोचरज्ञान तु न सर्वांशे वैशिष्ट्यानवगाहीति । अतस्तत्र निर्विकल्पकपद न मुख्यम् । अतीन्द्रियत्वं च । सम्बन्धितावच्छेदकविशिष्टभानाभावात्स्वभावादेव वा ।

कश्चित्तु अनुद्भूतत्वं तथेत्याह । तन्न उद्भूतत्ववदनुद्भूतत्वस्यापि मूर्त्तगुणमात्रवृत्तिताया एव सिद्धान्तत्वादिति ।

आत्मविशेषगुणमात्रेऽयात्मनः संयोगोऽसमवायिकारणम् । शरीरमनःसंयोगशरीरप्राणसंयोगौ निमित्ते प्राणमनःसंयोगोऽपि निमित्तमिति शून्यपाणिः ।

त्वङ्मनःसंयोगोऽपि तथेति केचित् । तन्न । प्रत्यक्षलक्षणसूत्रीयटीकाविरोधात् । न हि सुखादिज्ञानेऽनित्येप्यतीन्द्रियमनःसंनिकर्ष इति रासनज्ञानकाले त्वङ्मनःसम्बन्धे मानाभावश्चेत्युपायविरोधाच्च । न च यैः सम्बन्धपदं सम्बन्धविशेषत्वाच्च प्रत्यक्षफलोपधायकमभिप्रेत्योक्तम् । अन्यथा शरीरमनःसंयोगोऽपि कथं त्वचः सर्वशरीरव्यापिनो परिभूय स्यादिति वाच्यम् । रसनाधिष्ठानावच्छेदेन शरीरे त्वचोसत्त्वात्फलैकोन्नेया हि सेति दिक् ।

शरीराभेदारोपोऽपि शरीरारोपितरात्मविशेषगुणे कारणम् । तथा च टीका शरीरावच्छिन्ना आत्मानः शरीरायतनाः शरीरमेवात्मानं मन्यमानाः अर्थाननुभवन्तीति यदा मनस्त्वचमपि परिहृत्य पुरीतती वर्त्तते तदा विशेषगुणो न जायते शरीरमनःसंयोगाभावात् । जीवनयोनियत्नस्तु न विशेषगुण इत्येके । तद्भिन्नत्वेन विशेषणीयमित्यन्ये ।

निरूपिता गुणाः ॥

इति गुणनिरूपणम् ।

अतः कर्माण्युच्यन्ते ॥ उत्क्षेपणादयो जातिविशेषा इति लीलावत्याम् । अथ वोर्ध्वदिक्संयोगजनकं कर्मोत्क्षेपणम् । अधोदिक्संयोगजनकं तदपक्षेपणम् । निष्क्रियावयवाभिमुखसंयोगजनकं कर्माकुञ्चनम् । निश्चलावयवाभिमुख्यविरुद्धनानादिक्संयोगजनकं कर्म प्रसारणम् । उत्तरदेशसंयोगजनिका क्रिया गमनम् । उक्तसंयोगचतुष्टयान्यसंयोग एवोत्तरसंयोगः । तदिदं कर्म मूर्त्तद्रव्यमात्रवृत्ति । एकमात्रसमवेतं योग्यवृत्ति प्रत्यक्षम् । परमाण्वादिगामि त्वतीन्द्रियम् ।

प्राभाकरास्त्वप्रत्यक्षमेवेत्याहुः । व्याप्यवृत्ति च । न चायं बहिर्महीरुहश्चलतीति प्रतीतेः क्वचिदव्याप्यवृत्तीति वाच्यम् । अवयविकर्मणो यावदवयवकर्मनियतस्य तत्र तदभावेनानुत्पत्तौ तत्प्रतीतेर्भ्रमत्वात् । परापरसम्बन्धाग्रहकर्मविषयत्वाद्वा ।

ननु तथा नियमोऽसिद्धः । न चान्यथा विनश्यदवस्थस्यापि कर्मोत्पादापत्तिरिति वाच्यम् । इष्टापत्तेः । अस्तु वा अवयवकर्मसाम्येव नियामिका । अस्तु वा विनश्यदवस्थस्य कर्मस्वरूपायोग्यत्वम् । तादृशस्य कदाचिदपि सहकारिलाभाभावात् । अथ वा विनश्यदवस्थस्य न द्रव्यादीनामपि सामग्रीत्युभयसिद्धम् । तद्यदिफलोपधानाभिप्रायेण । न हि विनश्यदवस्थजन्यस्य किंचित्प्रयोजनमस्ति । न च तेन विनादृष्टाद्युत्पत्तिः सम्भवति, तस्य सुखदुःखसंविज्ञानोत्पत्त्यर्थमेवेतरस्योत्पादादित्युच्यते तदा तुल्यं तत्तस्य कर्मणोऽप्यनुपधानमिति । यत्त्वेकमात्रस-

मवेतत्वमुक्तम् । तदपि नोपपद्यते । समकालोत्पन्नयोरवयवावयविकर्मणोर्भेदे मानाभावेन तस्य व्यासज्यवृत्तिता स्यादिति चेदोमिति वदामः ।

अत्रोच्यते न तावदव्याप्यवृत्तित्वम् । वृक्षस्य चलनवत्त्वे त्वाश्रयदेशाद्विभागापत्तेः । मूलदेशावच्छिन्नं चलनं तद्धेतुरिति चेत् ? न गौरवात्, महीरुहो न चलति किं तु शाखेति विरोधिप्रतीतिसत्त्वाच्च । नापि व्यासज्यवृत्तित्वम् । तथा सति यावदाश्रयनिरूप्यतया परमाणुद्व्यणुकयोरप्रत्यक्षतया कर्मणोऽप्रत्यक्षतापत्तेः । योग्ययावदाश्रयवृत्तित्वमप्यगृहीतान्तर्भागद्रव्यगतकर्मप्रत्यक्षतया परास्तम् । प्रत्यक्षोपहितयावदवयवगतत्वमपि नरान्तरप्रत्यक्षीक्रियमाणपरभागस्य स्वयमप्रत्यक्षतादशायामपि कर्मणः प्रत्यक्षतया परास्तम् । कर्मप्रमातृप्रत्यक्षीक्रियमाणयावदवयववृत्तित्वमपि प्रत्यक्षात्प्राक् तस्यैव कर्मणोऽव्यासज्यवृत्तितायाः परकाले तु व्यासज्यवृत्तितायाः आपत्त्या परास्तम् । तस्य चोत्पादकः क्व चित्प्रयत्नवदात्मसंयोगः । यथा चेष्टायाः । यथा वा हस्तादिसम्बद्धेषु मुसलादिषु उत्क्षेपणापक्षेपणयोः । किं बहुना उत्क्षेपणादिचतुष्टयस्य सर्वस्यैव गुरुत्वं तु तच्चतुष्टयस्य निमित्तमेव । यथा प्राणक्रियामनःक्रिययोः । तत्र च जाग्रतीच्छाद्वेषयोर्नियतपूर्वकत्वस्वापस्वापाव्यवहितप्रबोधकालनीयोश्च जीवनयोनियत्नपूर्वकत्वमिति विशेषः पदार्थप्रवेशकृद्भिरुक्तः ।

क्व चिददृष्टवदात्मसंयोगः । यथा सृष्टिसंहारहेतुपरमाणुकर्मणः यथा वा वायोस्तिर्यग्गमनस्य वह्नेश्चोर्द्ध्वज्वलनस्य परीक्षाविधिना तुलारूढस्य तुलानमनोन्नमनयोः । यथा वा मनस उपभुक्तदेहभोगतो निष्क्रमणस्यातिवाहिकशरीरप्रवेशपूर्वकस्वर्गिनारक्यादिशरीरप्रवेशस्य च । क्व चिदभिघातस्पर्शवद्वेगवद्द्रव्यसंयोगात्मा । यथा मुसलपक्षिष्टादेरुलूखलपाषाणादौ पातितस्य संयोगाद्युत्पतनाख्यकर्मणः । यथा वा प्रबलपवनसंयोगाच्छाखाचलनस्य । क्व चित्तु नोदनम् । नोदकनुद्यमानयोः परस्परविभागाजनकत्वम् । यत्कर्म तस्य जनको यः संयोगः तन्नोदनम् । यथा धनुर्ज्यासंयोगः शरकर्पणस्य । यथा वा याननोदनं यानस्यकर्मणः । न च नास्त्येव यानस्थस्य कर्म । तथा सति पूर्वदेशविभागोत्तरदेशसंयोगयोरनु-

त्यादाप्तिः । न च पूर्वोक्तविरोधः तस्य जन्मवन्मतत्वात् । क्व चित्संयुक्त संयोगः यथैकस्या पटादिव्यक्तावाकृष्यमाणायामपकृष्यमाणाया वा तत्संयुक्तद्रव्यान्तरस्याकर्षणापकर्षणयोः । क्व चिद्गुरुत्वं यथा पतनस्य । क्व चिद्द्रवत्वं स्यन्दनस्य । क्व चित्तु स्थितिस्थापको यथा आकर्णाकृष्टसशरे धनुषि शरमोक्षेच्छा तदनन्तरं प्रयत्नः तदपेक्षमाणादात्माङ्गुलिसंयोगादङ्गुलिकर्म ततो ज्याङ्गुलिशरविभागः ततो 'विभागात्संयोगनाशः ततो विनष्टे तस्मिन् प्रतिबन्धकाभावाद्धनुर्ज्युत्पद्यमानस्य मण्डलाकारताविरोधिनः सरलाकारतोत्पादकस्य कर्मणः । क्व चित्तु वेगात् । यथेषुज्यासंयोगान्नोदनाख्यादाद्यमिषुकर्म ततो वेगस्ततस्तस्मात्कर्म ततः शरज्याविभागस्तदैतस्मात्कर्मणः तज्जनितेन च वेगेन पुनः कर्मान्तरस्यैवमायनमेव कर्म सन्तानस्यति । विनाशस्तु कर्मणः क्व चिदाश्रयनाशात्क्व चिदुत्तरसंयोगादित्येव त्रिचतुर क्षणस्थाय्येव कर्म ।

वैशेषिकास्तु क्व चित्सप्तक्षणस्थाय्यपि मन्यन्ते । यथाग्नौ निक्षिप्ते घटादौ तदारम्भकपरमाणौ कर्माथ परमाणुविभागोऽथ संयोगध्वंसोऽथ द्व्यणुकनाशोऽथ परमाण्वाकाशविभागस्ततः संयोगध्वंसोऽथ परमाणूत्तरदेशसंयोगोऽथ क्रियानाश इति । यदा तु द्रव्यनाशकाल एव विभागजविभागोत्पत्तिरिति पक्षस्तदा तु षट्क्षणावस्थायीति ।

इद तु स्यात् । यदा परमाण्वादिकर्मणा उत्तरदेशसंयोगो जननीयस्तदैव चेदुत्तरदेशकर्म तदा नोत्तरदेशसंयोग उत्पत्तुमर्हतीति नाशकाभावात् कर्मणोऽधिकक्षणस्थायितापि स्यात् । तथा महाप्रलयसंपादककर्मणोऽनन्तत्वमपि स्यादिति चेन्न । तादृशायामुत्तरदेशेऽवश्यं कर्मोत्पत्स्यत इत्यत्र मानाभावात् । सन्देहस्तु सम्भवति । किं तु सोऽपि प्रत्यक्षकर्मणः सतः संयोगचरमकारणत्वावधारणेन दृष्टविरोधान्नोदेतीति दिक् ।

सामान्यं च किं चित्कार्यतावच्छेदकतया सिद्ध्यति । यथा धर्मजन्यतावच्छेदकतया सुखत्वं बह्वायाससाध्यविहितकर्मजन्यतावच्छेदकतया स्वर्गत्वम् । ज्योतिष्टोमादिजन्यतावच्छेदकतया तदवान्तरजातयः ।

तथाऽधर्मजन्यतावच्छेदकतया दुःखत्वमधर्मविशेषजन्यतावच्छेदकतया नरकत्वम् । तदवान्तरविशेषजन्यतावच्छेदकतया च नरकत्वावान्तरवीचित्वादयः । कार्यतावच्छेदकघटकतया यत्सिध्यति तदपि कार्यतावच्छेदकमेव यथा समवायिकारणजन्यतावच्छेदकस्य जन्यभावत्वस्य घटकं भावत्वम् । यथा वा जलत्वावच्छिन्नद्रव्यसमवायिकारणताप्रतियोगिककार्यतावच्छेदकजन्यजलत्वघटकं जलत्वम् ।

किं चित्तु कारणतावच्छेदकतया सिद्ध्यति । यथा धर्मत्वज्योतिष्टोमत्वादिकम् ।

किं चित्त्वनुगतप्रतीतिजनकतया । यथा गोत्वं । न हि सास्नावत्त्वं तस्या विषयः तद्भ्रवधिदशायामपि गवाकारानुमितिप्रतीतेः । न च सस्यानवृत्तिर्जातिविशेषस्तथा । अन्यतरकर्मजन्यत्वादिव्याप्यतया तस्याऽपि नानात्वात् ।

एतेन कम्बुग्रीवादिमत्त्वादिभिर्घटत्वादेरन्यथासिद्धिरपि व्याख्याता ।

एवं गुणत्वमपि प्रत्यक्षेषु गुणेषु तान्त्रिकाणामनुगतप्रतीत्यैशतीन्द्रियत्वानुमानादेव गुणपदशक्यतावच्छेदकतयैव वा तत्सिद्धिः ।

अथैवमदृष्टत्वमपि अदृष्टपदशक्यतावच्छेदकतया जातिः स्यात् । तथा कारणतावच्छेदकत्वेन जातिसिद्धावपि जन्यमात्रं प्रति कारणताया अदृष्टनिष्ठाया अवच्छेदकत्वेन तत्सिद्धिर्दुर्वारा । तथा शब्दसमवायिकारणतावच्छेदकत्वेनाकाशत्वं स्यात् । बुद्धिपदशक्यतावच्छेदकत्वेन बुद्धित्ववत् ज्ञानपदशक्यतावच्छेदकत्वेन ज्ञानत्वमप्यपरं स्यात् । तथा क्रियासमवायिकारणतावच्छेदकतया मूर्त्तत्वमपि स्यात् । तथा घटत्वपटत्वादौ सामान्याकारानुगतप्रतीत्या सामान्यत्वम् । तथा विशेषत्वसमवायत्वे अपि पदशक्यतावच्छेदकतया । न चैवं जातित्वमिष्टमेवेति वाच्यम् । अपसिद्धान्तात् । यथाह ।

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसंग्रह इति ॥

तुल्यत्वमन्यूनानतिरिक्तव्यक्तिकत्वम् । परस्परात्यन्ताभावसमानाधिकरणयोः जात्योः सामानाधिकरण्य सङ्करः । स स्यादित्यर्थः । यथाऽदृष्टत्वस्य विहितकर्मजन्यतावच्छेदकधर्मसुखोभयवृत्तिधर्मेण । यथा वा मूर्त्तत्वभूतत्वे । सामान्ये चेत्सामान्य तत्रापि तर्हि तुल्यन्यायेनापरमेव तत्र तत्रापीत्यनवस्था स्यात् । रूप विशेषाणामत्यन्तव्यावर्त्तकत्व तद्धानिः स्यात् । समवाये जातेर्वृत्ति समवायात्मिका न सम्भवत्यात्माश्रयापत्तेरित्यर्थः । जातिबाधकसग्रहः सगृह्यमाण जातिबाधकमितीत्यर्थ ।

अथ यद्येतानि बाधकानि तर्हि सुतरामस्माभिर्यदनुष्ठेय गन्धवास्तदनुष्ठितमिति आभाणकस्य समीचीनोय विषय इति चेत् । न । एतेषा बाधकत्व एव विप्रतिपत्ते । तथा ह्येकव्यक्तिक मास्तु सामान्यमनेकावृत्तित्वात् । मास्तु च तुल्यव्यक्तिकमपि तथा एकेनैव बुद्धिव्यपदेशयोरुपपत्ते । सङ्कर्ण तु कुतो न सामान्य जात्योः साङ्कर्ये गोत्वाश्वत्वयोरपि तथात्व स्यादिति चेन्न । आपादकाभावात् । न हि सङ्कीर्णयोर्जातित्व गोत्वाश्वत्वसामानाधिकरण्येन व्याप्त तथापि शङ्का भविष्यतीति चेत् । सा यदि स्वरसवाहिनी तदा लोकयात्रामात्रोच्छेदकतया न दोषाय ।

अथ जातित्वसाधारणधर्मदर्शनजन्मा तदा प्रत्यक्षाया गवि विरोधावधारणादेव निवर्त्तते । अन्यथोपाधिसाङ्कर्यदर्शनजन्मा सास्नाकेसरादिसाङ्कर्यशङ्का दुरुच्छेदैव स्यात् ।

अथ जात्यो. परस्परविरहव्याप्यता परस्परविरहसमानाधिकरणत्वेनैवावच्छिद्यते । तथा च परस्परविरहसमानाधिकरणौ धर्मौ यदि जाती स्याता परस्परविरहव्याप्तौ स्यातामिति चेत् । न । परस्परविरह समानाधिकरणत्वस्यैकभावेन गोत्वाभावसमानाधिकरणत्वे सति गोत्व समानाधिकरणात्यन्ताभावप्रतियोगित्वादिकमेव अश्वत्वादौ विरोधितावच्छेदक यथा दर्शन कल्प्यमिति न सङ्कीर्णयोस्तथात्व मानाभावात् । सामानाधिकरण्यग्राहकमानविरोधाच्च । अपि च मास्तु तयोः सामान्यत्व नित्यत्व तु केन वारणीयम् । न च तादृशधर्मयोर्नित्यत्व विरो.

धितावच्छेदक परस्परात्यन्ताभावसमानाधिकरणयोर्घटात्यन्ताभावपटात्यन्ताभावयोर्व्यभिचारवद्भावत्वसमानाधिकरणतादृशनित्यत्व त्वप्रयोजक साक्षात्सम्बन्धेन भावत्वस्य तथा तादृशभावेऽपि सत्यभावाच्च । किं च सङ्कीर्णयोरजातित्वे घटत्वमपि न जातिः स्यात् पृथिवीत्वेन परस्पराभावानुपपत्तेः । न च पृथिवीवृत्तिघटत्व सुवर्णगतघटत्वादन्यदेवेति वाच्यम् । तथा सति साङ्कर्योच्छेदापत्ते. । मन आदिवृत्तिमूर्त्तत्वादिकमन्यदेवेति सुवचत्वात् । एतेन गत्वादिव्याप्यास्तारत्वमन्दत्वादयो नानेत्यपि परास्तम् । स्वीकृत च प्रत्यक्षत्वादिना सङ्कीर्णस्यापि प्रमात्वस्य जातित्व दिवाकरोपाध्यायैः । परोक्षत्वस्य चानुभवत्व सङ्कीर्णस्य जातित्व वर्द्धमानोपाध्यैः । तस्मात्साङ्कर्यं न जातिबाधकम् । सामान्ये सामान्याकारानुगतप्रतीत्या सामान्यत्वसामान्य परस्मिन्निव स्वस्मिन्नप्येकमेव । सत्ता सतीतिप्रतीतेः सत्तेवेति कुतोऽनवस्था । यच्च विशेषेषु सामान्यवृत्तौ व्यावर्त्तकत्वहानिरिति तदतितुच्छम् । न हि सामान्यमीदृगधर्मभीरु येन परोपकारमालोच्य निवर्त्तेत । अपि च यथा विभाजकोपाधेरेकत्वेऽपि विशेषाणां व्यावर्त्तकता हीयते । तथा सामान्यस्यैकत्वेऽपीति ।

समवाये जातिबाधकमपि न किंचिदुपपन्नम् । जातेः समवाय एव वृत्तिरित्यनभ्युपगमात् । स्वरूपेणापिवृत्तेः सम्भवादिति चेत् ?

अत्र ब्रूमः क्लृप्तोपाधिभ्यामन्यथासिद्धिरेव सङ्कीर्णयोर्जातित्वे बाधकम् । तथा हि । बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वेव भूतत्वम् । मूर्त्तत्व तु अवच्छिन्नपरिमाणवत्त्वम् । परिमाणे अवच्छिन्नत्वमपि नित्यमहत्त्वान्यत्वमेव परममहत्त्वमपि न जातिरिति गुणकिरणावलीप्रकाशे सुव्यक्तम् । न चैवमनुभवत्वमपि स्मृतिभिन्नज्ञानत्वमेवास्त्विति वाच्यम् । स्मृतित्वमेव अनुभवभिन्नत्वमिति सुवचत्वात् । अत एव स्नेहेन जलत्वस्य गन्धात्यन्ताभावाभावेन पृथिवीत्वस्य च नान्यथासिद्धिस्तत्रापि किं केनान्यथासिद्धमिति विनिगमकाभावात् । घटत्व तु न जातिः किं तु सस्थानविशेषैकार्थसमवायिद्रव्यत्वमेव । तत्सस्थाने च विशेषो जातिरूपोऽन्य-

तत्कर्मजत्वादेर्व्यापको न तु घटाकारानुगतप्रतीतेस्तदननुगमेऽनुपपत्तेः सस्थानवृत्तिर्जातिविशेषो घटत्वमिति वदन्ति ।

अदृष्टत्वमप्यत एव न जातिः किं तु सुखदुःखासाधारणकारणातीन्द्रियात्मविशेषगुणवत्त्वमेव तत् । तारत्वमन्दत्वे यद्यपि न नाना न वा जातयस्तथा घटिकास्तु सजातीयसाक्षात्कारप्रतिबन्धकतायास्तत्प्रतिबध्यतायाश्चावच्छेदिका जातयो नाना च । अन्यथासिध्यभावात् । अत एव भावत्वस्य तद्व्याप्यस्य द्रव्यत्वगुणत्वादेस्तद्व्याप्यानां च पृथिवीत्वरूपत्वादीनां च सिद्धिरप्रत्यूहा ।

तथाहि न तावदभावभिन्नत्वं भावत्वम् । भावभिन्नत्वस्यैवाभावत्वात् । तस्य खण्डत्वेन विनिगमनाभावादुभयसिद्धिः । भावत्वस्य कथं सिद्धिरिति चेत् । कारणतावच्छेदकत्वेन ध्वंससामान्यं प्रति द्रव्यगुणकर्मणां या प्रतियोगिताविधया जनकता तस्या अवच्छेदकोऽवश्यं कश्चिदभ्युपेयः । स च न द्रव्यत्वादिव्याप्यो न्यूनवृत्तितापत्तेर्न वा नित्याव्यावृत्तोऽतिरिक्तवृत्तित्वापत्तेरिति तदव्याप्यो नित्यव्यावृत्तश्च ।

तदेव जन्यभावत्वमिति गीयते । जन्यत्वे सति द्रव्यगुणकर्मान्यतरत्वमेव तदिति चेत् ? न । नास्ति द्रव्यत्वं किं तु गुणकर्मान्यभावत्वमेव तदित्यपि सुवचत्वात् । एवं गुणत्वकर्मत्वाभ्यामपि सह विनिगमनाभावो दर्शितः । तथा द्रव्यत्वमपि समवायिकारणतावच्छेदकतया सिध्यति । न च परिमाणवत्त्वेन तदन्यथासिद्धिः । परिमाणानुत्पत्तिप्रसङ्गात् । न च गुणात्यन्ताभावात्यन्ताभावेन सा । प्रागिव विनिगमकविरहस्य योजनीयत्वात् । एवमुत्तरोत्तरेष्वपि । गुणत्वं रूपादिनिष्ठं यज्जन्यत्वं तदवच्छेदकीभूतं यज्जन्यगुणत्वं तद्घटकतया सिध्यतीति अमरनाथभट्टाचार्याः ।

कर्मत्वं तूत्क्षेपणादिषु पामरसाधारणं चलतीति प्रतीत्या । पृथिवीत्वं गन्धजनकतावच्छेदकतया । जलत्वं जन्यजलजनकतावच्छेदकतयापि । रूपत्वं तु कारणरूपत्वेन हेतुतायामपाकजकार्यरूपत्वेन हेतुतेति स्वीकृतेः कार्यत्वकारणत्वोभयावच्छेदकघटकतया । एवं रसत्वादिकमूह्यम् ।

क्षीरत्वदधित्वादिकं रसत्वावान्तरसामान्यमिति रत्नकोशकृत । द्रव्यगत सामान्यमेतदय तु विशेषो यदि द्व्यणुकमारभ्य वर्त्तेत परमाणु-वृत्तित्वे घटादावपि वृत्त्यापत्ते । परमाणुवृत्तिजातिस्तत्स्वाभाव्यस्य सत्तादौ निर्णीतत्वात् । एतेन धूमत्ववह्नित्वादयो व्याख्याता: ।

एतेन स्पर्शसमवायिकारणतावच्छेदकतया नित्यजलादिपरमाणु-त्रयव्यावृत्ता पृथिवी परमाणुनाधारत्वे का जाति: स्याद्यदि कार्य न पृथक् दोष. स्यादित्यपास्तम् । अपार्थिवपरमाणुभिन्नमूर्त्तत्वेनान्यथा-सिद्धे । किं च यदि साङ्कर्यस्यान्यथासिद्धिनियततया न दोषत्व तदा द्रव्यारम्भकतावच्छेदकतया स्पर्शवत्त्वनियता पृथिवीत्वादिव्या-पिका जातिरापद्येत यदि स्पर्शवत्त्वेनान्यथासिद्धिर्न दोष: स्यादिति सावश्य दोषस्ततश्च जातिबाधकगणनाया तत्सग्रहासम्भव इति दिक् ।

प्राभाकरास्तु आकृतिव्यङ्ग्यामेव जाति मन्वाना भावत्वद्रव्य-त्वादयो जातय एव नेत्याहु: ।

परमाणुपरिमाणे परमाणुत्व न जातिर्मानाभावात् । तथा द्व्यणुकपरिमाणे न द्व्यणुकत्वम् । के चित्तु द्वित्वजन्यतावच्छेदक तदङ्गी-कुर्वन्त्येव, सिद्ध साङ्कर्ये सति धर्मयोरनित्यत्वमेव न नित्यत्वमिति । तथा सामान्ये न सामान्यत्व नाम सामान्यमन्यथासिद्धे: । यदि सामान्य सदिति प्रतीते: सत्तावृत्तिरापाद्यते तदा सत्तासदितिवदेका-र्थसमवायेन सिद्धसाधन साक्षात्सम्बन्ध आपाद्यमाने सत्ताया व्यभि-चार. ।

अथ तत्रापि सत्तान्तर स्वीकार्यमिति भावस्तदानवस्था । न चेय प्रामाणिकी, परम्परा सम्बन्धेनैवोपपत्तेरित्यभिप्राये हातव्यानवस्थि-तिरिति ।

विशेषेष्वपि न विशेषत्व जातिरुपाधिनान्यथासिद्धेरित्यतो विशेषा: सन्त इति प्रतीत्या सत्तैव वर्ततामिति वक्तव्यम् । तत्रेद विकल्पनीयम् । कस्यैवमुक्तिर्जातिव्यक्त्यभेदवादिनो वा भेदवादिनो वा । आद्ये सर्वप-

दार्थाभिन्नतापत्तिः सर्वविशेषपदार्थानां सदात्मनैक्येन भेदकान्तरस्याभावात् । न हि तदा पृथत्त्वादयोऽपि भेदकाः तेषामपि पृथक्त्वसामान्यात्मना साधारण्यात् । अथ सदात्मना सर्वमभिन्नमेव रूपान्तरेण तु भेदस्य सदात्मना विशेषाभेदो न विरोधीति चेत् न । द्वितीयेषु विशेषेषु सत्ताया न प्रत्यक्ष मानमनभ्युपगमात् । नापि विशेषः सत्ताश्रयः सामान्यसमवायातिरिक्तभावत्वादित्येवमनुमानम् । परम्परासम्बन्धेनसिद्धसाधनात् । साक्षादिति करणेचाप्रयोजकत्वादिति । पर्यवसित सामान्यम् । समानजातीयगुणकर्मपरमाणुष्वेव वर्त्तन्ते । आकाशादेः तु शब्दादेरेव व्यावृत्त्युपपत्तेर्न विशेषैः प्रयोजनम् ।

केचित्तु तत्रापि विशेषाः लाघवेन नित्यद्रव्यत्वस्येव विशेषाश्रयतावच्छेदकत्वादित्याहुः । विशेषेषु किं मानमिति चेत् । यावती भेदबुद्धिः तदीय स्वतोव्यावृत्त क चिद्भेदक विनोपपद्यते । न हि घटत्वादिकमपि आश्रयभेदमनुपजीव्य पटत्वादितो भिन्नम् । न हि वर, तदेव स्वतोव्यावृत्तमस्तु न त्वक्लृप्ताविशेषा इति चेन्न । घट इति प्रतीतिः स्वतोव्यावृत्तकिं चिद्धर्मसाध्या विलक्षणप्रतीतित्वादित्येवमनुमितस्यातएव नित्यस्य धर्मस्यानेकसमवेतत्वकल्पने गौरवादिति दिक् । पर्यवसिता विशेषाः ।

अथ समवायः । तस्य वृत्तिः सम्बन्ध' स्वरूपमेव । अविशिष्टधीव्यावृत्तविशिष्टधीविषयत्व सम्बन्धत्वम् । सम्बन्धान्तरमन्तरेण विशिष्टधीजननयोग्यत्व स्वरूपसबन्धत्वम् । समवाये मान तु घट इति धीरेव न ह्येषा स्वरूपसबन्धमात्रमालम्बते । तस्य कालेऽपि सत्त्वात् । यतो घटत्वे भवतीदानीमिति मतिः ।

अथ स्वरूपविशेष एव घट इति धीविषय इति चेत् । स विषयो यदि समवायेन घटत्वाश्रयत्वमेव तदा सिद्ध एव समवायः । वस्तुतो यो घट इति चेत् । न तस्यैव चिन्त्यमानत्वात् । देशकालातिरिक्तो घटत्वाश्रयतया प्रतीयमानो घट इति चेत् न । भ्रान्तप्रतीतिवि-

उक्तस्य संस्कारहानस्य प्रकारमाह ।

**प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥**

यदाचायं ब्राह्मणः प्रसंख्याने विवेकसाक्षात्कारेऽप्यकुसीदस्ततः सर्वभावाधिष्ठातृत्वादिरूपां सिद्धिं न प्रार्थयते तत्फलेऽपि च विरक्तस्तदा तस्य विद्याभावेन सर्वथा संस्कारबीजस्य क्रमेण दाहादविद्यारूपप्रत्ययानन्तरिता विवेकख्यातिर्भवति तदा धर्ममेघनाम्नी सम्प्रज्ञातसमाधिः पराकाष्ठा भवतीत्यर्थः क्लेशकर्मादीनां निःशेषेणोन्मूलकं धर्मं मेहति वर्षतीति धर्ममेघः ।

एतत्समाधेर्धर्ममेघद्वारा फलं द्वितीयं मोक्षमाह ।

**ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥**

निवृत्तिर्दाहसमाप्तिः तस्य धर्ममेघस्य लाभात् अविद्यादयः क्लेशा अभिनिवेशातिरिक्ताः स्वमूलसंस्कारैः सह सम्यग्निवर्तन्ते पापपुण्यरूपकर्माशयाश्च प्रारब्धातिरिक्ताऽक्लेशाख्यमूलेन सह हता भवन्ति न पुनरुत्पत्स्यन्ते तयोर्निवृत्तौ च जीवन्नेव विद्वान्मुक्तो भवति ।

केचित्त्वभिनिवेशस्यापि निवृत्तिमिच्छन्ति न च दुःखात्यन्तनिर्वृत्तिर्मोक्षो जीवतश्चावश्य दुःखं "नहवैसतःशरीरस्य प्रियाप्रिययोरपहतिरस्तीति श्रुतेः, एवं च जीवन्मुक्तिः कथमिति वाच्यम् । दुःखकारणविपर्ययस्यात्यन्तोच्छेदेन तत्र गौणमुक्तित्वात् । क्षीणक्लेशविपर्ययस्य कस्यचित् क्वचिदपिक्लेनापि जातस्यादर्शनादिति दिक् ।

इदानीं जीवन्मुक्तस्य परममुक्तिप्रकारमाह ।

**तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥**

तदा जीवन्मुक्तावस्थायां सर्वैः क्लेशकर्मावरणैर्मलैर्विमुक्तस्य ज्ञानसत्वस्यानन्त्यं भवति । ज्ञानस्य सत्वप्रकाशस्यानन्त्यं विभुत्वं भवति भूतसत्वव्यावृत्तये ज्ञानसत्वमित्युक्तं पूर्वं हि तमसाभिभूतमावृतमनन्तं स्वभावतो व्यापकमपि ज्ञानसत्वं रजसोद्घाटितं क्वचिदेव ग्रहणसमर्थं तच्च यदा सर्वैरावरणमलैरपगतं भवति तदा ऽनावृतानन्त्याज्ज्ञेयं प्रकाश्यमल्पं तदपेक्षया भवति यदि पञ्चविंशतितत्वातिरिक्तमन्यदपि वस्तु तिष्ठेत्तदा तदपि प्रकाश्येत ज्ञेयस्यैव त्वाकाशे खद्योतवदल्पतया न प्रकाश्यते न तु सत्वस्याल्पतयेति भावः । अत्र तमोऽभिभवानन्तरमेव वृत्त्युत्पत्युक्तेस्तमोनाशकत्ववादश्चिन्त्यः । एतादृशसार्वज्ञ्यं चातीवाश्चर्यमन्धमणिवेधादिवदित्युपहसद्भिर्बौद्धैर्येच्च सार्वज्ञ्ये इदमुक्तं अन्धोमणिमविध्यत्सच्छिद्रं कृतवान्तं मणिमनङ्गुलिरावयत्तग्रथितवान् ग्रथितं च तं ग्रीवाशून्यः कण्ठे ऽधारयत्तं चाजिह्वोस्तौदिति । अस्यायं भावः अनाद्यविद्यामूढैश्चित्तैः साङ्ख्याद्यभिमतसूक्ष्मार्थानामवधारणरूपं वेधनमेवादावशक्यं । ततश्च तस्य सूक्ष्मार्थस्याविरलवृत्तिसन्तानसूत्रेण ग्रथनं ततोऽप्यशक्यं ततोऽपि सर्वथविवेकख्यातिरतीवाशक्या ततोऽपि तादृशचित्तस्य परिपूर्णत्वेन स्तुतिरप्यशक्येति आस्तिकैस्तु श्रुतिस्मृतिप्रामाण्येन सर्वमिदं श्रद्धेयमिति ।

यथोक्तसार्वज्ञ्यात्परवैराग्योदयेनासंप्रज्ञातपरपराजन्यं प्रारब्धभोगसमाप्तिजन्यं वा तृतीयं मुख्यं मोक्षमाह ।

**ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥३२॥**

ततो धर्ममेघोदयात् क्लेशकर्मनिवृत्त्या ज्ञानस्यानन्त्ये सति परवैराग्येण पुरुषार्थसमाप्त्या कृतार्थानां पुरुषाणां विषये गुणानां सत्वादीनां परिणामक्रमः समाप्यते कृतार्थपुरुषाणां भोगोपयिकः

परिणामः पुनर्न यतः कृतभोगापवर्गाः सत्वादयोगुणा अतएव समाप्त-क्रममास्तं पुरुषं प्रति क्षणमप्यवस्थातुं न समर्था भवन्ति स्थितिहेतु-पुरुषार्थाभावात् । अत्राचेतनाना चेतनार्थतया चैतन्याधीनसत्ता वेदा-न्तिभिरुच्यमाना सिद्धा अत्र यज्ज्ञानस्यानन्त्यात्सार्वज्ञ्याख्यान्मो-क्षकथनं तन्मुख्यकल्पाभिप्रायेण । वस्तुतः सत्वपुरुषयोः शुद्धिसाम्य इति सूत्रे भाष्ये ईश्वरस्यानीश्वरस्य वा प्राप्तविवेकज्ञानस्येत्यनेना-सर्वज्ञस्याप्यभिमाननिवृत्तिमात्रादेव मोक्ष उक्तः ।

ननु परिणामसमाप्तिरिति वक्तव्ये क्रमशब्दः प्रतिक्षणमुत्पाद-विनाशकथनेन वैराग्योत्पादनाय प्रयुक्तः न चायमर्थः क्रमशब्दाल्ल-भ्यते तस्य पौर्वापर्यमात्रवाचित्वादत क्रमशब्दार्थमाह ।

**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥**

क्षणप्रतियोगी क्षणस्यावसरस्य विरोधी क्षणेनाप्यनन्तरित इति यावत् । एव रूपो ऽत्रक्रमो विवक्षितो न तु पौर्वापर्यमात्र । परिणामश्च पूर्वधर्मापाये धर्मान्तरोत्पत्तिरित्युक्त ईदृशक्रमे प्रमाण परिणामेत्यादि क्षणानन्तर्यात्मा ऽव्यवधानरूपक्षणानन्तर्यधर्मकः क्रमः वस्त्रादिरूपस्य परिणामस्य पूर्वान्तापेक्षया ऽपरान्तेन चरमावस्थया ऽनवच्छिन्नपरिणामधाराया अनुमानेन ग्राह्य. न हि वस्त्रस्यान्तकाले दृश्यमाना पुराणता अननुभूता ऽप्राप्ता यथोक्तक्रमो यैरेवभूता क्षणा यस्यास्तादृशी सम्भवति अतः पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थू-लादिरूपैः परिणामक्षणेष्वविरलः क्रमो ऽनुमीयते । न च परान्तेना-नित्येषु क्रमसिद्धावपि प्रधाने चरमावस्थाभावाद्गुणानां परिणाम-क्रमे मानाभावेन पूर्वसूत्रोक्ता तत्समाप्तिः कथ घटेतेति चेन्न नित्येषु स्वतोपरान्ताभावेऽपि विकाराणामेव एतैरेव प्रा॰ क्षणपरिणामानुमानात्

धर्मद्वारा धर्मिविक्रियाया एव प्रपञ्चस्य प्रागुक्तत्वात् । न चैव नित्यताहानिः कूटस्थनित्यताहानावपि परिणामिनित्यत्वाद्यते. कूटस्थनित्यता हि पुरुषस्यैव परिणामित्वेन तस्या एव विरोधो न तु नित्यतासामान्यस्य नित्यता च कस्मिन्परिणम्यमानेपि तत्त्वं न विहन्यते स्वरूपं न अतीतं भवति तत्त्वं एवं चातीताशून्यत्वं नित्यतासामान्यलक्षणं । तच्चोभयत्रापि कूटस्थे पुरुषे परिणामिषु च तत्र गुणधर्मेषु महदादिषु विनाशित्वात्परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्यवसान नित्येषु धर्मिषु गुणेषु कार्यद्वाराविद्यमानोऽपि क्षणापरान्तनिर्ग्राह्य. क्रमः स्वतोलब्धपर्यवसानः कूटस्थनित्येषु पुरुषेषु बद्धेषु चित्ताव्यतिरेकाभिमानात् तत्परिणामेन परिणामाध्यासस्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु तत्तत्क्षणसबन्धरूपा स्वरूपास्तिताक्रमेणैवानुभूयत इति तत्क्रमः पुरुषेष्वस्ति इदानीं स्थित्वा पश्चात्स्थास्यति पूर्वं च स्थित इति व्यवहारात् । अतस्तत्रापि स्वतोलब्धपर्यवसानः क्रमः यतःशब्दपृष्ठतोऽस्तिक्रियामुपादाय कल्पित इति । षड्भावविकारेष्वस्तिता तु वृद्धिहेत्ववयवोपचयरूपक्रियारूपेति सैव पुरुषे निषिध्यते । तत्तत्क्षणसम्बन्धरूपा तु न निषिध्यत इति बोध्यम् । नन्वस्य ससारस्य जन्मादिपरिणामजातस्य सृष्ट्यागत्या च गुणेषु वर्त्तमानस्य सृष्टिप्रलयप्रवाहेणावस्थितस्य क्रमसमाप्तिरस्ति न वा आद्ये ऽलब्धपर्यवसानत्वोक्तिविरोधः अन्त्ये 'भूयश्चान्ते विश्वमायानिवृत्तिरिति' श्रुतिविरोध इति चेन्न । कृतार्थपुरुष प्रत्येव विश्वमायानिवृत्ते' श्रुत्युक्तत्वेनास्य प्रश्नस्योत्तरानर्हत्वात् । उत्तरार्हस्तु प्रश्नो यथा सर्वो जातो मरिष्यतीति प्रश्नः अयमोमो इति इष्टापत्त्यैव परिहरणीयः एकान्तवचनीयो न तु विभज्य वचनीय' विभज्य वचनीयो यथा सर्वो मृत्वा जनिष्यत इति प्रश्नः जातविवेकज्ञानो न जनिष्यते अन्यस्तु जनिष्यत इति विभ-

ज्योतराहः तथा मनुष्यजातिः श्रेयसी न वेति प्रश्नोपि पशूनुद्दिश्य श्रेयसी ऋषिदेवापेक्षया नेति विभज्य वचनीय एव अयन्त्वदीयः संसारो ऽयमन्तवान्नवेति प्रश्नस्त्वत्यन्तमवचनीयः यतः कुशले गुणकृतसंसारक्रमस्य समाप्तिरस्ति नेतरस्मिन्नित्यतोगुणसृष्टिप्रवाहो च्छेदानुच्छेदान्यतरावधारणे दोष. आद्ये बाधो ऽन्त्ये कस्यापि मुक्तिर्नास्तीति मोहापत्तिः तस्मादयं प्रश्नो विकल्पेन व्याख्येयः यदि सर्वथा गुणाना सृष्ट्याप्युच्छेदः पृच्छ्यते तदा नास्तीत्येव वक्तव्य अनादिर्भगवान्कालोनानन्तोऽस्य द्विज विद्यते अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसयमा, इत्यादिस्मृतेः । भूयश्चान्ते विश्वमायानिवृत्तिरिति, श्रुतिश्च मायाख्यप्रकृतेः प्रलयव्यापारो परमाख्यानिवृत्तिमेव वदति यदि तु रूपस्य ससारोच्छेदः पृच्छ्यते तदा कुशस्यास्ति नेतरस्येति विभज्य प्रतिवचनीयमेतत् । गुणाधिकाराणां परिणामविशेषाणां क्रमसमाप्तौ कैवल्यमिति । ततः कृतार्थानामित्यादिसूत्रेण तात्पर्यत उक्तं तस्य कैवल्यस्य स्वरूपमवधारयति ।

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपमप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥**

कृतभोगापवर्गतया पुरुषार्थशून्यानां गुणानां महदादिसूक्ष्मभूतपर्यन्तानां लिङ्गशरीराद्यात्मकानां पुरुषोपकरणानां यः प्रतिप्रसवः स्वकारणेऽत्यन्तलयः एतद्बुद्धे कैवल्य तदेव च प्रधानस्य ज्ञानिनं प्रति कैवल्य पुरुषेण पुनरसयोगात् या तु पुनर्बुद्धिसत्वासबन्धात् केवलचितिशक्तिरूपा पुरुषस्य स्वरूपप्रतिष्ठा बुद्धिसत्वोपाधिकरूपशून्यता रूपा जवायोगापाये स्फटिकस्य स्वरूपप्रतिष्ठावत् तस्याश्च सर्वदा यत्तथाऽवस्थान पुनरच्यवस्तत्पुरुषस्य कैवल्य। वा शब्दो व्यवस्थितवि-

कल्ये परस्पर वियोगे हि उपाध्युपाधिमतोरुभयोः केवलता भवति एते एव दुःखभोगनिवृत्त्याख्यपुरुषार्थसाधने भवत इति द्वे एव कैवल्ये लक्षिते । इति शास्त्रसमाप्ताविति शिवम् ।

यात जलाब्धौ रचितः सेतुर्विज्ञानभिक्षुणा महापगुर्मूढतमो येन तं तीर्णवानहम् ॥ १ ॥

इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतायां पातञ्जलसूत्रवृत्तौ भाष्यछाया-व्याख्यायां चतुर्थःपादः श्रोरस्तु ॥

पातञ्जलेषु सूत्रेषु वृत्तिर्या लिखिता मया ।
प्रीयतां तु तया सांबः शिवो मे स पतञ्जलिः

इति योगसूत्रवृत्तिः समाप्ता ।

"यो योनियोनि[1]मधितिष्ठत्येकः" इति च

तस्या एव प्रतीतेर्नास्मिन्मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः ।

कथ तर्हि ज्योतिरुपक्रमाया लोहितशुक्लकृष्णरूपाया अस्याः प्रकृतेरजात्वम् ? अजाया वा कथ ज्योतिरुपक्रमात्वमित्यत्राह-

**कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥**

प्रसक्ताऽऽशङ्कानिवृत्त्यर्थ'श्च'-शब्दः । अस्याः प्रकृतेरजात्व ज्योतिरुपक्रमात्वञ्च न विरुध्यते[2]। कुतः । कल्पनोपदेशात्, कल्पन-क्लृप्तिः सृष्टिः, जगत्सृष्ट्युपदेशादित्यर्थ. । यथा "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पय"-दिति कल्पनं सृष्टिः । अत्राप्य"स्मान्मायी सृजते विश्वमेत"दिति जगत्सृष्टिरुपदिश्यते । स्वेनाविभक्तादस्मात्सूक्ष्मावस्थात्कारणान्मायी सर्वेश्वरः सर्वं जगत्सृजतीत्यर्थ· । अनेन कल्पनोपदेशेनास्याः प्रकृतेः कार्यकारणरूपेणाऽवस्थाद्वयान्वयोऽवगम्यते । सा हि प्रलयवेलाया ब्रह्मतापन्ना अविभक्तनामरूपा ऽव्यक्तादिशब्दवाच्या[3] सूक्ष्मरूपेणावतिष्ठते, सृष्टिवेलाया चोद्भूतसत्त्वादिगुणा विभक्तनामरूपा व्यक्तादिशब्दवाच्या तेजोबन्नादिरूपेण च परिणता लोहितशुक्लकृष्णाकारा चाऽवतिष्ठते । अत' कारणत्वस्याऽजा कार्य्यावस्था च ज्योतिरुपक्रमेति न विरोधः । 'मध्वादिवत्,'यथेश्वरेणाऽऽदित्यस्य कारणावस्थायामेकस्यैवावस्थितस्य कार्य्यावस्थायामृग्यजुस्सामाथर्व्वप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयतया वस्वादिदेवताभोग्यत्वाय मधुत्वकल्पनमुदयास्तमयकल्पनञ्च न विरुध्यते । तदुक्तम्मधुविद्यायाम् "असौ वा आदित्यो देवमध्वि" त्यारभ्य "अथ तत ऊर्द्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्याते'त्यन्तेन । एकलः, एकस्वभावः । अतोऽनेन मन्त्रेण ब्रह्मात्मिकैवाऽजाऽभिधीयते, न कापिलतन्त्रसिद्धेति सिद्धम् ॥

अन्ये त्वस्मिन्मन्त्रे तेजोऽबन्नलक्षणाऽजैकाऽभिधीयत इति ब्रुवते, ते प्रष्टव्याः, किं तेजोऽबन्नान्येव तेजोऽबन्नात्मिकाऽजैका? उत तेजोऽबन्न-

१ यो योनिर्योनिमिति मु पु, यो योनिमिति लि पु पाठ ।
२ न निषिध्यते-इति लि पु । ३ अव्यक्तादिशब्दवाच्येति लि पु·नास्ति ।

रूपं ब्रह्मैव? किं वा तेजोऽबन्नकारणभूता काचि[1]दिति। प्रथमे कल्पे तेजोऽबन्नानामनेकत्वादजामेकामिति विरुध्यते। न च वाच्यं तेजोऽबन्नानामनेकत्वेऽपि त्रिवृत्करणेनैकतापत्तिरिति, त्रिवृत्करणेऽपि च बहुत्वानपगमात्[2] "हन्ताहमिमास्तिस्रो देवताः तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"ति प्रत्येकं त्रिवृत्करणोपदेशात्। द्वितीयः कल्पो विकल्प्यः, किं तेजोऽबन्नरूपेण विकृतं ब्रह्मैवाजैका? किं वा स्वरूपेणावस्थितमविकृतमिति। प्रथमः कल्पो बहुत्वाऽनपायादेव[3] निरस्तः। द्वितीयेऽपि 'लोहितशुक्लकृष्णा' मिति विरुध्यते। स्वरूपेणावस्थित[4] तेजोऽबन्नलक्षणमिति वक्तुमपि न शक्यते। तृतीये कल्पेऽप्यजाशब्देन तेजोऽबन्नानि निर्दिश्य तैस्तत्कारणावस्थोपस्थापनीयेत्यास्थेयम्, ततो वरमजाशब्देन तेजोऽबन्नकारणावस्थायाः श्रुतिसिद्धाया एवाभिधानम्।

यत्पुनरस्याः प्रकृतेरजाशब्देन च्छागत्वपरिकल्पनमुपदिश्यत इति तदप्यसङ्गतम्, निष्प्रयोजनत्वात्। यथा'त्मानं रथिनं विद्धी'त्यादिषु ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते, यथा चादित्ये वस्वादीनाम्भोग्यत्वख्यापनाय मधुत्वकल्पनं क्रियते, तद्वदस्याम्प्रकृतौ छागत्वपरिकल्पनं क्वोपयुज्यते। न केवलमुपयोगाभाव एव, विरोधश्च। कृत्स्नजगत्कारणभूतायास्स्वस्मिन्नऽनादिकालसम्बद्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनभूताया अचेतनाया अत्यल्पप्रजासर्गकराऽऽगन्तुकसङ्गमचेतनविशेषैकरूपात्यल्पप्रयोजनसाधनस्वपरित्यागाहेतुभूतस्वसम्बन्धिपरित्यागसमर्थचेतनविशेषरूपच्छाग[5]स्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव। "अजामेकाम्, अजो ह्येकः, अजोऽन्य" इत्यत्राज[6]शब्दस्य विरूपार्थपरिकल्पनञ्च न शोभनम्। सर्वत्र च्छागत्वं परिकल्प्यत इति चेत्। जहात्येनाम्भुक्तभोगामजोऽन्य' इति

१ भूता काचित्-इति मु पु। २ बहुत्वानुगमादिति लि पु न तु युक्तम्।
३ बहुत्वानपगमादेव-इति पुस्तकान्तरपाठः।
४ ब्रह्मेति लि पु अधिकमत्र।
५ छागतास्वभावेति लि पु। ६ अजा-इति मु पु।

विदुष आत्यन्तिकप्रकृतिपरित्यागङ्कुर्वतोऽनेन वाक्येन[1] पुनरपि सम्बन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥

चमसाधिकरणं समाप्तम् ॥ २ ॥

अथ सङ्ख्योपसङ्ग्रहाधिकरणम् ३ । **न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च[2] ॥ ११ ॥**

वाजसनेयिनस्त्वमामनन्ति—

"यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।

तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृत"मिति ।

किमयं मन्त्रः कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपर उत नेति सन्दिह्यते । किं युक्तम् । तन्त्रसिद्धतत्त्वप्रतिपादनपर इति । कुतः । 'पञ्च'-शब्दविशेषिता 'त्पञ्चजन'-शब्दात्पञ्चविंशतितत्त्वप्रतीतेः । एतदुक्तम्भवति-पञ्चजना इति समासः समाहारविषयः, पञ्चजनाः—पञ्चानां जनानां समूहाः[3] पञ्चपूल्य इतिवत् पञ्चजना इति । लिङ्गव्यत्ययश्छान्दसः । ते च समूहाः कतीत्यपेक्षायां पञ्चजनशब्दविशेषणेन प्रथमेन पञ्चशब्देन समूहाः पञ्चेति प्रतीयते,[4] यथा पञ्च पञ्चपूल्य इति । अतः 'पञ्च पञ्चजना' इति पञ्चविंशतिपदार्थावगतौ ते कतम[5] इत्यपेक्षायाम् मोक्षाधिकारान्मुमुक्षुभिर्ज्ञातव्यतया स्मृतिप्रसिद्धाः प्रकृत्यादय एव ज्ञायन्ते ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।

षोडशकस्तु[6] विकारो न प्रकृतिर्न विकृतिः पुरुषः" ॥

इति हि कापिलानां प्रसिद्धिः । अतस्तन्त्रसिद्धतत्त्वप्रतिपादनपर इति प्राप्ते प्रचक्ष्महे—

न सङ्ख्योपसङ्ग्रहादपीति, पञ्च पञ्चजना इति पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न तन्त्रसिद्धतत्त्वप्रतीतिः । कुतः । नानाभावात्, एषां

१ अनेन वाऽन्येन वेति मु॰ पु । २ भावातिरेकाच्चेति लि पु पाठ ।
३ पञ्चजना इत्यधिकमत्र मु पु । ४ प्रतीयन्ते—इति मु पु ।
५ ते कतीति मु पु । ६ षोडशकश्चेति पाठान्तरम् ।

पञ्चसङ्ख्याविशेषितानां पञ्चजनानां तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः पृथग्भावात् ।

"यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः"–

इत्येतेषां यच्छब्दनिर्दिष्टब्रह्माश्रयतया ब्रह्मात्मकत्वं हि प्रतीयते,

"तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्" ।

इत्यत्र तमिति परामर्शेन यच्छब्दनिर्दिष्टं ब्रह्मेत्यवगम्यते । अतस्तेभ्यः पृथग्भूताः पञ्च पञ्चजना इति न तन्त्रसिद्धा एते । 'अतिरेकाच्च', तन्त्रसिद्धेभ्यस्तत्त्वेभ्योऽत्र तत्त्वातिरेकोऽपि भवति, यच्छब्दनिर्दिष्ट आत्माऽऽकाशश्चऽत्रातिरिच्येते । अतः–

"तं षड्विंशकमित्याहुः सप्तविंशमथापरे"–

इति श्रुतिसिद्धसर्व[1]तत्त्वाश्रयभूतः सर्वेश्वरेश्वरः परमपुरुषोऽत्राऽभिधीयते । 'न सङ्ख्योपसङ्ग्रहादपी'त्य'पि'–शब्दस्य 'पञ्च पञ्चजना' इत्यत्र पञ्चविंशतितत्त्वप्रतीतिरेव न सम्भवतीत्यभिप्रायः । कथम् । पञ्चभिरारब्धसमूहपञ्चकासम्भवात् । नहि तन्त्रसिद्धतत्त्वेषु पञ्चसु पञ्चस्वऽनुगतन्तत्तत्सङ्ख्यानिवेशनिमित्तं जात्याद्यस्ति । न च वाच्यम्–पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च महाभूतानि, पञ्च तन्मात्राण्य, ऽवशिष्टानि पञ्चेत्यवान्तरसङ्ख्यानिवेशनिमित्तमस्त्येवेति । आकाशस्य पृथङ्निर्देशेन पञ्चभिरारब्धमहाभूतसमूहासिद्धेः । अतः पञ्चजना' इत्ययं समासो न समाहारविषयः, अयन्तु[2] "दिक्सङ्ख्ये सञ्ज्ञाया"मिति सञ्ज्ञा[3]विषयः । अन्यथा 'पञ्चजना' इति लिङ्गव्यत्ययश्च ।

पञ्चजना नाम केचित्सन्ति, ते च पञ्चसङ्ख्यया विशेष्यन्ते 'पञ्च पञ्चजना' इति, सप्त सप्तर्षय इतिवत् । के पुनस्ते पञ्च पञ्चजना इत्यत्राह–

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

"प्राणस्य प्राणमुत चक्षुषश्चक्षुः

१ सर्वज्ञ –इति लि॰ पु ।
२ अपि तु–इति वा पाठ ।
३ विशेष–इत्यधिकं मु॰ पु॰ ।

श्रोत्रस्य श्रोत्रमन्नस्यान्नम्मनसो मनो ये विदुः" ॥–

इति वाक्यशेषाद् ब्रह्माश्रयाः प्राणादय एव पञ्च पञ्चजना इति विज्ञायन्ते।

अथ स्यात्काण्वाना माध्यन्दिनानाञ्च "यस्मिन्पञ्च पञ्चजना" इत्यय मन्त्र. समानः, प्राणस्य प्राणमित्यादिवाक्यशेषे काण्वानामन्नस्य पाठो न विद्यते, तेषा पञ्च पञ्चजनाः प्राणादय इति न शक्यते वक्तुमिति । अत्रोत्तरम्–

## ज्योतिषैकेषामसत्यऽन्ने ॥ १३ ॥

एकेषा काण्वाना पाठे असत्यन्ने ज्योतिषा पञ्चजना इन्द्रियाणीति विज्ञायन्ते, तेषा वाक्यशेषः प्रदर्शनार्थः । एतदुक्तम्भवति, 'यस्मिन् पञ्च पञ्चजना' इत्यस्मात् पूर्वस्मिन्मन्त्रे "तन्दे(द्दे)वा ज्योतिषा ज्योतिरायुर्होपासते ऽमृतमि"ति ज्योतिषा ज्योतिष्ट्वेन ब्रह्मण्यभिधीयमाने ब्रह्माधीनस्वकार्याणि कानिचिज्ज्योतींषि प्रतिपन्नानि । तानि च विषयाणा प्रकाशकानीन्द्रियाणीति, 'यस्मिन्पञ्च पञ्चजना' इत्यनिर्द्धारितविशेषनिर्देशेनावगम्यन्त इति । प्राणस्येति 'प्राण'–शब्देन स्पर्शेन्द्रियं[1] गृह्यते, वायुसम्बन्धित्वात्स्पर्शेन्द्रियस्य, मुख्यप्राणस्य ज्योतिश्शब्देन प्रदर्शनायोगात् । 'चक्षुष' इति चक्षुरिन्द्रियम्, 'श्रोत्रस्ये'ति श्रोत्रेन्द्रियम्, 'अन्नस्ये'ति घ्राणरसनयोस्तन्त्रेणोपादानम्, 'अन्न'–शब्दोदितपृथिवीसम्बन्धित्वात् घ्राणेन्द्रियमनेन[2] गृह्यते, अद्यतेऽनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते। 'मनस' इति मनः। घ्राणरसनयोस्तन्त्रोपादानमिति पञ्चत्वमप्यविरुद्धम्। प्रकाशकानि मनःपर्य्यन्तानीन्द्रियाणि 'पञ्चजन'–शब्दनिर्दिष्टानि, तदविरोधाय[3] घ्राणरसनयोस्तन्त्रेणोपादानम्। तदेव "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठित" इति पञ्चजनशब्दनिर्दिष्टानीन्द्रियाणि' 'आकाश'–शब्दप्रदर्शितानि महाभूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्त्वाना ब्रह्माश्रयत्वप्रतिपादनान्न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्गः । अतः सर्वत्र वेदान्ते सङ्ख्योपसङ्ग्रहे तदभावे वा न

१ संस्पर्शनेन्द्रियमिति लि पु· । २ अन्नेनेति लि पु· ।
३ तदविशेषायेति लि· पु ।

कापिलतन्त्रसिद्धतत्त्वप्रतीतिरस्तीति स्थितम् ॥

सङ्ख्योपसंग्रहाधिकरणं समाप्तम् ३ ॥

अथ कारणत्वाधिकरणम् ४ । **कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥**

पुनः प्रधानकारणवादी प्रत्यवतिष्ठते—न वेदान्तेष्वेकस्मात्सृष्टिराम्नायत इति जगतो ब्रह्मैककारणत्वं न युज्यते वक्तुम् । तथा हि, "सदेव सोम्येदमग्र आसी"दिति सत्पूर्विका सृष्टिराम्नायते, "असद्वा इदमग्र आसी"दित्यसत्पूर्विका च, अन्यत्रा"ऽसदेवेदमग्र आसीत्तत्[1] सदासीत्तत्समभव"दिति च । अतो वेदान्तेषु स्रष्टुरव्यवस्थितेर्न्न जगतो ब्रह्मैककारणत्वं न निश्चेतुं शक्यम्, प्रत्युत प्रधानकारणत्वमेव निश्चेतुं शक्यते, "तद्धेदं तर्ह्यव्याकृतमासी"दित्यव्याकृते प्रधाने जगतः प्रलयमभिधाय "तन्नामरूपाभ्यां† व्याक्रियते"त्यव्याकृतादेव जगतः सृष्टिश्चाभिधीयते । 'अव्याकृतम्' ह्यऽव्यक्तम्, नामरूपाभ्यां† न व्याक्रियते न व्यज्यत इत्यर्थः । अव्यक्तं प्रधानमेव । अस्य च स्वरूपनित्यत्वेन परिणामाश्रयत्वेन च जगत्कारणवाक्यगतौ सदसच्छब्दौ ब्रह्मणीवास्मिन्न विरोत्स्येते । एवमव्याकृतकारणत्वे निश्चिते सतीक्षणादयः कारणगताः सृष्ट्यौन्मुख्याभिप्रायेण योजयितव्याः । 'ब्रह्मात्म'-शब्दावपि बृहत्त्वव्यापित्वाभ्यां प्रधान एव वर्त्तेते । अत स्मृतिन्यायप्रसिद्धं प्रधानमेव जगत्कारणं वेदान्तवाक्यैः प्रतिपाद्यते—इति प्राप्ते प्रचक्ष्महे—

'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः' ।

'च'-शब्द'स्तु'-शब्दार्थे । सर्वज्ञात् सर्वेश्वरात्सत्यसङ्कल्पान्निरस्तनिखिलदोषगन्धात् परस्माद्ब्रह्मण एव जगदुत्पद्यत इति निश्चेतुं शक्यते । कुतः । 'आकाशादिषु कारणत्वेन यथाव्यपदिष्टस्योक्तेः,' सर्वज्ञत्वादिविशिष्टत्वेन 'जन्माद्यस्य यत" इत्येवमादिषु प्रतिपादितं ब्रह्म 'यथाव्यप-

१ तदिति नास्ति मु० पु ।

†† एतच्चिह्नान्तर्गतपाठो लि० पु० त्रुटितः ।

नाम्बुजे मुखकमले सारस्वतं सरस्वत्या इदं तत् धिद्योति यावत् जृम्भता वर्धताम् । कौस्तुभधाम्नि विष्णौ तथैव चन्द्रमुकुटे शिवे अद्वैता अभिन्ना मतिः बुद्धिविशेषः भक्तिः खेलतु विलसतु । शेषस्य नागराजस्य फणाञ्चलेषु इव देवीव पृथिवीव सता सज्जनानां सद्मसु गृहेषु लक्ष्मीः वाग्देव्या सरस्वत्या सह मुक्त. त्यक्त वैशसस्य विरोधस्य रस' यया सा तथाभूता दीव्यात् शोभिता भूयात् । यथा शेषफणासु पृथिवी स्थिरा वर्तते तथैव लक्ष्मीरपि भवत्विति भावः ॥ शार्दूलविक्रीडित वृत्तम् ॥ ९५ ॥

जायन्तामिति । सता सज्जनाना गिर' वाणयः अविरामा अनन्ता च या रामचरिते क्रीडा विलसित तया अभिरामा. रमणीया. । पुनः उन्मीलन्ती विकसन्ती या नवमल्लिका तया विरचितं यत् स्रग्दाम पुष्पमाला तद्वद्रम्या मनोहरा' जायन्ताम । याः गिर' पेशलधिय' कोमलबुद्धय सहृदया जना कण्ठेऽपि निवेश्य शब्दतोऽपि ज्ञात्वा अर्थमजानन्तोऽपि रोमाञ्चलोलया अञ्चिता. हर्षपुलकिता. सन्त कान्ताया य बाहुलताविलास तस्य ये महिमाश्लेषा प्रौढालिङ्गनादीनि तानपि तृण तृणवत लघु मन्यते। कान्ताश्लेषादिसुखेभ्योऽपि अधिकतररमणीया रामचरितसम्बन्धिनी कथेति भावः शार्दूलविक्रीडित वृत्तम् ॥ ९६ ॥

इति श्रीमदशेषसज्जनसमभ्यर्चितशासनवितरणलज्जी-
कृतकर्णसौजन्यशीलाद्यधरीकृतरामविविधविरुदाव-
लीविराजमानमानोन्नतमहाराजाधिराजभारतव-
र्षीयसाम्राज्यधुरन्धराग्रगण्यश्रीश्लक्ष्मीश्वरसिंह-
मिथिलेश्वरपादतलाभिवर्तिना आतस्मार्ता-
चाराचरणपरायणसत्कर्मजालप्रसारितदि-
गन्तकीर्तिसच्छ्रोत्रियकुलावतसमैथिल-
प्रवरश्रीतीर्थनाथशर्मणस्तनूजन्मना
श्रीगङ्गानाथेन रचिताया प्रसन्न-
राघवभावबोधिन्यां सप्तमा-
ङ्कव्याख्या ॥ ७ ॥

---

भूबाणरत्नचन्द्राङ्के १९५१ वैक्रमेऽब्दे गुरोर्दिने ।
श्रीमत्कृष्णाष्टमीतिथ्या टीकाऽगात्परिपूर्णताम् ॥ १ ॥
प्रसन्नराघवस्यैषा विवृतिर्भावबोधिनी ।
शोधिता चेतनाथेन गङ्गानाथेन निर्मिता ॥ २ ॥
पितु. श्रीतीर्थनाथस्य प्रभोर्लक्ष्मीश्वरस्य च ।
मातुस्तीर्थलतादेव्या. पादयोरियमर्पिता ॥ ३ ॥

# अथ टीकाकर्तुर्वंशादिपरिचयः

## वैयाकरणप्रवरश्रीयदुनन्दनशर्मणो-
## पनिबद्धः ।

---

पालीकुलाम्भोनिधिजातचञ्च-
च्चन्द्रस्सुधामाऽमृतनाथनामा ।
स्वलौकिकत्वेन सुधांशुबिम्ब
सुधामनादृत्य वचोभिरासीत् ॥ १ ॥

विशुद्धधामा मतिनाथनामा
शिवे सदा ध्यानपरः स साम्बे ।
तस्यात्मजोऽभूदमलो महात्मा
निष्कामकर्मा धृतधैर्यधर्मा ॥ २ ॥

धरानाथशर्मा सदाचारकर्मा
सदानन्दचेता हृतध्वान्तचेता ।
शरच्चन्द्रकीर्तिस्तपश्चारुमूर्ति-
स्तदीयात्मजः श्रोत्रियोऽभूदुदारः ॥ ३ ॥

स्वीयप्रोद्यत्प्रतापप्रलयरविकरातापितारिः प्रसूरि-
र्यत्कीर्तिव्रातदीव्यद्विधुकृतधवलक्ष्मातलो लब्धभूमिः ।
गायत्रीमूलमन्त्रं प्रजपति नितरामात्मशुद्धयै विशुद्धं
सर्वं तीर्थञ्च तस्मादधिवसति हि तं तीर्थनाथप्रसिद्धिः ॥ ४ ॥

सद्भाष्यग्रन्थसुधाकरेण वसुधां सशोभयन्सेवितो
मीमांसादिसमस्तशास्त्रविविधव्याख्यातृभिः सूरिभिः ।
सच्छास्त्रैः शरदिन्दुकुन्दयशसा भूमण्डले मण्डितो
लोकानन्दकरोऽनवद्यतनुभृत्कारुण्यविभ्राजसौ ॥ ५ ॥

प्रोद्यत्खण्डवलाकुलाम्बुनिलये श्रीवासुदेवो नृपो
जातः श्रीक्षितिपालमुख्यमुकुटालङ्कारचूडामणिः ।

साक्षाच्चन्द्र इवांशुभिः प्रमुदितो रत्नैरनेकैर्युता
कन्या काञ्चनकान्तिमुग्रतपसे तस्मै ददौ दक्षिणाम्॥६॥
ख्यातोऽसौ मतिमानतीवबलवान्धर्मावतारोऽभव-
त्पाहीटोलनिवास उज्ज्वलतनुर्ब्रह्मैकनिष्ठापरः।
श्रौताचारविचारतः कतिविध कृत्वा च सौख्यम्मख
पञ्च प्राप सुतान् प्रपञ्चरहितान्प्रोद्यत्प्रतापान्वितान्॥७॥
तपस्याऽभूद्वश्या हरिहरविरञ्च्यादिभजना-
दनल्पद्रव्याणां सुरतरुरधस्ताद्वितरणात्।
लसल्लावण्यागात्कुसुमशरलावण्यमतुल
मनोज्ञाद्गाम्भीर्याज्जलनिधिरहो यस्य कृतिनः ॥ ८ ॥

प्रातःक्रियाद्याह्निककर्मनिष्ठः
सत्योग्रनिष्ठ स च धर्मनिष्ठः।
श्रेष्ठस्सतामुग्रयशोगरिष्ठो
वेदार्थनिष्ठो भुवि सुप्रतिष्ठः ॥ ९ ॥
आरामशोभाकुसुमप्रतानै-
रद्यापि वर्वर्ति सुगन्धजालैः।
प्रासादशोभा विशदा च यस्य
प्राकारशोभायतविस्तृतैश्च ॥ १० ॥
सच्छास्त्रसशोभितपाठशाला
सस्थापिता येन च धर्मशाला।
स्फीतान्तराला सुधृता विशाला
रुद्राक्षमाला स्फटिकाक्षमाला ॥ ११ ॥
मत्तातपादैर्गणकैर्वरेण्यै-
स्तत्त्वार्थसन्दर्शिभिराप्तविद्यैः।
सकीर्तिता यस्य च जन्मपत्री
प्रख्यातकीर्तेः फलिता बभूव ॥ १२ ॥
देवप्रतिष्ठा विविधप्रकारैः
सच्छारदीयोत्सवमाततान।
मिष्टान्नभोज्यैस्स च नृत्यवाद्यै-
रद्यापि तत्तत्तनयः करोति ॥ १३ ॥

तडागकूपादिकयज्ञकर्म
तथात्मजानामुपनीतिकर्म ।
सदक्षिणै सद्द्रविणैर्विधिज्ञः
कुटुम्बभोज्यैः कृतवान्विधिज्ञः ॥ १४ ॥
आजन्मधर्माचरणेन कालः
सयापितो येन करालजालः ।
भस्मत्रिपुण्ड्राञ्चितदिव्यभालः
सम्यक्तपस्याधवलीकृबालः ॥ १५ ॥
अमाकृत्यं गयाकृत्यं कृत्यं चापरपाक्षिकम् ।
कृतवान्सर्वसम्पन्नः शुद्धं वार्षिकमेव सः ॥ १६ ॥
स्फूर्जद्धूर्जटिरेव किन्त्रिनयनो जिष्णुश्च विष्णुर्नु कि-
म्पूज्योऽङ्गीकृतबाहुयुग्मललितो ब्रह्मा किमेकाननः ।
ऊरीकृत्य वपुस्तु पौरुषमिदं जातो गुरुः किं विधेः
किं वा कोऽपि गुणग्रहीतृगणितः श्रीतीर्थनाथोऽभवत् १७॥
तदीयात्मजो ज्येष्ठ आनन्दकारी
सतामग्रणीरग्रजन्मोपकारी ।
अहो धर्मपुत्रेण तुल्यो लसच्छ्री-
रसौ विन्ध्यनाथाह्वयो धर्मधैर्यः ॥ १८ ॥
विन्ध्यक्षेत्रमतीव सुन्दरतरं देवी च विन्ध्येश्वरी
विन्ध्याद्रिद्रुगतिश्च सोऽपि सविता यावद्विभू राजते ।
यावद्विन्ध्यगुहर्विभाति गगने विन्ध्याचलः क्ष्मातले
तावत्कालमयं जयी विजयतां श्रीविन्ध्यनाथाह्वयः ॥१९॥
श्रीमद्राजकलापविस्तृतशिरस्सेव्यः सुधावाक्सुधीः
स्वीयोत्कृष्टयशोवशीकृतजगज्जायत्प्रतापाग्रणीः ।
न्यक्कारं सुरपादपस्य च वसुव्रातव्ययैर्नार्थिनि
कुर्वाणोऽपि विराजतेऽति वितरञ्छ्रीविन्ध्यनाथाभिधः॥२०॥
तस्यानुजः श्रीगणनाथनामा
सभ्येषु मुख्योऽखिलधर्मनिष्ठः ।
दानैरनेकैस्सुरवृक्षतुल्यः
शौर्येण भीमस्स च दर्शनीयः ॥ २१ ॥

ताराभक्तिसुधार्णवेषु महताऽभ्यासेन सलोडय-
न्ब्रह्मानन्दसहोदरं स कुरुते विज्ञानमाध्यात्मिकम् ।
सम्प्राप्याह्निककर्मशर्मशरणान्देवीपदाम्भोरुह
ध्यायश्चन्द्रयशोऽभिशोभितमहाभूमण्डलः पण्डितः ॥२२॥

शास्त्राब्धिम्महताऽचलेन नियमाभ्यासेन निर्मथ्य त-
त्सञ्जातद्विजराजराजितयशास्तस्यानुजो बुद्धिमान् ।
गङ्गानाथ इति प्रसिद्ध इह सज्ज्ञानात्मबोधोदयः
पार्थो भीमपराक्रमैरिव लसच्छ्रीशौर्यधर्मान्वितः ॥ २३ ॥
श्रीमन्मैथिलराजराजिमुकुटालङ्कारहीरः परो
दृप्यच्छत्रुकरीन्द्रवृन्ददलने सिंहस्स लक्ष्मीश्वरः ।
पातुम्पार्थमिव व्यधात्करुणया सद्विद्यया ऽलङ्कृत
य शास्त्राण्यवलोकितुञ्च दिशति प्रोद्यत्प्रतापातपः २४
यल्लक्ष्मीरपि वाक्सु सद्म विमलं स्वेशाद्भयात्सर्वदा
त्यक्त्वा प्रभवत्यनल्पविविधप्रेम्णाद्विरोधं जहौ ।
मन्येऽधोभुवनात्प्रकाशितजला गङ्गा स्वबाणास्त्रिभि-
र्गङ्गानाथ इति प्रतापतपनस्सम्प्यग्व्यनक्त्यर्जुनः ॥ २५ ॥

ततोऽनुजवरो द्विजो विजयनाथनामा बली
विपक्षदलकर्तको गणितशास्त्रपारङ्गमः ।
असौ विजयतेतरां विविधसूरिसेव्योऽञ्जसा
दयालुरिव पाण्डवः कृतपरोपकारो महान् ॥ २६ ॥

तदीयानुजो वैद्यनाथाह्व एषः
स्फुरत्प्रज्ञया देवतुल्यो लसच्छ्रीः ।
धरामण्डले दर्शनीयो हि बालो
ऽपरो वैद्यनाथो लसद्विद्यगाथः ॥ २७ ॥
एवंविधैस्सत्तनयैरुपेतो
नित्यक्रियोऽभूत्सुविचारदक्षैः ।
विद्याविनीतैः कृतकृत्य एष
वेदान्तसिद्धान्तविचारणैश्च ॥ २८ ॥
यः श्रोत्रियः श्रोत्रियमण्डलीभि-
र्नित्यं सभाम्मण्डितमण्डलीभिः ।

गार्हस्थ्यसद्धर्मविचारशालि-
मत्तातपादैर्गणकैर्व्यतानीत् ॥ २९ ॥

लोकोत्तरं यस्य सुकर्म चञ्च-
च्चान्द्री कला लौकिकतेव शुभ्रा ।
प्रोद्यत्सहस्रांशुसहस्रकान्ति-
सत्क्षान्तिसच्छौर्यसधर्ममूर्तिः ॥ ३० ॥

वाराणसीं गन्तुमियेष यत्रा-
त्पुत्रैर्वृतो भूरिसमाधिनिष्ठः ।
आनन्दसन्दोहद आप्तविद्यो
योगीश्वरः किं स कवीश्वरः किम् ॥ ३१ ॥

विश्वेश्वरस्तापहरो हि यत्र
संसारयादःपतिकर्णधारः ।
मोक्षोत्सुकानां शरणागतानां-
मभीष्टदस्तारकमन्त्रधारः ॥ ३२ ॥

यत्रान्नपूर्णाऽपि मनोरथांस्तै-
रन्नादिभिः पूरयितुं समर्था ।
निस्सीमसौन्दर्यचयं वहन्ती
साक्षाज्जनानन्दकरी भवानी ॥ ३३ ॥

श्रीढुण्ढिराजोऽखिलदेवराजो
यत्राश्रिताघौघविनाशकारः ।
पूजोपचारैरभिपूज्यमाना
देवाः कियन्तः कति सन्ति सन्तः ॥ ३४ ॥

गङ्गातरङ्गैरभिसेव्यमाना
प्रासादमालापरिशोभिता सः ।
चञ्चत्सुवर्णाञ्चितचारुशोभा
सार्धं कलत्रेण जगाम काशीम् ॥ ३५ ॥

प्रणम्य काशीं शिरसा चिराया-
वगाह्य गङ्गाम्मणिकर्णिकायाम् ।
सपर्ययाऽधिष्ठितदेवताया
अकः पयस्तोषमयो विशुद्धः ॥ ३६ ॥

स्मारं स्मारं स्मरारेरभिलषितमनाः पादयुग्मम्मुरारेः
पायम्पायञ्चितान्तं कलिमलहरणं पावन शर्म गाङ्गम् ।
धावन्धावम्महात्मा धवलितहृदयो वीतरागो गरीयान्
काशीवासं स चक्रे कतिपयदिवसैस्तारक वैभवाब्धेः ॥३७॥

काश्यां ससारतारप्रभुमनुजपतो रूपमैशम्भजन्ते
जीवा अन्ते रमन्ते श्रुतिभिरवगतं तद् दृढ कर्तुकामः ।
आगच्छद्वासुकिस्त्व वलयितुमनघं सस्रुतिक्रान्तिभञ्जी
ज्ञानाग्निस्तत्र साक्षान्मनुजनिभिरथालोकि साश्चर्यमार्यैः३८

पक्षेन्दुष्टनिशाकरैः परिमिते शाके तुरीये तिथौ
चैत्रे मासि सिते दले निजतनुन्त्यक्त्वाऽप्य मोक्षम्परम् ।
मध्याह्ने मणिकर्णिकासुरधुनीतीर गतोऽसौ सुधीः
सद्योज्यात्मनि चात्मना स्मृतिपरः कैलासमेवागमत् ॥३९॥

सुश्रीवञ्चञ्चनोरे द्विजवरनिकरे भूरिसत्सूरिपूरे
वासी ज्योतिर्विनोदैर्विगमितसुवया द्वारकानाथशर्मा ।
स्वाध्यायाध्यापनाद्यैर्विगलितकलुषश्चारुमूर्तिश्चतुर्भि-
र्धीरैः पुत्रैरुपेतोऽभवदखिलजनानन्दसन्दोहदस्सः ॥ ४० ॥

तत्पुत्रो गुरुपादपद्मयुगल ध्यायन्द्वितीयः सुधी-
र्बाढ श्रीयदुनन्दनो व्यरचयत्तज्जन्मवृत्तान्त्विदम् ।
भूयात्सज्जनमानसामृतमयं निर्मत्सरान्प्रार्थये
स्वीकुर्वन्तु बुधा यथामति कृत निन्दन्तु वा मत्सराः॥४१॥

त्वये पदादावपि प्रसङ्गात् । तथाप्रतीयमानत्वमपि न समवायमनन्तर्भा-
व्य शक्यनिर्वचनमिति । समवायो व्यापक इति वार्तिकम् । तत्र यद्यपि
परममहत्परिमाणयोगः सर्वमूर्त्तसंयोगित्वं वा तत्र न संभवति तथापि
सर्वत्रास्तित्वमेव तत् । निरूपिता अर्थाः ।

बुद्धिरुक्ता सान्तःकरणा प्रमैव । अविद्यावृत्तिः शुक्तिरजताद्याकारा
भ्रम इत्यौपनिषदाः । वय पुनरन्तःकरणस्यानवयवद्रव्यत्व ज्ञानस्य च
प्रत्यक्षे विषयतामिच्छन्तस्तथा नाचक्ष्महे ।

आत्मग्राहकमिन्द्रियं मनः । तच्चोक्तमेव । प्रवृत्तिर्धर्माधर्मौ । दोषा
रागद्वेषमोहाः । प्रेत्य मृत्वा भवन जन्म प्रेत्यभावः । मरण प्राणशरीरवि-
भागः । जन्म अपूर्वाभिः कार्येन्द्रियवेदनासम्बन्धः । क्त्वार्थश्च पूर्वकाल-
श्चेति तु नवीनाः । समानकर्तृकत्वमिति प्राभाकराः । तदुभयमिति
वैय्याकरणभट्टाश्च । आनन्तर्यमिति तु मणिकृतः । उत्तरकालत्वमिति
वयम् । इण्धातुर्यद्यपि गत्यर्थस्तथापि प्रेत्येति प्रोपसदाने मरणमाह ।
एवं च उपसर्गाः द्योतका एवेति मतमस्माकम् ।

के चित्तु चार्वाका इत्याहुः । इवादिशब्दा अपि सादृश्यादिद्यो-
तकाः कथमन्यथा गौरिवेत्यादौ प्रथमावरुद्धस्य प्रातिपदिकार्थस्य सम्ब-
न्धित्वेनान्वयः । के चित्वव्ययेषु भिदैव व्युत्पत्तिरित्याहुः ।

फलं भोगः । दुःखमेकविंशतिप्रभेदभिन्नम् । मोक्ष आत्यन्तिकी
दुःखनिवृत्तिः । स चैकविंशतिप्रभेदभिन्नदुःखहान्या । तानि च षडिन्द्रियाणि
षड्बुद्धयः षड्विषयाः शरीर सुखदुःखे चेति । शरीर दुःखायतनतया
इन्द्रियाणि विषया बुद्धयश्च दुःखसाधनतया सुख च दुःखानुषङ्गाद्दुःख-
मित्युच्यते । दुःखानुषङ्गोऽपि दुःखहेत्वनुषङ्गात् । साधनपारतन्त्र्यं
क्षयित्व कामश्चेति दुःखहेतवः सुखानुषङ्गिणस्तत्र पारतन्त्र्य दुःखहेतुत-
याऽतिप्रसिद्धम् । यदाहुः । सर्वं परवश दुःखमिति ।

क्षयित्वमपि तथा । इष्टयोगे दुःखस्यानुभविकत्वात् । तथा कामो-
ऽपि दुःखहेतुः । तथा हि काम इच्छा । सा च सुखतत्साधनयोर्व्या-
पिका । न हि सुख वा तत्साधन वाऽनिच्छन्तः सुख नाम । योगिनामपि

संसारितादशायां सुखमिच्छतामेव सुखमिति व्यभिचारः । तत्रान्त्या स्वरूपतः कार्यतश्चाधर्मजननद्वारा च दुःख फलति । आद्या च शरीरादिपाटवे सत्यसतीव । तत्र चरमा दुःखहेतुरेव शरीरादिपाटवेऽपि सविघ्ना निर्विघ्ना च । तत्राद्या दुःखमेव सूते । निर्विघ्नाप्यनिष्टसभिन्नविषया तद्भिन्ना च । तत्र प्रथमावश्यं दुःखहेतुः । यथा मधुविषसपृक्तान्ने भोजनेच्छा । द्वितीया तु विफला सफला च । तत्र प्रथमानिष्टहेतुरेव । द्वितीया तु विलम्बितफला अविलम्बितफला च । तत्राद्यावश्यमनिष्टमुत्पादयति । द्वितीयाप्यनायितविशुद्धा तद्विशुद्धा च । तत्र प्रथमा दुःखहेतुः । द्वितीया तु विषयस्य परिणतिविरसत्वाद्दुःखमेव करिष्यति अतिव्यामोहाद्विषयेष्वेव मग्नस्येच्छान्तरमेव वा । उभयथाप्यनर्थमूलम् आद्यायां सुखान्ते दुःखावश्यम्भावात् । अन्त्यायां इच्छान्तरं यदि दु खस भिन्नविषयकम् । तदा दुःखावश्यम्भावादित्येव सुखानुषक्तः कामोऽवश्यं दुःखहेतुरिति । नित्यसुखाभिमुक्तिरिति भाट्टाः । आत्यन्तिको दुःखप्रागभावः सेति प्रभाकाराः । निरुपप्लवो विज्ञानसन्तान इति बाह्याः । आत्महानिरिति तदेकदेशिनः । दुःखात्यन्ताभाव इति लीलावतीकारः । अविद्यानिवृत्त्युपलक्षितमात्मस्वरूप मुक्तिरित्यौपनिषदाः । एकविंशतिदु - खहानिश्चानागतयोर्धर्माधर्मयोरनुत्पादेनोत्पन्नयोश्चोपभोगात्प्रक्षयेणेति वार्तिककृतः । उपभोगः कायव्यूहेनेति टीकाकृतः । तदाहुः । संशयप्रयोजनादितत्त्वज्ञानपरिशोधितन्यायमार्गः खलु हेयोपादेयभूतद्वादशविधप्रमेयतत्त्वपरिभावनभुवा प्रसंख्यानेन निर्मृष्टनिखिलप्रवृत्तिहेतुदोषानुषङ्गोऽप्रवर्त्तमानो न शरीरेन्द्रियादिहेतुमपूर्वधर्माधर्मप्रचयमुपचिनोति । अनादिभवपरम्परोपचितधर्माधर्मप्रचयमनन्तमप्यनियतविपाकसमयमपि प्रसंख्यानपरिपाकप्रभावात्परितस्तत्तदुपभोगभागिनः कार्यान्निर्माय तत्फलोपभोगान् प्रक्षिणोति । अचिन्त्यसामर्थ्यातिशयो हि समाधिः । यदाहुरत्रभवगवन्तः पतञ्जलिपादाः । को हि योगप्रभावादृतेऽगस्त्य इव समुद्रं पिबति स इव च दण्डकारण्य सृजतीति ।

अत्र निबन्धकृतः । कायव्यूहेन भोगोयं मोक्षाय त्वरमाणस्यैव ।

यस्तु न त्वरते यदा भविता कर्मक्षयस्तदा भविता मोक्षः किन्त्वस्त्वरया प्राप्ता तावन्निरपाया भूमिरिति समर्थितहृदयो न त प्रतीत्याहुः ।

वेदान्तविदस्तु तत्त्वज्ञानात्कर्मक्षयमाहुः । न त्वविद्यायास्तेन नाशे निराश्रयकर्मस्थित्यनुपपत्तेस्तन्मते शोभते नास्माकमपि कर्मणामा त्माश्रयत्वोपगमात् । का गतिस्तर्हि

क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर इति ।

श्रुतेरिति चेत् । नेय ज्ञानस्य कर्मक्षयहेतुता व्यवस्थापयति । किं तु तत्त्वदर्शनध्वंसवर्तिकर्मक्षयम् । स चानुपपन्नः । सति तत्त्वज्ञाने समाधि विशेषासादितकायव्यूहेन कस्य चित् । कस्य चित्तु क्रमोत्पन्नै. कायनिका येरेवात्यन्तसुखदुःखसंविज्ञानेनैवोपपत्तेः । अयमेव तत्त्वविदस्त्वदितरस्य च विशेषः । यदादिमस्य कर्मध्वंसकर्मप्रागभावासहवृत्तिर्नेतरस्येति ।

यत्तु तत्त्वज्ञानस्य कर्मक्षये जनयितव्ये युगपद्भोगो व्यापारो भोग- मात्रस्य तत्त्वज्ञानव्यभिचारेऽपि तस्याव्यभिचारादित्युपाये लिखितम् । तच्चिन्त्य युगपद्भोगत्वेन धर्माधर्मनाशकत्वाभावाद्विलम्बितमुक्तस्य धर्मा- धर्मनाशे युगपद्भोगस्य व्यभिचारच्चेति दिक् ।

अत्र लीलावतीकाराः । सन्ति के चिदात्मान उपराः ये मोक्षा- योग्या इत्याहुः । तन्न । दुःखत्वं ध्वंसप्रतियोगितावच्छेदक जन्यमात्रवृ- त्तिधर्मत्वादित्यनुमानेन तन्मुक्तिसिद्धेः । ततः सर्वमुक्तिसिद्धौ तदाधार कालोऽपि सिध्यति स एव च महाप्रलय इत्युच्यते । तत्र च प्रागभाव- प्रतियोगिमात्रमवतिष्ठते । न तु खण्डप्रलय इव जन्यगुणोऽपि । जन्यद्र- व्यानाधारकालत्वमेव खण्डप्रलयत्वम् ।

कथ खण्डप्रलय इति चेत् । महेश्वरे सञ्जिहीर्षासमकाल पृथि- व्यादिचतुष्टयारम्भकपरमाणुषु नोदनादभिघाताद्वा क्रिया ततो विभागः, ततो द्व्यणुकारम्भकसंयोगनाशः, ततो द्व्यणुकनाशे समवायिकारणनाशात् त्र्यणुकनाशः, द्व्यणुकादिस्थूलान्ताना नाश इत्येकः प्रकारः । स्थूलानामव- यवसंयोगनाशान्नाशः, तस्यापि स्वावयवसंयोगनाशादेव तत्पूर्वतत्पूर्वेषा- मित्यपरः प्रकारः । सृष्टिस्तु अदृष्टवदात्मसंयोगेन महेश्वरसिसृक्षासम

कालीनाया परमाणुषु क्रियाया परमाण्वोः संयोगे द्व्यणुकं त्रिभिर्द्व्यणुकैः त्रसरेणुः तैश्चतुर्भिश्चतुरणुकम् ।

ननु द्रव्यनाशः क्व चित्समवायिनाशात्क्व चिच्चासमवायिनाशादतोऽननुगमः । ततश्च व्यभिचारादकारणत्वमिति मैवम् । निमित्तेतरकारणनाशस्य अननुगतस्य सत्त्वादिति ।

निरूपितं प्रमेयम् ॥

विरुद्धयोरेकसम्बन्धावगाहिज्ञानं संशयः । एकस्मिन्धर्मिणि विरुद्धनानाप्रकारकं ज्ञानं तदिति तु सम्प्रदायः । संशयत्वजातिर्मानत्वव्याप्या । व्याप्यवृत्तिश्चेत्युपाये ।

स च त्रिविधः । साधारणधर्मधीजन्यः । यथोर्ध्वत्वस्य स्थाणुपुरुषसाधारणधर्मस्य ज्ञानादयं स्थाणुः पुरुषो वेति । द्वितीयो विप्रतिपत्तिजः । यथा शब्दो नित्य इत्येकः प्राह शब्दोऽनित्य इत्यपरः प्राह । तदनयोर्विप्रतिपत्त्या विरुद्धार्थकवाक्येन श्रोतुर्भवति संशयः शब्दो नित्योऽनित्यो वेति । तृतीयोऽसाधारणधर्मधीजन्यः । यथा गन्धवत्त्वस्य नित्यादाकाशादेरनित्याच्च जलादेर्व्यावृत्तस्य ज्ञानाद्भूमिर्नित्या न वेति संशयः ।

त्रिविधेऽपि संशये कोटिद्वयज्ञानं कारणम् । विशेषदर्शनं निश्चयसामग्रीनिश्चयश्च विरोधिनः । निश्चयश्च संशयसमानविशेष्यकः समानप्रकारकश्च तथा ।

एवं विपरीतज्ञानमात्रे दोषोऽपि हेतुः । भ्रमजनकदोषात्संशयजनको दोषो विजातीय एव । दोषश्च पुरुषविशेषकालविशेषदेशविशेषविषयविशेषनियतः । तेन कस्य चित् कदा चित्कुत्र चित् क्व चिद्विषये भ्रमसंशयौ । अत एव वातायनबहिस्थेन वातायनान्तःस्थितादर्शनं तैश्च बहिस्थदर्शनमुपपन्नम् । विपरीतज्ञानमात्रे विशेष्यज्ञानं कारणम् ।

आरोपमात्रे सारूप्यज्ञानं कारणम् । न च पीतः शङ्ख इति भ्रमे व्यभिचारः श्वेतपीतयोः सारूप्याभावादिति वाच्यम् । पीतशङ्खयोः सामानाधिकरण्यमात्रमारोप्यते । तत्सारूप्यं च इहाप्यसंसर्गाग्रहोऽस्त्येवेति टीका-

कारवचनात्। न ह्यत्र पीतगुण आरोप्यते। अपि तु पीतशङ्खावारोपविषयौ ससृष्टस्वभावत्वमेव आरोप्यम्। तथा च ससृष्टस्वभावाभ्यामनयोः सारूप्यमिह प्रयोजकं तच्चेहाससर्गाग्रहपदेन व्यधिकरणाग्रहणाविषयत्वरूपमेवोपदर्शितमिति टीकाव्याख्याननिबन्धकृतः। तथोपाये़ऽपि। न ह्यत्र गुणारोपः सम्भवति विशेषदर्शनसत्त्वात्। न च साक्षात्कारिभ्रमे साक्षात्कारिविशेषदर्शनमेव विरोधि, मानाभावात्। दिङ्मोहादावपि प्राचीप्रतीच्योः ससृष्टत्वमेव आरोप्यत इति सिद्धान्तः। ससृष्टस्वभावत्व केवलान्वयि। अतो न तद्विरोधिव्याप्यदर्शनमस्तीति न तदारोपासम्भव इत्यादि।

ननु तथापि लोहितस्फटिक इत्यनुभूयमानारोपे सारूप्यज्ञानस्य व्यभिचारः। आरोप्यस्मरणद्वारा हि तदुद्बोधनेऽसाक्षादिति चेन्न। सारूप्यज्ञानजन्यस्य सारूप्यविशिष्टारोप्यज्ञानस्यारोपहेतुत्वात्। आरोप्यज्ञान च स्मृतिरनुभवो वेत्यन्यदेतत्।

अन्ये तु यत्र सारूप्यमेव दोषस्तत्रारोप्योपस्थापकतया तदुपयोगः। यत्र तु पीतादिरेव दोषस्तत्रारोप्यस्थितिः प्रत्यक्षादेवेत्याहुः। अनुभूयमानारोपस्मर्यमाणारोपतया आरोप इव सशयोऽपि सम्भावनातदितरभेदेन द्विविधः। तत्रोत्कटकोटिकः सशयः सम्भावना। कोटिः प्रकारः। उत्कटत्वं च कोटेर्व्याप्यवृत्तिर्जातिविशेषः। भूयः सहचरितत्वमेव वा यथा सति तोयदे तोय भविष्यति न वेति। तदितरा स्थाणुर्वा पुरुषोवेत्यादिका।

पुरुषं प्रवृत्तये युनक्तीति प्रयोजनम्। तच्च द्विविधम्। सुखं दुःखाभावश्चेति।

वादिप्रतिवादिनोः प्रतिपत्तिविषयोऽर्थो दृष्टान्तः। स द्विविधः। साधर्म्यवैधर्म्यभेदेन। यथा यो धूमवान्सोऽग्निमानित्यत्र महानसम्। यो न धूमवान्नासौ वन्हिमान् इत्यत्र ह्रदः।

अभ्युपगम्यमानोऽर्थः सिद्धान्तः। अर्थस्याभ्युपगमो वा। स चतुर्विधः। सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमभेदेन। सर्वतन्त्राविरुद्धः।

स्वतन्त्रोऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः। यथा घ्राणादीन्द्रियाणि गन्धादय इन्द्रियार्थाः। समानतन्त्रसिद्धः परतन्त्रासिद्धो द्वितीयः। यथा नासत आत्मलाभो न सत आत्महानमिति साङ्ख्यानाम्। यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः। यथा क्षित्यादिकर्त्तुः सार्वज्ञम्। अपरीक्षितार्थाभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्त.। यथा अस्तु शब्दो द्रव्यं स तु नित्योऽथानित्य इति नैय्यायिकस्य।

न्यायैकदेशा अवयवाः। न्यायश्चानुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकं वाक्यम्। यथा पर्वतो वन्हिमान् धूमात्। यो यो धूमवान्। स वन्हिमान्। यथा महानसम्। वन्हिव्याप्यधूमवांश्चायं तस्माद्वन्हिमान् इति। व्यतिरेकिणि तदुदाहरणादौ विशेषः। यदाहुर्भट्टाचार्यचरणाः।

व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते॥

तेन यो न वन्हिमान् नासौ धूमवान् न चायं धूमवान् तस्मान्नात्र वन्हिरिति। ते च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि अवयवा इति सूत्रस्वरसात्।

ननु मीमांसकानामिवोदाहरणान्ता उदाहरणाद्या वा त्रय एव। न वा सौगतानामिवोदाहरणोपनयौ द्वावेव। न वा प्राचां नैय्यायिकानामिव जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयव्युदासैः सह दश। तत्र न्यायः प्रथमावयवः प्रतिज्ञा। द्वितीयो हेतुः। तृतीय उदाहरणम्। चतुर्थ उपनयः। पञ्चमो निगमनम्।

व्याप्यस्याहार्यप्रसञ्जनं तर्कः। आत्माश्रयान्योन्याश्रयचक्रकानवस्थालाघवानि तु तर्कप्रतिरूपकाणि। स चायं विरोधिशङ्काकालीनप्रमाणमात्रसहकारी। यथा घटसत्त्वशङ्कायां यद्यत्र घटोऽभविष्यत् भूतलमिवाद्रक्ष्यतेति प्रत्यक्षस्य। यदि निर्वन्हिः स्यान्निर्धूमः स्यादित्यनुमानस्य। गवयपदं यदि गवयत्वप्रवृत्तिनिमित्तकं न स्यान्निष्प्रवृत्तिनिमित्तकं स्यादित्युपमानस्य। यजेत स्वर्गसाधनमित्यत्र धात्वर्थौ यदि समानपदोपात्त

तया साध्यः स्यात्तदा तस्य दु:खतया वेदकर्त्तुराप्तत्व विधेश्च दृष्टोपायत्व वाक्यस्य प्रवर्त्तकज्ञानजनकत्व च न स्यादिति शब्दस्य ।

न च तर्को न सहकारी विरोधिशङ्कानवतारदशायां तेन विनापि प्रमोत्पादनात् । किं तु विरोधिशङ्कानिवर्त्तक एव स इति वाच्यम् । सशयोत्तरप्रत्यक्षे विशेषदर्शनस्येव तस्यापि विशेषदर्शनहेतुत्वात् । यथा हि तत्र स्थाणुरयं स्थाणुरेवायमिति निश्चयद्वयमानुभाविकम् । अत्र द्वितीये कोटिव्यवच्छेदोऽपि भासत इति कार्यवैचित्र्यात् कारणवैचित्र्यमित्यन्वयव्यतिरेकाभ्यां विशेषदर्शनस्य कारणत्व कल्प्यते तथा प्रकृतेपीति । अस्तु वा तर्कस्य प्रमाणसहकारित्वात्पर्यवसानं मिथो विरोधश्चेति षड् दोषा' ।

विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ।

तत्त्वबुभुत्सो. कथा वादः । अत्र च न्यूनाधिक्यापसिद्धान्ता हेत्वाभासाश्चेत्यष्टौ निग्रहस्थानि । साधनदूषणविषयो नानाप्रवक्तृको वाक्यसंदर्भः कथा ।

उभयसाधनवती विजिगीषुकथा जल्पः । जल्पभिन्नाविजिगीषु कथा वितण्डा ।

अनुमितिकारणविघटकज्ञानविषया हेत्वाभासा. । ते चासिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टाः पञ्चैव । न तु भट्टानामिवासिद्धसव्यभिचारविरुद्धास्त्रय एव । न वा बाह्यानामिवासिद्धिमात्रम् । न वोपाधिमादाय षडपि । न वा लीलावतीकृत इव सत्प्रतिपक्षस्य हेत्वाभासत्वाभावः । बाधस्य चानेकान्तान्तर्भावः ।

तत्र व्याप्तिपक्षधर्मताभ्यां निश्चयः सिद्धिः । तदभावोऽसिद्धिः । सा चाश्रयासिद्धिस्वरूपासिद्धिव्याप्यतासिद्धिभेदात्त्रिविधा । आश्रयासिद्धिरपि आश्रयविशेषणासिद्ध्या आश्रयस्वरूपासिद्ध्या च द्विविधा । यथा अनित्यतया निश्चितं पक्षीकृत्य घटोऽनित्यः कार्यत्वादित्येव साधने प्रथमा । अत्राश्रयस्य घटस्य विशेषणं पक्षत्वमसिद्धम् । साध्यस्य निश्चयात् सिद्धसाधनमपि हेत्वाभासो न्यायाचार्यैः कुसुमाञ्जलावुक्तः मणिकृतस्तु तथा न मन्यन्ते ।

हेतोराश्रयेऽभावः स्वरूपासिद्धिः । यथा घटोऽनित्यः श्रावणत्वादित्यत्र । भागासिद्धिरप्यंशतः स्वरूपासिद्धिः । यथा परमाणवोऽनित्या गन्धवत्त्वादित्यत्र गन्धवत्त्वम् ।

व्याप्याभावो व्याप्यत्वासिद्धिः । सा च क्व चित्साध्याप्रसिध्या यथा घटः क्षणिकः सत्त्वादित्यत्र सत्त्वे । क्व चिदुपाधिसद्भावात् । यथा सश्यामो मित्रातनयत्वादित्यत्र मित्रातनयत्वे । क्व चिच्च विशेषणवैयर्थ्येन । यथा वन्हिमान् नीलधूमत्वादित्यत्र धूमे । धूमवत्त्वसमानाधिकरणवन्हेरित्यत्र तु व्यर्थविशेष्येण । ये चाव्याप्त्यतिव्याप्त्यसम्भवादितो लक्षणस्य दोषास्ते तु भागासिद्धिव्यभिचारस्वरूपासिद्धिष्वेवान्तर्भवन्ति ।

उपाधिस्तु साध्यव्यापकत्वे सति साधनाव्यापकः । स च त्रिविधः । शुद्धसाध्यव्यापकः । पक्षधर्मावच्छिन्नसाध्यव्यापकः । साधनावच्छिन्नसाध्यव्यापकश्चेति । तत्र धूमवान् वन्हेरित्यत्र आर्द्रेन्धनवत्त्वम् । आर्द्रेन्धनप्रभववन्हिमत्त्व वा प्रथमः । समव्याप्त एवोपाधिरित्याचार्याः । विषमव्याप्तोपीति मणिकृतः । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र- वन्हिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वं द्वितीयः । आत्माप्रत्यक्षः जन्यद्रव्यत्वादित्यत्र प्रत्यक्षपरिमाणवत्त्व तृतीतः । ते च पुनर्द्विविधाः । निश्चिताः संदिग्धाश्च । अन्त्याश्च साध्यव्यापकत्वसंदेहात् साधनव्यापकत्वसंदेहात् तदुभयसंदेहात् । दूषकता चोपधेः स्वव्यभिचारेण साध्यव्यभिचारोन्नायकतया स्वव्यतिरेकेण सत्प्रतिपक्षतया वा । तथा हि इदं साध्यव्यभिचारि साध्यव्यापकव्यभिचारित्वाशे अवच्छिन्नसाध्यव्यापकव्यभिचारित्वाद्वेति । यथासंख्य शुद्धसाध्यव्यापकावच्छिन्नसाध्यव्यापकाभ्या व्यभिचारानुमानम् । तथा पक्षः साध्याभाववान् साध्यव्यापकरहितत्वाद् इति ताभ्या सत्प्रतिपक्षः । अय हेतुः साध्याव्याप्यः साध्यव्यापकाव्याप्यत्वादिति व्याप्यत्वासिद्ध्युन्नायकतयापि दूषकत्वमिच्छन्ति ।

संदिग्धोपाधयस्तु व्यभिचारसंदेहाधायकतया दूषणानि ।

साध्याभावव्याप्यो हेतुर्विरुद्धः । यथा शब्दस्यानित्यत्वे साध्येऽजन्यत्वम् ।

'आत्मनस्तु कामाये'त्यस्य जीवात्मपरत्वेऽपि "आत्मा वा अरे द्रष्टव्य" इति तु परमात्मविषयमेव। तत्राप्यय[1]मर्थः—यस्मात्पत्यादीनामिष्टसम्पत्तये तत्परवशेन पत्न्यादयः प्रियत्वेन नोपादीयन्ते, अपि त्वात्मेष्टसम्पत्तये स्वातन्त्र्येण[2] स्वप्रियत्वेनोपादीयन्ते, तस्मात्स एवात्मनो निरुपाधिकनिर्दोषनिरवधिकप्रियः परमात्मा स एव हि द्रष्टव्यः, न दुःखमिश्राल्पसुखदुःखोदर्काः परायत्ततत्तत्स्वभावा पतिजायापुत्रवित्तादयो विषया इति॥ अस्मिंस्तु प्रकरणे जीवात्मवाचि[3]शब्देनाऽपि परमात्मन एवाभिधाना'दात्मनस्तु कामाय' 'आत्मा वा अरे द्रष्टव्य' इति पूर्वोक्तप्रक्रिययोभयत्रा त्म'-शब्दावेकविषयौ।

मतान्तरेणाऽपि जीवशब्देन परमात्माभिधानोपपादनायाह—

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः॥ २०॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गम्, यज्जीवात्मवाचि-[4] शब्दैः परमात्मनोऽभिधानमित्याश्मरथ्य आचार्यो मन्यते स्म। यद्ययं जीवः परमात्मकार्य्यतया परमात्मैव न भवे,त्तदा तद्व्यतिरिक्ततया परमात्मविज्ञानादेतद्विज्ञानं न सेत्स्यति, 'आत्मा वा इदमेक एवाग्र आसी"दिति प्राक् सृष्टेरेकत्वावधारणात्,

"यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते[5] सरूपाः।
तथाऽक्षराद्विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापियन्ती"—

त्यादिभिर्ब्रह्मणो जीवानामुत्पत्तिश्रवणात्तस्मिन्नेवाप्यय[6]श्रवणाच्च जीवानां[7] ब्रह्मकार्य्यत्वेन ब्रह्मणैक्यमवगम्यते। अतो जीवशब्देन परमात्मन एवाभिधानमिति॥

---

१ तत्रायमर्थइति लि पु। २ स्वतन्त्रेणेति पाठान्तरम्।
३ वाचीति नास्ति लि पु। ४ वाचीति पुनर्नास्ति लि पु।
५ प्रभवन्तीति मु पु। ६ ०चेलय इति लि० पु०।
७ एवकारो नास्ति लि पु।

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

यदुक्तम्—जीवस्य ब्रह्मकार्य्यतया ब्रह्मणैक्येनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थं ब्रह्मणो जीवशब्देन प्रतिपादनमिति, तदयुक्तम्, "न जायते म्रियते वा विपश्चि"दित्यादिना ऽजत्वश्रुते,र्जीवाना प्राचीनकर्मफलभोगाय जगत्सृष्ट्यभ्युपगमाच्च, अन्यथा विषमसृष्ट्यनुपपत्तेश्च, ब्रह्मकार्य्यस्य जीवस्य ब्रह्मतापत्तिलक्षणो मोक्ष आकाशादिवदवर्जनीय इति तदुपायविधानानुष्ठानानर्थक्याच्च, घटादिवत्कारणप्राप्तेर्विनाशरूपत्वेन मोक्षस्यापुरुषार्थत्वाच्च । जीवात्मन उत्पत्तिप्रलयवादोपपत्तिरत्र [रन्यत्र] प्रपञ्चयिष्यते । अतः, "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्यस्वेन रूपेणाऽभिनिष्पद्यते"

"यथा नद्यः स्यन्दमानास्समुद्रे
अस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यम्" ॥—

इत्युत्क्रमिष्यतः परमात्मभावाज्जीवशब्देन परमात्मनोऽभिधानमित्यौडुलोमिराचार्यो मन्यते स्म[1] ॥

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

यदुक्तमुत्क्रमिष्यतो जीवस्य ब्रह्मभावाद्ब्रह्मणस्तच्छब्देनाऽभिधानमिति, तदप्ययुक्तम्, विकल्पासहत्वात् । अस्य जीवात्मन उत्क्रान्तेः पूर्वमनेवम्भावः किं स्वाभाविक उतौपाधिकः? तत्राऽपि पारमार्थिको ऽपारमार्थिको वेति । स्वाभाविकत्वे ब्रह्मभावो नोपपद्यते, भेदस्य स्वरूपप्रयुक्तत्वेन स्वरूपे विद्यमाने तदनपायात् । अथ भेदेन[2] सह स्वरूपमप्यपैतीति, तथा सति विनष्टत्वादेव तस्य न ब्रह्मभाव., अपुरुषार्थत्वादिदोषप्रसङ्गश्च । पारमार्थिकौपाधिकत्वेऽपि[3] प्रागपि ब्रह्मैवेत्युत्क्रमिष्यत एवंभावादिति विशेषो न युज्यते[4] वक्तुम् । अस्मिन् पक्षे ह्युपाधिब्रह्मव्यतिरेकेण वस्त्व-

---

१ स्मेति अत्र लि पु नास्ति । २ अभेदेनेति मु॰ पु , न तु युक्तम ।
३ अपिर्नास्ति लि पु । ४ विशेषेण युज्यत इति लि॰ पु ।

न्तराभावा,न्निरवयवस्य ब्रह्मण उपाधिना भेदा[1]ऽसम्भवाच्चोपाधिगत एव भेद इत्युत्क्रान्तेः प्रागपि ब्रह्मैव । औपाधिकस्य भेदस्यापारमार्थिकत्वे कस्यायमुत्क्रान्तौ ब्रह्मभाव इति वक्तव्यम् । ब्रह्मण एवाविद्योपाधितिरोहितस्वस्वरूपस्येति चेन्न, नित्यमुक्तस्वप्रकाशज्ञानस्वरूपस्याविद्यो[2]-पाधितिरोधानासम्भवात् । तिरोधानं नाम वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः । प्रकाश एव वस्तुस्वरूपमित्यङ्गीकारे तिरोधानाभावः स्वरूपनाशो वा स्यात् । अतो नित्याविर्भूतस्वस्वरूपत्वात्तस्योत्क्रान्तौ ब्रह्मभावे न[3] कश्चिद्विशेष इत्यु"त्क्रमिष्यत' इति विशेषणं व्यर्थमेव । अस्माच्छरीरात्समुत्थाये'ति[4] पूर्वमनेवरूपस्य न तदानीं ब्रह्मतापत्तिमाह, अपि तु पूर्वमिद्धस्वरूपस्याविर्भावम् । तथाहि वक्ष्यते "सम्पद्याविर्भावः स्वेन शब्दा"दित्यादिभिः । अतो"ऽनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" "योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मे" ति स्वशरीरभूते जीवात्मन्यात्मतयाऽ[5]वस्थिते जीवशब्देन ब्रह्मप्रतिपादनमिति काशकृत्स्न आचार्यो मन्यते स्म । जीवशब्दश्च जीवस्य परमात्मपर्यन्तस्यैव वाचको, न जीवमात्रस्येति पूर्वमेवोक्तं "नामरूपे व्याकरवाणी"त्यत्र । एवमात्मशरीरभावेन तादात्म्योपपादने परस्य ब्रह्मणोऽपहतपाप्मत्वासर्वज्ञत्वादिगोचरा जीवस्याविदुषः शोचतो[6] ब्रह्मोपासनान्मोक्षवादिन्यो जगत्सृष्टिप्रलयाभिधायिन्यो जगतो ब्रह्मतादात्म्योपदेशपराश्च सर्वाः श्रुतयः सम्यगुपपादिता भवन्तीति काशकृत्स्नीयमेव मतं सूत्रकारः स्वीकृतवान् ॥

१ छेदेति लि पु । २ स्वरूपे स्वाविद्यो० इति लि पु ।
३ नेति लि पु नास्त्येव ।
४ परंज्योति परसपद्येति-इति लि पु ऽधिकं भवति ।
५ जीवात्मन्याधारतयेति लि पु० ।
६ शास्तो-इति लि० पु० ।

अयमत्र वाक्यार्थः, अमृतत्वोपाये मैत्रेय्या पृष्टे याज्ञवल्क्य आत्मा, वा अरे द्रष्टव्य' इत्यादिना परमात्मोपासनममृतत्वोपायमुक्त्वा 'ऽऽत्मनि खल्वरे दृष्ट' इत्यादिना उपास्यलक्षणं दुन्दुभ्यादिदृष्टान्तैश्चोपासनोपकरणभूतमनःप्रभृतिकरणनियमनं च सामान्येनाभिधाय 'स यथाऽऽर्द्रैधाग्ने'-रित्यादिना 'स यथा सर्वासामपां समुद्र एकायन'[1]मित्यादिना चोपास्यभूतस्य परस्य ब्रह्मणो निखिलजगदेककारणत्वं सकलविषयप्रवृत्तिमूलकरणग्रामनियमनञ्च विस्तीर्णमुपदिश्य 'स यथा सैन्धवघन' इत्यादिनाऽमृतत्वोपायप्रवृत्तिप्रोत्साहनाय जीवात्मस्वरूपेणावस्थितस्य परमात्मनोऽपरिच्छिन्नज्ञानैकाकारतामुपपाद्य तस्यैवापरिच्छिन्नज्ञानैकाकारस्य संसारदशाया[2] भूतपरिणामानुवृत्तिम् "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती" त्यभिधाय "न प्रेत्य सञ्ज्ञाऽस्ती" ति मोक्षदशाया स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेन भूतसङ्घातैक्यात्मनि देवादिरूपज्ञानाभावमुक्त्वा पुनरपि 'यत्र हि द्वैतमिव भवती" त्यादिन ब्रह्मात्मकत्वेन नानाभूतवस्तुदर्शनमज्ञानकृतमिति निरस्तनिखिलाज्ञानस्य ब्रह्मात्मकं कृत्स्नं जगदनुभवतो ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेन भेददर्शनं निरस्य "येनेदं सर्वं विजानाति तं केन विजानीया"दिति च जीवात्मस्वात्मतयाऽवस्थितेन येन परमात्मनाऽऽहितज्ञानः सन् इदं सर्वं विजानाति अयं तं केन विजानीयात्, केनाऽपीति परमात्मनो दुरवगमत्वमुपपाद्य "स एष नेति नेती"त्यादिना ऽयं सर्वेश्वरः स्वेतरसमस्तचिदचिद्वस्तुविलक्षणस्वरूप एव सर्वशरीरस्सन् सर्वस्यात्मतयाऽवस्थितः स्व[3]शरीरभूतचिदचिद्वस्तुगतैर्दोषैर्न संस्पृश्यत इत्यभिधाय 'विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्व ऽमृतत्व" मिति समस्तवस्तुविसजातीय [4]निखिलजगदेककारणभूतं सर्वस्य विज्ञातारं पुरुषोत्तममुक्तप्रकारादुपासनादृते केन विजानीयादितीदमेवोपासनममृतत्वो-

१ एकायतनमिति लि पु ।

२ परमात्मनोऽपरिच्छिन्नज्ञानैकाकाराटससारदशायामिति लि पु ।

३ ऽवस्थितस्वेति मु॰ पु ।     ४ निरस्तेति मु पु ऽधिकम्, नैव तु युक्तम ।

पायो, ब्रह्मप्राप्तिरेव चामृतत्वमभिधीयत इत्युक्तवान् । अतः पर ब्रह्मैवास्मिन् वाक्ये प्रतिपाद्यत इति परमेव ब्रह्म जगत्कारण पुरुषः तदधिष्ठिता च प्रकृतिरिति स्थितम् ॥

वाक्यान्वयाधिकरण समाप्तम् ६ ॥

अथ प्रकृत्यधिकरणम् ७ । **प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥**

एव निरीश्वरसाङ्ख्ये निरस्ते सति सेश्वरसाङ्ख्यः प्रत्यवतिष्ठते । यद्य पीक्षणादिगुणयोगात्सर्वज्ञमीश्वर जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति, तथाऽपि वेदान्तैरेव जगदुपादानतया प्रधानमेव प्रतिपाद्यत इति प्रतीयते । न हि वेदान्ताः सर्वज्ञस्यापरिणामिनोऽधिष्ठातुरीश्वरस्याधिष्ठेयेनाचेतनेन परिणामिना प्रधानेन विना जगतः कारणत्वमवगमयन्ति । तथा ह्यपरिणामिनमेवैन प्रकृति चैतदधिष्ठिताम्परिणामिनीमधीयते–

"निष्कल निष्क्रिय शान्त निरवद्य निरञ्जनम्,"

"स वा एष महानज आत्माऽजरोऽमरः,"

"विकारजननीमज्ञामष्टरूपामजा[1] ध्रुवाम्
ध्यायतेऽध्यासिता तेन तन्यते प्रेर्य्यते पुनः
सूयते पुरुषार्थाश्च[2] तेनैवाधिष्ठिता जगत्
गैारनाद्यन्तवती सा जनित्री भूतभाविनी' ति ।

तथा प्रकृतिमुपादानभूतामधिष्ठायैवेश्वरो विश्व जगत्सृजतीति श्रूयते–

"अस्मान्मायी सृजते विश्वमेतत्"

"माया तु प्रकृति विद्यान्मायिन तु महेश्वर"मिति ।

स्मृतिरपि—

"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचर"मिति ।

एवं श्रुतेऽपि[3] प्रधानोपादानत्वे ब्रह्मणो जगत्कारणत्वश्रुत्यन्यथाऽनुपपत्त्यैव प्रधानस्वरूप तस्येश्वराधिष्ठितस्य जगदुपादानकारणत्व च सिध्य-

१ अदृष्टरूपामज्ञा–इति लि पु ।
२ पुरुषार्थं चेति लि पु । ३ एवमश्रुतेऽपीति मु पु ।

ति। एवमेव हि लोके निमित्तोपादानयोरत्यन्तभेदो दृश्यते–मृत्सुवर्णादेरचेतनस्य घटकटकाद्युपादानत्वं, चेतनस्य कुलालस्वर्णकारादे[1]र्निमित्तत्वं च नियतमुपलभ्यते। कार्य्यनिष्पत्तिश्च नियमेनानेककारकसव्यपेक्षा[2]दृष्टा। एवं निमित्तोपादानयोर्भेदनियमं कार्यनिष्पत्तेरनेककारक[3]सव्यपेक्षत्वनियमञ्चातिक्रम्य एकमेव ब्रह्मोपादानं निमित्तञ्च प्रतिपादयितुं न प्रभवन्ति वेदान्तवाक्यानि। अतो ब्रह्म निमित्तकारणमेव, नोपादानम्। उपादानं तु तदधिष्ठितं प्रधानमेवेत्येवं प्राप्तेऽभिधीयते–

'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा'दिति।

'प्रकृतिश्च'=उपादानञ्च, न निमित्तकारणमात्रं ब्रह्म, उपादानकारणं च ब्रह्मैवेत्यर्थः। कुतः। 'प्रतिज्ञादृष्टान्तानुपरोधात्', एवमेव हि प्रतिज्ञादृष्टान्तौ नोपरुध्येते। प्रतिज्ञा तावत् "स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतम्मतमविज्ञातं विज्ञात"मित्येकविज्ञानेन सर्वविज्ञानविषया। दृष्टान्तश्च "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्" "यथा सोम्यैकेन लोहमणिना" 'यथा सोम्यैकेन नखनिकृन्तनेने"ति कारणविज्ञानात्कार्य्यविज्ञानविषयः। यदि निमित्तकारणमेव जगतो ब्रह्म, तदा तद्विज्ञानान्न[4] समस्तं जगद्विज्ञातं स्यात्। न हि कुलालादिविज्ञानेन घटादि विज्ञायते। अतः प्रतिज्ञादृष्टान्तयोर्बाध एव। ब्रह्मण एवोपादानत्वे उपादानभूतमृत्पिण्डलोहमणिनखनिकृन्तनविज्ञानेन घटमणिककटकमुकुटवासीपरश्वधादितत्कार्य्यविज्ञानवद् निखिलजगदुपादान[5]भूते ब्रह्मणि विज्ञाते तत्कार्य्यं निखिलं[6] जगद्विज्ञातमेव[7] स्यात्। कारणमेवावस्थान्तरमापन्नं कार्य्यं, न द्रव्यान्तरमिति कार्य्यकारणरूपेणावस्थितमृत्तद्विकारादिनिदर्शनेन प्रतिज्ञासमर्थनाद् ब्रह्मैव[8] जगदुपादानं चेति निश्चीयते। यत्तु निमित्तोपादानयोर्भेदः श्रुत्यैव प्रती-

१ कारादेश्चेति मु पु। २ कारकै सव्यपेक्षेति मु पु व्यस्त पाठः।
३ कारणा–इति मु पु।
४ विज्ञानमात्र–इति लि पु। ५ जगदेककारणेति मु पु।
६ निखिलमिति नास्ति मु पु। ७ एवकारो नास्ति लि पु।
८ एवकारो नास्ति लि पु।

यत इति, तदसत्, निमित्तोपादानयोरैक्यप्रतीतेः 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवती"ति। आदिश्यते प्रशिष्यतेऽनेनेत्यादेशः, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादि-श्रुतेः साधकतमत्वेन कर्त्ता विवक्षितः। तमादेष्टारमप्राक्ष्यः येनाश्रुतं श्रुतं भवतीति, येनादेष्ट्राऽधिष्ठात्रा श्रुतेनाऽश्रुतमपि श्रुतं भवतीति निमित्तोपादानयोरैक्यं प्रतीयते, "सदेव सोम्येदमग्र आसीदेकमेवे"ति प्राक् सृष्टेरेकत्वावधारणात्, अद्वितीयपदेनाधिष्ठात्रन्तरनिवारणाच्च[1]। 'नन्वेवं सति "विकारजननी" "गौरनाद्यन्तवती"त्यादिभिः प्रकृतेराद्यन्त[2]विरहेण नित्यत्वं जगदुपादानत्वं च श्रूयमाणं कथमुपपद्यते। तदुच्यते—तत्राप्यविभक्तनामरूपं कारणावस्थं ब्रह्मैव 'प्रकृति'—शब्देनाऽभिधीयते, ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्। तथाहि श्रुतयः—"सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये[3]दि"त्याद्याः। "सर्वं खल्विदं ब्रह्म" "ऐतदात्म्यमिदं सर्व"मिति कार्य्यावस्थं कारणावस्थं च सर्वं जगद्ब्रह्मात्मकमिति श्रवणाच्च। एतदुक्तम्भवति— "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेदे"त्यारभ्य "योऽव्यक्तमन्तरे सचरन् यस्याऽव्यक्तं शरीरं[4] यमव्यक्तं न वेद योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद" "यः पृथिव्यां तिष्ठन् यः पृथिव्या अन्तरो[5] यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयती"त्यारभ्य "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृत' इति च सर्वचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम्परं ब्रह्म, कदाचिद्विभक्तनामरूपं कदाचिच्चाविभक्तनामरूपम्। यदा विभक्तनामरूपम् तदा[6] तदेव बहुत्वेन कार्य्यत्वेन चोच्यते, यदा चाऽविभक्तनामरूपम्, तदै-

१ निषेधाच्चेति मु पु।
२ आद्यन्तवदिति मु पु। ३ विजानीयादिति मु पु।
४ यस्याक्षरशरीरमिति क्वचित्। ५ पृथिव्यन्तर इति मु॰ पु।
६ तदेति नास्ति मु पु।

क्रमद्वितीयकारणमिति च। एवं सर्वदा चिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणोऽ*विभक्तनामरूपा या कारणावस्था, सा "गौरनाद्यन्तवती" "विकारजननीमज्ञाम्" "अजामेका"मित्यादिभिरभिधीयत इति[1]। ननु च "महानव्यक्ते लीयते अव्यक्तमक्षरे लीयत" इति प्रलयश्रुतेरव्यक्तस्योत्पत्तिप्रलयौ प्रतीयेते। तथा च महाभारते—

"तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम"।

"अव्यक्तं पुरुषे ब्रह्मन्निष्कले[2] सम्प्रलीयत" इति।

नैष दोषः, अचिद्वस्तुशरीरस्य ब्रह्मणोऽव्यक्तशब्दवाच्यायास्त्रिगुणावस्थायाः कार्य्यत्वात्। "यदा तमस्तन्न दिवा न रात्रि"रिति कृत्स्नप्रलयदशायामपि ब्रह्मात्मकस्यातिसूक्ष्मस्याचिद्वस्तुन[3] स्थित्यभिधानाज्जगत्कारणस्य परस्य ब्रह्मणः प्रकारभूतमतिसूक्ष्मं चिदचिद्वस्तु[4] नित्यमेवेति तत्प्रकारं ब्रह्मैव 'गौरनाद्यन्तवती'त्यादिभिरभिधीयते। अत एव चा 'ऽक्षरं तमसि लीयते तमः परे देव एकीभवती'ति तमस[5]एकीभावमात्रमेव श्रूयते, न तु लयः। एकीभाव इति तमोऽभिधानातिसूक्ष्माचिद्वस्तुप्रकारस्य ब्रह्मणोऽविभक्तनामरूपतयाऽवस्थानमभिधीयते। "तम आसीत्तमसा गूढमग्रे प्रकेत" "तमसस्तन्महान्[6] ऽजायतैक"मित्याद्यप्येतदेव वदति। तथा च मानवं वचः—

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वत" इति।

अस्मान्मायी सृजते विश्वमेत" दित्याद्यनन्तरमेवोपपादयिष्यते ब्रह्मणोऽपरिणामित्व[7]श्रुतयश्च। यत्त्वेकस्य निमित्तत्वमुपादानत्वञ्च न सम्भवति, एककारकनिष्पाद्यत्वं च कार्य्यस्य, लोके ऽतथा[8]नियमदर्श-

* अकारच्छेद क्वचिदपि नास्ति।
१ इति शब्दो नास्ति मु पु।
२ निष्क्रिये इति क्वचित। ३ सूक्ष्मस्यचिदचिद्वस्तुन इति लि पु०।
४ सूक्ष्मं चाचिद्वस्तु चिदचिद्वस्त्विति मु पु।
५ भवतीत्यात्मा स इति लि पु। ६ तन्महिना—इति मु० पु।
७ ऽपरिणामित्वमिति मु पु०। ८ लोके तथेति पु द्वये ऽपि पाठ.।

नात्[1] । अतोऽग्निना सिञ्चेदितिवद्वेदान्तवाक्यान्येकस्मादेवोत्पत्ति प्रतिपादयितु न प्रभवन्तीति । अत्रोच्यते—सकलेतरविलक्षणस्य परस्य ब्रह्मणस्सर्वशक्तेस्सर्वज्ञस्यैकस्यैव सर्वमुपपद्यते । मृदादेरचेतनस्य ज्ञानाभावेनाधिष्ठातृत्वायोगा,दधिष्ठातु कुलालादेर्विचित्रपरिणामशक्तिविरहादसत्यसकल्पतया च तथादर्शननियमः । अतो ब्रह्मैव जगतो निमित्तमुपादान च ।

## अभिध्योपदेशाच्च ॥ २४ ॥

इतश्चोभय ब्रह्मैव* । 'सोऽकामयत बहु स्या प्रजायेये"ति "तदैक्षत बहु स्या प्रजायेये"ति स्रष्टुर्ब्रह्मणस्स्वस्यैव बहुभवनसकल्पोपदेशाद्विचित्रचिदचिद्रूपेणाहमेव बहु स्या तथा प्रजायेयेति सकल्पपूर्विका हि[2] सृष्टिरुपदिश्यते ।

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

न केवल प्रतिज्ञादृष्टान्ताभिध्योपदेशादिभिरयमर्थो निश्चीयते, ब्रह्मण एव निमित्तत्वमुपादानत्वञ्च साक्षादाम्नायते—

'किस्विद्वन क उ स वृक्ष आसी-
द्यतो[3] द्यावापृथिवी निष्टतक्षु ।
मनीषिणो मनसा पृच्छतेत-
द्यदध्यतिष्ठद् भुवनानि धारयन् ॥
ब्रह्म वन ब्रह्म स वृक्ष आसी-
द्यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा विब्रवीमि वो
ब्रह्माध्यतिष्ठद् भुवनानि धारय"न्निति ।

अत्र हि सिसृक्षो[4]र्ब्रह्मणः किमुपादान कानि चोपकरणानीति लोक

१ दर्शनाच्चेति मु पु ।
* इद वाक्य सूत्रात्परत्रास्ति, पूर्वत्र स्यादिति युक्त प्रतिभाति ।
२ हीति नास्ति मु॰ पु ।
३ आसीदयतो—इति लि॰ पु॰ । ४ स्रष्टुरिति मु पु॰ ।

निर्देशानर्हो[1]ऽतिसूक्ष्मदशापत्त्या स्वस्मिन्नेकतामापन्ने सति[2] तथाभूततमःशरीरं ब्रह्म पूर्ववद्विभक्तनामरूपचिदचिन्मिश्रप्रपञ्चशरीरं स्यामिति सङ्कल्प्याऽप्ययक्रमेण[3] जगच्छरीरतया[4]ऽऽत्मानं परिणमयतीति सर्वेषु वेदान्तेषु परिणामोपदेशः । तथैव बृहदारण्यके कृत्स्नस्य जगतो ब्रह्मशरीरत्वं, ब्रह्मणस्तदात्मकत्वं चाम्नायते[5]–"यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृत" इत्यारभ्य "यस्यापश्शरीरं" यस्याग्निः शरीरं यस्यान्तरिक्षं शरीरं यस्य वायुः शरीरं यस्य द्यौः शरीरं यस्यादित्यः शरीरं यस्य दिशः शरीरं यस्य चन्द्रतारकं शरीरं यस्याकाशः शरीरं यस्य तमः शरीरं[6] यस्य तेजः शरीरं† यस्य सर्वाणि भूतानि शरीरं यस्य प्राणः शरीरं यस्य वाक् शरीरं यस्य चक्षुः शरीरं यस्य श्रोत्रं शरीरं यस्य मनः शरीरं† यस्य त्वक् शरीरं यस्य विज्ञानं शरीरं यस्य रेतः शरीरमित्येवमन्तेन काण्वपाठे, माध्यन्दिने तु पाठे विज्ञानस्य स्थाने "यस्यात्मा शरीर"मिति विशेषः, लोकयज्ञवेदानां परमात्मशरीरत्वमधिकम् । सुबालोपनिषदि च पृथिव्यादीनां तत्त्वानाम्परमात्मशरीरत्वमभिधाय वाजसनेयकेऽनुक्तानामपि तत्त्वानां शरीरत्वञ्च ब्रह्मण आत्मत्वञ्च श्रूयते–"यस्य बुद्धिः शरीरं यस्याहङ्कारः शरीरं यस्य चित्तं शरीरं यस्याऽव्यक्तं शरीरं यस्याक्षरं शरीरं यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इति । अत्र 'मृत्यु'-शब्देन परमसूक्ष्ममचिद्वस्तु 'तमः'-शब्दवाच्यमभिधीयते, "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयत" इति तस्यामेवोपनिषदि क्रमप्रत्यभिज्ञाना[7]त्सर्वेषामात्मनां ज्ञानावरणानर्थमूलत्वेन तदेव हि तमो-

१ नर्हे–इति लि पु ।
२ सतीति लि पु॰ नास्ति ।
३ सङ्कल्प्याप्ययक्रमेणेति लि पु पाठः ।
४ ०च्छरीरमिति लि पु॰ । ५ श्रूयत इति मु पु ।
६ इदं तमोवाक्यं नास्ति लि पु॰ । †† एतच्चिह्नान्तर्गतः पाठो लि पु नास्ति ।
७ प्रत्यक्षज्ञानादिति लि पु ।

'मृत्यु'-शब्दव्यपदेश्यम् । सुबालोपनिषद्येव[1]ब्रह्मशरीरतया तदात्मकानामन्तत्त्वाना ब्रह्मण्येव प्रलय आम्नायते—"पृथिव्यऽप्सु प्रलीयते आपस्तेजसि लीयन्ते तेजो वायौ लीयते वायुराकाशे लीयते आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षर तमसि लीयते तमः परे देव एकीभवती"ति । अविभागापत्तिदशायामपि चिदचिद्वस्त्वतिसूक्ष्म सकर्मसंस्कारन्तिष्ठतीत्युत्तरत्र वक्ष्यते-"न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चे"ति । एव स्वस्माद्विभागव्यपदेशानर्हतया परमात्मनैकी[2]भूतात्यन्तसूक्ष्मचिदचिद्वस्तुशरीरादेकस्मादेवाद्वितीयान्निरतिशयानन्दात्सर्वज्ञात्सत्यसङ्कल्पाद्ब्रह्मणो नामरूपविभागार्हस्थूलचिदचिद्वस्तुशरीरतया बहुभवनसङ्कल्पपूर्वको जगदाकारेण परिणामः श्रूयते, "सत्य ज्ञानमनन्त ब्रह्म" "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा[3]ऽऽनन्दमयः" "एष ह्येवानन्दयाति" "सोऽकामयत बहु स्या प्रजायेयेति" "स तपोऽतप्यत स तपस्तप्त्वेद सर्वमसृजत यदिद किञ्च" "तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्त चानिरुक्तञ्च निलयन चानिलयन च विज्ञान चाविज्ञान च सत्य चानृत च स[4]मभवदिति[5]-अत्र 'तपः'-शब्देन प्राचीनजगदाकारपर्यालोचनरूप ज्ञानमभिधीयते, "यस्य ज्ञानमय तपः" इत्यादिश्रुतेः । प्राक्सृष्ट जगत्संस्थानमालोच्येदानीमपि तत्संस्थान जगदसृजदित्यर्थः । तथैव हि ब्रह्म सर्वेषु कल्पेष्वेकरूपमेव जगत्सृजति-

"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवञ्च पृथिवी चान्तरिक्षमथो सुवः" ॥

"यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिष्वि"ति-

---

१ ०द्येवमिति मु पु ।

२ परमात्मन्येको-इति मु पु ।    ३ अन्तरात्मेति मु॰ पु पाठ॰ ।

४ सत्यमिति मु॰ पु पाठ ।

५ ०ऽविज्ञान चासत्य चानृत च सत्य भवदिति-इति लि पु ।

श्रुतिस्मृतिभ्यः । तदयमर्थः—स्वयमपरिच्छिन्नज्ञानानन्दैक[1]स्वभावोऽत्यन्तसूक्ष्मतयाऽसत्कल्प[2]स्वलीलोपकरणचिदचिद्वस्तुशरीरतया तन्मयः परमात्मा विचित्रानन्तक्रीडनकोपादित्सया स्वशरीरभूतप्रकृतिपुरुषसमष्टिपरम्परया महाभूतपर्यन्तमात्मानं तच्छ[3]रीरक परिणमय्य तन्मयः पुनस्तत्त्यच्छब्द[4]वाच्यविचित्रचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपो भवति[5] । "तदेवानुप्राविशत् तदनुप्रविश्ये"ति कारणावस्थायामात्मतयाऽवस्थितः परमात्मैव कार्य्यरूपेण विक्रियमाणद्रव्यस्याप्यात्मतयाऽवस्थाय तत्तदभवदित्युच्यते। एव परमात्मा[6]चिदचित्सङ्घातरूपजगदाकारपरिणामी । परमात्म[7]शरीरभूतचिदंशगताः सर्व एवापुरुषार्था, तथाभूताचिदंशगताश्च सर्वे विकाराः, परमात्मनि कार्य्यत्वन्तदवस्थयोस्तयोर्नियन्तृत्वेनात्मत्व, परमात्मा त्वनयोः[8] स्वशरीरभूतयोर्नियन्तृतया ऽऽत्मभूतस्तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते, अपरिच्छिन्नज्ञानानन्दमयस्सर्वदैकरूप एव जगत्परिवर्त्तनलीलयाऽवतिष्ठते । तदेतदाह "सत्य चानृतञ्च समभव"दिति । विचित्रचिदचिद्रूपेण विक्रियमाणमपि ब्रह्म सत्यमेवाभवन्निरस्तनिखिलदोषगन्धमपरिच्छिन्नज्ञानानन्दैकरूप[9]मेवाभवदित्यर्थः । सर्वाणि चिदचिद्वस्तूनि सूक्ष्मदशापन्नानि स्थूलदशापन्नानि च परस्य ब्रह्मणो लीलोपकरणानि सृष्ट्यादयश्च लीलेति भगवद्द्वैपायनपराशरादिभिरुक्तम्—

"अव्यक्तादिविशेषान्त परिणामर्द्धिसयुतम् ।
क्रीडा हरेरिदं सर्व क्षरमित्युपधार्य्यताम्" ॥
"क्रीडतो बालकस्येव चेष्टान्तस्य निशामय" ।
बालः क्रीडनकैरिवे"त्यादिभिः ।

वक्ष्यति च "लोकवत्तु लीलाकैवल्य"मिति ।

"अस्मान्मायी सृजते विश्वमेतत्

१ एकेति नास्ति लि पु० । २ सत्सकल्प इति लि पु० ।
३ तत्त्दिति मु पु । ४ सत्यशब्देति लि पु० ।
५ ऽभवदिति मु पु । ६ परमात्मा परिणामिपरमात्म—इति मु० पु ।
७ परमात्मचिदचित् परिणाममेवेति लि पु । ८ च तयोरिति लि पु ।
९ नन्दमेकस्वरूपमिति लि० पु ।

तस्मिंश्चान्यो मायया सन्निरुद्धः" इति च–

ब्रह्मणि जगद्रूपतया विक्रियमाणेऽपि तत्प्रकारभूताचिद्गता: सर्वे विकारास्तत्प्रकारभूतचेतनगताश्चापुरुषार्था इति विवेक्तु प्रकृतिपुरुषयोर्ब्रह्मशरीरभूतयोस्तदानीं[1] तथानिर्देशानर्हातिसूक्ष्मदशापत्त्या ब्रह्मणैकीभूतयोरपि भेदेन व्यपदेशः,[2] "तदात्मानं स्वयमकुरुते"त्येवमादिभिरैकार्थ्यात् । तथा च मानवं वचनम्–

"सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।

अप एव ससर्ज्जादौ तासु बीजमवासृज[3]"दिति ॥

अत एव ब्रह्मणो निर्दोषत्वनिर्विकारत्वश्रुतयश्चोपपन्नाः । अतो ब्रह्मैव जगतो निमित्तमुपादानञ्च ।

## योनिश्च हि गीयते ॥ २८ ॥

इतश्च जगतो निमित्तमुपादानञ्च ब्रह्म, यस्माद्योनित्वेनाऽप्यभिधीयते "कर्त्तारमीशं पुरुषं ब्रह्मयोनि"मिति, "यद्भूतयोनिं परिपश्यन्ति धीराः" इति च । 'योनि'-शब्दश्चोपादानवचन इति "यथोर्णनाभिः सृजते गृह्णते चे"ति वाक्य[4]शेषादवगम्यते ॥

प्रकृत्यधिकरणं समाप्तम् ॥ ७ ॥

सर्वव्याख्यानाधिकरणम् ।

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

एतेन पादचतुष्टयोक्तन्यायकलापेन[5] सर्ववेदान्तेषु जगत्कारणप्रतिपादनपराः सर्वे वाक्यविशेषाश्चेतनाचेतनविलक्षणसर्वज्ञसर्वशक्तिब्रह्मप्रतिपादनपरा व्याख्याताः । 'व्याख्याता' इति पदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ।

इति श्रीमद्भगवद्रामानुजार्यचरणकृतौ शारीरकमीमांसाभाष्ये समन्वयाख्यप्रथमाध्यायस्य चतुर्थः पादः ।

## समाप्तश्च प्रथमोऽध्यायः ॥

## नमो मीमांसाद्वयगुरवे श्रीमते भगवते रामानुजाचार्याय॥

१ तदानीमिति लि पु॰ नास्ति ।
२ ०देशात्–इति लि पु ।
३ वीर्यमपासृजदिति मु॰ पु॰ पाठः ।
४ इत्युपादानेति लि॰ पु॰ ।
५ न्यायकारण–इति लि पु ।

नमो मीमांसाद्वयगुरवे श्रीमते भगवते रामानुजाचार्याय ।

अथ

# श्रीभाष्ये

## अविरोधाध्यायो द्वितीयः ।

अथ स्मृत्यधिकरणम् १ । **स्मृत्यनवकाशदोषप्रसङ्ग इति चेत्, न, अन्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

प्रथमेऽध्याये प्रत्यक्षादिप्रमाणागोचरादचेतनात्तत्संसृष्टात्त[1]द्वियुक्ताच्च चेतनादर्थान्तरभूतं निरस्तनिखिलाविद्या[2]द्यपुरुषार्थगन्धमनन्तज्ञानानन्दैकतानमपरिमितोदारगुणसागरं निखिलजगदेककारणं सर्वान्तरात्मभूतं परं[3] ब्रह्म वेदान्तवेद्यमित्युक्तम् ।

अनन्तरमस्यार्थस्य सम्भावनीयसमस्तप्रकारदुर्धर्षत्व[4]प्रतिपादनाय द्वितीयोऽध्याय आरभ्यते ।

प्रथमं तावत्कापिलस्मृतिविरोधाद्वेदान्तानामतत्परत्वमाशङ्क्य[5] निराक्रियते । कथं स्मृतिविरोधाच्छ्रुतेरन्यपरत्वम्, उक्तं हि "विरोधे त्वनपेक्षं स्या"दिति श्रुतिविरुद्धायाः स्मृतेरनादरणीयत्वम् । सत्यम्, औदुम्बरीं स्पृष्ट्वोद्गायेदि[6]त्यादिषु स्वत एवार्थनिश्चयसम्भवात्तद्विरुद्धा स्मृतिरनादरणीयैव, इह तु वेदान्तवेद्यस्य तत्त्वस्य दुरवबोधत्वेन परमर्षिप्रणीतस्मृतिविरोधे सत्ययमर्थ इति निश्चयायोगात्स्मृत्या श्रुतेरतत्परत्वोपपादनमविरुद्धम् । एतदुक्तं भवति—प्राचीनभागोदितनिखिलाभ्युदयसाधनभूताग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिकर्माणि यथावदभ्युपगच्छता श्रुति-

१ तदिति पुनर्नास्ति लि पु ।

२ निखिलविद्येति लि पु तु प्रमादः ।

३ परमिति नास्ति लि पु ।

४ दुर्धर्षणत्वेति मु पु ।

५ तदित्यधिकं मु पु ।

६ द्गायेदिति लि॰ पु ।

स्मृतीतिहासपुराणेषु "ऋषिं प्रसूतं कपिल"मित्यादिवाक्यैराप्तत्वेन सङ्कीर्तितेन परमर्षिणा कपिलेन परमनिःश्रेयसतत्साधनावबोधित्वेनोपनिबद्ध-स्मृत्युपबृंहणेन विनाऽल्पश्रुतैर्मन्दमतिभिर्वेदान्तार्थनिश्चयायोगाद्ध्यात्मतार्थग्रहणे चाप्तप्रणीतायास्साङ्ख्यस्मृतेस्सकलाया एवानवकाशत्वप्रसङ्गाच्च स्मृतिप्रसिद्ध एवार्थो वेदान्तवेद्य इति बलादभ्युपगमनीयमिति। न च वाच्यं मन्वादिस्मृतीनां ब्रह्मैककारणत्ववादिनीनामिव सत्यं ऽनवकाशत्वदोष[1]प्रसङ्ग इति, धर्म्मप्रतिपादनद्वारेण प्राचीनभागोपबृंहण[2] एव सावकाशत्वात्। अस्यास्तु कृत्स्नायास्तत्त्वप्रति[3]पादनपरत्वात्तथाऽनभ्युपगमेऽनवकाशत्वमेव स्यात्। तदिदमाशङ्कते—'स्मृत्यनवकाशदोषप्रसङ्ग इति चे'दिति। अत्रो[4]त्तरम्—

'नान्यस्मृत्यनवकाशदोषप्रसङ्गा'दिति। अन्या हि मन्वादिस्मृतयो-ब्रह्मैककारणतां वदन्ति, यथा ऽऽह मनुः—

"आसीदिदं तमोभूत"मित्यारभ्य

"ततस्स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्।
महाभूतादिवृत्तोजाः प्रादुरासीत्तमोनुदः॥
सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमवासृज[5]"दिति।

भगवद्गीतासु च—

"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा"।
"अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते" इति च[6]।

तथा च महाभारते—

"कुतः सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम्।
प्रलये च कमभ्येति तन्मे ब्रूहि पितामहे"ति पृष्ट आह—

१ दोषेति नास्ति लि पु।
२ धर्मप्रतिपादनपरप्राचीनभागोपबृंहणे इति पाठान्तरम्।
३ तत्प्रति—इति लि पु। ४ तत्रेति लि पु०।
५ वीर्यमपासृजदिति क्वचित्। ६ चेति नास्ति लि० पु।

of Cognition, and the Cognition of pleasure could not be apprehended by any other means (in the shape of the Mind)"

*Reply* If Pleasure and Pain were both of the nature of cognition pure and simple, then there would be no difference between them And if they were distinct from each other, then both could not have the nature of pure cognition Though the form of 'experience', or 'feeling' is common to both of them, yet the forms of Pleasure and Pain are altogether distinct from each other Nor can these two be regarded as produced by a means non-different from cognition, as cognition is produced from the form of the object perceived, and it is from this cognition, as helped by tendencies, that Pleasure and Pain are produced If it were not so, then there could never be any feeling of Indifference Nor has it been established that cognition is self-cognisable, specially as we have no instances of one and the same thing (cognition *e g*) being both the objective and the instrument

**Page 91.**] The case of the self-luminous lamp might be brought forward as an instance But the lamp too, is *cognised by the man*, is *made cognisable by the Eye*, and Cognition only constitutes its action, and this itself could not be the *Instrument*, as well as the *action*, the *agent* as well as the *objective*

*Objection* "As, for the upholders of the Self (the *Vedānti*,) the Self, in its own cognition, is the *agent* as well as the *objective* at one and the same time,—so too could the various characters of the Instrument &c belong to cognitions also"

*Reply* Not so, because the diverse characters are not incompatible in the case of the Self, as the objectivity of the Self consists in its being the object of the action of cognition, and as in this action the Self is independent (of all other things), it has the character of the *agent* also, and certainly there is no incompatibility between *objectivity* and *independence* On the other hand, the character of *Instrument* and that of *Action* are not compatible, in as much as the instrument is

an accomplished thing while an action is something yet to be accomplished, specially as there could be no identity between the effect and the cause Between the characters of the Agent and the Instrument also there can be no compatibility, as the character of the agent consists in *not being urged or used by some thing else,* while that of instrument consists in *being employed by others,*—and thus one is positive while the other negative, and as such the two are wholly incompatible with each other, and hence they could never coexist in any substratum

*Objection* "What we mean by the 'self-cognisability' of a cognition is, not that it has no means or instruments,—but that when it is produced, it is self-cognisable by its very nature"

*Reply* What is it that is illumined in the case of cognitions? Is it the object cognised, or the cognition itself? If the former, then, the cognisance would be that of the object, and not that of the cognition 'itself,' and hence there would be an uncognisability of the cognition If the illumination consisted in the cognition itself, then the cognition itself would be the *object* as well as the *action* of illumination, and thus there would be an identification of the action and the instrument Nor is there any instance to show that the appearance or production of the cognition constitutes its own operation with regard to itself

In support of the self-cognisability of cognitions, the opponent has brought forward the following argument "A thing that depends for its illumination or appearance upon something else, always appears or becomes illumined on the appearance of this latter, just as the jar which depends for its appearance upon the lamp, and as Colour &c, depend for their manifestation upon Cognition"

But if the cognition itself constitutes the illumination or appearance of the object,—then the assertion that *Colour* &c, have their appearance dependent upon cognition would be

*asiddha* (not established), and also *Anaikānta,* doubtful, in view of the Sense-organs (on which the manifestation of Colour &c, is found to depend) If it be held that the manifestation of the object is brought about by cognitions, and not that the cognitions themselves constitute the manifestation of objects,—then, there could be no coroborrative instance in support of this view, as what the lamp does is only to bring about the cognition of the object, and not a manifestation of it.

This also meets the declaration that "one who has no direct perception is never known to see an object" As the seeing of an object does not consist in the directness of the cognition, it consists only in the production of an Idea And hence even though the cognition may not be cognised, yet as soon as it would be produced, the object would become duly cognised

*Question* "How could the production of one thing constitute the cognition of another?"

*Answer* What can we do, when such is the actual nature of the things themselves? But this would not mean that the production of one thing would bring about the cognition of all things Because the cognition of any thing is restricted by its auxilliary causes, because what is produced is the cognisance which has the character of the cognition of certain definite objects, and which is cognisable by definite persons

Others (*the Prabhākaras*) propose the following explanation The object having become manifested by its relationship with cognition,—the cognition having the nature of light, becomes self-luminous, like the lamp, and the soul also, being the substratum of the cognition becomes manifested, like the wick of the lamp light, and thus in all cases there is a threefold cognition (of the object, of the cognition and of the soul)

But this is not correct, because as a matter of fact, we find that in the cognition, 'this is a jar,' there does not enter any

पूर्ववन्न सम्भवति । न च वाच्यम्—मृत्सुवर्णदुग्धादिभ्यो घटरुचकद-ध्यादीनामुत्पत्तिर्दृश्यते । शुक्तिकारजतादिवद् देशकालादिप्रतिपन्नो-पाधौ बाधश्च न दृश्यते । अतः प्रतीतिशरणाना कारणात्कार्य्यो-त्पत्तिरवश्याऽऽश्रयणीयेति । विकल्पासहत्वात्—किं हेमादिमात्रमेव स्वस्तिकादेरारम्भकम्? उत रुचकादि? अथ रुचकाद्याश्रयो हेमादिः? न तावद्धेमादिमात्रमारम्भकम्, हेमादि[1]व्यतिरिक्तस्य कार्यस्याभावात्, स्वात्मान प्रत्यात्मन आरम्भकत्वासम्भवाच्च । हेमव्यतिरिक्त स्वस्तिक दृश्यत इति चेत्, न हेमव्यतिरिक्त तत्, हेमप्रत्यभिज्ञानात्तदतिरिक्तव-स्त्वन्तरानुपलब्धेश्च । बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरत्व साधितमिति चे,न्न, अनिरूपितवस्त्वऽवलम्बनाना बुद्धिशब्दान्तरादीना शुक्तिकारजतबु-द्धिशब्दादिवद्[2] भ्रान्तिमूलत्वेन वस्त्वन्तरसद्भावासाधकत्वात् । नापि रुचकादि स्वस्तिकादेरारम्भकम्, स्वस्तिके हि रुचक पट इव तन्तवो भवताऽपि नोपलभ्यन्ते, नापि रुचकाश्रयभूत हेम, रुचकाश्रयाकारेण हेम्नः स्वस्तिकेऽनुपलब्धेः । अतो मृदादिकारणातिरिक्तस्य कार्यस्यासत्यत्वदर्श-नाद्ब्रह्मव्यतिरिक्त कृत्स्न जगत्कार्य्यत्वेन मिथ्याभूतम् । तदिद ब्रह्मव्यति-रिक्तमिथ्यात्वसुखप्रतिपत्तये काल्पनिकमृदादिसत्यत्वमाश्रित्य कार्यस्यास-त्यत्व प्रतिपादितम् । परमार्थतस्तु मृत्सुवर्णादिकारणमपि घटरुचकादि-कार्य्यवन्मिथ्याभूतम्, ब्रह्मकार्य्यत्वाविशेषात् । "ऐतदात्म्यमिद सर्वं तत्सत्य" "नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र हि द्वैतमिव भवति तदितर इतर पश्यति" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत्" 'इन्द्रो मायाभिः पुरुरूप ईयत" इत्येवमादिभि. श्रुतिभिश्च ब्रह्मव्यतिरिक्तस्य मिथ्यात्वमवगम्यते । न चागमावगतार्थस्य प्रत्यक्षविरोधः शङ्कनीय', यथोक्तप्रकारेण कार्यस्य मिथ्यात्वावगमात्, प्रत्यक्षस्य सन्मात्रविषयत्वाच्च । विरोधे सत्यप्यस-म्भावितदोषस्य चरमभाविनः स्वरूपसद्भावादौ प्रत्यक्षाद्यपेक्षत्वेऽपि प्रमितौ निराकाङ्क्षस्य निरवकाशस्य शास्त्रस्य बलीयस्त्वात् । अतः कार-

[1] आदिशब्दोऽत्र पु द्वयेऽपि नास्ति । [2] शब्दबुद्ध्यादिवत् इति क्वचित् ।

णभूताद्ब्रह्मणोऽन्यत्सर्वं मिथ्या । न च प्रपञ्चस्य मिथ्यात्वेन जीवमिथ्यात्वमाशङ्कनीयम्, ब्रह्मण एव जीवभावात् । ब्रह्मैव हि सर्वशरीरेषु जीवभावमनुभवति, "अनेन जीवेनात्मनाऽनुप्रविश्य" "एको देवः सर्वभूतेषु गूढः" "एको देवो बहुधा सन्निविष्टः" "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" "नान्योऽतोस्ति द्रष्टे"त्येवमादिभ्यः । नन्वेकमेव ब्रह्म सर्वशरीरेषु जीवभावमनुभवतीति चेत्, पादे मे वेदना शिरसि सुखमितिवत्सर्वशरीरेषु सुखदुःखप्रतिसन्धान स्यात्, जीवेश्वरबद्धमुक्तशिष्याचार्य्यज्ञत्वाज्ञत्वादिव्यवस्था च न स्यात् । अत्र केचिदद्वितीयत्व ब्रह्मणोऽभ्युपयन्त एव समादधते–एकस्यैव ब्रह्मणः प्रतिबिम्बभूताना जीवाना सुखित्वदुःखित्वादय एकस्यैव मुखस्य प्रतिबिम्बाना मणिकृपाणदर्पणादिषूपलभ्यमानानामल्पत्वमहत्त्वमलिनत्वविमलत्वादिवत्तत्तदुपाधिवशाद्व्यवस्थाप्यन्ते । नन्व ऽनेन जीवेनात्मनाऽनुप्रविश्ये'त्यादिश्रुतेर्न जीवा ब्रह्मणो भिद्यन्त इत्युक्तम्, सत्यम्, परमार्थतः, काल्पनिक तु भेदमाश्रित्येय व्यवस्थोच्यते । कस्य पुनः कल्पना ? न तावद्ब्रह्मणः, तस्य परिशुद्धज्ञानात्मनः कल्पनाशून्यत्वात् । नापि जीवानाम्, इतरेतराश्रयत्वप्रसङ्गात्, कल्पनाधीनो हि जीवभावो जीवाश्रया च कल्पनेति । नैतदेवम्, अविद्याजीवभावयोर्बीजाङ्कुरन्यायेनाऽनादित्वात् । किञ्च, प्रासादनिगरणादिवदनुपपत्तैकवेषायामवस्तुभूतायामविद्यायां नेतरेतराश्रयादयो वस्तुदोषा अनवक्लृप्तिमावहन्ति । वस्तुतो ब्रह्मव्यतिरिक्ताना जीवाना स्वतोविशुद्धत्वेऽपि कृपाणादिगतमुखप्रतिबिम्बश्यामतादिवदौपाधिकाशुद्धिसम्भवादविद्याश्रयत्वोपपत्तेः काल्पनिकत्वोपपत्तिः । प्रतिबिम्बगतश्यामतादिवज्जीवगताशुद्धिरपि भ्रान्तिरेव, अन्यथाऽनिर्मोक्ष[1] प्रसङ्गात् । जीवाना भ्रमस्य प्रवाहानादित्वाच्च तद्धेतुरन्वेषणीय इति ।

तदेतदविदिताद्वैतयाथात्म्याना भेदवादश्रद्धालुजनसबहुमानावलोकनलिप्साविजृम्भितम् । तथा हि, जीवस्याकल्पितस्वाभाविकरूपेणावि-

१ अनिर्मोक्षत्वेति मु॰ पु॰ ।

द्याश्रयत्वे ब्रह्मण एवाविद्याश्रयत्वमुक्तं स्यात्, तद्व्यतिरिक्तेन तस्मिन् कल्पितेनाकारेणाविद्याश्रयत्वे जडस्याविद्याश्रयत्वमुक्तं स्यात् । न खल्वद्वैतवादिनस्तदुभयव्यतिरिक्तमाकारमभ्युपगच्छन्ति । कल्पिताकार-विशिष्टेन स्वरूपेणैवाविद्याश्रयत्वमिति चेत्,तन्न, स्वरूपस्याखण्डैकरसस्या-विद्यामन्तरेण विशिष्टरूपत्वासिद्धेरविद्याश्रयाकार एव हि निरूप्यते । किञ्च, बन्धमोक्षादिव्यवस्थासिद्ध्यर्थं हि जीवाज्ञानस्य समाश्रयणम्,[1] सा तु व्यवस्था जीवाज्ञानपक्षेऽपि न सिध्यति। अविद्याविनाश एव हि मोक्षः, तत्रैकस्मिन् मुक्ते अविद्याविनाशादितरेऽपि मुच्येरन् । अन्यस्याऽमुक्तत्वा-दविद्या तिष्ठतीति चेत्, तर्ह्येकस्याप्यमुक्तिः स्यात्, अविद्याया अवि नष्टत्वात् । प्रतिजीवमविद्याभेदः कल्प्यते, तत्र यस्या ऽविद्या नष्टा स मोक्ष्यते, यस्य त्वनष्टा स भन्त्स्यत इति चेत्,न, प्रतिजीवमिति जीवभे-दमाश्रित्य ब्रूषे, स जीवभेदः किं स्वाभाविक उताविद्याकल्पितः ? न ता-वत्स्वाभाविकः, अनभ्युपगमात्, भेदसिद्ध्यर्थस्यास्य चाविद्याकल्पनस्य व्यर्थ-त्वात् । अथाविद्याकल्पितः, तत्रेयं जीवभेदकल्पिकाऽविद्या किं ब्रह्मण उत जीवानाम् ? ब्रह्मण इति चेदागतोऽसि मदीयं मार्गम् । अथ जीवाना-म्, किमस्या जीवभेदक्लृप्तिसिद्ध्यर्थता विस्मरसि । अथ प्रतिजीवं बद्धमुक्तव्य-वस्थासिद्ध्यर्थं या अविद्याः कल्प्यन्ते ताभिरेव जीवभेदोऽपीति मनुषे । जीव-भेदसिद्धौ तास्सिद्ध्यन्ति, तासु सिद्धासु जीवभेदसिद्धिरितीतरेतराश्रय-त्वम् । न चात्र बीजाङ्कुरन्यायः सिद्ध्यति, बीजाङ्कुरेषु ह्यन्यदन्यद्बीजमन्य-स्यान्यस्याङ्कुरस्योत्पादकम्, इह तु याभिरविद्याभिर्ये जीवाः कल्प्यन्ते ताने-वाश्रित्य तासां सिद्धिरित्यशक्यनीयता[2] । अथ बीजाङ्कुरन्यायेन पूर्वपूर्वजी-वाश्रयाभिरविद्याभिरुत्तरोत्तरजीवकल्पना मन्यसे, तथा सति जीवानां भङ्गु-रत्वमकृताभ्यागमकृतप्रहाणादिप्रसङ्गश्च । अत एव ब्रह्मणः पूर्वपूर्वजीवाश्र-याभिरविद्याभिरुत्तरोत्तरजीवभाव[3]कल्पनमित्यपि निरस्तम्, अविद्याप्रवा

१ जीवाज्ञानवादाश्रयणमिति क्वचित् ।
२ अशङ्कनीयता इति क्वचित ।
३ जीवभावभावेति मु पु· ।

ह्रेऽभ्युपगम्यमाने तत्तत्कल्पितजीवभावस्यापि तद्वत्प्रवाहानादिता स्यात्, न ध्रुवरूपता, आमोक्ष च जीवभावस्य ध्रुवत्वमिष्टं न सिद्ध्येत्। यच्चोक्तम्—अविद्याया अवस्तुरूपत्वेनानुपपन्नतैकवेषाया नेतरेतराश्रयत्वादयो वस्तुदोषा अनवक्लृप्तिमावहन्तीति, तथा सति मुक्तान् परं च ब्रह्माऽऽश्रयेदऽविद्या। शुद्धविद्यास्वरूपत्वादशुद्धिरूपा न तत्र प्रसजतीति चे,त्किमुपपत्त्यनुवर्तिन्यऽविद्या? एवं तर्ह्युक्ताभिरुपपत्तिभिर्जीवानपि नाश्रयेत्। किञ्च जीवाश्रयाया अविद्यायास्तत्त्वज्ञानोदयान्नाशे सति जीवो नश्येद्वा न वा? यदि नश्येत्स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात्। नो चे,दविद्यानाशेऽप्यनिर्मोक्षः, ब्रह्मस्वरूपव्यतिरिक्तजीवत्वावस्थानात्। यच्चोक्तम्—मणिकृपाणदर्पणादिषूपलभ्यमानमुखमलिनत्वविमलत्वादिवच्छुद्ध्यशुद्ध्यादिव्यवस्थोपपत्तिरिति। तत्रेदं विमर्शनीयम्—अल्पत्वमलिनत्वादय औपाधिकाः दोषाः कदा नश्येयुरिति। कृपाणाद्युपाध्यपगम इति चेत्, किं तदल्पत्वाद्याश्रयः प्रतिबिम्बस्तिष्ठति[1], न वा? तिष्ठतीति चेत्, तत्स्थानीयस्य जीवस्यापि स्थितत्वादनिर्मोक्षप्रसङ्गः। नश्यतीति चेत्, तद्वदेव जीवनाशात्स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात्। किञ्च, यस्य ह्यपुरुषार्थरूपदोषप्रतिभासः तस्य तदुच्छेदः पुरुषार्थः। तत्र किमौपाधिकदोषप्रतिभासो बिम्बस्थानीयस्य ब्रह्मण, उत प्रतिबिम्बस्थानीयस्य जीवस्यो,तान्यस्य कस्यचित्? आद्ययोः कल्पयोर्दृष्टान्तोऽय न सङ्गच्छते, मुखस्य मुखप्रतिबिम्बस्य चाल्पत्वादिदोषप्रतिभासशून्यत्वात्। न हि मुखं तत्प्रतिबिम्बं वा चेतयते। ब्रह्मणो दोषप्रतिभासे ब्रह्मणोऽविद्याश्रयत्वप्रसङ्गश्च। तृतीयोऽपि कल्पो न कल्पते, जीवब्रह्मव्यतिरिक्तस्य द्रष्टुरभावात्। किञ्च, अविद्याकल्प्यस्य जीवस्य कल्पकः क इति निरूपणीयम्। न तावदविद्या, अचेतनत्वात्। नापि जीवः, आत्माश्रयदोषप्रसङ्गात्, शुक्तिकारजतादिवदविद्याकल्प्यत्वाच्च जीवभावस्य। ब्रह्मैव कल्पकमिति चेत्, ब्रह्माऽज्ञानमेवायातम्। किञ्च, ब्रह्माज्ञानानभ्युपगमे किं ब्रह्म जीवान्पश्यति? न वा? न पश्यति चेत्, ईक्षापूर्विका विचित्रसृष्टिर्नामरू

[1] प्रतिबिम्बमिति क्वचित्।

पव्याकरणमित्यादि ब्रह्मणो न स्यात् । अथ पश्यति, अखण्डैकरस ब्रह्म नाविद्यामन्तरेण जीवान् पश्यतीति ब्रह्माज्ञानप्रसङ्गः । अत एव माया-ऽविद्याप्रविभागवादोऽपि निरस्तः, अज्ञानमन्तरेण हि मायिनोऽपि ब्रह्मणो जीवदर्शित्व न स्यात् । न च मायावी परानदृष्ट्वा मोहयितुमऽलम् । न च माया मायाविनो दर्शनसाधनम्, दृष्टेषु परेषु तन्मोहनसाधनमात्रत्वात्तस्याः । अथ ब्रह्मणो माया तस्य जीवदर्शित्व कुर्वती जीवमोहनहेतुरिति मन्यसे । तर्हि परिशुद्धस्याखण्डैकरसस्वप्रकाशस्य ब्रह्मणः परदर्शन कुर्वती माया मायाऽपरपर्य्याया ऽविद्यैव स्यात् । अथ मतम्—विपरीतदर्शनहेतुरविद्या, माया तु मिथ्याभूतं ब्रह्मव्यतिरिक्तं मिथ्यात्वेनैव दर्शयन्ती न ब्रह्मणो विपरीतदर्शनहेतुः, अतस्तस्या नाविद्यात्वमिति । नैवम्, चन्द्रैकत्वे ज्ञायमाने द्विचन्द्रज्ञानहेतोरप्यविद्यात्वात् । यदि च ब्रह्म मिथ्यात्वेनैव स्वव्यतिरिक्त जानाति, न तर्हि तन्मोहयति । न ह्यनुन्मत्तो मिथ्यात्वेन ज्ञातान् मोहयितुमीहते । अथापुरुषार्थोऽपरमार्थदर्शनहेतुरविद्या, माया तु ब्रह्मणो नाऽपुरुषार्थदर्शनहेतुः, अतोऽस्या नाविद्यात्वमिति मतम्, तन्न, द्विचन्द्रज्ञानस्य दुःखहेतुत्वाभावेनापुरुषार्थत्वाभावेऽपि तद्धेतुरविद्यैव, तन्निरसने च प्रयस्यन्ति[1] । यदि च नापुरुषार्थदर्शनकरी माया, तर्ह्यनुच्छेद्यतया नित्या ब्रह्मस्वरूपानुबन्धिनी स्यात् । अस्तु को दोष इति चेत्, द्वैतदर्शनमेव दोषः, "यत्र हि द्वैतमिव भवति" "यत्र त्वस्य सर्वमात्मैवाऽभूत्तत्केन क पश्ये"दित्याद्यऽद्वैतश्रुतयः प्रकुप्येयुः । परमार्थविषया अद्वैतश्रुतयः, मायायास्त्व परमार्थत्वादविरोध इति चेत्, अपरिच्छिन्नानन्दैकस्वरूपस्य ब्रह्मणोऽपरमार्थभूतमायादर्शन तद्वत्ता वा ऽविद्यामन्तरेण नोपपद्यते । किञ्चापरमार्थभूतया नित्यया मायया किं प्रयोजन ब्रह्मणः? जीवमोहनमिति चेत्, अपुरुषार्थेन मोहनेन किं प्रयोजनम्? क्रीडेति चेत्,[2] अपरिच्छिन्नानन्दस्य किं क्रीडया । परिपूर्णभोगानामेव क्रीडा पुरुषार्थत्वेन लोके दृष्टेति

१ प्रयस्यन्तो-इति मु० पु० ।
२ इत. प्रभृति पुनर्लिखितपुस्तकसंवादोऽस्ति ।

चेत्, नैवमिहोपपद्यते । न ह्यपरमार्थभूतैः क्रीडोपकरणैरपरमार्थतया प्रतिभासमानैर्निष्पन्नयाऽपरमार्थभूतया क्रीडयाऽपरमार्थभूतेन च तत्प्रतिभासेनाऽनुन्मत्तानां क्रीडारसो निष्पद्यते । मायाश्रयतयाऽभिमत[1]ब्रह्मव्यतिरेकेणाविद्याश्रयस्य जीवस्य कल्पनाऽसम्भवश्च पूर्ववदेव द्रष्टव्यः ।

अतो ब्रह्मैवानाद्यऽविद्याशबलं स्वगतनानात्वं पश्यतीत्यद्वितीयत्व[2] ब्रह्मणोऽभ्युपयद्भिरभ्युपेतव्यम् । यत्तु बन्धमोक्षव्यवस्था नोपपद्यत इति, न तद्ब्रह्माज्ञानवादिनश्चोद्यम्, एकस्यैव ब्रह्मणोऽज्ञस्य स्वाज्ञाननिवृत्त्या मोक्ष्यमाणत्वाद् बद्धमुक्तादिव्यवस्थाया एवाभावात् । व्यवह्रियमाणायाश्च बद्धमुक्तशिष्याचार्य्यादिव्यवस्थायाः काल्पनिकत्वा,त्स्वप्नदर्शिन इव[3] चैकस्यैवाविद्यया सर्वकल्पनोपपत्तेः । स्वप्नदृशा ह्येकेन दृष्टाः शिष्याचार्य्यादयस्तदविद्याकल्पिता एव । अत एव बह्वविद्याकल्पनमपि न युक्तिमत् । पारमार्थिकी बन्धमोक्षव्यवस्था स्वपरव्यवस्था च जीवाज्ञानवादिना[4] नाभ्युपेयते । अपारमार्थिकी त्वेकस्यैवाविद्ययोपपद्यते । प्रयोगश्च—बन्धमोक्षव्यवस्थाः स्वपरव्यवस्थाश्च स्वाविद्याकल्पिताः, अपारमार्थिकत्वात्स्वप्नदृष्टव्यवस्थावदिति । शरीरान्तराण्यपि मयैवात्मवन्ति, शरीरत्वादेतच्छरीरवत् । शरीरान्तराण्यपि मदविद्याकल्पितानि,[5] शरीरत्वात् कार्य्यत्वाज्जडत्वात्कल्पितत्वाद्वा एतच्छरीरवत् । विवादाध्यासितं चेतनजातमहमेव, चेतनत्वात्, यदनहं[6] तदचेतनं दृष्टम् यथा घटः । अतस्स्वपरविभागो बद्धमुक्तशिष्याचार्य्यादिव्यवस्थाश्चैकस्याविद्याकल्पिताः । द्वैतवादिनाऽपि[7] बद्धमुक्तव्यवस्था दुरुपपादा, अतीतानां कल्पानामानन्त्यादेकैकस्मिन्कल्पे एकैकमुक्तावपि सर्वेषां मोक्षसम्भवादमुक्तानुपपत्तेः । अनन्तत्वादात्मनाममुक्ताश्च सन्तीति चेत्, किमिदमनन्तत्वम् । असङ्ख्येय-

१ ०श्रयाभिमतेति लि० पु० ।
२ पश्यतो सद्वितीयत्वमिति लि० पु० ऽपभ्रंश' परम् ।
३ स्वप्नदर्शन इवेति लि० पु० ।
४ जीवाज्ञानावादिनेति लि० पु० न तु युक्तम, अपिरधिकोऽत्र मु॰ पु ।
५ मदविकल्पितानीति लि० पु० न तु युक्तम् ।
६ यन्नाहमिति लि० पु स्यात, न तु व्यक्तम । ७ अपिर्नास्ति लि० पु० ।

त्वमिति चेन्न, भूयस्त्वादल्पज्ञैरसङ्ख्येयत्वेऽपीश्वरस्य सर्वज्ञस्य सङ्ख्येया एव । तस्याप्यशक्यत्वे सर्वज्ञत्वं न स्यात् । आत्मना निस्सङ्ख्येयत्वादीश्वरस्याऽविद्यमानसङ्ख्यावेदनाभावो नासार्वज्ञ्यमावहतीति चेन्न, भिन्नत्वे सङ्ख्याविधुरत्व[1] नोपपद्यते । आत्मानः सङ्ख्यावन्तो भिन्नत्वात् माषसर्षपघटपटादिवत् । भिन्नत्वे[2]चात्मना घटादिवज् जडत्वमनात्मत्वं क्षयित्वं च प्रसज्यते । ब्रह्मणश्चानन्तत्वं न स्यात् । अनन्तत्वं नाम परिच्छेदरहितत्वम् । भेदवादे च वस्त्वन्तराद्विलक्षणत्वेन ब्रह्मणो वस्तुतः परिच्छेदरहितत्वं न शक्यते वक्तुम् । वस्त्वन्तरभाव एव हि वस्तुतः परिच्छेदः । वस्तुत परिच्छिन्नस्य देशतः कालतश्चापरिच्छिन्नत्वं न युज्यते । वस्त्वन्तराद्विलक्षणत्वेन वस्तुतः परिच्छिन्ना एव हि घटादयो देशतः कालतश्च परिच्छिन्ना दृष्टाः, तथा सर्वे चेतना ब्रह्म च वस्तुतः परिच्छिन्ना देशकालाभ्यामपि परिच्छिद्यन्ते[3] । एवं च "सत्यं ज्ञानमनन्त"मित्यादिभि[4]स्सर्वप्रकारपरिच्छेदरहितत्वं वदद्भिर्विरोधः, उत्पत्तिविनाशादयश्च जीवानां ब्रह्मणश्च प्रसज्येरन् । कालपरिच्छेद एव ह्युत्पत्तिविनाशभागित्वम् । अत एकस्यैवा[5]परिच्छिन्नस्य ब्रह्मणोऽविद्याविजृम्भितं ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । सुखदुःखप्रतिसन्धानव्यवस्थादयोऽपि स्वाप्नव्यवस्थावदविद्यास्वाभाव्यादुपपद्यन्ते । तस्मादेकमेव नित्यमुक्तस्वप्रकाशस्वभावमनाद्यऽविद्यावशाज्जगदाकारेण विवर्तत इति परमार्थतो[6] ब्रह्मव्यतिरिक्ताभावात्तदनन्यत्वं जगत इति ।

अत्रोच्यते । निर्विशेषस्वप्रकाशमात्रं ब्रह्मानाद्यविद्यातिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्येतत्प्रकाशस्वरूपस्य निरंशस्य प्रकाशनि-

---

१ विधुरत्वे-इति लि पु० ।
२ भिन्ने-इति लि० पु० ।
३ परिच्छिद्यत इति लि० पु० ।
४ ०मित्यादिरिति लि० पु० ।
५ अत एवास्यैवेति लि० पु० ।
६ परमार्थता-इति लि० पु ।

वृत्ति[१]रूपतिरोधाने स्वरूपनाशप्रसङ्गेन तिरोधानासम्भवादिभ्य:[२] सकलप्रमाणविरुद्धं स्ववचनविरुद्धं चेति पूर्वमेवोक्तम् । यत्पुनरुक्तम्—कारणव्यतिरिक्तं कार्य्यं युक्तिबाधितत्वेन शुक्तिकारजतादिवद् भ्रम इति, तदयुक्तम्, युक्तेरभावात् । यस्त्वनुवर्त्तमानस्य कारणमात्रस्य सत्यत्वं व्यावर्तमानानां घटशरावादिकार्याणामसत्यत्वमिति, तदप्यन्यत्र दृष्टस्यान्यत्र व्यावर्तमानता न बाधिके[३]त्यादिभि: पूर्वमेव परिहृतम् । यच्चोपलभ्यमानत्वविनाशित्वाभ्यां सदसदनिर्वचनीयत्वेन कार्य्यस्य मृषात्वमिति, तदसत, उपलब्धिविनाशयोगो हि न मिथ्यात्वं साधयति, किं त्वनित्यत्वम् । यद्देशकालसम्बन्धितया यदुपलब्धम्, तद्देशकालसम्बन्धितया बाधितत्वमेव हि तस्य मिथ्यात्वे हेतु: । देशान्तरकालान्तरसम्बन्धितयोपलब्धस्यान्यदेशकालसम्बन्धित्वेन बाधितत्वं[४] देशान्तरकालान्[तरव्यापित्वमात्रं साधयति, न तु मिथ्यात्वम् । प्रतिप्रयोगश्च[५]—घटादिका[र्यं सत्य]म्, देशकालादिप्रतिपन्नोपाधाव[ब]ाधितत्वात् आत्मवत् । यच्चे[दम् उक्तम् — न]िर्विकार[स्य] कारणस्वरूपादविकृताद्विकृताच्च कार्य्योत्पत्तिर्न सम्भवतीति, स[च अविकृतस्यैव देश]ालादिसहकारिसमवहितात्कारणा[६]त्कार्य्योत्पत्तिसम्भवात् । न च विकृतस्याविकृतस्य च[७] न सम्भवतीति यदुक्तम्, तदप्य[युक्तम्], पूर्वमविकृतस्यैव कालादिसमवधानसम्भवत् । अविकृतत्वाविशेषात्पूर्वमपि देशकालादिसमवधानं प्रसज्यत इति चेत्, न, देशकालादिसमवधानस्य कारणान्तरायत्तस्यैतदायत्तत्वाभावात् । अतो देशकालादिसमवधानरूपविशेषमापन्नं कारणं कार्य्यमुत्पादयतीति न किञ्चिदवहीनम् । कारणस्य च कार्य्यं प्रत्यारम्भकत्वमबाधितं दृश्यमानं न केनापि प्रकारेणापह्नोतु[९]ं शक्यते । यत्तु हेमादिमात्रस्य रुचकादिकार्य्यस्य "त[१०]दाश्रयस्य वा हेमादेरारम्भकत्वं न सम्भवतीति, तद-

---

१ निर्वृत्तीति मु पु ।
२ भवादित्यादिभ्य इति लि पु ।
३ व्यावर्तमानताबाधिकेति लि॰ पु तत्र—अबाधिकेतिच्छेदो द्रष्टव्य ।
४ सबन्धित्वेवबाधितत्वमिति लि पु , सबन्धित्वेन बाधिततत्वमिति मु॰ पु॰ ।
५ प्रतियोगश्चेति लि पु॰ ।
६ करणादिति लि पु ।
७ चेति नास्ति लि॰ पु ।
८ अपिर्नास्ति लि पु ।
९ अपह्नातुमिति लि॰ पु॰ ।
१० कार्यस्यैतदिति लि॰ पु॰ ।

युक्तम्, हेमादिमात्रस्यैव [illegible] ारिकरयुक्तस्यारम्भकत्वसम्भवात्। न चारम्भकहेमव्यतिरिक्तं कार्य[1] न दृश्यत इति वक्तुं शक्यम्, हेमातिरिक्तस्य स्वस्तिकस्य दर्शनात्, बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरस्य साधितत्वाच्च । न चायं शुक्तिकारजतादिवद्भ्रमः, उत्पत्तिविनाशयोरन्तराले उपलभ्यमानस्य तद्देशकालसम्बन्धितया बाधादर्शनात् । न चास्या[2] उपलब्धेर्बाधिका काचिदपि युक्तिर्दृश्यते । प्रागनुपलब्धस्वस्तिकोपलब्धिवेलायामपि हेमप्रत्यभिज्ञा[3] स्वस्तिकाश्रयतया हेम्नोऽप्यनुवृत्ते[4]रविरुद्धा । श्रुतिभिस्तु प्रपञ्चमिथ्यात्व[5]साधन पूर्वमेव निरस्तम् । यच्चान्यदत्र प्रत्यक्षाविरोधादि प्रतिवक्तव्यम्, तदपि सर्वं पूर्वमेव सूक्तम्[6] । यच्चोक्तम्—एकेनात्मना सर्वाणि शरीराण्यात्मवन्तीति, तदसत्, एकस्यैव सर्वशरीरप्रयुक्तसुखदुःखप्रतिसन्धानप्रसङ्गात् । सौभरिप्रभृतिषु ह्यात्मैकत्वेनाऽनेकशरीरप्रयुक्तसुखादिप्रतिसन्धानमेकस्य दृश्यते । न चाहमर्थस्य ज्ञातृत्वात्तद्भेदात्प्रतिसन्धानाभावो, नात्मभेदादिति वक्तुं शक्यम्, आत्मा ज्ञातैव, स चाहमर्थ एव, अन्तःकरणभूतस्त्वहङ्कारो जडत्वात्करणत्वाच्च शरीरेन्द्रियादिवन्न ज्ञातेत्युपपादितत्वात् । यच्च शरीरत्वजडत्वकार्य्यत्वकल्पितत्वैस्सर्वशरीराणामेकस्याविद्याकल्पितत्वमुक्तम्, तदपि सर्वशरीराणामविद्याकल्पितत्वस्यैवाभावादयुक्तम् । तदभावश्चा, ऽबाधितस्य[7] सत्यतोपपादनात् । यच्च चेतनादन्यस्य जडत्वदर्शनात्सर्वचेतनानामनन्यत्व[8]मुक्तम्, तदपि सुखदुःखव्यवस्थया भेदोपपादनादेव निरस्तम् । यत्तु मयैवात्मवन्ति, मदविद्याकल्पितान्य,[9] ऽहमेव सर्वं चेतनजातमित्यहमर्थस्यैक्यमुपपादितम्, तदज्ञातस्वसिद्धान्तस्य भ्रान्तिजल्पितम् । अहत्वमाद्यर्थ-

१ हेतुव्यतिकार्यमिति लि० पु० ।
२ नचास्य—इति लि० पु० ।
३ ०प्रत्यभिज्ञान—इति लि० पु० ।
४ ०प्यनुक्तिरिति लि० पु० ।
५ मिथ्यात्वे—इति लि० पु० ।
६ पूर्वमेवमुक्तमिति लि० पु० ।
७ तदभावश्च बाधितस्येति लि० पु० पाठो विरुद्धार्थः ।
८ अन्यत्वमिति लि० पु० पाठ प्रामादिक ।
९ मयि चात्मवति मदविद्याकल्पितानामिति लि० पु० न तु युक्तम ।

विलक्षण चिन्मात्र ह्यात्मा त्वन्मते । किञ्च, निर्विशेषचिन्मात्रातिरेकि सर्वं मिथ्येति वदतो मोक्षार्थश्रवणादिप्रयत्नो निष्फलः, अविद्याकार्यत्वात् शुक्तिकारजतादिषु रजताद्युपादानादिप्रयत्नवत्, मोक्षार्थप्रयत्नोऽपि[1] व्यर्थः कल्पिताचार्य्यायत्तज्ञानकार्य्यत्वात् शुकप्रह्लादवामदेवादिप्रयत्नवत्, तत्त्वमस्यादिवाक्यजन्य ज्ञान न बन्धनिवर्तकम् अविद्याकल्पितवाक्यजन्यत्वाद ऽविद्याकल्पितज्ञात्राश्रयत्वात्[2] कल्पिताचार्यायत्तश्रवणजन्यत्वाद्वा स्वाप्नबन्धनिवर्तकवाक्यजन्यज्ञानवत्[3] । किञ्च, निर्विशेषचिन्मात्र ब्रह्म मिथ्या, अविद्याकार्य्यज्ञानगम्यत्वात्, अविद्याकल्पितज्ञात्राश्रित[4]ज्ञानगम्यत्वात, अविद्याकल्पित[5]ज्ञानगम्यत्वाद्वा, यदेव तत्तथा, यथा स्वाप्नगन्धर्वनगरादि । न च निर्विशेषचिन्मात्र ब्रह्म स्वय प्रकाशते, येन न प्रमाणान्तरमपेक्षेत[6] । यत्त्वात्मसाक्षिक स्वयप्रकाशज्ञान दृश्यते, तत्तु ज्ञेयविशेषसिद्धिरूपं ज्ञातृगतमेव दृश्यत इति पूर्वमेवोक्तम् । यानि च तस्य निर्विशेषत्वसाधनानि[7] यौक्तिकानि ज्ञानान्युपन्यस्तानि, तानि चानन्तरोक्तैरविद्याकार्य्यत्वादिभिरनुमानैर्निरस्तानि । न च निर्विशेषस्य चिन्मात्रस्याज्ञानसाक्षित्वमहङ्कारादिजगद्भ्रमश्चोपपद्यते । साक्षित्वभ्रमादयोऽपि हि ज्ञातृविशेषगता दृष्टाः, न ज्ञप्तिमात्रगताः । न च तस्य[8] प्रकाशकत्व स्वायत्तप्रकाशता वा सिध्यति । प्रकाशो हि[9] कस्यचित्पुरुषस्य कञ्चनार्थविशेष प्रति सिद्धिरूपो दृश्यते । तत एव हि तस्य स्वयप्रकाशतोपपाद्यते भवद्भिरपि । न चातादृशस्य[10] निर्विशेषस्य स्व[11]प्रकाशता सम्भवति । यः[12] पुनस्स्वगोष्ठीष्वपरमार्थादपि परमार्थकार्य दृश्यत

---

१ अपिशब्दो नास्ति लि० पु० ।
२ ज्ञानाश्रयत्वादिति लि० पु० प्रामादिकम् ।
३ निवर्त्तनवाक्यजन्यज्ञातृवदिति लि० पु० प्रामादिकम् ।
४ ज्ञानाश्रितेति लि० पु० प्रमादः ।
५ अविद्यात्मकेति लि० पु०
६ अपेक्षते—इति पु० द्वयेपि पाठः ।
७ साधकानि इति क्वचित् । ८ न चेतनस्येति लि० पु० ।
९ हि नामेति मु० पु० । १० न च तादृशस्येति लि० पु० ।
११ स्वेति नास्ति लि० पु० । १२ य इति नास्ति लि० पु० ।

इत्युद्घोषः,[1] सोऽपि तानि कार्याणि सर्वाण्यबाधितकल्पानि व्यावहारिकसत्यानि वस्तुतस्त्वविद्यात्मकान्येवेति स्वाभ्युपगमादेव निरस्तः। अस्माभिरपि सर्वत्र परमार्थादेव कारणात्सर्वकार्य्योत्पत्तिमुपपादयद्भिः पूर्वमेव निरस्तः। न च त्वयैषामनुभूयमानाना[2] श्रुतिविरोधो वक्तुं शक्यते, श्रुतेरप्यविद्याकार्य्यत्वेनाविद्यात्मकत्वेन चोक्तदृष्टान्तेभ्यो विशेषाभावात्। यत्तु ब्रह्मणोऽपारमार्थिकज्ञानगम्यत्वेऽपि पश्चात्तनबाधादर्शनाद्ब्रह्म सत्यमेवेति, तदसत्, दुष्टकारणजन्यज्ञानगम्यत्वे निश्चिते सति पश्चात्तनबाधादर्शनस्याकिञ्चित्करत्वात्। यथा[3] शून्यमेव तत्त्वमिति वाक्यजन्यज्ञानस्य पश्चात्तनबाधादर्शनेऽपि दोषमूलत्वनिश्चयादेव तदर्थस्यासत्यत्वम्। किञ्च, "नेह नानाऽस्ति किञ्चन" "विज्ञानमानन्दं ब्रह्मे"ति विज्ञानमात्रातिरिक्तस्य कृत्स्नस्य वस्तुजातस्य निषेधकत्वेन सर्वस्मात् परत्वात्पश्चात्तनबाधादर्शनमुच्यते। शून्यमेव तत्त्वमिति तस्याप्यभाव वदतस्तस्मात्परत्वेन पश्चात्तनबाधो दृश्यते, सर्वशून्यतातिरेकिनिषेधासम्भवात्तस्यैव पश्चात्तनबाधादर्शनम्। दोषमूलत्वं तु प्रत्यक्षादीनां[4] वेदान्तजन्मनः सर्वशून्यज्ञानस्याप्यविशिष्टम्। अतः सर्वं विज्ञानजातं पारमार्थिकं[5] ज्ञातृगतं स्वयं च परमार्थभूतमर्थविशेषसिद्धिरूपम्। तत्र किञ्चिज्ज्ञानं दोषमूलम्, दोषश्च परमार्थः, किञ्चिच्च निर्दोषं पारमार्थिकसामग्रीजन्यमिति यावन्नाभ्युपेयते, न तावत्सत्यमिथ्यार्थव्यवस्था लोकव्यवहारश्च सेत्स्यति। लोकव्यवहारो हि पारमार्थिको भ्रान्तिरूपश्च पारमार्थिकज्ञातृगतार्थविशेषसिद्धिरूपप्रकाशपूर्वकः। निर्विशेषसन्मात्रस्य तु पारमार्थिकस्याऽपारमार्थिकस्य च प्रतिभासादे[6]र्हेतुत्वासम्भवाल्लोकव्यवहारो न सम्भवति। यच्च तैर्निरधिष्ठानभ्रमासम्भवात् सर्वाध्यासाधिष्ठा-

१ इत्युक्तदोष इति लि० पु०।
२ त्वयैषामनुमानम् इति क्वचित्।
३ तथेति मु० पु०।
४ प्रत्यक्षादिनेति लि० पु०। ५ पारमार्थिकमिति लि० पु०।
६ पारमार्थिकस्य सर्वशून्यतातिरेकिनिषेधासम्भवात्तस्यैव पश्चात्तनबाधादर्शन पारमार्थिकस्य प्रतिभासादेरिति लि० पु० पाठ. पूर्वग्रन्थसंकीर्ण प्रामादिक।

नस्य सन्मात्रस्य तु पारमार्थिकत्वमुक्तम्, तदपि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि पारमार्थिकस्य भ्रमोपपत्तिवदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेर्निरस्तम् । अथाधिष्ठानापारमार्थ्ये न क्वचिद् भ्रमो दृष्ट इति सन्मात्रस्य पारमार्थिकत्वमवश्याश्रयणीयमिति मन्यते,[1] हन्त तर्हि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि न क्वचिद्भ्रमो दृष्ट इति दर्शनानुगुण्येन तेषामपि पारमार्थ्यमवश्याश्रयणीयमिति न कश्चि[2]द्विशेषोऽन्यत्र तत्[3]संरम्भात् । यत्तु भेदपक्षेऽप्यतीतकल्पानामानन्त्यात्सर्वेषामात्मना मुक्तत्वेन बद्धासम्भवाद्बद्धमुक्तव्यवस्था न सम्भवतीति, तदात्मानन्त्येन परिहृतम् । यत्त्वात्मना भिन्नत्वे माषसर्षपघटपटादिवत्सङ्ख्यावत्त्वमवर्जनीयमिति, तत्र घटादीनामप्यनन्तत्वात् दृष्टान्तः साध्यविकलः स्यात् । दश घटास्सहस्रं माषा इति सङ्ख्यावत्त्वं दृश्यत इति चेत्, सत्यम्, तत्तु न घटादिस्वरूपगतमपि तु देशकालाद्युपाधिमद्घटादिगतम्, तादृशं तु सङ्ख्यावत्त्वमात्मनामप्यभ्युपगच्छामः । न च तावता सर्वमुक्तिप्रसङ्गः, आत्मस्वरूपानन्त्यात् । यत्त्वात्मना भिन्नत्वे घटादिवज्जडत्वानात्मत्वक्षयित्वप्रसङ्ग इति, तदयुक्तम्, एकजातीयानां भेदस्य तज्जातीयानां जात्यन्तरीयत्वानापादकत्वात्[4] । न हि घटानां[5] भेदस्तेषां पटत्वमापादयति । यत्तु भिन्नत्वे वस्तुतः परिच्छेदाद् देशकालाभ्यामपि परिच्छेदो ब्रह्मणः प्रसज्यत इत्यनन्तत्वं ब्रह्मणो न सिध्यतीति, तदयुक्तम्, वस्तुतः परिच्छिन्नानामपि देशकालपरिच्छेदस्य न्यूनाधिकभावेनानियमदर्शनात्, देशकालसम्बन्धेयत्तायाः प्रमाणान्तरायत्तनिर्णयत्वेन ब्रह्मणः सर्वदेशकालसम्बन्धस्यापि प्रमाणान्तरादापततो विरोधाभावात् । वस्तुतः परिच्छेदमात्रादपि सर्वप्रकारपरिच्छेदरहितत्वाभावादानन्त्यासिद्धिरिति चेत्, तद्भवतोऽप्यविद्याविलक्षणत्वं ब्रह्मणोऽभ्युप-

१ मन्यसे इति मु० पु० ।
२ न क्वचिदिति लि० पु० ।
३ तदिति नास्ति लि० पु० ।
४ ०ऽनापादनादिति मु० पु० ।
५ ०घटादीनामिति मु० पु० ।

यतः समानम् । अतस्सतोऽविद्याविलक्षणत्वाभ्युपगमा†द्ब्रह्मणोऽपि भिन्नत्वेन भेदप्रयुक्ता दोषास्सर्वे तवापि प्रसज्येरन् । यद्यऽविद्याविलक्षणत्वं नाभ्युपेयते, तर्ह्यविद्यात्मकत्वमेव ब्रह्मणः स्यात्,† "सत्यं ज्ञानमनन्तं ब्रह्मे"ति लक्षणवाक्यमपि तत एवापार्थकं स्यात् । भेदतत्त्वानभ्युपगमे हि स्वपक्षपरपक्षसाधनदूषणादिविवेकाभावात्सर्वमसमञ्जसं स्यात् । आनन्त्यप्रसिद्धिश्च देशकालपरिच्छेदराहितत्वमात्रेण, न वस्तुतोऽपि परिच्छेदराहितत्वेन,[1]तथाविधस्य शशविषाणायमानस्यानुपलब्धेः । भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणस्सर्वप्रकारत्वात्स्वतः परतोऽपि परिच्छेदो न विद्यते । तदेव कारणाद्भिन्नस्य कार्य्यस्य सत्यत्वाद्ब्रह्मकार्यं कृत्स्नं जगद्ब्रह्मणोऽन्यदेवेति प्राप्ते प्रचक्ष्महे—

'तदनन्यत्वमारम्भणशब्दादिभ्यः' ।

तस्मात्परमकारणाद्ब्रह्मणोऽनन्यत्वं जगतः आरम्भण-शब्दादिभ्यस्तदुपपादयद्भ्योऽवगम्यते । 'आरम्भण'-शब्द आदिर्येषां वाक्यानां तान्यारम्भणशब्दादीनि "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत[2]" "अनेन जीवेनात्मनाऽनुप्रविश्य" "सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्यन्तानि[3], प्रकरणान्तरस्थान्यप्येवञ्जातीयकान्यऽत्राभिप्रेतानि । एतानि हि वाक्यानि चिदचिदात्मकस्य जगतः परस्माद्ब्रह्मणोऽनन्यत्वमुपपादयन्ति। तथा हि, "स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात"मिति[4]कृत्स्नस्य जगतो ब्रह्मैककारणत्वं कारणात्कार्य्यस्यानन्यत्वं च हृदि निधाय कारणभूतब्रह्मविज्ञानेन कार्य्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य ब्रह्मैककारणतामजानता शिष्येण "कथं नु भगवः स आदेश" इत्यन्य-

†† एतच्चिह्नान्तर्गत पाठो लि० पु० त्रुटित ।

१ ०मात्रे न वस्तुतोपि परिच्छेदराहितत्वे-इति लि० पु ।

२ ऽसृजदिति मु पु । ३ इत्येतानीति पु द्वयेपि पाठः ।

४ ज्ञाते सतीति लि पु० ऽत्राधिकमस्ति ।

ज्ञानेनान्यज्ञातताऽसम्भव चोदितो[1] जगतो ब्रह्मैककारणतामुपदेक्ष्यन् लौकिकप्रतीतिसिद्ध कारणात्कार्य्यस्यानन्यत्व तावत् "यथा सोम्यैकेन मृत्पिण्डेन सर्व मृन्मय[2] विज्ञात स्या"दिति दर्शयति। 'यथैकमृत्पिण्डारब्धाना घटशरावादीना तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेन ज्ञाततेत्यर्थः। अत्र काणादवादेन कारणात्कार्य्यस्य द्रव्यान्तरत्वमाशङ्क्य लोकप्रतीत्यैव कारणात्कार्य्यस्यानन्यत्वमुपपादयति "वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्य"मिति। आरभ्यते–आलभ्यते स्पृश्यत इत्यारम्भणम्, "कृत्यल्युटो बहुल' मिति कर्मणि ल्युट्। वाचा वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः। घटेनोदकमाहरेत्यादिवाक्पूर्वको ह्युदकाहरणादिव्यवहारः, तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदराकारत्वादिलक्षणो[3] विकारः सस्थानविशेषस्तत्प्रयुक्त च घट इत्यादि नामधेय स्पृश्यते, उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव सस्थानान्तरन्तानामधेयरभा[4]ग्भवति। अतो घटाद्यपि मृत्तिकेत्येव सत्य, मृत्तिकाद्रव्यमित्येव सत्य प्रमाणेनोपलभ्यत इत्यर्थः, न तु द्रव्यान्तरत्वेन। अतस्तस्यैव मृद्धिरण्यादेर्द्रव्यस्य सस्थानान्तरभाक्त्वमात्रेणैव बुद्धिशब्दान्तरादय एवोपपद्यन्ते, यथैकस्यैव देवदत्तस्यावस्थाविशेषैर्बालो युवा स्थविर इति बुद्धिशब्दान्तरादयः कार्य्यविशेषाश्च दृश्यन्ते। यदुक्तम्–सत्यामेव मृदि घटो नष्ट इति व्यवहारात्कारणादन्यत्कार्य्यमिति, तत् उत्पत्तिविनाशादीना कारणभूतस्यैव द्रव्यस्यावस्थाविशेषत्वाभ्युपगमादेव परिहृतम्। तत्तदवस्थस्य तस्यैव[5] द्रव्यस्य ते ते शब्दास्तानि तानि च कार्य्याणीति युक्त। द्रव्यस्य तत्तदवस्थत्व कारकव्यापारायत्तमिति तस्यार्थवत्त्वम्। अभिव्यक्त्यनुबन्धीनि चोद्यानि तस्या अनभ्युपगमादेव परिहृतानि। उत्पत्त्यभ्युपगमेऽपि सत्कार्य्यवादो न विरुध्यते, सत एवोत्पत्तेः।

१ ज्ञाततासभव चोदित इति मु॰ पु, ज्ञानासभवचोदित इति लि पु।
२ मृण्मयमिति पु॰ द्वयेपि पाठ॰। ३ पृथुबुध्नोदरत्वादिलक्षण इति लि॰पु॰।
४ ०नामधेयभागिति लि पु।
५ तत्तदवस्थस्यैकस्यैव तस्यैवेति मु पु।

विप्रतिषिद्धमिदमभिधीयते–पूर्वमेव स[1],त्तदुत्पद्यते चेति । अज्ञातोत्पत्तिविनाशयाथात्म्यस्येद चोद्यम् । द्रव्यस्योत्तरोत्तरसंस्थानयोगः पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः स्वावस्थस्य तूत्पत्तिः । अतः सर्वावस्थस्य द्रव्यस्य सत्त्वात्सत्कार्य्यवादो न विरुध्यते । संस्थानस्यासत उत्पत्तावसत्कार्य्यवादप्रसङ्ग इति चेद्, असत्कार्य्यवादिनोऽप्युत्पत्तेरनुत्पत्तिमत्त्वे सत्कार्य्यवादप्रसङ्गः, उत्पत्तिमत्त्वे चानवस्था । अस्माकं त्ववस्थाना पृथक्प्रतिपत्तिकार्य्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यम् । कपालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेन घटत्वावस्थावदेकत्वावस्थाप्रहाणेन बहुत्वावस्था, तत्प्रहाणेनैकत्वावस्था[2]चेति न कश्चिद्विरोधः । तथा "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मिति सदेवेदम् इदानीम् विभक्तनामरूपत्वेन नानारूपं जगदग्रे[3] नामरूपविभागाभावेनैकमेवासीत्, सर्वशक्तित्वेनाधिष्ठात्रन्तरासहतयाऽद्वितीयं चेत्यनन्यत्वमेवोपपादितम् । तथा "तदैक्षत बहु स्यां प्रजायेये"ति वक्ष्यमाण[4]तेजःप्रभृतिविविधविचित्रस्थिरत्रस[5]रूपजगत्त्वेनात्मनो बहुभवनं सङ्कल्प्य जगत्सर्गाभिधानात् कार्य्यभूतस्य जगतः परमकारणात्परस्माद्ब्रह्मणोऽनन्यत्वमवसीयते । सच्छब्दवाच्यस्य परस्य ब्रह्मणः सर्वज्ञस्य सत्यसङ्कल्पस्य निरवद्यस्यैव सदेवेदमिति निर्द्देशार्हजगत्त्वं सच्छब्दवाच्यस्य च[6] जगतो नामरूपविभागाभावेनैकत्वमद्वितीयत्वमधिष्ठात्रन्तरनिरपेक्षत्वं पुनरपि तस्यैव विविधविचित्रस्थिरत्रसरूपजगत्त्वेन बहुभवनसङ्कल्परूपेक्षणं यथासङ्कल्पं सर्गश्च कथमुपपद्यत इत्याशङ्क्याह "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृत"मित्यादि । 'तिस्रो देवता' इति कृत्स्नमचिद्वस्तु निर्द्दिश्य स्वात्मकजीवानुप्रवेशेनैतद्विचित्रनामरूपभाक्करवाणीत्युक्तम् । 'अनेन जीवे-

१ पूर्वसदिति लि पु॰ । २ तत्प्रहाणेनैकत्वावस्थेति लि॰ पु॰ नास्ति ।
३ जगदेकमग्रे–इति मु॰ पु । ४ वक्ष्यमाणेति लि पु ।
५ स्थिरजङ्गमेति लि पु पाठ, नत्वर्थे विशेष ।
६ वाच्यस्यैवेति लि पु ।

नात्मना' मदात्मकजीवेनात्मतया अनुप्रविश्यैतद्विचित्रनामरूपभाक्करवाणीत्यर्थः । स्वात्मनो जीवस्य चात्मतयाऽनुप्रवेशकृतं नामरूपभाक्त्वमित्युक्तं भवति, "तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभव"दिति श्रुत्यन्तरेण स्पष्टं सजीवं जगत्परेण ब्रह्मणाऽऽत्मतयाऽनुप्रविष्टमिति । तदेतत्कार्य्यावस्थस्य च कारणावस्थस्य च चिदचिद्वस्तुनः सकलस्य स्थूलस्य सूक्ष्मस्य च परब्रह्मशरीरत्वं, परस्य च ब्रह्मण आत्मत्वमन्तर्य्यामिब्राह्मणादिषु सिद्धं स्मारितम् । अनेन पूर्वोक्ताशङ्का निरस्ता । अचिद्वस्तुनि सजीवब्रह्मणया[1]त्मतया ऽवस्थिते नामरूपव्याकरणवचनाच्चिदचिद्वस्तुशरीरकं ब्रह्मैव जगच्छब्दवाच्यमिति सदेवेदमग्र एकमेवासीदित्यादि सर्वमुपपन्नतरम् । शरीरभूतचिदचिद्वस्तुगताः सर्वे विकाराश्चापुरुषार्थाश्चेति ब्रह्मणो निरवद्यत्वं कल्याणगुणाकरत्वं च सुस्थितम् । तदेत- "दधिकं तु भेदनिर्देशा" दित्यनन्तरमेव वक्ष्यति । तथा "ऐतदात्म्यमिदं सर्व" मिति कृत्स्नस्य चेतनाचेतनस्य ब्रह्मतादात्म्यमुपदिशति, तदेव च "तत्त्वमसी"ति निगमयति । तथा प्रकरणान्तरस्थेष्वपि वाक्येषु "सर्वं खल्विदं ब्रह्म" "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" इदं सर्वं यदयमात्मा" "ब्रह्मैवेदं सर्वमात्मैवेदं सर्व"मित्यनन्यत्वं प्रतीयते, तथाऽन्यत्वं च निषिध्यते "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" "नेह नानाऽस्ति किंचन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती"ति, तथा "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये"दित्यविदुषो द्वैतदर्शनं विदुषश्चाद्वैतदर्शनं प्रतिपादयदऽनन्यत्वमेव तात्त्विकमिति प्रतिपादयति । तदेवमारम्भणशब्दादिभ्यो जगतः परमकारणात्परस्माद्ब्रह्मणो ऽनन्यत्वमुपपाद्यते ।

अत्रेदं तत्त्वम्—चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव सर्वदा सर्वशब्दाभिधेयम् । तत्कदाचित्स्वस्मात्स्वशरीरतयाऽपि पृथग्व्यपदेशानर्हसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरम्, तत्कारणावस्थं ब्रह्म । कदाचिच्च विभक्तनामरूपव्यवहारार्हस्थूलदशापन्नचिदचिद्वस्तुशरीरम्, तच्च कार्य्या-

१ सजीवे ब्रह्मणीति मु पु० ।

## गौण्यसम्भवात् ॥ २ । ४ । २ ॥

गौण्या उत्पत्तिश्रुतेरसम्भवो गौण्यसम्भवस्तस्मादेकदेश्युक्तमयुक्तमित्यर्थः । प्राणानां नित्यत्व एकविज्ञानप्रतिज्ञा बाध्येतेति भावः । सद्भावश्रुतिस्तु हिरण्यगर्भात्मकावान्तरप्रकृतिरूपप्राणानां स्वविकारापेक्षया प्राक्सद्भावं बोधयति । अवान्तरप्रलये हिरण्यगर्भेन्द्रियाणां लयाभावादिति बोध्यम् ॥

इन्द्रियाणां मुख्यं जन्मेत्यत्र हेत्वन्तरमाह ।

## तत्प्राक्श्रुतेश्च ॥ २ । ४ । ३ ॥

तत्तत्र "एतस्माज्जायते प्राण" इत्यादिवाक्ये "जायते" इति जन्मवाचिपदस्य खवाय्वादिषु मुख्यस्य खाद्यपेक्षया प्राचीनेषु प्राणेन्द्रियादिषु श्रुतेश्चेन्द्रियाणां मुख्यं जन्मेत्यर्थः । एकस्मिन्वाक्य एकस्य पदस्य क्वचिद्गौणत्वं क्वचिन्मुख्यत्वमित्यस्यासम्भवादित्यर्थः ॥

उत्पत्तिप्रकरणेष्विन्द्रियाणामुत्पत्तिर्न श्रूयत इति यदुक्तं तन्न, छान्दोग्य उत्पत्तेः श्रुतत्वादित्याह ।

## तत्पूर्वकत्वाद्वाचः ॥ २ । ४ । ४ ॥

ब्रह्मप्रकृतिकानि तेजोऽबन्नानि तच्छब्देनोच्यन्ते । तथा च प्राणेन मनसा च सहिताया वाचः "अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागि"त्यनेन तेजोऽबन्नजन्यत्वाभिधानादस्त्युत्पत्तिश्रुतिरित्यर्थः । तस्मादुत्पत्तिश्रुतिसद्भावात्सृष्टेः प्राक्सद्भावश्रुतेश्चान्यविषयत्वादस्ति श्रुतीनामविरोध इति सिद्धं ब्रह्मविकारत्वमिन्द्रियाणामिति ॥

एवमिन्द्रियाणामुत्पत्तिं प्रसाध्य तेभ्यो जीवस्य

विवेकार्थं तदाश्रितसंख्यां निर्णेतुकाम आश्रयाश्रयिभाव-सङ्गत्या पूर्वपक्षयति ।

**सप्त गतेर्विशेषितत्वाच्च ॥ २ । ४ । ५ ॥**

"सप्त प्राणाः प्रभवन्ति तस्मा" दिति सप्तेन्द्रियाणि श्रूयन्ते । क्वचि"दष्टौ ग्रहा अष्टावतिग्रहा" इत्यत्राष्टौ ग्रहाः पुरुषपशुबन्धका इन्द्रियाणि । रागाद्युत्पादनद्वारे-न्द्रियाकर्षका विषया अतिग्रहा इत्यर्थः । "सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चा" वित्यत्र नव । अवाञ्चौ पायूपस्थौ । "नव वै पुरुषे प्राणा नाभिर्दशमी" त्यत्र दश । "दश वै पुरुषे प्राणा आत्मैकादश" इत्यत्रैकादश । आत्मा मनः । एवं क्वचिद्‌द्वादश क्वचित्त्रयोदशेन्द्रियाणि श्रूयन्ते । तासां श्रुतीनां विरोधसन्देहे विरोधोऽस्तीति प्राप्ते, एकदेशिमतं सप्तैवेन्द्रियाणि । कुतः । गतेः श्रुत्या सप्तत्वावगतेरित्यर्थः । किं च "सप्त वै शीर्षण्याः प्राणा" इतीन्द्रियाणां शीर्षण्यत्वेन विशेषितत्वात्सप्तेन्द्रियाणि । ये शीर्षण्यास्सप्त द्वे श्रोत्रे द्वे नेत्रे द्वे नासिके एका वागिति, ते प्राणा इति सप्तानामेवेन्द्रियत्वावगमात् । अष्टत्वादि-संख्याश्रवणं त्वेकस्यैवान्तःकरणस्य संशयनिश्चयगर्वस्म-रणरूपवृत्तिभेदेन मनोबुद्ध्यहङ्कारचित्तानीति चतुष्ट्यव-त्सप्तानामेव वृत्तिभेदेनोपपद्यत इत्यविरोधः श्रुतीनामिति प्राप्तम् । तद्दूषयति ।

**हस्तादयस्तु स्थितेऽतो नैवम् ॥ २ । ४ । ६ ॥**

"तु" शब्देन प्राणानां सप्तत्वनिरासः । यतो "हस्तो वै ग्रह" इत्यादिना हस्तादयो व्यतिरिक्ताः प्राणाः श्रूयन्ते । सप्तत्वसंख्यायामसम्भावितान्तर्भावे सप्तत्वा-तिरेके स्थिते सप्तत्वसंख्येन्द्रियनिष्ठैकादशत्वसंख्यायाम-

न्तर्भावयितुं शक्यते, न्यूनसंख्याया अधिकसंख्यायामन्तर्भावसम्भवात् । अतो नैवं मन्तव्यं "सप्तैव प्राणा" इति सूत्रार्थः । यद्यपि ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं मनश्चेत्येकादशेन्द्रियाणि विहाय हृदयाहङ्कारौ प्राणानां द्वादशत्रयोदशसंख्याऽऽपादकौ श्रूयेते, तथाऽपि तयोरन्तःकरणप्रभेदत्वान्नाधिकसंख्याऽऽपादकत्वमित्येकादशैवेन्द्रियाणीति निरवद्यम् । "सप्त वै शीर्षण्याः प्राणा" इत्यत्र न सप्तोद्देशेन प्राणत्वविधानम्, किं तु प्राणोद्देशेन स्थानभेदमात्रेण चतुर्णामेवेन्द्रियाणां सप्तत्वमिति न तद्विरोधः । "नव वै पुरुषे प्राणा नाभिर्दशमी"ति वाक्यं पुरुषाकारदेहच्छिद्राभिप्रायम्, न प्राणाभिप्रायमित्यविरोध इति सिद्धम् ॥

नन्विदं सूत्रद्वयव्याख्यानमसङ्गतम्, "सप्त प्राणाः प्रभवन्ती"ति घ्राणरसनचक्षुःश्रोत्रत्वङ्मनोवाचां सप्तत्वावगतिः शीर्षण्यानां विशेषत्वमिति हेतुद्वयवैयधिकरण्येन सूत्रे "च"कारानुपपत्तेः, ये शीर्षण्याः सप्त ते प्राणा नेतर इत्यत्र परिसंख्याऽऽपत्तेश्च । अत एव तदुत्तरं द्वितीयसूत्रव्याख्यानमप्यसङ्गतमिति चेत्, तर्ह्यन्यथा सूत्रद्वयं व्याख्यास्यामः । मरणसमये येषां सहगमनं तेषामेव भोगसाधनत्वादिन्द्रियत्वम् । तथा च मुख्यं प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति घ्राणादीनां सप्तानामेव गतेः सहगमनस्य श्रवणात्सप्तैवेन्द्रियाणि । ननु सर्वशब्दश्रवणात्कथं सप्तानामेव गतिश्रवणं तत्राह "विशेषितत्वाच्चे"ति । "स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवत्येकीभवति न पश्यति न जिघ्रति न रसयते न वदति न शृणोति न मनुते न स्पृशतीत्याहु"-

रिति चक्षुरादीनां सप्तानामेव प्रकृतानां विशेषितत्वात्स-र्वशब्दः प्रकृतगामी । सर्वे ब्राह्मणा भोजयितव्या इत्यत्र सर्वशब्दो यथा निमन्त्रितप्रकृतब्राह्मणपरस्तद्वदिति शङ्का-सूत्रार्थः । यत्रोत्क्रान्त्यवस्थायां चक्षुरधिष्ठातृदेवः स एष चाक्षुषशब्दवाच्यः पुरुषो रूपादिविषयव्याप्तिं विहाय वर्तते । तदानीमयमरूपज्ञो भवति । हृदये चक्षुरेकीभवति । पार्श्वस्थाश्च नायं पश्यतीत्याहुरिति श्रुत्यर्थः । सिद्धान्त-सूत्रार्थस्तु, सप्तभ्योऽतिरिक्ता हस्तादयोऽपि बन्धकत्वेन श्रूयन्ते "हस्तौ वै ग्रह" इत्यादिना । ग्रहत्वं बन्धकत्वं हस्तादीनां सहगमनं विना न सम्भवति । "सर्वे प्राणा अनूत्क्रामन्ती"त्यविशेषेण सर्वेन्द्रियाणामुत्क्रान्तिश्रव-णाच्च भवन्त्येकादशोत्क्रान्तिमन्तः सन्तः प्राणाः । न च सर्वशब्दस्य प्रकृतविशेषितसप्तप्राणपरत्वं, प्रकरणाच्छ्रुते-र्बलीयस्त्वात् । सर्वे ब्राह्मणा भोजयितव्या इत्यत्र त्वन-न्यगत्या प्रकृतपरत्वं सर्वशब्दश्रुतेरिति । शिष्टसूत्राक्षरार्थः पूर्ववदिति । तस्मादेकादशैवोत्क्रान्तिमन्तः प्राणा इति सिद्धम् ॥

नन्विन्द्रियाणामुत्क्रान्तिर्न सम्भवति, तेषामपरि-च्छिन्नाहङ्कारजन्यत्वेन विभुत्वात्, इत्याक्षेपसङ्गत्या सां-ख्यमतं दूषयति ।

अणवश्च ॥ २ । ४ । ७ ॥

इमे प्राणा अणवः परिच्छिन्ना इन्द्रियाग्राह्यत्वेन सूक्ष्माश्चेत्यर्थः । न तु परमाणव इति सूत्रार्थः । तथात्वे-ऽव्यात्मपक्षोक्तानां शरीरव्यापि सुखादिकं न स्यादि-त्यादिदोषाणां प्रसङ्गादिति । इन्द्रियाणां विभुत्वे काशी-स्थविश्वेश्वरदर्शनस्पर्शने सेतुवासिनामपि स्यातां, उत्क्रा-

न्तिगत्यागतिश्रुतिविरोधश्च स्यात्, इत्यादिदोषा द्रष्टव्याः । तस्मात्परिच्छिन्नाः सूक्ष्माश्च प्राणा इति सिद्धम् ॥

इन्द्रियाणामुत्पत्त्यादिकमुक्त्वा मुख्यप्राणेऽप्युत्पत्तिसन्देहे, आद्याधिकरणन्यायमतिदिशति ।

**श्रेष्ठश्च ॥ २ । ४ । ८ ॥**

इन्द्रियस्वरूपे प्राणे ज्ञाते तद्व्यापारान्मुख्यप्राणस्य भेदचिन्ता करिष्यमाणा सुकरेति मध्येऽयमतिदेशः कृतः । "न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः, आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परं किञ्चनास" इत्यत्र "आनीत्" पदेन प्राणसञ्चारस्य महाप्रलये श्रुतत्वात्सञ्चारवतः प्राणस्य स्थितिरिति न प्राणस्योत्पत्तिरित्यभ्यधिकाशङ्कायामयमतिदेशः । इन्द्रियवत् श्रेष्ठोऽपि प्राणो ब्रह्मविकारः "एतस्माज्जायते प्राणः" इत्युत्पत्तिश्रवणस्याविशेषादित्यर्थः । श्रुत्यर्थस्तु । तर्हि तस्मिन्महाप्रलये मृत्युर्मारको मृत्युमद्वा नासीत् । अमृतं देवभोग्यं च नासीत् । तथा रात्रेरह्नश्च प्रकेतश्चिह्नभूतश्चन्द्रः सविता च नास्ताम् । स्वधया सहेति सम्बन्धः । स्वधाशब्देन पितृभ्यो दीयमानमन्नं तदर्चनं चोच्यते । तर्हि शून्यवादः स्यादित्यत आह "आनीत्" इति । तदेवैकं मूलकारणं परं ब्रह्मावातं वाय्वादिप्रपञ्चरहितमानीदासीदिति यावत् । तस्मादात्मनोऽन्यत्किञ्चिदपि नास ह न बभूव किलेति हकारस्यान्वय इति ॥

मुख्यप्राणस्योत्पत्तिचिन्ताऽनन्तरं तत्स्वरूपं निरूपयति ।

**न वायुक्रिये पृथगुपदेशात् ॥ २ । ४ । ९ ।**

"यः प्राणः स वायु" रिति महान्वायुरेव प्राण इति

श्रूयते । तथा च महान्वायुरेव प्राण इत्येकः पूर्वपक्षः । नन्वयं पूर्वपक्षोऽसङ्गतः, छान्दोग्ये "मनो ब्रह्मेत्युपासीते" त्युपक्रम्य मनोरूपब्रह्मणो वाक्प्राणचक्षुःश्रोत्रैश्चतुष्पात्त्वं वदन् "प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति चे"ति (भात्यभिव्यक्तो भवति तपति स्वव्यापारे गच्छतीति) वाय्वपेक्षया प्राणस्य भिन्नत्वकथनेन निर्धारणाभावात्, अस्य प्राणस्य घ्राणेन्द्रियत्वेऽपि "एतस्माज्जायते प्राणः खं वायु"रित्यादौ भेदनिर्देशेन निर्धारणाभावतादवस्थ्यात्, इति चेत्, तर्हि तिष्ठतु श्रुतिद्वयं मिथो विरुद्धम्, सांख्यमतरीत्येन्द्रियव्यापार एव प्राणोऽस्त्विति प्राप्ते ब्रूमः । प्राणो न वायुक्रिये, न वायुः नापीन्द्रियव्यापार इत्यर्थः । कुतः । "एतस्माज्जायते प्राण"इत्यादौ तत्र तत्र वायोरिन्द्रियेभ्यश्च प्राणस्य पृथगुपदेशादित्यर्थः । नन्विन्द्रियेभ्यः पृथगुपदेशेऽपीन्द्रियव्यापारात्स नास्तीति चेन्न । वृत्तिवृत्तिमतोरभेदात् । तर्हि "यः प्राणः स वायु"रिति श्रुतिविरोधः कथं परिहरणीय इति चेदुच्यते । महान्वायुरेव हि प्राणापानादिपञ्चात्मनाऽवतिष्ठमानः प्राण इत्युच्यते । तथा च विकारविकारिणोर्वास्तवाभेदकाल्पनिकभेदयोः सत्त्वान्न भेदाभेदश्रुत्योर्विरोध इति सिद्धम् । अत्र पूर्वपक्षे वाय्विन्द्रियव्यापाराभ्यां जीवस्य विवेकः फलम्, सिद्धान्ते तूभयातिरिक्तप्राणादपीति विशेषः ॥

ननूभयातिरिक्तस्य श्रुत्यवगतस्वतन्त्रभावस्य प्राणस्य देहेऽभ्युपगमे जीवप्राणयोरुभयोः स्वतन्त्रयोरेकवाक्यत्वाभावात्, सद्यः शरीरोन्मथनप्रसङ्ग इत्यत आह ।

**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ २ । ४ । १० ॥**

तुरुक्तस्य प्राणस्वातन्त्र्यस्य निरासार्थः । प्राणस्य न जीववत्स्वातन्त्र्यम् । किं तु राजापेक्षया मन्त्रिण इव गुणभाव एव । स्वातन्त्र्यं त्वस्य प्राणस्य प्रजाऽपेक्षया मन्त्रिण इवेन्द्रियापेक्षया । तथा च नोक्तदोष इति तात्पर्यार्थः । सूत्राक्षरार्थस्तु । चक्षुरादिवत्प्राणोऽपि जीवं प्रति करणभूतः । कुतः । तत्सहशिष्ट्यादिभ्यः । तैश्चक्षुरादिभिः सह प्राणसंवादादिषु प्राणस्य शिष्टेः शासनादित्यर्थः । समानजातीयानामेव सहशासनस्य युक्तत्वात् । आदिशब्देनाचेतनत्वभौतिकत्वादिहेतुसङ्ग्रहः ॥

ननु प्राणस्य चक्षुरादिवत्करणत्वं न युक्तमसाधारणविषयाभावादित्यत आह ।

**अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥२।४।११॥**

न चोक्तदोषः, प्राणस्याकरणत्वादेव । कथं तर्ह्यात्मानं प्रति करणभावः । इन्द्रियान्तरेष्वसम्भावितस्यासाधारणस्य देहधारणाख्यस्य कार्यस्य निर्वाहकत्वादिति ब्रूमः । तथा हि श्रुतिरुक्तं कार्यं प्राणस्यासाधारणं दर्शयति । प्राणसंवादे वागादिभ्यो मुख्यप्राणस्य श्रेष्ठत्वं निर्धार्य "तान्वरिष्ठः प्राण उवाच मामोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामी" ति । बाणं शरीरम् । "प्राणेन रक्षन्नवरं कुलाय"मिति श्रुतिरपि देहस्थितिः प्राणनिमित्तेत्याह । अवरमनेकाशुचिनीडं कुलायं देहाख्यं गृहं प्राणस्थित्या रक्षञ्जीवः सुप्तिं यातीति योजना ॥

न केवलं देहधारणमेवास्यासाधारणं कार्यं, किं त्वन्यदपीत्याह ।

**पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ २ । ४ । १२ ॥**

यथा मनोऽनेकवृत्त्याख्यासाधारणकार्यापेक्षयाऽनेकधा व्यपदिश्यते, एवमुच्छ्वासनिश्वाससर्वशरीरक्रियोत्क्रान्त्याख्यानि चत्वारि कार्याणि पञ्चमं च कार्यं भक्षितान्नादिरसानां समत्वेन सर्वाङ्गेषु नयनमपेक्ष्य पञ्चवृत्तिः प्राणो व्यपदिश्यते क्रमेण प्राणोऽपानो व्यान उदानः समान इति । तदसाधारणकार्यापेक्षया जीवोपकरणत्वं मनोवदिति सिद्धम् ॥

एवं मुख्यप्राणस्योत्पत्तिं स्वरूपं चोक्त्वा परिमाणविशेषविषयप्राणाणुत्वनिर्वाह्योत्क्रान्त्यादिश्रुतेः, "सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण (प्राणः)" इति श्रुतेः प्राणविभुत्वविषयायाश्च मिथो विरोधोऽस्ति न वेति सन्देहे, "अणवश्चे"त्यधिकरणन्यायातिदेशेन सिद्धान्तयति ।

अणुश्च ॥ २ । ४ । १३ ॥

चक्षुरादिवत्प्राणोऽपि परिच्छिन्नः सूक्ष्मश्चेत्यर्थः । "सम एभिस्त्रिभिर्लोकै"रिति श्रुतिश्च सकलवायुपरा नाध्यात्मिकप्राणमात्रपरेत्यविरोध इति । अन्तरङ्गस्वरूपकथनानन्तरं बहिरङ्गपरिमाणमतिदिश्यत इति सङ्गतिर्बोध्या ॥

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ २ । ४ । १४ ॥

पूर्वमाध्यात्मिकप्राणस्याणुत्वमाधिदैविकवायोः "सम एभि"रिति श्रुत्या व्यापित्वमित्युक्तम् । तत्प्रसङ्गेनाध्यात्मिकानां प्राणानामाधिदैविकदेवताधीनचेष्टावत्त्वमस्ति न वेति विचार्यत इति प्रसङ्गसङ्गतिः । अत्र "चक्षुषा हि रूपाणि पश्यती"ति श्रुत्या चक्षुरादेर्देवतानिरपेक्षचेष्टावत्त्वं प्रतीयते । "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविश"दित्यादिश्रुत्या तु सूर्यादिदेवताऽधीनचेष्टावत्त्वं प्रतीयते । अन-

योर्मिथो विरोधोऽस्ति न वेति सन्देहे, अस्ति विरोध इति प्राप्ते, एकदेशिसिद्धान्तः, देवतानां करणाधिष्ठातृत्वे तासामेव भोक्तृत्वप्रसक्त्या जीवस्य भोक्तृत्वं न स्यादिति युक्तिसहकृतायां "चक्षुषा ही"ति श्रुतेर्बलीयस्त्वा"दादित्यश्चक्षु"रित्यादिश्रुतेर्गौणार्थतेति न विरोध इति । तं दूषयति "ज्योति"रित्यादिना । "तु"रुक्तसिद्धान्तनिरासार्थः । अधिष्ठीयते प्रेर्यत इत्यधिष्ठानमधिष्ठितमित्यर्थः । ज्योतिरादिभिरग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितमेव वाक्चक्षुरादिकं चेष्टते । तदामननात्तस्य देवताऽधिष्ठितत्वस्या"दित्यश्चक्षु"रित्यादिश्रुत्युक्तत्वादित्यर्थः । अचेतनानां स्वतश्चेष्टाऽनुपपत्तिरिति युक्तिरपि द्रष्टव्या । अक्षिणी प्राविशत्प्रेर्यप्रेरकभावेनेति श्रुत्यर्थः । न च देवतानामेव भोक्तृत्वं, तस्याश्रवणात् । यो यदधिष्ठाता स तत्साध्यफलभोक्तेति व्याप्तेश्च सारथौ व्यभिचारः । न च देवता इन्द्रियसाध्यफलभोगिन्य इन्द्रियाधिष्ठातृत्वाज्जीववदिति वाच्यम् । नरकृतपापफलभोगस्येन्द्रियसाध्यस्य "न ह वै देवान्पापं गच्छती"त्यादेर्देवेषु बाधितत्वात् । न च "चक्षुषा ही"त्यादिश्रुतिविरोधः । तत्र देवताऽनपेक्षत्वस्याश्रवणात् । इति सिद्धं देवाधिष्ठेयत्वं प्राणानामिति । किंच श्रुत्यन्तरमपि प्राणदेवतयोरधिष्ठात्रधिष्ठेयभावं द्योतयति । "स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभव"दित्यादिना वागादीनामग्न्यादिभावापत्तिकथनात् । अग्न्यादिभावश्च तदधिष्ठातृकत्वमेव, अन्यस्यासम्भवात् । स प्राणो वाचमेव प्रथमामुद्गीथकर्मणि प्रधानामत्यवहन्मृत्युमतीत्य निराकृत्य प्रापयत् । इन्द्रियाणां प्राणाधीनस्थितिकत्वात्प्राणस्य वागा-

दिस्थितिसम्पादनद्वारा तन्मृत्युनिराकर्तृत्वं बोध्यम् । किं प्रापयदित्याशङ्क्य, प्राणो वाचः स्थितिं सम्पाद्याग्निदेवतया साकमधिष्ठात्रधिष्ठेयभावं प्रापयदित्याह "सा यदे"ति । सा वाक् प्राणेन यदा मुक्तमृत्युरभवत्तदा लब्धस्थितिका सती स्वयमग्निरभवत्तद्देवताकाऽभवदिति श्रुत्यर्थः ॥

यदुक्तं देवतानामेव भोक्तृत्वप्रसङ्ग इति तत्राह ।

**प्राणवता शब्दात् ॥ २ । ४ । १५ ॥**

प्राणवता जीवेनैवेन्द्रियाणां स्वस्वामिभावः सम्बन्धः । इन्द्रियसाध्यभोगभोगी जीव एवेति यावत् । कुतः । शब्दात् । "अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षु"रित्यादिश्रुतेरित्यर्थः । अथ देहे प्राणप्रवेशानन्तरं यत्र कृष्णतारे छिद्रभूतमाकाशमनुविषण्णमनुगतं चक्षुस्तत्र स आत्मा चक्षुर्व्याप्तश्चाक्षुषः । तस्य रूपादिदर्शनाय वृत्तिरूपाय चक्षुः, न चैतन्यायेति श्रुत्यर्थः । एतत्सूत्रतात्पर्यार्थो "न च देवतानामेव भोक्तृत्व"मित्यादिनोक्तः ॥

**तस्य च नित्यत्वात् ॥ २ । ४ । १६ ॥**

तस्य जीवस्य स्वकर्मोपार्जिते देहे कर्तृत्वेन नित्यत्वाच्च न देवतानां भोक्तृत्वमस्मिन् शरीर इत्यर्थः । तस्माद्देवतानां प्राणाधिष्ठातृत्वे न किञ्चिद्बाधकमिति सिद्धम् ॥

ननु सत्स्विन्द्रियेषु तदधिष्ठातृदेवताचिन्ता । तान्येव प्राणव्यापारव्यतिरेकेण न सन्तीत्याक्षेपे, समाधत्ते ।

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ २।४।१७॥**

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे"त्या-

दिश्रुतौ मुख्यप्राणादिन्द्रियाणां तत्त्वान्तरत्वं प्रतीयते । "हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभव" न्निति श्रुतौ मुख्यप्राणात्मत्वमिन्द्रियाणां बोध्यते । हन्ते-दानीमस्यैव मुख्यप्राणस्यैव सर्वे वागादयो वयं रूपमसा-मेत्याशिषं दत्वा ते वागादय एतस्यैव प्राणस्य स्वरूपं बभूवुरित्यर्थः । तथा चानयोर्विरोधसन्देहे नियामकाभा-वादस्ति विरोध इति प्राप्ते, "एतस्माज्जायते प्राण" इति वाक्ये मनस इन्द्रियेभ्यः पृथङ्निर्दिष्टत्वेऽपि नेन्द्रियेभ्यस्त-त्वान्तरत्वं किं त्विन्द्रियत्वमेवेति यथा, तद्वत्प्राणादिन्द्रि-याणां पृथङ्निर्दिष्टत्वेऽपि न प्राणात्तत्वान्तरत्वमिति ना नेन वाक्येन "हन्तास्ये" ति वाक्यस्य विरोध इत्येकदेशि-समाधानं दूषयति "त इन्द्रियाणि" ति । प्राणात्तत्वान्त-राणीन्द्रियाणीति बहिरेव प्रतिज्ञा । तत्र हेतु "स्तद्व्यप-देशा" दिति । भेदव्यपदेशादित्यर्थः । उक्तहेतुमितरेण सूत्रभागेन विवृणोति "त" इति । श्रेष्ठान्मुख्यप्राणाद-न्यत्रान्ये ते प्रकृता वागादयः प्राणा इन्द्रियाणीत्युच्यन्ते, न प्राणः, "एतस्माज्जायते प्राण" इत्यादौ व्यपदेशभेदद-र्शनात् । नन्वयं भेदव्यपदेश इन्द्रियमनसोरपि समान इत्युक्तमिति चेन्न, "मनः षष्ठानीन्द्रियाणी" ति स्मृत्या मनस इन्द्रियेभ्यस्तत्त्वान्तरत्वाभावाभ्युपगमात् । न च प्रकृतेऽपि "हन्तास्ये" ति श्रुतेरिन्द्रियाणां प्राणात्तत्वा-न्तरत्वाभावाभ्युपगमः, "त एतस्यैव सर्वे रूपमभवंस्त-स्मादेत एतेनाख्यायन्ते प्राणा" इति वाक्यशेषेणेन्द्रियेषु प्राणशब्दस्य लाक्षणिकत्वप्रतिपादकेन प्राणादिन्द्रियाणां तत्वान्तरत्वाभ्युपगमात् । न हीन्द्रियेभ्यस्तत्त्वान्तरे चक्षु-षीन्द्रियशब्दो लाक्षणिको दृष्टः । तस्मा 'त्त एतस्यैव सर्वे

रूपमभव”न्नित्यनेन प्राणाधीनचेष्टावत्त्वमिन्द्रियाणामुच्यते, न तद्व्यापारत्वम् ॥

किं च ।

भेदश्रुतेः ॥ २ । ४ । १८ ॥

वागादीन्द्रियप्रकरणमुपसंहृत्य “अथ हेममासन्यं प्राणमूचु”रिति भिन्नप्रकरणे प्राणस्येन्द्रियेभ्यो भेदेन श्रुतेर्न प्राणव्यापारत्वमिन्द्रियाणामित्यर्थः । आस्ये भवमासन्यं प्राणं वागादय ऊचुरिति श्रुत्यर्थः ॥

इतश्च प्राणादिन्द्रियाणि तत्त्वान्तराणीत्याह ।

वैलक्षण्याच्च ॥ २ । ४ । १९ ॥

सुषुप्त्यवस्थायां प्राणस्य स्थितिर्नेन्द्रियाणामित्यादिबहुवैलक्षण्यात्तत्त्वान्तराणीत्यर्थः । तस्मान्नोदाहृतवाक्ययोर्विरोध इति सिद्धम् ।

इदं यथाश्रुतभाष्यानुसारेणोक्तम् । अन्ये तु बहिःप्रतिज्ञाकल्पनादिदोषप्रसङ्गाद्व्यपदेशभेदस्य संज्ञाभेदरूपस्य तत्त्वान्तरत्वे साध्ये व्यभिचारित्वात्प्रकरणभेदरूपस्य तस्य “भेदश्रुते”रिति न्यायेन पौनरुक्त्यापातादत्राधिकरणद्वयं कल्पयामासुः । तथा हि । किमेकादश वागादय एवेन्द्रियाणि, उत मुख्यप्राणोऽपीति विशये, “इन्द्रियमिन्द्रलिङ्ग”मित्यादिपाणिनिस्मरणात्प्राणस्य वागादिवज्जीवभावमापन्नपरमेश्वरलिङ्गत्वादिन्द्रियत्वमिति प्राप्ते, सिद्धान्तः । श्रेष्ठान्मुख्यप्राणादन्यत्र ते वागादय एवेन्द्रियाणि । कुतः । तद्व्यपदेशादिन्द्रियत्वव्यपदेशात् । इन्द्रियशब्दस्य तेषु रूढेरिति यावत् । स्मरणं तु रूढस्यैवेन्द्रियशब्दस्य यथा कथं चिद्व्युत्पत्तिं दर्शयति, “गच्छतीति गौ”रितिवदिति । नन्विदमयुक्तं प्राणव्यापारातिरेकेणेन्द्रियाणाम-

सत्त्वादिन्याक्षेपे, इदमारभ्यते "भेदश्रुतेः" "वैलक्षण्याच्चे"ति । "एतस्माज्जायते प्राण"इत्यादि "दूषयतो"त्यन्तमत्र पठितव्यम् । प्रकरणभेदाद्वैलक्षण्याच्च न प्राणव्यापारत्वमिन्द्रियाणामिति नोक्तवाक्यद्वयविरोध इति । इदं भाष्यदूषणमयुक्तम् । "जगद्वाचित्वा"दित्यादौ बहिःप्रतिज्ञादर्शनात्, इन्द्रियरूपाः प्राणाः श्रेष्ठादन्य इत्यतः प्रतिज्ञासम्भवाच्च, अपुनरुक्तशब्दानामेकस्मिन्वाक्ये पृथग्जन्मव्यपदेशादिति हेतोर्भाष्ये विवक्षितत्वात्, तत्सिद्ध्यर्थमेव सृष्टिवाक्यमुदाहृत्य प्राणेन्द्रियशब्दयोरपौनरुक्त्यप्रतिपादनात्, प्राणस्य निर्विषयत्वेनेन्द्रियत्वसंशयायोगात्, इन्द्रलिङ्गत्वेन संशये देहादावपि संशयप्रसङ्गात् निर्बीजमधिकरणद्वयकल्पनमिति दिक् ॥

एवं "न वियदश्रुते"रित्यारभ्य भूताद्युत्पाद्यव्यापारभूतोत्पत्तिविषयश्रुतिविरोधो निरस्तः । इदानीमुत्पादकव्यापारभूतोत्पादनविषयश्रुतिविरोधो निरस्यते । तत्रात्रिवृत्कृतभूतोत्पादनं पारमेश्वरमेवेति श्रुतिषु निःशङ्कमवगतम् । त्रिवृत्कृतभौतिकोत्पादने तु श्रुतिषु विप्रतिपत्तिर्दृश्यते । तथा हि सदात्मकाद्ब्रह्मणस्तेजोऽबन्नानां परोक्षत्वेन देवतापदयोग्यानां सृष्टिमुक्त्वोपदिश्यते "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"ति । सा सद्ब्रह्माख्या देवता पूर्वमीक्षणं कृत्वा व्यवहारायोग्यसूक्ष्मभूतान्युत्पादयित्वा तेन व्यवहारालाभाद्व्यवहारयोग्यभौतिकोत्पादनार्थं पुनरैक्षत । ईक्षणप्रकारमाह "हन्ते"त्यादि "करवाणी" त्यन्तम् । "अनेने"ति पदात्पूर्वं व्यवहारापेक्षायामिति शेषः । तत्र संशयः, किं जीवकर्तृकं त्रिवृत्कृतभौतिकोत्पादनमुत पर-

देवताकर्तृकमिति । सङ्गतिस्तु पूर्वं नामरूपभेदात्प्राणेन्द्रिययोर्भेद इत्युक्तं, तत्प्रसङ्गेन नामरूपव्याकरणं किंकर्तृकमिति विचार्यत इति प्रसङ्गलक्षणा बोध्या । तत्र लोके चारेण परसैन्यं प्रविश्य सङ्कलयामीत्यादौ न राज्ञः साक्षात्सङ्कलनकर्तृत्वं, किं तु चारस्यैवेति यथा, तद्वदनेन जीवेनेति विशेषणाज्जीवकर्तृकमेव भौतिकोत्पादनमिति भवत्यस्य वाक्यस्य "आकाशो ह वै नाम नामरूपयोर्निर्वहिते"ति वाक्येन विरोध इति प्राप्ते ब्रूमः ।

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २ । ४ । २० ॥**

"तु" शब्देन जीवकर्तृत्वनिरासः । त्रिवृत्कुर्वतः परमेश्वरस्यैव संज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरणं कार्यं भवितुमर्हति । कस्मात् । "सेयं देवते"त्युपक्रम्य "व्याकरवाणी"ति व्याकरणस्य परदेवताकर्तृकत्वोपदेशात् । न च "अनेन जीवेने"ति विशेषणाज्जीवकर्तृकत्वं, मेरुसमुद्रादिनामरूपव्याकरणसामर्थ्याभावरूपलिङ्गसहकृतसन्निधेर्बलीयस्त्वेन "अनेन जीवेने"त्यस्य सन्निहिता "नुप्रविश्ये"त्यनेन सम्बन्धात्, "अनेन जीवेने"त्यस्य गुणभूतस्य "व्याकरवाणी"त्यनेन प्रधानेनान्वययोग्यतालक्षणलिङ्गस्योक्तसन्निध्यपेक्षया दुर्बलत्वात् । तस्मात्सर्वत्रेश्वरकर्तृकमेव नामरूपव्याकरणमित्यविरोध इति सिद्धम् ॥

एवं "यदविज्ञातमिवाभूदित्येतासामेव देवतानां समास"इत्यन्तेन श्रुतिप्रबन्धेन तेजोऽबन्नानां त्रिवृत्करणमुक्त्वा तासामेव देवतानां बहिस्त्रिवृत्कृतानामध्यात्ममपरं त्रिवृत्करणमुक्तं "इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवती"ति । तदिदानीमाचार्यो यथाश्रुतं दर्शयति ।

**मांसादि भौमं यथाशब्दमितरयोश्च ॥ २ । ४ । २१ ॥**

अविज्ञातं विशेषरूपेणादृष्टमिवाभूदिति यत्स आसां तिसृणां देवतानां समासः समुदाय इति यावत्, इति श्रुत्यर्थः । इमास्तिस्रस्त्रिवृत्कृता देवताः पुरुषं शरीरं प्राप्य त्रिवृत्कार्यत्रयरूपेणैकैका देवता तेजआदिलक्षणा वर्तत इति द्वितीयश्रुत्यर्थः । तथा हि पृथिव्या व्रीहियवादिरूपायाः पुरुषेणाशितायाः कार्यत्रयं शरीरे वर्तते पुरीषं मांसं मनश्चेति । एवं पीतानामपां मूत्रं लोहितं प्राणश्चेति कार्यत्रयम् । तेजसोऽग्न्यादिदीपकस्य घृतादिरूपस्य कार्यत्रयमस्थि मज्जा वाक्चेति । प्राणस्य जलाधीनस्थितिकत्वमात्रेण जलकार्यत्वव्यपदेशः, तस्य वायुकार्यत्वप्रसिद्धेः । एवं मनसोऽप्यन्नभक्षणे स्वास्थ्यमात्रेण तत्कार्यत्वम् । वाचोऽपि ज्ञानानुकूलत्वसाम्येन तेजःकार्यत्वव्यपदेश इति बोध्यम् । एवं देहे कार्यत्रयरूपेण वर्तमानमेवाध्यात्मिकं त्रिवृत्करणमिति तदिदमाह सूत्रकारः "मांसादी"ति- भूमेरन्नात्मिकायाः कार्यं भौमं मांसादि । आदिपदेन पुरीषमनसी गृह्येते । एवमितरयोरप्तेजसोः कार्यत्रयं यथाशब्दमवगन्तव्यमित्यर्थः ॥

एवमनेन सूत्रेण त्रिवृत्करणमेतदधिकरणविषयः प्रदर्शितः । तत्रेयं शङ्का भवति । ननु सर्वेषां त्रिवृत्करणे विशेषाभावादियं पृथिवी, इमा आपः, इदं तेजः, इत्यसाधारणपृथग्व्यवहारः कथं सङ्गच्छते, कथं वाऽऽध्यात्मिकव्यवहारः "इदं मांसादि पृथिवीकार्यमिदं च जलस्ये"ति । तत्राह ।

**वैशेष्यात्तु तद्वादस्तद्वादः ॥ २ । ४ । २२ ॥**

"तु" रुक्तशङ्कानिरासार्थः । सर्वेषां पृथिव्यादीनां

त्रिवृत्करणाविशेषेऽपि वैशेष्यात्स्वभागाधिक्यात्तद्वादः पृथिव्यादिवादः सङ्गच्छत इत्यर्थः । अभ्यासोऽध्यायपरिसमाप्त्यर्थः । तस्मात्सिद्धः श्रुतीनामविरुद्धानां ब्रह्मणि समन्वयः ॥

इति श्रीमत्परमहंसपरिव्रजकाचार्यश्रीमन्मुकुन्दगोविन्दश्रीचरणशिक्षितश्रीरामकिंकरवर्यकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

## द्वितीयाध्यायश्च समाप्तः ॥



वस्थमिति कारणात्परस्माद्ब्रह्मणः कार्य्यरूपं जगदनन्यत्, शरीरभूतचिदचिद्वस्तुनः शरीरिणो ब्रह्मणश्च कारणावस्थाया कार्यावस्थाया च श्रुतिशतसिद्धया स्वभावव्यवस्थया गुणदोषव्यवस्था च "न तु दृष्टान्तभावा" दित्यत्रोक्ता ।

ये तु कार्य्यकारणयोरनन्यत्व कार्य्यस्य मिथ्यात्वाश्रयणेन वर्णयन्ति, न तेषा कार्य्यकारणयोरनन्यत्व सिध्यति, सत्यमिथ्यार्थयोरैक्यानुपपत्तेः । तथा सति ब्रह्मणो मिथ्यात्व, जगतः सत्यत्व वा स्यात् ।

ये च कार्य्यमपि पारमार्थिकमभ्युपयन्त एव जीवब्रह्मणोरौपाधिकमन्यत्व स्वाभाविक चानन्यत्वम्, अचिद्ब्रह्मणोस्तु द्वयमपि स्वाभाविकमिति वदन्ति, तेषामुपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावान्निरवयवस्याखण्डितस्य ब्रह्मण एवोपाधिसम्बन्धाद्ब्रह्मस्वरूपस्यैव हेयाकारपरिणामात् शक्तिपरिणामाभ्युपगमे शक्तेर्ब्रह्मणोऽनन्यत्वा[1]च्च जीवब्रह्मणो कर्म्मवश्यत्वापहतपाप्मत्वादिव्यवस्थावादिन्योऽचिद्ब्रह्मणोश्च परिणामापरिणामवादिन्यः श्रुतयो व्याकुप्येयुः ।

ये पुन,र्निरस्तनिखिलभोक्तृत्वादिसमस्तविकल्पविप्लवं सर्वशक्तियुक्तं सन्मात्रद्रव्यमेव कारण ब्रह्म, तच्च प्रलयवेलाया शान्ताशेषसुखदु खानुभवविशेष स्वप्रकाशमपि सुषुप्तात्मवदऽचिदविलक्षण[2]मवस्थित सृष्टिवेलाया मृत्तिकाद्रव्यमिव घटशरावादिरूपं समुद्र इव च फेनतरङ्गबुद्बुदादिरूपो भोक्तृभोग्यनियन्तृरूपेणाशत्रयाऽवस्थमवतिष्ठते । अतो भोक्तृत्वभोग्यत्वनियन्तृत्वानि तत्प्रयुक्ताश्च गुणदोषाः शरावत्वघटत्वमणिकत्ववत्तद्गतकार्य्यभेदवच्च व्यवतिष्ठन्ते । भोक्तृभोग्यनियन्तृणा सदात्मनैकत्व च घटशरावमणिकादीना मृदात्मनैकत्ववदुपपद्यते । अतस्सन्मात्रमेव द्रव्य सर्वावस्थावस्थितमिति ब्रह्मणोऽनन्यज्जगदातिष्ठन्ते । तेषा सकलश्रुतिस्मृतीतिहासपुराणन्यायविरोधः । सर्वा हि श्रुतयस्स्मृतीतिहासपुराणास्सर्वे-

---

१ शक्तिब्रह्मणोरनन्यत्वादिति मु पु ।

२ सुषुप्तात्मवदचिद्विलक्षणमिति मु पु पाठ, ०अचिदविलक्षणमिति तु पाठान्तरतया दत्तम् ।

श्वरेश्वर सदैव सर्वज्ञ सर्वशक्ति सत्यसङ्कल्प निरवद्य देशकालानवच्छिन्ना-नवधिकातिशयानन्द परमकारण ब्रह्म प्रतिपादयन्ति, न पुनरीश्वरादपि परमीश्वरांशि सन्मात्रम् । तथा हि, "सदेव सोम्येदमग्र आसीदेकमेवा-द्वितीय तदैक्षत बहु स्या प्रजायेयेति," "ब्रह्म वा इदमग्र आसीदेकमेव तदेक सन्न व्यभवत् तच्छ्रेयोरूपमत्यसृजत* क्षत्र यान्येतानि देवत्रा क्षत्रा-णी**न्द्रो वरुणः सोमो रुद्रः पर्ज्जन्यो यमो मृत्युरीशान इति," "आत्मा वा इदमेकमेवाग्र आसीत् नान्यत्किञ्चन मिषत्स ऐक्षत लोकान्नु सृजा इति," "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्ष-त्राणि नापो नाग्निर्न सोमो न सूर्य्यः स एकाकी न रमेत[१] तस्य ध्याना-न्तःस्थस्ये" त्यादिभिः परमकारण सर्वेश्वरेश्वरो[२] नारायण एवेत्यवग म्यते । सद्ब्रह्मात्मशब्दा हि तुल्यप्रकरणस्यास्तत्तुल्यप्रकरणस्थेन 'नारा यण'-शब्देन विशेषितास्तमेवावगमयन्ति ।

"तमीश्वराणा परम महेश्वर तन्देवताना परम च दैवतम्"[३] ।
"स कारण करणाधिपाधिपो न तस्य कश्चिज्जनिता न चाधिपः" ॥

इतीश्वरस्यैव कारणत्व श्रूयते । स्मृतिरपि मानवी—
"ततः स्वयम्भूर्भगवानिति प्रकृत्य

"सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्य्यमवासृज[४]"दिति ।

इतिहासपुराणान्यपि पुरुषोत्तममेव परमकारणमभिदधति

"नारायणो जगन्मूर्तिरनन्तात्मा सनातनः ।
स सिसृक्षुः सहस्राशादसृजत्पुरुषान् द्विधा'[५] ।
"विष्णोः सकाशादुद्भूत जगत्तत्रैव च स्थित" मित्यादिषु ।

न चेश्वरः सन्मात्रमेवेति वक्तु शक्यम्, तस्य तदशत्वाभ्युपगमा-

* ०रूपमित्यसृजतेति लि पु० । ** देवक्षत्राणीति पु द्वयेप ।
१ रमते-इति मु पु० । २ सर्वेश्वर०-इति लि पु० ।
३ अय पादो लि पु नास्ति, तद्दैवताना० मु० पु ।
४ बीजमपासृजदिति क्वचित । ५ अयश्लोको लि पु त्रुटितः ।

त्सविशेषत्वाच्च । न च तस्य ज्ञानानन्दाद्यनन्तकल्याणगुणयोगः कादाचित्क इति वक्तुं शक्यते, तेषां स्वाभाविकत्वेन सदातनत्वात्,

"पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च" ।

"यः सर्वज्ञः सर्ववि"दित्यादिभ्यः । ज्ञानानन्दादिशक्तियोग एवास्य स्वाभाविक इति मा वोचः, शक्तिस्स्वाभाविकी ज्ञानबलक्रिया च स्वाभाविकीति पृथङ्निर्देशाल्लक्षणाप्रसङ्गाच्च । न च पाचकादिवत्सर्वज्ञ इत्यादिषु शक्तिमात्रे कृत्प्रत्यय इति वक्तुं शक्यम्, कृत्प्रत्ययमात्रस्य शक्तावस्मरणात् । "शक्तौ हस्तिकपाटयो" रित्यादिषु केषाचिदेव कृत्प्रत्ययाना शक्तिविषयत्वस्मरणात् । पाचकादिषु त्वगत्या लक्षणा समाश्रीयते । किञ्च, ईश्वरस्य तदंशविशेषत्वात्तस्य चांशित्वे तरङ्गात्समुद्रस्येवांशादंशिनोऽधिकत्वात्

"तमीश्वराणां परमं महेश्वरं"
"न तत्समश्चाभ्यधिकश्च दृश्यते"—

इत्यादीनीश्वरविषयाणि परःशतानि वचांसि बाध्येरन् । किञ्च, सन्मात्रस्य सर्वात्मकत्वेंऽशित्वे चेश्वरस्य तदंशविशेषत्वात्तस्य सर्वात्मकत्वांशित्वोपदेशा व्याहन्येरन् । न हि मणिकात्मकत्वं तदंशित्वं[1] वा घटशरावादेः । स्वांशेषु सर्वेषु सन्मात्रस्य † पूर्णत्वेनेश्वरांशेऽपि तस्य पूर्णत्वात्तदात्मकानि तदंशाश्चेतराणि वस्तूनीति चेत्, न, घटेऽपि सन्मात्रस्य †पूर्णत्वादीश्वरस्यापि घटात्मकत्वात्तदंशत्वप्रसङ्गात् । न च सन्मात्रस्य घटोऽस्ति पटोऽस्तीति वस्तुधर्म्मतयाऽवगतस्य द्रव्यत्वं चोपपद्यते । व्यवहारयोग्यता हि सत्त्वम्, विरोधिव्यवहारयोग्यता तद्व्यवहारयोग्यस्यासत्त्वम् । द्रव्यमेव सदित्यभ्युपगमे क्रियादीनामसत्त्वप्रसङ्गः । क्रियादिषु काशकुशावलम्बनेऽपि सर्वत्रैकरूपा सत्ता दुरुपपादा । सदात्मना च सर्वस्याभिन्नत्वे सर्वज्ञत्वेन सर्वस्वभावप्रतिसन्धानात्सर्वगुणदोषसंकरप्रसङ्गश्च पूर्वमेवोक्तः । अतो यथोक्तप्रकारमेवानन्यत्वम् ॥

१ तदंशत्वमिति मु॰ पु॰ । † † एतच्चिह्नान्तर्गतः पाठो लि॰ पु॰ त्रुटितः ।

अथोच्येत—एकस्यैवावस्थान्तरयोगेऽपि बुद्धिशब्दान्तरादयो बालत्वयुवत्वादिषु दृश्यन्ते, मृद्धारुहिरण्यादिषु द्रव्यान्तरत्वेऽपि दृश्यन्ते। तत्र मृद्घटादिषु कार्य्यकारणेषु बुद्धिशब्दान्तरादयोऽवस्थानिबन्धना एवेति कुतो निर्णीयत इति, तत्रोत्तरम्—

**भावे चोपलब्धेः ॥ १६ ॥**

कुण्डलादिकार्य्यसद्भावे च कारणभूतस्य हिरण्यस्योपलब्धेः, इदं कुण्डलं हिरण्यमिति हिरण्यत्वेन प्रत्यभिज्ञानादित्यर्थः। न चैव हिरण्यादिषु द्रव्यान्तरेषु मृदादय उपलभ्यन्ते। अतो बालयुवादिवत्कारणभूतमेव द्रव्यमवस्थान्तरापन्न कार्यमिति गीयते। द्रव्यान्तरवादिनाऽप्यभ्युपेतेनावस्थान्तरयोगेन बुद्धिशब्दान्तरादिषूपपन्नेष्वनुपलब्धद्रव्यान्तरकल्पनानुपपत्तेश्च। न च जातिनिबन्धनेय प्रत्यभिज्ञा, जात्याश्रयभूतद्रव्यान्तरानुपलब्धेः। एकमेव हि हेमजातीय द्रव्य कार्य्यकारणोभयावस्थं दृश्यते। न च द्रव्यभेदे[1] समवायिकारणानुवृत्त्या कार्ये प्रतिसन्धानमिति वक्तु शक्यम्, द्रव्यान्तरत्वे सत्याश्रयानुवृत्तिमात्रेण तदाश्रिते द्रव्यान्तरे प्रतिसन्धानानुपलब्धेः[2]। गोमयादिकार्य्ये वृश्चिकादौ गोमयादिप्रतिसन्धान न दृश्यत इति चेन्न, तत्राप्याद्यकारणभूतपृथिवीद्रव्यप्रत्यभिज्ञानात्। अग्निकार्य्ये धूमेऽग्निप्रत्यभिज्ञान न दृश्यत इति चेद्, भवतु, न[3] तत्र प्रत्यभिज्ञानम्, तथापि न दोषः, अग्नेर्निमित्तकारणमात्रत्वात्। अग्निसंयुक्तार्द्रेन्धनाद्धि धूमो जायते। गन्धैक्याच्चार्द्रेन्धनकार्यमेव धूमः। अतः कार्यभावे च तदेवेदमित्युपलब्धेर्बुद्धिशब्दान्तरादयोऽवस्थाभेदमात्रनिबन्धना इत्यवगम्यते। तस्मा†त्कारणादनन्यत्कार्यम्।

इतश्च—

**सत्त्वाच्चावरस्य[4] ॥ १७ ॥**

अवरस्य—कार्यस्य कारणे सत्त्वाच्च † कारणात्कार्यस्यानन्यत्वम्।

१ द्रव्यभेद—इति लि पु०। २ प्रतिसन्धानानुपपत्तेरिति लि० पु०। ३ नेति नास्ति लि० पु०। †† एतच्चिह्नान्तर्गत पाठो लि पु० त्रुटित। ४ अपरस्येति प्रायो मु० पु० पाठ।

रिक्तो घटाभावो नाम कश्चिदुपलभ्यते । न च तत्कल्प्यते, तावतैवाभावव्यवहारोपपत्तेः । तथा 'शब्दान्तराच्च' पूर्वकाले धर्मान्तरयोग एवावगम्यते । शब्दान्तरं च पूर्वो[1]दाहृत "सदेव सोम्येदमग्र आसी"दित्यादिकम् । तत्र हि "कुतस्तु खलु सोम्यैव स्या"दिति तुच्छत्वमाक्षिप्य सत्त्वमेव[2] "सदेव सोम्येदमग्र आसी"दिति व्यवस्थापितम्, "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियते"ति सुस्पष्टमुक्तम् ।

इदानीं कार्यस्य कारणादनन्यत्वे निदर्शनद्वयं द्वाभ्यां सूत्राभ्यां दर्शयति—

## पटवच्च ॥ १९ ॥

यथा[3] तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपकार्यान्तरादिकं भजन्ते, तद्वद् ब्रह्मापि ।

## यथा च प्राणादिः ॥ २० ॥

यथा च वायुरेक एव शरीरे वृत्तिविशेषं भजमानः प्राणापानादिनामरूपकार्यान्तरादिकं[4] भजते, तद्वद् ब्रह्मैकमेव विचित्रस्थिरत्रसरूपं जगद् भवतीति परमकारणात्परस्माद् ब्रह्मणोऽनन्यत्वं जगतः सिद्धम् ॥

आरम्भणाधिकरणं समाप्तम् ॥ ६ ॥

---

अथेतरव्यपदेशाधिकरणम् ॥ ७ ॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

जगतो ब्रह्मानन्यत्वं प्रतिपादयद्भि"स्तत्त्वमस्य" "ऽयमात्मा ब्रह्मे"त्यादिभिर्जीवस्यापि ब्रह्मानन्यत्वं व्यपदिश्यत इत्युक्तम् । तत्रेदं चोद्यते— यदीतरस्य ब्रह्मभावो ऽमीभिर्वाक्यैर्व्यपदिश्यते, तदा ब्रह्मणः सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तस्या[5]त्मनो हितरूपजगदकरणमऽहितरूपजगत्करणमित्यादयो दोषाः प्रसज्येरन् । आध्यात्मिकाधिदैविकाधिभौतिकानन्त-

---

१ पूर्वपूर्वो—इति मु पु ।
२ सत्त्वमेवेति मु पु॰ नास्ति ।
३ तथेति मु पु ।
४ नामरूपादिकार्यान्तराणीति मु पु ।
५ ॰त्वादिरुक्तस्येति लि पु ।

दुःखाकार[1]श्चेद जगत् । न चेदृशे स्वानर्थे स्वाधीनो बुद्धिमान्प्रवर्तते । जीवाद्ब्रह्मणो भेदवादिन्यः श्रुतयो जगद्ब्रह्मणोरनन्यत्व वदता त्वयैव परित्यक्ताः, भेदे सत्यऽनन्यत्वासिद्धेः । औपाधिकभेदविषया भेदश्रुतय,- स्वाभाविकाभेदविषयाश्चाभेदश्रुतय इति चे,त्तत्रेद वक्तव्यम्–स्वभावतः स्वस्मादभिन्न जीव किमनुपहित जगत्कारण ब्रह्म जानाति वा न वा । न जानाति चे,त्सर्वज्ञत्वहानि. । जानाति चेत्, स्वस्मादभिन्नस्य जीवस्य दु.खं स्वदु.खमिति जानतो ब्रह्मणो हिताकरणाहितकरणादिदोषप्रसक्तिरनिवार्य्या । जीवब्रह्मणोरज्ञानकृतो भेद,स्तद्विषया भेदश्रुतिरिति चेत्, तत्रापि जीवाज्ञानपक्षे पूर्वोक्तो विकल्पस्तत्फल च तदवस्थम् । ब्रह्माज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानसाक्षित्व तत्कृतजगत्सृष्टिश्च न सम्भवति । अज्ञानेन प्रकाशस्तिरोहितश्चेति तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषसहस्र प्रागेवोदीरितम् । अत इदमसङ्गत ब्रह्मणो जगत्कारणत्वमिति प्राप्तेऽभिधीयते–

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

'तु'–शब्द. पक्ष व्यावर्तयति । आध्यात्मिकादिदुःखयोगार्हात्प्रत्यगात्मनोऽधिकमर्थान्तरभूत ब्रह्म । कुतः । 'भेदनिर्देशा',त्प्रत्यगात्मनो हि भेदेन निर्दिश्यते पर ब्रह्म, "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीर य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः"

पृथगात्मान प्रेरितार च मत्वा
जुष्टस्ततस्तेनामृतत्वमेति" ॥
"स कारण करणाधिपाधिपः"
"तयोरन्यः पिप्पल स्वाद्वत्त्य
ऽनश्नन्नन्योऽभिचाकशीति" ॥

---

१ ०दुःखाकरमिति प्रायिकपाठे दुःखाकरोतीति हेतौ टच् दुःखात्प्रातिलोम्य इति डाच्च द्रष्टव्य. ।

"ज्ञाज्ञौ द्वावजावीशनीशौ" *
"प्राज्ञेनात्मना सम्परिष्वक्तः"
"प्राज्ञेनात्मना[१]न्वारूढः"
"अस्मान्मायी सृजते विश्वमेत-
"त्तस्मिंश्चान्यो मायया सन्निरुद्धः"
"प्रधानक्षेत्रज्ञपतिर्गुणेशः"
"नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान्"

"यो ऽव्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरं यमव्यक्तं न वेद योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमऽक्षरं न वेद यो†मृत्युमन्तरे सञ्चरन् यस्य मृत्युर्न वेद†एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिः ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

अश्मकाष्ठलोष्ट[२]तृणादीनामत्यन्तहेयानां सततविकारास्पदानामचिद्विशेषाणां निरवद्यनिर्विकारनिखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपनानाविधानन्तमहाविभूतिब्रह्मस्व[३]रूपैक्यं यथा नोपपद्यते, तथा चेतनस्याप्यनन्तदुःखयोगार्हस्य खद्योतकल्पस्यापहतपाप्मेत्यादिवाक्यावगतसकलहेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरब्रह्मभावा[४]नुपपत्तिः। सामानाधिकरण्यनिर्देशो "यस्यात्मा शरीर"मित्यादिश्रुतेर्जीवस्य ब्रह्मशरीरत्वाद् ब्रह्मणो जीवशरीरतया तदात्मत्वेनावस्थितेर्जीवप्रकारब्रह्मप्रतिपादनपरश्चैतद[५] विरोधी, प्रत्युत[६] तस्यार्थस्योपपादकश्चेत्य'वस्थितेरिति काशकृत्स्न' इत्यादिभिरसकृदुपपादितम्। अतस्सर्वावस्थं ब्रह्म चिदचिद्वस्तुशरीर-

* ०वीशानीशाविति पु० द्वयेपि पाठः।
†† एतच्चिह्नान्तर्गतपाठो लि० पु० नास्ति।
१ प्रज्ञात्मनेति लि० पु०।
२ लोहेति मु० पु०।
३ स्वेति नास्ति लि० पु०।
४ भवेति लि० पु०।
५ ०श्चेतर-इति लि० पु०।
६ प्रत्युक्ते-इति लि० पु०।

मिति सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणम्,[1] तदेव ब्रह्म स्थूलचिदचिद्वस्तुशरीरं जगदाख्यं कार्य्यमिति जगद्ब्रह्मणोः सामानाधिकरण्योपपत्तिः जगतो ब्रह्मकार्य्यत्वं ब्रह्मणोऽनन्यत्वमचिद्वस्तुनो जीवस्य च ब्रह्मणश्च परिणामित्वदुःखित्वकल्याणगुणाकरत्वस्वभावासङ्करस्सर्वश्रुत्यविरोधश्च भवति । "सदेव सोम्येदमग्र आसीदेकमेवे"त्यविभागावस्थायामचि[2]द्युक्तजीवस्य ब्रह्मशरीरतया सूक्ष्मरूपेणावस्थानमवश्याभ्युपगन्तव्यम्, 'वैषम्यनैर्घृण्ये न सापेक्षत्वा''च कर्माविभागादिति चेन्नाऽनादित्वादुपपद्यते चाप्युपलभ्यते चे" ति सूत्रद्वयोदितत्वात्तदानीमपि सूक्ष्मरूपेणावस्थानस्य । अविभागस्तु[3] नामरूपविभागाभावादुपपद्यते अतो ब्रह्मकारणत्वं सम्भवत्येव ॥

ये पुनरस्यैव जीवस्याविद्याविद्युक्तावस्था[4]मभिप्रेत्येमं भेदं[5] वर्णयन्ति, तेषामिदं सर्वमसङ्गतं स्यात् । न हि तदवस्थस्य सर्व[6]ज्ञत्वं सर्वेश्वरत्वं समस्तकारणत्वं सर्वात्मकत्वं[7] सर्वनियन्तृत्वमित्यादीनि सन्ति । अनेनैव रूपेण ह्याभिः श्रुतिभिः प्रत्यगात्मनो भेदः प्रति[8]पाद्यते,† तस्य सर्वस्याविद्यापरिकल्पितत्वात्† तत्सर्वं ह्यविद्यापरिकल्पितं त्वन्मते । न चा[9]विद्यापरिकल्पितस्याविद्यावस्थायां शुक्तिकारजतादिभेदवत्परस्परभेदोऽत्र सूत्रकारेणा'धिकं तु भेदनिर्द्देशा'दित्यादिषु‡ प्रतिपाद्यते । ब्रह्मजिज्ञासा कर्त्तव्येति जिज्ञास्यतया प्रक्रान्तस्य ब्रह्मणो जगज्जन्मादिकारणस्य‡ वेदान्तवेद्यत्वं, तस्य च स्मृतिन्यायविरोधपरिहारश्च क्रियते । 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसं' 'न तु दृष्टान्तभावा'दिति सूत्रद्वयमेतदधिकरणसिद्धमनुवदति । तत्र हि विलक्षणयोः कार्य्यकारणभावसम्भव एवाधिक-

१ ब्रह्मणो कारणमिति लि॰ पु॰ । २ मप्यचिदिति लि॰ पु॰ ।
३ ऽविभागश्चेति लि॰ पु॰ । ४ वियुक्तावस्थमिति लि॰ पु॰ ।
५ ०त्यैव भेदमिति मु॰ पु॰ । ६ ०स्यस्यासर्वेति लि॰ पु॰ ।
७ समस्तकारणत्वसर्वात्मकत्वेनेति लि॰ पु॰ ।
८ ०त्मनोऽप्रतीति लि॰ पु॰ । ९ त्वन्मतेन चेति मु॰ पु॰ ।
††एतदन्तर्गतः पाठो लि॰ पु॰ नास्ति, न चावश्यकः, श्रुतप्रकाशिकायां तत्सर्वमित्यस्य स्थाने पाठिकतया योजनात् ।
‡‡ एतच्चिह्नान्तर्गतपाठो लि॰ पु॰ त्रुटितः ।

रणार्थः । 'असदिति चेन्न प्रतिषेधमात्रत्वा'दिति च पूर्वाधिकरणस्थमनुवर्तते ॥

इतरव्यपदेशाधिकरणं समाप्तम् ॥ ७ ॥

---

अथोपसंहारदर्शनाधिकरणम् ८ । उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

परस्य ब्रह्मणः सर्वज्ञस्य सत्यसङ्कल्पस्य स्थूलसूक्ष्मावस्थसर्वचेतनाचेतनवस्तुशरीरतया[1] सर्वप्रकारत्वेन सर्वात्मकत्वं सकलेतरविलक्षणत्वं चाविरुद्धमिति स्थापितम् ।

इदानीं सर्वज्ञस्य सत्यसङ्कल्पस्य परस्य ब्रह्मणः सङ्कल्पमात्रेण विचित्रजगत्सृष्टियोगो न विरुद्ध इति स्थाप्यते । ननु च परिमितशक्तीनां कारककलापोपसंहारसापेक्षत्वदर्शनेनैव[2] सर्वशक्तेर्ब्रह्मणः कारककलापानुपसंहारेण जगत्कारणत्वविरोधं कथमाशङ्क्यते । उच्यते, लोके तत्त[3]त्कार्यजननशक्तियुक्तस्यापि तत्तदुपकरणापेक्षित्व[4]दर्शनात्सर्वशक्तियुक्तस्य परस्य[5] ब्रह्मणोऽपि तत्तदुपकरणविरहिणः स्रष्टृत्वं नोपपद्यत इति कस्यचिन्मन्दधियः शङ्का जायेते[6]ति सा निराक्रियते ।

घटपटादिकारणभूतानां कुलालकुविन्दादीनान्तत्तज्जननसामर्थ्ये सत्यपि कानिचिदुपकरणान्युपसंहृत्यैव जनयितृत्वं दृश्यते । तज्जननाशक्ताः कारककलापोपसंहारेऽपि जनयितुं न शक्नुवन्ति, शक्ताः पुनः[7] कारककलापोपसंहारे जनयन्तीत्येतावानेव विशेषः । ब्रह्मणोऽपि सर्वशक्तेः सर्वस्य जनयितृत्वं[8] तदुपकरणानामनुपसंहारे नोपपद्यते । प्राक् सृष्टेश्चाऽसहायत्वं "सदेव सोम्येदमग्र आसीत्" "एको ह वै नारायण आसी"-दित्येवमादिषु प्रतीयते । अतः स्रष्टृत्वं नोपपद्यत इत्येवं प्राप्तम् । तदिदमाशङ्क्यते[9] 'उपसंहारदर्शनान्नेति चे' दिति । परिहरति—

---

१ शरीरता—इति लि पु ।
२ दर्शन—इति लि पु ।
३ तदिति सकृदेव लि पु ।
४ पेक्षितेति लि॰ पु॰ ।
५ युक्तस्यपरस्येति लि पु ।
६ जायत इति पाठान्तरम ।
७ पुनरिति नास्ति लि पु ।
८ ब्रह्मणोऽपि सर्वस्य कर्तृत्वं सर्वस्य जनयितृत्वमिति लि॰ पु॰ पाठः ।
९ आशङ्कत इति मु॰ पु॰ ।

'न क्षीरवद्धी'ति । न सर्वेषां कार्य्यजननशक्तानामुपसंहारसापेक्षत्वमस्ति, यथा क्षीर[1]जलादेर्दधिहिमजननशक्तस्य तज्जनने । एवं ब्रह्मणोऽपि स्वयमेव सर्वजननशक्तेः सर्वस्य जनयितृत्वमुपपद्यते । 'ही'ति प्रसिद्धवचिद्धिशश्चोद्यस्य मन्दताख्यापनाय । क्षीरादिष्वाऽऽतञ्चनाद्यपेक्षा सा न दध्या[2]दिभावाया, ऽपि तु शैघ्र्यार्थं रसविशेषार्थं च[3] ॥

## देवादिवदपि लोके ॥ २५ ॥

यथा देवादयः स्वेस्वे लोके सङ्कल्पमात्रेण स्वापेक्षितानि सृजन्ति-तथाऽसौ पुरुषोत्तमः कृत्स्नं जगत्सङ्कल्पमात्रेण सृजति । देवादीनां वेदावगतशक्तीनां दृष्टान्ततयोपादानं ब्रह्मणो वेदावगतशक्तेः सुखग्रहणायेति प्रतिपत्तव्यम् ॥

उपसंहारदर्शनाधिकरणं समाप्तम् ॥ ८ ॥

---

अथ कृत्स्नप्रसक्त्यधिकरणम ९ ।

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

सदेव सोम्येदमग्र आसीत्" " इदं वा अग्रे नैव किञ्चनासीत्" 'आत्मा वा इदमेक एवाग्र आसी"दित्यादिषु[4] कारणावस्थायां ब्रह्मैकमेव निरवयवमासीदिति कारणावस्थायां निरस्तचिदचिद्विभागतया निरवयवं ब्रह्मैवासीदित्युक्तम्[5] । तदविभागमेकं निरवयवमेव ब्रह्म 'बहु स्या'मिति सङ्कल्प्या ऽऽकाशवाय्वादिविभागं ब्रह्मादिस्तम्बपर्य्यन्त[6]क्षेत्रज्ञविभागं चाभवदिति चोक्तम् । एवं सति तदेव परं ब्रह्म कृत्स्नं कार्य्यत्वेनो[7]पयुक्तमित्यभ्युपगन्तव्यम् । अथ चिदंशः क्षेत्रज्ञविभागविभक्तः, अचिदंशश्चाकाशादिविभागविभक्त इत्युच्यते, तदा 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं" "ब्रह्मैकमेवा""त्मैक एवे"त्येवमादयः कारणभूतस्य ब्रह्मणो निरवयवत्ववादिनः शब्दाः कुप्येयुः, बाधिता भवेयुः । यद्यपि

---

१ मस्तिपयोक्षीरेति लि पु ।
२ क्षीरादिदृष्टान्तनाद्यपेक्षानिदध्या-इति लि पु विभ्रश ।
३ ०र्थं वा-इति लि पु । ४ आसीत तदइत्यादिष्विति लि पु० ।
५ आसिद्वितीत्युक्तमिति लि पु० । ६ पर्यन्तमिति मु पु० ।
७ कृत्स्नकार्यत्वेनेति लि पु ।

सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणं, स्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्य्य-मित्यभ्युपगम्यते, तथाऽपि शरीर्य्यंशस्यापि कार्य्यत्वाभ्युपगमादुक्तदोषो दुर्वारः। तस्य निरवयवस्य बहुभवनं च[1] नोपपद्यते, कार्य्यत्वानुपयुक्तांशस्थितिश्च नोपपद्यते। तस्मादसमञ्जसमेवा[2] भाति। अतो ब्रह्मकारणत्वं नोपपद्यत इत्याक्षिप्ते समाधत्ते—

## श्रुतेस्तु शब्दमूलत्वात्॥ २७॥

'तु'-शब्द उक्तदोषं व्यावर्तयति। नैवमसामञ्जस्यम्। कुतः 'श्रुतेः,' श्रुतिस्तावन्निरवयवत्वं ब्रह्मणस्ततो विचित्रसर्गं चा†ह। श्रौतेऽर्थे यथाश्रुति प्रतिपत्तव्यमित्यर्थः। ननु न[3] श्रुतिरप्यग्निना सिञ्चेदितिवत्परस्परान्वयायोग्यम†र्थं प्रतिपादयितुं समर्था, अत आह—'शब्दमूलत्वा'-दिति। शब्दैकप्रमाणकत्वेन सकलेतरवस्तुविसजातीयत्वादस्यार्थस्य विचित्रशक्तियोगो न विरुध्यत इति न सामान्यतोदृष्टं साधनं दूषणं वाऽर्हति ब्रह्म।

## आत्मनि चैवं विचित्राश्च हि॥ २८॥

किञ्चैवं वस्त्वन्तरसम्बन्धिनो धर्मस्य वस्त्वन्तरे चारोपणे सत्यऽचेतने घटादौ दृष्टा धर्म्मास्तद्विसजातीये चेतने नित्य आत्मन्यपि प्रसज्यन्ते। तदप्रसक्तिश्च भावस्वभाववैचित्र्यादित्याह 'विचित्राश्च ही' ति। यथाऽग्निजलादीनामन्योन्यविसजातीयानामौष्ण्यादिशक्तयश्च विसजातीया दृश्यन्ते, तद्वल्लोकदृष्टसर्वविसजातीये परे ब्रह्मणि तत्रतत्रादृष्टाः सहस्रशः शक्तयस्सन्तीति न किञ्चिदनुपपन्नम्। यथोक्तं भगवता पराशरेण—

"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते"॥

इति सामान्यदृष्ट्या परिचोद्य

"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।

---

१ चेति नास्ति लि॰ पु॰। २ असमञ्जसमिवाभाति लि॰ पु॰।
३ ननु चेति मु॰ पु॰।
†† एतच्चिह्नान्तर्गतः पाठो लि॰ पु॰ त्रुटितः।

यतोऽतो[1]ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ।
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णते"ति ।

श्रुतिश्च–

"किंस्विद्वनं क उ स वृक्ष आसी-
द्यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेत-
द्यदध्यतिष्ठद्भुवनानि धारयन् ॥
ब्रह्मवनं ब्रह्म स वृक्ष आसीद्
यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा विब्रवीमि वो
ब्रह्माध्यतिष्ठद् भुवनानि धारय"न्निति ।

सामान्यतोदृष्टं चोद्यं सर्ववस्तुविलक्षणे परे ब्रह्मणि नावतरतीत्यर्थः ।

इतश्च–

## स्वपक्षदोषाच्च ॥ २९ ॥

स्वपक्षे प्रधानादिकारणवादे लौकिकवस्तुविसजातीयत्वाभावेन प्रधानादेर्लोकदृष्टा दोषास्तत्र भवेयुरिति सकलेतरविलक्षणं ब्रह्मैव कारणमभ्युपगन्तव्यम् । प्रधानं च निरवयवम्, तस्य निरवयवस्य प्रधानस्य कथमिव महदादिविचित्रजगदारम्भ उपपद्यते । सत्त्व रजस्तम इति तस्यावयवा विद्यन्त इति चेत्, तत्रेदं विवेचनीयम्–किं सत्त्वरजस्तमसां समूहः प्रधानम्, उत सत्त्वरजस्तमोभिरारब्धं प्रधानम् । अनन्तरे कल्पे प्रधानं कारणमिति स्वाभ्युपगमविरोधः, स्वाभ्युपेतसंख्याविरोधश्च, तेषामपि निरवयवानां कार्यारम्भविरोधश्च । समूहपक्षे च तेषां निरवयवत्वेन प्रदेशभेदमनपेक्ष्य संयुज्यमानानां न स्थूलद्रव्यारम्भकत्वसिद्धिः । परमाणुकारणवादेऽपि तथैव, अणवोऽपि[2] निरंशा निष्प्रदेशाः प्रदेशभेदमनपेक्ष्य

१ यतश्चो–इति मु पु० ।
२ अणवोहीति मु पु ।

परस्पर संयुज्यमाना अपि न स्थूलकार्य्यारम्भाय प्रभवेयुः ।

**सर्वोपेता च तद्दर्शनात् ॥ ३० ॥**

सकलेतरवस्तुविसजातीया परा देवता सर्वशक्त्युपेता च । तथैव परा देवता दर्शयन्ति हि[1] श्रुतयः—

"पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च" ।

तथा, "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास"इति सकलेतरविसजातीयता परस्याः देवतायाः प्रतिपाद्य "सत्यकामः सत्य सङ्कल्प" इति सर्वशक्तियोग प्रतिपादयन्ति । तथा, "मनोमयः प्राणशरीरो भारूपः सत्यकामः सत्यसङ्कल्पः, आकाशात्मा सर्वकर्मा सर्वकामः सर्व-गन्ध. सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यऽनादर" इति च ।

**विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥**

यद्यप्येकमेव ब्रह्म सकलेतरविलक्षण सर्वशक्ति, तथाऽपि "न तस्य कार्यं करण च विद्यत" इति करणविरहिणस्तस्य न कार्यारम्भः सम्भवतीति चेत्, तत्रोत्तर 'शब्दमूलत्वात्,' 'विचित्राश्च ही'त्युक्तम् । शब्दैकप्रमाणक सकलेतरविलक्षण तत्तत्करणविरहेणापि तत्त[2]त्कार्य्यसमर्थमित्यर्थः । तथा च श्रुतिः—

"पश्यत्यचक्षुः स शृणोत्यकर्णः ।
अपाणिपादो जवनो ग्रहीते"त्येवमाद्या ॥

कृत्स्नप्रसक्त्यधिकरण समाप्तम् ॥ ९ ॥

---

अथ प्रयोजनवत्त्वाधिकरणम् १० ॥ **न प्रयोजनवत्त्वात् ॥ ३२ ॥**

यद्यपीश्वरः प्राक् सृष्टेरेक एव सन् सकलेतरविलक्षणत्वेन सर्वार्थ-शक्तियुक्तः स्वयमेव[3] विचित्र जगत्स्रष्टु शक्नोति, तथाऽपीश्वरस्य कारणत्व न सम्भवति प्रयोजनवत्त्वाद् विचित्रसृष्टेः, ईश्वरस्य च प्रयोजनाभावात् । बुद्धिपूर्वकारिणामारम्भे द्विविध हि प्रयोजन स्वार्थः परार्थो वा । न हि

१ दर्शयन्तीह—इति मु॰ पु ।
२ तत्तत्तदिति मु पु॰ । ३ स्वयमेवमिति मु॰ पु॰ ।

परस्य ब्रह्मणः स्वभावत एवावाप्तसमस्तकामस्य जगत्सर्गेण प्रयोजनमनवाप्तमवाप्यते । नापि परार्थः,[1] आप्तसमस्तकामस्य परार्थता हि परानुग्रहेण भवति । न चेदृशगर्भजन्मजरामरणनरकादिनानाविधानन्तदुःखबहुलं जगत्कारुण्यवान्सृजति, प्रत्युत सुखैकतानमेव सृजेज्जगत्करुणया सृजन् । अतः प्रयोजनाभावाद्ब्रह्मणः कारणत्वं नोपपद्यत इत्येवं प्राप्ते प्रचक्ष्महे–

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

अवाप्तसमस्तकामस्य परिपूर्णस्य स्वसंकल्पविकार्य्यविविधविचित्रचिदचिन्मिश्रजगत्सर्गे लीलैव केवलं प्रयोजनम्, 'लोकवत्,' यथा लोके सप्तद्वीपां मेदनीमधितिष्ठतः सम्पूर्णशौर्य्यवीर्यपराक्रमस्यापि महाराजस्य केवललीलैकप्रयोजनाः कन्दुकाद्यारम्भा दृश्यन्ते, तथैव परस्यापि ब्रह्मणः स्वसंकल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादेर्लीलैव प्रयोजनमिति निरवद्यम् ।

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

यद्यपि परमपुरुषस्य सकलेतरचिदचिद्वस्तुविलक्षणस्याचिन्त्यशक्तियोगात्प्राक् सृष्टेरेकस्य निरवयवस्यापि विचित्रचिदचिन्मिश्रजगत्सृष्टिः सम्भाव्येत, तथापि देवतिर्य्यङ्मनुष्यस्थावरात्मनोत्कृष्टमध्यमापकृष्टसृष्ट्या पक्षपातः प्रसज्येत, अतिघोरदुःखयोगकरणान्नैर्घृण्यं चावर्जनीयमिति, तत्रोत्तरम्,–'न सापेक्षत्वा'दिति । न प्रसज्येयातां वैषम्यनैर्घृण्ये । कुतः । 'सापेक्षत्वात्,' सृज्यमानदेवादिक्षेत्रज्ञकर्म्मसापेक्षत्वाद्विषमसृष्टेः । देवादीनां क्षेत्रज्ञानां देवादिशरीरयोगं तत्तत्कर्मसापेक्षं[2] दर्शयन्ति हि श्रुतिस्मृतयः– "साधुकारी साधुर्भवति पापकारी पापो भवति" "पुण्यः पुण्येन कर्मणा भवति पापः पापेन कर्म्मणा" । तथा भगवता पराशरेणापि देवादिवैचित्र्यहेतुः सृज्यमानानां क्षेत्रज्ञानां प्राचीनकर्म्मशक्तिरेवेत्युक्तम्,–

१ नापि परार्थस्य ब्रह्मणः स्वभावत एवावाप्तसमस्तकामस्य जगत्सर्गेणेति लि॰ पु॰ पूर्वग्रन्थावृत्तिसंकर ।

२ ०सापेक्षत्वमिति लि॰ पु॰ ।

"निमित्तमात्रमेवासौ सृज्यानां सर्गकर्म्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः" ॥
निमित्तमात्र मुक्त्वैव नान्यत्किञ्चिदपेक्षते ।
नीयते तपतां श्रेष्ठ ! स्वशक्त्या वस्तु वस्तुता''मिति ॥

स्वकर्म्मणैव देवादिवस्तुताप्राप्तिरिति ।

## न कर्म्माविभागादिति चेन्नाऽनादित्वादुपपद्यते चाप्युपलभ्यते च ॥ ३५ ॥

प्राक्सृष्टेः क्षेत्रज्ञा नाम न सन्ति । कुतः । अविभागश्रवणात् "सदेव सोम्येदमग्र आसी"दिति । अतस्तदानीं तदभावात्तत्कर्म न विद्यते, कथ तदपेक्ष सृष्टिवैषम्यमित्युच्यत इति चे,च, 'अनादित्वात्, क्षेत्रज्ञानान्तत्कर्म्मप्रवाहाणा च । तदनादित्वेऽप्यविभाग उपपद्यते च, यत, स्तत्क्षेत्रज्ञवस्तु परित्यक्तनामरूपं ब्रह्मशरीरतयाऽपि पृथग्व्यपदेशानर्हम ऽतिसूक्ष्ममवतिष्ठते । तथाऽनभ्युपगमे अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च । उपलभ्यते च तेषामनादित्व "न जायते म्रियते वा विपश्चि"दिति । सृष्टिप्रवाहानादित्व च "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पय"दित्यादौ । "तद्धेद तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्या व्याक्रियते"ति नामरूपव्याकरणमात्रश्रवणात् क्षेत्रज्ञाना स्वरूपानादित्वं सिद्धम् । स्मृतावपि "प्रकृति पुरुष चैव विद्ध्यनादी उभावपी"ति। अतस्सर्वविलक्षणत्वात्सर्वशक्तित्वाल्लीलैकप्रयोजनत्वात् क्षेत्रज्ञकर्म्मानुगुण्येन विचित्रसृष्टियोगाद्ब्रह्मैव जगत्कारणम् ।

## सर्वधर्म्मोपपत्तेश्च ॥ ३६ ॥

प्रधानपरमाण्वादीना कारणत्वे यद्धर्म्मवैकल्यमुक्तं वक्ष्यमाणं च, तस्य सर्वस्य धर्म्मजातस्य कारणत्वोपपादिनो ब्रह्मण्युपपत्तेश्च ब्रह्मैव जगत्कारणमिति स्थितम् ॥

प्रयोजनवत्त्वाधिकरण समाप्तम् ॥ १० ॥

इति श्रीमद्भगवद्रामानुजाचार्य्यचरणकृतौ शारीरकमीमांसाभाष्ये द्वितीयस्याविरोधाध्यायस्य प्रथमः स्मृतिपादः ॥ १ ॥

# PREFACE

The text of the present Edition is that of a Bengali Ms belonging to the Government Sanskrit College, Benares In editing this book I have had before me—1 Gorresio's Edition of the Gauda text, 2 A Bengali Ms on palm leaves, 3. The Bombay and Calcutta Editions of the Northern text, and 4 Two Deva Nágari Mss, one with a commentary called the Vishama pada Vyakhyá, and the other, a very carefully written Ms used by its late owner for paráyana or recitation purposes I indicate them in the foot notes by the letters G, P, B, C, V, and S respectively For the sake of convenience, I have grouped them under the two classes, 1 Bengal or Gauda recension, and 2 Benares, or northern recension, Gorresio's Edition representing the former, and the Bombay Edition representing the latter Of the Mss, P belongs to the first group, and V and S belong to the second

In the foot notes, I have carefully noted all the various readings, occurring in the two above mentioned Editions, but differing from the present text But I have left out differences of whole chapters and of portions of chapters too long to be quoted in the foot notes The Mss have been quoted, only where their readings have been found to differ from the printed Editions representing the different recensions to which they belong

I reserve my observations on the texts of the different Mss and printed books I have consulted for a future occasion when I intend also to note in some detail the various readings I have not been able to put in in the foot notes

RASIK LAL BHATTACHARYA

स पुत्रपौत्रस्वजनो नरः कृच्छ्रात् प्रमुच्यते ॥ ११५ ॥
[1]रामायणमशेषेण तेन च श्रावितं भवेत् ।
य[2]इमं विदुषां मध्ये पठेच्छ्रद्धासमन्वितः ॥ ११६ ॥

पठन् द्विजो वागृषभत्वमीयात्
[3]तत्रान्वयो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयात्
[4]शृण्वन् हि शूद्रोऽपि महत्त्वमीयात् ॥ ११७ ॥

इत्यार्षे रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसाहस्र्यां संहितायां आदिकाण्डे नारदवाक्यं नाम संग्रहोऽध्यायः ॥ १ ॥

——o——

II

नारदस्याथ तद्वाक्यं श्रुत्वा वाक्यविशारदः ।
[5]वाल्मीकिः शिष्यसहितो विस्मयं परमं ययौ ॥ १ ॥
मनसैव स रामाय पूजां चक्रे महामुनिः ।
[6]तं चापि शिष्यसहितो नारदं प्रत्यपूजयत् ॥ २ ॥
यथावत् पूजितस्तेन [7]देवर्षिरथनारदः ।
तमापृच्छ्याभ्यनुज्ञातो जगाम त्रिदशालयम् ॥३ ॥

1 This Sloka is wanting in B 2 G 106 इद, G has another line before the next Śloka—स सर्वात्रयमाप्नोति प्रेत्य ब्रह्मणि लीयते । 3 B 100 स्यात क्षत्रियो &c 4 B 100 जनश्च शूद्रोऽपि &c 5 This, and the following line are wanting in B 6 B 1 पूजयामास धर्म्मात्मा सहशिष्यो महामुनि । 7 B 2 ——— देवर्षिर्नारदस्तथा । श्राप्

[1]मुहूर्तन्तु गते तस्मिन् देवलोकाय नारदे ।
जगाम तमसातीरं वाल्मीकिर्मुनिसत्तमः ॥ ४ ॥
[2]सपूतं तीर्थमासाद्य तमसाया महामुनिः ।
शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम् ॥ ५ ॥
[3]निःशर्करमिदं तीर्थं भारद्वाज निशामय ।
पुण्यं चैव प्रसन्नं च सज्जनानां यथामनः ॥ ६ ॥
[4]इदं तीर्थं समं सौम्यं सुजलं सूक्ष्मबालुकम् ।
अस्मिन्नेवावगाहिष्ये तीर्थेऽहं तमसाजलम् ॥ ७ ॥
[5]न्यस्यतां कलशस्तावद्दीयतां वल्कलं मम ।
वल्कलं त्वमिहादाय शीघ्रमेह्याश्रमात् पुनः ॥ ८ ॥
यथा कालात्ययो न स्यात्तथा साधु विधीयताम् ।
[6]सगुरोर्वचनाच्छीघ्रमागम्य पुनराश्रमात् ॥ ९ ॥
आनीय वल्कलं तस्मै गुरवे प्रत्यवेदयत् ।
[7]सशिष्यहस्तादादाय परिधाय च वल्कलम् ॥ १० ॥
अवगाह्य जलं स्नात्वा जप्त्वा जप्यञ्च वाग्यतः ।
तर्पयित्वा च विधिवत् तोयेन पितृदेवताः ॥ ११ ॥

---

कौ वाभ्यनुज्ञात' सजगाम विहायस ॥ 1 G 4 समुहूर्त &c B 3 समुहूर्त्त गते तस्मिन्देवलोक मुनिस्तदा। जगाम तमसातीर जाह्नव्यास्त्वविदूरत' ॥ 2 B 4 सतु तीर समासाद्य तमसाया मुनिस्तदा। &c 3 B 5 अकर्दममिद तीर्थ भारद्वाज निशामय। रमणीय प्रसन्नाम्बु सन्मनुष्यमनो यथा ॥ 4 B 6 न्यस्यता कलशस्तात दीयता वल्कल मम । इदमेवावगाहिष्ये तमसातीर्थमुत्तम ॥ 5 This line—the same as the first line of B 6—is wanting in G, while the following two lines are wanting in B 6 For this and the next line B 7 एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना। प्रायच्छत मुनेस्तस्य वल्कल नियतो गुरो ॥ 7 B 8 सशिष्यहस्तादादाय वल्कल नियतेन्द्रिय'।

[1]निरीक्षमाणो व्यचरत् सर्वतस्तमसावनम् ।
ततः स तमसातीरे विचरन्तमभीतवत् ॥ १२ ॥
ददर्श क्रौञ्चयोस्तत्र मिथुनं चारुदर्शनम् ।
तस्माच्च मिथुनादेकमागत्यानुपलक्षितः ॥ १३ ॥
जघान बद्धानुशयो निषादो मुनिसन्निधौ ।
तं शोणितपरीताङ्गं चेष्टमानं महीतले ॥ १४ ॥
[2]दृष्ट्वा क्रौञ्ची रुरोदार्त्ता करुणं खे परिभ्रमा ।
[3]तं तथा निहतं दृष्ट्वा निषादेनाण्डजं वने ॥ १५ ॥
मुनेः शिष्यसहायस्य कारुण्यं समजायत ।
[4]ततः करुणवेदित्वाद्धर्म्मात्मा स द्विजोत्तमः ॥
निशम्य करुणं क्रौञ्चीं रुदन्तीं प्रजगाविदम् ॥ १६ ॥
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ १७ ॥
[5]तस्येदमुक्त्वा वचनं [6]चिन्तयंस्तदनन्तरम् ।
शकुनं शोचता ह्येवं किमेतद् व्याहृतं मया ॥ १८ ॥

The next two lines are wanting in B 1 For this and the following four lines B 8-10 विचचार ह पश्यस्तत सर्वतो विपुल वन ॥ तस्याभ्याशे तु मिथुन चरंतमनपायिन । ददर्शभगवास्तत्र क्रौञ्चयोश्चारुनिस्वनं ॥ तस्मात्तु मिथुनादेक पुमास पापनिश्चयः । जघान वैरनिलयो निषादस्तस्य पश्यत. ॥ 2 For this line B 11-12 भार्या तु निहतं दृष्ट्वा रुराव करुणा गिर ॥ वियुक्ता पतिना तेन द्विजेन सहचारिणा । ताम्रशीर्षेण मत्तेन पत्त्रिणा सहितेनवै ॥ 3 For this and the next line B 13 तथाविध द्विज दृष्ट्वा निषादेन निपातित । ऋषेर्धर्म्मात्मनस्तस्य कारुण्य समपद्यत ॥ 4 For this and the next line B 14—ततः करुणवेदित्वादधर्म्मोऽयमिति द्विज. । निशम्य रुदती क्रौञ्चीमिद वचनमब्रवीत ॥ 5 B 16 तस्येत्य ब्रुवतश्चिन्ता बभूव हृदि वीक्षत. । शोकार्तेऽप्यशकुनेः किमिद व्याहृत मया ॥ 6 G 18 चिन्ताभूत् &c.

[1]मुहूर्त्तमिव च ध्यात्वा वाक्यं तत् परिमृष्य च ।
शिष्यमाह स्थितं पार्श्वे भारद्वाजमिदं वचः ॥ १९ ॥
[2]पादैश्चतुर्भिः संयुक्तमिदं वाक्यं समाक्षरैः ।
शोचतोक्तं मया यस्मात्तस्माच्छ्लोको भविष्यति २०॥
[3]शिष्योऽथ तस्य तच्छ्रुत्वा मुनेर्वाक्यमनुत्तमम् ।
तथेति प्रतिजग्राह गुरोः प्रीतिं प्रदर्शयन् ॥ २१ ॥
[4]सम्भाषमाण एवाथ शिष्येण सहितस्ततः ।
तमेव चिन्तयन् श्लोकं समायादाश्रमं मुनिः ॥२२॥
[5]तमन्वयाद्विनीतात्मा भारद्वाजो [6]महामुनिः ।
पूर्णं कलसमादाय शिष्यः परमसम्मतः ॥ २३ ॥
स प्रविश्याश्रमपदं शिष्येण सह धर्म्मवित् ।
[7]उपविष्टस्ततस्तस्मिन् बभूव ध्यानमास्थितः ॥ २४ ॥
आजगाम ततो ब्रह्मा लोककर्त्ता स्वयं प्रभुः ।
[8]स्वयं स्वयम्भूर्भगवान् द्रष्टुं तमृषिसत्तमम् ॥ २५ ॥

1 B. 17 चिन्तयन स महाप्राज्ञश्चकार मतिमान्मतिं । शिष्य चैवाब्रवीद् वाक्यमिद स मुनिपुगव ॥ 2 B 18 पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वित. । शोकार्त्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥ 3 B 19 शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम । प्रतिजग्राहसतुष्टस्तस्य तुष्टोऽभवन्मुनि ॥ V. 19 भवद्गुरुः ॥ 4 B 20 सोऽभिषेक तत कृत्वा तीर्थे तस्मिन् यथाविधि । तमेव-चितयन्नर्थमुपावर्तत वै मुनि॰ । For the 2nd line G 22 has तमेव चिन्तयन्नर्थमुपायादाश्रम मुनि ॥ 5 B 21 भारद्वाजस्तत॰ शिष्यो विनीत श्रुतवान् गुरोः । कलश पूर्णमादाय पृष्ठतोऽनुजगाम ह । V 20 has मुनि for गुरोः here 6 G 23 महामुनि। 7 B 22 उपविष्ट॰ कथाश्चान्याश्चकार ध्यानमास्थित. । 8 B 23 चतुर्मुखो महातेजा द्रष्टु त मुनिपुगव ।

[1]वाल्मीकिरपि तं दृष्ट्वा सहसोत्थाय वाग्यतः ।
प्राञ्जलिः [2]प्रणतो भूत्वा तस्थौ परमविस्मितः ॥ २६ ॥
पूजयामास [3]चैवैनं पाद्यार्घ्यासनवन्दनैः ।
[4]प्रणतो विधिवच्चैनं पृष्ट्वा[5]नामयमव्ययम् ॥ २७ ॥
[6]तत्रोपविश्य भगवानासने परमार्च्चिते ।
[7]वाल्मीकयेप्यासनं स दिदेशानन्तरं ततः ॥ २८ ॥
उपविष्टे च तस्मिंस्तु साक्षाल्लोकपितामहे ।
तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः ॥ २९ ॥
[8]शोचन्निवमुहुः क्रौञ्चीं ततःश्लोकमिमं पुनः ।
जगदान्तर्गतमना भूत्वा शोकपरायणः ॥ ३० ॥
[9]कृतं पापात्मना कष्टं व्याधेनानात्मबुद्धिना ।
यत्सुचारुरवं क्रौञ्चमवधीत्तमकारणात् ॥ ३१ ॥
तमुवाच ततो ब्रह्मा प्रहसन् [10]मुनिसत्तमम् ।
[11]महर्षे यदयं प्रोक्तस्त्वया क्रौञ्चवधाश्रयः ॥ ३२ ॥

---

1 B 24 वाल्मीकिरथ &c and 2 प्रयतो &c 3 B 25 त देव &c, 4 प्रणम्य &c, and 5 चैवनिरामयम् । V agrees with our text 6 G 28 & B 26—अथोपविश्य &c ॥ 7 B 26 वाल्मीकये च ऋषये सदिदेशासन ततः ॥ V वाल्मीकये महर्षये &c B 27 reads the line—ब्रह्मणा समनुज्ञात सोऽप्युपाविशदासने after the above line, V has समुपाविशदासने, ॥ 8 This corresponds to B 29 30 शोचन्नेव पुन क्रौञ्चीमुपश्लोकमिम जगौ। पुनरन्तर्गतमनाभूत्वाशोकपरायण ॥ 9 This corresponds to B 28 29 पापात्मना कृत कष्ट वैरग्रहणबुद्धिना ॥ यस्तादृश चारुरव क्रौञ्च हन्यादकारणात् । 10 B 30 मुनिपुगव 11 This line is wanting in B

श्लोक एवास्त्वयं बद्धः[1] स्तववाक्यस्य शोचतः ।
[2]मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती ॥ ३३ ॥
रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम ।
धर्म्मात्मनो [3]गुणवतो लोके रामस्य धीमतः ॥ ३४ ॥
वृत्तं [4]कथय[5]यत्नेन यथा ते नारदाच्छ्रुतम् ।
[6]रहश्चैव प्रकाशञ्च यद्वृत्तं तस्य धीमतः ॥ ३५ ॥
[7]रामस्य ससहायस्य राक्षसानाञ्च सर्वशः ।
वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ॥ ३६ ॥
[8]यच्चाप्यविदितं सर्वं विदितं ते भविष्यति ।
[9]सदारेण सराष्ट्रेण राज्ञा दशरथेन यत् ॥ ३७ ॥
आसितं भाषितञ्चैव[10]गतं यच्चाप्यनुष्ठितम् ।
[11]यच्चाप्यविदितं सर्वं विदितं ते भविष्यति ॥ ३८ ॥
न ते वागनृताकाचिदत्र काव्ये भविष्यति ।
कुरु रामकथां[12]दिव्यां श्लोकबद्धां मनोरमाम् ॥ ३९ ॥
यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्रामायणकथा [13]लोकेषु प्रचरिष्यति ॥ ४० ॥

---

1 B 31——नात्र कार्या विचारणा । 2 G 33 स्वच्छन्दादेव &c । 3 B 32 भगवतो &c V has गुणवतो &c. 4 G 35 प्रथय 5 G रामस्य, B 33—धीरस्य 6 B रहस्यञ्च &c । 7 B 34 रामस्य सहसौमित्रे &c 8 G 37 तच्चाप्यवितथ &c B तच्चाप्यविदितं &c V has यच्चाप्य &c 9 This and the following two lines are wanting in B 10 G 38 मत &c 11 G 38 सर्वविदितमेतत्ते मत्प्रसादाद् भविष्यति । 12 B 36. पुण्यां &c 13 V 36 त्वत्कृता प्र॰ &c

[1]तावदूर्द्ध्वमधश्च त्वं [2]स्वर्गलोके निवत्स्यसि ।
इत्युक्त्वाभगवान् ब्रह्मा तत्रैवान्तरधीयत ॥ ४१ ॥
[3]ततः सशिष्यो वाल्मीकिर्विस्मयं परमं ययौ ।
तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं [4]तदा ॥४२॥
मुहुर्मुहुः प्रीयमाणाः [5]प्राहुश्च भृशविस्मिताः ।
समाक्षरैश्चतुर्भिर्यः पादैर्गीतो [6]महात्मना ॥ ४३ ॥
सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः ।
[7]तस्य धीरभवत्तत्र वाल्मीकेरथ धीमतः ॥ ४४ ॥
कृत्स्नं रामायणं [8]श्लोकैस्तादृशैः करवाण्यहम् ।
[9]धर्म्मकामार्थसम्बद्धं बहुचित्रार्थविस्तरम् ॥
समुद्रमिव रत्नाढ्यं लोकश्रुति[10]रसायनम् ॥ ४५ ॥

उदारवृत्तार्थपदैर्मनोहरै
[11]स्ततःसरामस्य चकार कीर्त्तिमान् ।
समाक्षरैः श्लोकशतैर्यशस्विनो
यशस्करं काव्य[12]मुदारधोरिति ॥ ४६ ॥

इत्यादिकाण्डे ब्रह्मागमनम् ॥ २ ॥

1 This line is wanting in G Before this B 37 has the line—यावद्रामस्य च कथा त्वत्कृता प्रचरिष्यति This line is however wanting in V 2 B 38 मल्लोकेषु &c 3 B 39 तत सशिष्यो भगवान्मुनि र्विस्मयमाययौ । 4 B पुन । 5 G 42 प्राहुर्भूयश्च &c 6 B 40 महर्षिणा । 7 G 44 तस्य बुद्धिरभूत्तत्र &c, B 41 तस्य बुद्धिरिय जाता महर्षेर्भावितात्मन । 8 G 44 श्लोकैरीदृशै &c, B 41 काव्यमीदृशैः &c 9 These 2 lines are wanting in B 10 G 45 परायणम । 11 B 42 तदास्य &c 12 G 46 उदारधी पर, B 42 उदारदर्शन, V उदारधीर्मुनि । B has another Śloka after this——

[1] III

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः ।
चकार चरितं [2]चित्रं विचित्रपद[3]मर्थवत् ॥ १ ॥
पवित्रं वैष्णवं दिव्यमिदमाख्यानमुत्तमम् ।
वेदैश्चतुर्भिः समितमितिहासं पुरातनम् ॥ २ ॥
श्रावयामास वै विप्रान् सुव्रतान्नियतेन्द्रियान् ।
धौम्यमाण्डव्यकुशिकान् [4]सार्ष्णिसेनान् सकौशलान्॥३॥
तौ चैवेक्ष्वाकुदायादौ मुनिवेशौ कुशीलवौ ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ॥ ४ ॥
कृत्वा च तत्त्वतः कीर्त्तिं राघवस्य महात्मनः ।
इहैवार्थश्च धर्म्मश्च [5]निखिलेनोपपद्यते ॥ ५ ॥
दण्डनीतिश्च विपुला त्रयी वार्त्ताच कृत्स्नशः ।
य इदं शृणुयान्नित्यं यश्चैनं परिकीर्त्तयेत् ॥ ६ ॥
इह भोगान् वरान् प्राप्य देवैर्गच्छन्ति तुल्यताम् ।
इक्ष्वाकूणामिदञ्चैव जनकस्य च धीमतः ॥ ७ ॥
पुलस्त्यस्य च देवर्षेः कीर्त्तनं समुदाहृतम् ।
अश्वमेधावसाने च राघवस्य महात्मनः ॥ ८ ॥

---

तदुपगतसमाससन्धियोग सममधुरोपनतार्थवाक्यबद्ध । रघुवरचरित मुनिप्रणीत दशशिरसश्च वध निशामयध्व ॥ ४३ ॥ 1 Chap III in B, V, S, and G is Chap IV in our M, and P, G Chap IV is Chap III here and in P, Chap IV. in B V and S however has only the 1st Sloka in Common with Chap III here, but is entirely different in all other respects from it. 2 B 1 कृत्स्न &c 3 V आत्मवान् 4 P सार्ष्टिसेनान &c 5 G 5 कामश्च परिकीर्त्तितः ।

कथितं तुष्टिजननमिदमाख्यानमादितः ।
[1]यत्र धर्म्मार्थसंयुक्तं पापानां [2]वारणं शुभम् ॥ ९ ॥
आदिकाण्डमिदं प्रोक्तं विस्तरश्चास्य कथ्यते ।
प्रथमं नारदप्रश्नो नदीगमनमेव च ॥ १० ॥
ब्रह्मणो दनर्शनञ्चैव वरप्राप्तिश्च पुष्कला ।
श्लोकानां परिमाणञ्च यत्रैतत्परिकीर्त्यते ॥ ११ ॥
अयोध्यावर्णनञ्चैव राज्ञो दशरथस्य च ।
अमात्यवर्णनञ्चैव कैाशल्यायाश्च वर्णनम् ॥ १२ ॥
पुत्रार्थञ्च नरेन्द्रस्य मन्त्रणं समुदाहृतम् ।
अश्वमेधक्रिया चैव वरप्राप्तिश्च पुष्कला ॥ १३ ॥
भागार्थिनाञ्च देवानामागमः समुदाहृतः ।
रावणस्य [3]वधोपायमन्त्रणं समुदाहृतम् ॥ १४ ॥
[4]अंशावतरणञ्चात्र सुराणां समुदाहृतम् ।
दिव्या च पायसोत्पत्तिः पुत्रजन्म नृपस्य च ॥ १५ ॥
कैाशल्यायां च रामस्य कैकेय्यां भरतस्य च ।
यमयोश्च सुमित्रायां सम्भवः समुदाहृतः ॥ १६ ॥
वानराणाञ्च सर्वेषामुत्पत्तिः परिकीर्त्तिता ।
राज्ञो दशरथस्येह विश्वामित्रेण सङ्गमः ॥ १७ ॥
प्रदानञ्चैव रामस्य रक्षणार्थं महाक्रतोः ।
लक्ष्मणानुगमश्चैव विद्याप्राप्तिश्च पुष्कला ॥ १८ ॥

1 P अत्र &c　2 Marginal Correction, agreeing with G 9 पावन &c　3 G 14 वधोपाये &c　4 G 15 स्वर्गावतरण &c,

अनङ्गाश्रमवासश्च ताड़कावनदर्शनम् ।
ताड़कायाश्च [1]निधनमस्त्रलाभश्च कीर्त्यते ॥ १९ ॥
सिद्धाश्रमनिवासश्च [2]सत्ररक्षणमेव च ।
सुबाहोर्निधन[3]ञ्चैव मारीचस्य च भर्त्सनम् ॥ २० ॥
विश्वामित्रस्य चैवर्षेः स्ववंशपरिकीर्त्तनम् ।
गङ्गायाः प्रभवश्चैव पवित्रः परिकीर्त्तितः ॥ २१ ॥
दिव्यगर्भावपतनं कार्त्तिकेयस्य सम्भवः ।
विशालस्य च राजर्षेर्वंशस्य परिकीर्त्तनम् ॥ २२ ॥
अहल्याशापमोक्षश्च मिथिलायाश्च दर्शनम् ।
[4]गमनं यज्ञवाटस्य मैथिलस्य च दर्शनम् ॥ २३ ॥
चरितञ्चैव कात्स्न्र्येन कौशिकस्य महात्मनः ।
कथितं राघवस्यात्र शतानन्देन धीमता ॥ २४ ॥
धनुषो भेदनञ्चैव कन्यायाश्च निवेदनम् ।
राज्ञो दशरथस्येह जनकस्य च सङ्गमः ॥ २५ ॥
सीतादीनाञ्च कन्यानां विवाहः समुदाहृतः ।
वधूर्गृहीत्वा नृपतेर्यानं दशरथस्य च ॥ २६ ॥
समागमश्च रामस्य जामदग्न्येन धीमता ।
जामदग्न्यस्य लोकानां [5]वधश्चात्रानुकीर्त्तितः ॥ २७ ॥

but P has अशावतरण &c 1 P निधन मन्त्रलाभश्च &c 2 G 20 क्रतुरक्षण &c, but P has सत्र &c 3. G 20 चात्र &c 4 G 23 दर्शन यज्ञ &c P has यज्ञवाटस्य गमन &c 5 G 27 रोधश्चात्रानुकथ्यते, but P agrees with our text

अयोध्यासंप्रवेशश्च प्रवासो भरतस्य च ।
अयोध्यावासिनाञ्चैव प्रमोदः[1] परिकीर्त्तितः ॥ २८ ॥
इत्येतत्प्रथमं काण्डमादिकाण्डमिहोच्यते ।
सर्गाश्चैव चतुःषष्टिः श्लोकाना[2]ञ्चात्र कथ्यते॥ २९ ॥
द्वे सहस्रे शतान्यष्टौ श्लोकाः पञ्चाशदेवतु ।
बालचर्य्या हि यत्रोक्ता राघवस्य महात्मनः ॥ ३० ॥
अतः परं द्वितीय[3]न्तु अयोध्याकाण्डसंज्ञितम् ।
यत्राभिषेकसङ्कल्पो व्याघातश्चैव कीर्त्यते ॥ ३१ ॥
कैकेय्यनुनयश्चैव शोको दशरथस्य च ।
वनप्रयाणं रामस्य लक्ष्मणानुगमस्तथा ॥ ३२ ॥
विषादः प्रकृतीनाञ्च तथैव च विसर्जनम् ।
निषादाधिपसंवादः सूतस्य च विसर्जनम् ॥ ३३ ॥
गङ्गायाश्चापि सन्तारो भरद्वाजस्य दर्शनम् ।
भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम् ॥ ३४ ॥
वास्तुकर्म्म निवेशश्च चित्रकूटे महागिरौ ।
उपावृत्ते सुमन्त्रे च राज्ञो मोहागमः परः ॥ ३५ ॥
स्वशापकथनञ्चैव स्वर्गप्राप्तिर्नृपस्य च ।
भरतागमन[4]ञ्चैव तूर्णं राजगृहादपि ॥ ३६ ॥
रामप्रसादनार्थञ्च भरतस्य महात्मनः ।
गमनं कीर्त्यते वासो भरद्वाजस्य चाश्रमे ॥ ३७ ॥

1 G 28 परिकीर्त्त्यते । 2 P चैव कीर्त्यते । 3 G 31 तद् &c
4. P तूर्णं मातामहगृहादपि

दर्शनञ्चैव रामस्य पितुश्च सलिलक्रिया ।
प्रसादनञ्च रामस्य बहुशः परिकीर्त्तितम् ॥ ३८ ॥
जावालेर्यत्र वाक्यानि वामदेवस्य चोभयोः ।
इक्ष्वाकूणाञ्च वंशस्य कीर्त्तनं समुदाहृतम् ॥ ३९ ॥
अप्रतिज्ञा च रामस्य गमने कोशलान् प्रति ।
पादुकाहरणञ्चैव भरतस्य विसर्जनम् ॥ ४० ॥
नन्दिग्राम[1]प्रवेशश्च मातृणाञ्च विसर्जनम् ।
अयोध्यासंप्रवेशश्च शत्रुघ्नस्य महात्मनः ॥ ४१ ॥
काण्डं द्वितीयमित्युक्तमयोध्याकाण्डसंज्ञितम् ।
अशीतिः संख्यया सर्गाः श्लोकानाञ्चात्र [2]कथ्यते ॥ ४२ ॥
त्रीणि श्लोकसहस्राणि नवश्लोकशतानि च ।
श्लोकानां द्वे शते चैव भूयः श्लोकाश्च सप्ततिः ॥ ४३ ॥
अतः [3]काण्डं तृतीयन्तु आरण्यकमिति [4]श्रुतम् ।
यत्र रामो महाबाहुर्दण्डकं प्राविशद्वनम् ॥ ४४ ॥
अनसूया[5]गमश्चात्र अङ्गरागस्य चार्पणम् ।
विराधदर्शनञ्चैव वधश्च समुदाहृतः ॥ ४५ ॥
ऋषीणां दर्शन[6]ञ्चैव मैथिल्या[7]श्चैव सान्त्वनम् ।
शरभङ्गाश्रमप्राप्तिर्महेन्द्रस्य च दर्शनम् ॥ ४६ ॥

1 P निवासश्च &c 2 G 42 कीर्त्यते । 3 G 44 पर &c but P has काण्ड 4 G स्मृत 5 G 45 समस्याच &c 6 G 46 चापि, &c, but P चैव &c 7 G चापि &c

सुतीक्ष्णाश्रमसंप्राप्तिः संवादः सहसीतया ।
मन्दकर्णिश्च [1]कथितं यत्र शस्त्रविसर्जनम् ॥ ४७ ॥
इल्वलस्य च संवादः कीर्त्तनञ्च दुरात्मनः ।
अगस्त्याश्रमवासश्च तथा संपरिकीर्त्तितः ॥ ४८ ॥
दर्शनं पञ्चवट्याश्च जटायोश्चैव दर्शनम् ।
जनस्थाननिवासश्च शिशिरस्य च वर्णनम् ॥ ४९॥
स्मरणं भरतस्याथ कैकेय्याश्चैव गर्हणम् ।
संवादः [2]शूर्पणखया विरूपकरणं तथा ॥ ५० ॥
खरस्य च वधो घोरो दूषणत्रिशिरोवधः ।
लङ्काप्रवेशो राक्षस्याः शूर्पणख्याः प्रकीर्त्तितः ॥ ५१ ॥
सीताया लोभनञ्चैव [3]रावणस्य च शब्दितम् ।
मारीचाश्रमसंप्राप्ती रावणस्य दुरात्मनः ॥ ५२ ॥
मारीचश्च मृगो भूत्वा वैदेहीं समलोभयत् ।
लोभयित्वा च वैदेहीं [4]राघवस्याथ कर्षणम् ॥ ५३ ॥
मारीचस्य वधश्चैव लक्ष्मणस्य च गर्हणम् ।
सीताया हरणञ्चैव सौमित्रेश्चात्र सङ्गमः ॥ ५४ ॥
जटायुषो वधश्चात्र सीतायाश्च प्रवेशनम् ।
लक्ष्मणस्य च संवादो [5]राघवस्य महात्मनः ॥ ५५ ॥

1 P कथन &c 2 P. शूर्पनख्याश्च &c 3 G 52, रावणस्यानु &c, P रावणस्याथ &c 4 G 53 राघवस्यापकर्षणम. 5 G 55 राघवेण महावने, P agrees with our text, but has the marginal reading- राघवेण महात्मना

हृताञ्च जानकीं मत्वा विलापो राघवस्य च ।
[1]जटायुदर्शनञ्चैव सत्कारश्च महात्मनः ॥ ५६ ॥
खगराजस्य रामेण कृता चैव जलक्रिया ।
कबन्धस्य वधः प्रोक्तः स्वर्गप्राप्तिश्च पुष्कला ॥ ५७ ॥
कबन्धस्य च वाक्येन सुग्रीवान्वेषणं स्मृतम् ।
शवरीदर्शनञ्चैव पम्पायां परिदेवनम् ॥ ५८ ॥
इति काण्डं तृतीयन्तु आरण्यकमिति [2]श्रुतम् ।
सर्गाणाञ्च शतं [3]ज्ञेयं सर्गाश्चैव चतुर्दश ॥ ५९ ॥
[4]चत्वारीह सहस्राणि श्लोकानां कीर्त्तितानि च ।
शतञ्चैवात्र विज्ञेयं श्लोकाः पञ्चाशदेव तु ॥ ६० ॥
अतः परं चतुर्थन्तु [5]किष्किन्धाकाण्डसंज्ञितम् ।
[6]ऋष्यमूकगिरिप्राप्ती राघवस्य महात्मनः ॥ ६१ ॥
[7]हनूमद्दर्शनञ्चैव संवाद[8]श्चात्र कीर्त्यते ।
आरोहणञ्च शैलस्य [9]ऋष्यमूकस्य कीर्तनम् ॥ ६२ ॥
रामसुग्रीवसख्यञ्च वालिपौरुषकीर्त्तनम् ।
[10]सप्ततालविभेदश्च प्रत्ययोत्पादनन्तथा ॥ ६३ ॥

1 G 56 जटायोर्दर्शनं &c  2 G 59 स्मृतम्  3 P चैव &c. 4 G 60 चत्वारि च &c but P चत्वारीह &c  5 G 61 काण्ड किष्किन्ध्या सञ्ज्ञितम, but P agrees with our text  6 G ऋष्यमूख &c but P ऋष्यमूक &c  7 G 62 हनुमद &c, P हनूमद् &c  8 G चैव कथ्यते, P चैव कीर्त्यते  9 G ऋष्यमूखस्य &c but P has ऋष्यमूकस्य &c  10 P and our Ms. have the Marginal reading, सप्तशाल &c

वालिसुग्रीवयुद्धञ्च वालिनो वध एव च ।
अन्तःपुरविलापश्च ताराकारुण्यमेव च ॥ ६४ ॥
सुग्रीवस्याभिषेकश्च वालिपुत्रसमर्पणम् ।
विलापो [1]राघवस्यात्र लक्ष्मणेन च सान्त्वनम् ॥ ६५ ॥
प्रावृड्विलापश्चैवात्र शरद्वर्णनमेव च ।
विलापश्चैव शरदि समयस्य च लङ्घनम् ॥ ६६ ॥
सुग्रीवं प्रति रामस्य [2]प्रकोपोऽत्र प्रकीर्त्तितः ।
रामस्य कोपं विज्ञाय लक्ष्मणस्य च सम्भ्रमः ॥ ६७ ॥
[3]प्रणयो लक्ष्मणस्याथ दौत्येन गमनन्तथा ।
सुग्रीवस्य तथा चात्र गमनं राघवाश्रमे ॥ ६८ ॥
प्रसादनञ्च रामस्य वानराणाञ्च संग्रहः ।
पृथिव्या वर्णनञ्चैव सुग्रीवेण महात्मना ॥ ६९ ॥
[4]प्रस्थानं वानराणाञ्च अङ्गुरीयस्य चार्पणम् ।
हनूमत्प्रभृतीनाञ्च विन्ध्यपर्वतलङ्घनम् ॥ ७० ॥
स्वयंप्रभा[5]गुहायाञ्च प्रवेशः [6]परिकीर्त्तितः ।
अप्रवृत्तौ च वैदेह्या विषादगमन[7]न्तथा ॥ ७१ ॥
प्रायोपवेशन[8]ञ्चात्र वानराणां महात्मनाम् ।

1 P राघवस्याथ &c For the 2nd line of this Śloka P has another Marginal reading—यौवराज्यञ्च तस्यात्र करणञ्चाश्रमस्य च ॥ 2 G 67 प्रकोपो यत्र कीर्त्तित, P कोपो यत्र प्रकीर्त्तितः। 3 G 68 प्रेषण &c 4 G प्रस्थापनं वानराणां &c., P agrees with our text 5 G 71 गुहायाश्च &c 6 G इह कीर्त्तित। 7 G महत्। 8 G 72 चैव, &c but P चात्र &c

दर्शनञ्चात्र सम्पातेर्गृध्रराजस्य धीमतः ॥ ७२ ॥
[1]निवेदनञ्च लङ्कायां गृध्रराजेन धीमता ।
[2]चतुर्थमेतत्काण्डन्तु कैष्किन्ध्यमिति संज्ञितम् ॥ ७३ ॥
सर्गाश्चैवात्र विज्ञेया चतुःषष्टिस्तु संख्यया ।
श्लोकानां द्वे सहस्रे [3]तु अष्टौ श्लोकशतानि च ॥ ७४ ॥
श्लोकानां च शतं ज्ञेयं पञ्चविंशतिरेव च ।
अतः परं प्रवक्ष्यामि काण्डं सुन्दरसंज्ञितम् ॥ ७५ ॥
[4]हनूमत्प्रेरणं यत्र सुरसायाश्च दर्शनम् ।
मैनाकस्य गिरेश्चैव दर्शनं परिकीर्त्तितम् ॥ ७६ ॥
निधनं सिंहिकायाश्च लङ्कादर्शनमेव च ।
प्रवेशश्चैव लङ्कायां वर्णनं विचयस्तथा ॥ ७७ ॥
मार्गणञ्चैव वैदेह्या रावणान्तःपुरे शुभे ।
[5]दर्शनं पुष्पकस्येह आपानस्य च वर्णनम् ॥ ७८ ॥
दर्शनं राक्षसेन्द्रस्य रावणस्य दुरात्मनः ।
विचयः पुष्पकस्येह जानक्याश्चैव मार्गणम् ॥ ७९ ॥
अदर्शने च वैदेह्याः शोकोपगमनन्तथा ।
प्रविश्याशोकवनिकां वैदेह्याश्चैव दर्शनम् ॥ ८० ॥

1. This line is wanting in G, but P has it 2 G 73 काण्डं चतुर्थमित्युक्त किष्किन्ध्यानामसञ्ज्ञितम । P agrees with our text 3 G 74 च &c, P तु &c 4 G 75 हनुमत्प्लवनयत्र &c, P has the alternative readings—हनूमत्प्रेषणञ्चैव, and हनूमत्प्लवनञ्चैव &c 5 This line is wanting in G but P. has it

THE

# ADVAITASIDDHI

OF

# MADHUSÚDANA SARASVATÍ.

## CHAPTER I

## THE EXPLANATION OF UNREALITY

### Section 1 —Introductory

Glorious by Himself is the All-pervading (*Vishnu*) who is the substrate of the false world of duality, consisting of the character of knower etc[1] which is fabricated by illusion (*māyākalpita*), whose nature is reality, knowledge and bliss, who is realisable by the perception of the Indivisible derived from a study of the Vedanta, and who, though changeless, seems as if, by casting aside the bonds of unreality, He has attained final emancipation in the shape of concentrated bliss ineffable

Let my salutation be to the dust shaken from the feet of Sri Rama, Visvēsvara and Mādhava[2] who have realised the Supreme as identical with them selves,—the dust which by its very touch dispels the qualities of *tamas* and *rajas*[3]

(1) The distinction of knower, known and knowledge is here meant

(2) These are respectively the author's *paramaguru*, *guru*, and *vidyaguru*, or the preceptor's preceptor, the preceptor (spiritual initiator) and the teacher of knowledge

(3) i e inertia (chaos, ignorance) and energy (individuation, isolation) as opposed to *sattva*, harmony

There exist innumerable and exhaustive treatises written by several scholars for the benefit of others This labour of mine, therefore, will only raise the presumption that I am vainglorious

May this Advaitasiddhi, composed with great effort by utilising a multitude of sciences, by the sage Madhusūdana, whose only wealth is faith (*Sraddhā*), give satisfaction to those scholars who are eager to teach others as well as to vanquish their opponents

## Section 2 —The statement of alternatives as a factor in enquiry.

Now, as the establishment of non duality depends on the establishment of the unreality (*mithyātva*) of duality, it is the unreality of duality that should be first demonstrated And, since demonstration consists in substantiating one's own case and in refuting the opponent's, these two results have to be accomplished by adopting one of the three methods of argumentation, wrangling and cavilling[1] In this connection, since the doubt that springs from a statement of alternatives is a factor in enquiry, the arbiter, (*madhyastha*)[2] should at the outset propound the statement of alternatives (*vipratipatti*)

(1) The primary object of *váda* is to get at the truth, that of *jalpa* to triumph over the opponent, and that of *vitandá* to establish nothing but merely to carry on a frivolous and fallacious dispute

(2) For the sake of convenience and clearness, an exponent, an opponent and an arbiter are introduced in argument

It may be said that the doubt arising from the statement of alternatives is not needed to invest a thing with the character of subject[1] A thing is constituted a subject by the absence of any establishing proof which is accompanied by the absence of any desire to infer,[2] and this has no relation to doubt Otherwise,[3] one who has ascertained the nature of the self from Scripture cannot, though actuated by a desire to infer, make an inference regarding the same The disputants, moreover, have settled convictions and have no doubt If the doubt be merely adventitious (*āhārya*), the same may be said of other things also[4] Nor is a statement of alternatives, by its very nature, necessary to define the *pros* and *cons* As this end is achieved even by the arbiter saying "thou shouldst prove this," "thou shouldst disprove this" etc, the statement of alternatives has no use.

(1) *paksha*, subject or minor term

(2) The absence of proof is not the only thing that constitutes a thing the minor term, for, a thing might be well established by proof, and yet one may desire to make an inference regarding it, say, for the instruction of another Hence the qualification that the proof whose absence constitutes the subject should be accompanied by the absence of any desire to infer The purport is, either there should be no establishing proof, or, if there be one, there should be a desire to infer

(3) i e if doubt is necessary for inference

(4) The inference, the conclusion etc may all be called adventitious

Nevertheless, though the doubt derived from a statement of alternatives is not a factor in inference, yet, as a matter to be dispelled,[1] it is surely a factor in the enquiry. And though in some cases a statement of alternatives may not really create a doubt owing to the existence of prior certainty or other impediment yet it is by its very form adapted to state a doubt. Further, it is not an invariable rule that the disputants have settled opinions. The statement that only two persons of settled opinions carry on a discussion, has sole reference to their assumed certitude, since, in disputations such as those intended merely to vanquish an opponent, it is seen that a self-assertive debater will even take up another's side, though he himself cherishes a contrary conviction. Hence, a statement of alternatives, like the rules of debate (*samaya-bandha*),[2] should necessarily be propounded by the arbiter so as to define his own duty.

The statement of alternatives in the case of unreality is as follows. As regards all else than Brahman, which is apprehensible as having an existence and which is non-contradictable by any knowledge other than that of Brahman, is it the object of absolute negation in a given substrate or not?[3] And is it, in an absolute-

(1) The matter to be dispelled has to be understood at the outset.

(2) A common ground, e. g. belief in the Vedas, has first to be settled, as otherwise it would be impossible to regulate the debate.

(3) This is a standard statement, *brahmapramā-atirikta-abādhyatvē sati sattvēna pratīti arham chid bhinnam pratipanna-upadhau traikālika nishēdha pratiyōgi na vā*.

ly real aspect the object of such negation or not?[1]

## Section 3 —The characteristic of the subject

As it is intended that the predicate should be established as being co-existent with the characteristic of the subject,[2] it may be said that, if the predicate is ascertained, even in respect of a part of the subject, there would be the fault of proving the proven (*siddha-sādhana*) Hence, in the above statement, the non contradictability by any knowledge other than that of Brahman is made to qualify the subject, in order to avoid the fault of proving the proven in the illustration of the pearl-shell and silver [3] If, on the other hand, it is intended that the predicate should be established only in so far as the subject is qualified by its character-

(1) *Pāramārthikatva ākārēna ukta nishēdha pratiyōgi na vā* This is in reply to those who say that, if a thing is related to another in a particular form and by a particular connection, the former cannot be shown to be non existent in the latter in that form and by that connection

(2) *i e* wherever *pakshatā avacchēdaka* or the characteristic of the subject exists, there the *sādhya* or predicate must also exist.

(3) The opponent might say that, if in any one instance unreality is established by direct perception, it is useless to prove it in any other instance, since the latter, being part of the subject (the world of duality), also possesses the characteristic of the subject, and therefore unreality, which is the universal concomitant of the characteristic, must necessarily follow This is in accordance with the tenet of the new school

**संज्ञाऽपि पूर्वबुद्धिविच्छेदेन सहस्रदक्षिणत्वादिगुणविनियोगमात्रविरोधेन अपूर्वबुद्धिप्रसूता[1] च तदेवानयति ।**

ऽभिहितपदार्थेऽवगमनं चरमप्रतीतवाक्याऽवगम्य दुर्बलं चेति तद्धितश्रुत्या ऽवगतामिक्षालक्षणगुणाऽविरोधात्पूर्वकर्माऽसंयोगि वाजिनं तत्र स्वविनियोगं विनिवारयत् स्वगोचरकर्मान्तरस्वरूपविधानपरतामेवावहति । न च नित्याऽवगतनिरपेक्षसाधनभावा ऽऽमिक्षा वाजिनेन सह विकल्पसमुच्चयौ सहते । न चाऽश्वत्वे निरूढवृत्तिर्वाजिशब्दः कथं चिद्योगेन सापेक्षवृत्तिर्विश्वेषु देवेषु व्याख्यातुमुचित । प्रामाणिके च विधिकल्पनागौरवे अभ्युपेतव्य एव न त्वविषयत्वात्प्रमाणस्येति सिद्धो गुणाद्भेद ।

उद्देशक्रमस्याऽविवक्षितत्वात् तदननुरोधेन सम्प्रति संज्ञाभेदमाह—संज्ञापीत्यादिना, नयतीत्यन्तेन । अथैष ज्योतिरथैष विश्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेति । तत्र संदेहः । किं यजेतेति संनिहितज्योतिष्टोमाऽनुवादो ऽयं सहस्रदक्षिणालक्षणगुणविधानायाऽथ वा गुणविशिष्टं कर्मान्तरं विधीयते ? इति । किं प्राप्तम् ? ज्योतिष्टोमस्य प्रकरणाद् गुणमात्रविधौ लाघवात् ज्योतिःशब्दस्य च वसन्ते वसन्ते ज्योतिषेति ज्योतिष्टोमे प्रयोगदर्शनात् नामैकदेशेन च नामोपलक्षणस्य लोके सिद्धत्वात् भीमसेनोपलक्षणभीमशब्दवत्, अथशब्दस्य चाऽऽनन्तर्यार्थत्वात् असम्बन्धे च तदनुपपत्तेर्द्वादशशतदक्षिणायाश्चोत्पत्त्यशिष्टत्वात् तथा च समशिष्टतया तया सहाऽस्य विकल्पोपपत्ते प्रकृतस्यैव यागस्य सहस्रदक्षिणालक्षणगुणविधानार्थमनुवादो ऽयं न कर्मान्तरमिति प्राप्ते उच्यते—

संज्ञा ऽपि पूर्वबुद्धिविच्छेदेन सहस्रदक्षिणत्वादिगुणविनियोगमात्रविरोधेनाऽपूर्वबुद्धिप्रसूता च तदेवाऽऽनयति । अयमर्थः । भवेत्पूर्व-

१ प्रसूत्या मू पु पा ।

**प्रकरणान्तरमपि अन्यबुद्धिविच्छेदात्तात्पर्य्यायैव व्याप्रियते ।**

स्मिन् गुणविनियोगो यदि तदेव प्रकरणं स्यात्, विच्छिन्नं तु तत् । तथा हि । सन्निधावपि पूर्वोऽसम्बद्धार्थं सन्नान्तर प्रतीयमानं पूर्वकर्म्मबुद्धि व्यवच्छिनत्ति, अपूर्वबुद्धिं च प्रसूतइति लोकसिद्धम् । न जातु देवदत्ताय देहि गाम् अथ देवाय स्वर्णमिति देवशब्दादपि देवदत्त स्वर्णभाजमवगच्छन्ति जना. । तथा चोपरिष्टाद्यजेतेति श्रूयमाणमप्यसम्बद्धार्थशब्दव्यवायात् तद्बुद्धिमनादधत्तच्च गुणविनियोगमात्रासमर्थं कर्मान्तरमेव गुणविशिष्टं विधत्ते । न चैकत्राऽनुपपत्त्या कथंचिल्लक्षणया ज्योति:शब्दो ज्योतिष्टोमे प्रवृत्त इत्यत्रापि सति सम्भवे तत्रैव प्रवर्त्तनीय. । न जातु गङ्गायां घोष इत्यत्र गङ्गाशब्दो जघन्यवृत्तिरिति गङ्गाया मत्स्य इत्यत्रापि तथा । एव चाथऽशब्दोऽधिकारार्थ: प्रकरणान्तरतामेव द्योतयिष्यतीत्येषशब्दश्चाऽधिक्रियमाणपरामर्शायोपपद्यतइति सिद्ध: सन्नान्तराद्भेद ।

सम्प्रति प्रकरणाद्भेदमाह—प्रकरणान्तरमिति । कुण्डपायिनामयने मासमग्निहोत्रं जुहुतीति समाम्नायते । तत्रैव विचारणा, किमय नैयमिकमग्निहोत्रमनूद्य मासलक्षणो गुणो विधीयते, उत कर्मान्तरमेव ? तत्राऽग्निहोत्रशब्दस्य नैयमिकाऽग्निहोत्रवचनत्वात्कर्मान्तरे चाऽप्रसिद्धेस्तद्वाचकत्वे चान्याय्याऽनेकार्थत्वापत्त. लक्षणाया[1] च सति सम्भवे श्रुतिपरित्यागप्रसङ्गात् जुहुतीति च होमत्वसामान्यमात्राऽनुवादसम्भवेन विशेषाकाङ्क्षायामग्निहोत्रेण विशेषणे ऽपि हविषेवार्त्तेरवाक्यभेदात् जुहुतीति च कर्तृबहुत्वे ऽपि कर्मणस्त.द्वस्थ्येन प्रत्यभिज्ञानाऽविनाशात्तथापि च नैयमिके यावज्जीवश्रुतिविरोधेन मासपदार्थे ऽन्वयाऽनर्हतया[2] सायंप्रातर्निर्वर्त्त-ीयकाम्या ग्निहोत्र.ऽनुवादेन तदभ्यासस्य मास.विधि[3]रिति प्राप्ते उच्यते । प्रकरणान्तर-

१ लक्षणाया च । २ पु पा । २ पदार्था.नन्वयादन्वयार्हतया । २ पु पा
३ विधिविधानम । २ पु पा ।

**सन्निधौ तु तदविच्छेदान्न तात्पर्यमित्यविच्छेदः ।**

मन्यबुद्धिव्यवच्छेदात्तात्पर्यायैव व्याप्रियते । इदमत्राकूतम् । स्यादेतदेवं यदि कर्मणि कालो विधीयेत। न त्वसावनुपादेयतया विधानमर्हति, किं तु काले कर्म विधेयं, विधेयं चेत् कथं नाऽन्यत्? अप्राप्तगोचरत्वाद्विधेः । सायंप्रातरग्निहोत्रं जुहोतीत्यत्राप्ययं प्रसङ्ग इति चेत् न । तत्प्रकरणवर्त्तितया स्फुटतरेणाऽग्निहोत्रप्रत्यभिज्ञानेनौत्सर्गिककर्मस्वरूपपरताऽपवादेन सायमादिविनियोगमात्रपरत्वात्तस्याः । अस्य तु प्रकरणान्तरसमाम्नायेन[1] तद्बुद्धिविच्छेदादपवादाऽभावेनौत्सर्गिकाऽप्राप्ते. कर्मस्वरूपविषयत्वस्याऽपनेतुमशक्यत्वात् नाम्नश्च विधिविषया[2]ऽवच्छेदकतया विधीयमानबहुकर्तृकपूर्वाऽपरभूताऽख्याताऽर्थप्रत्यभिज्ञापनाऽसामर्थ्यात्तदनुरोधेन व्यवस्थितेर्मुख्यतया च परशब्दस्य परत्र वृत्तेरनुपपत्तेरनुरूपकर्मान्तराऽपेक्षितनैमित्तिकाऽग्निहोत्रधर्मसंपत्त्यै जघन्या ऽपि वृत्तिरुपपत्स्यते । तस्मात्प्रकरणान्तरमपि विधीयमानात् कर्मणो यदन्यद्विहितं तद् बुद्धिविच्छेदाद्धेतोस्तात्पर्याय तदेव कर्मस्वरूपं परं प्रधानं यस्य विधिवाक्यस्य तत्परं तस्य भावस्तत्त्वं तस्मै व्याप्रियते इति सिद्धं कर्मान्तरत्वमिति ।

यत्र तु न प्रकरणान्तरत्वमेवंविधे विषये तत्र न कर्मस्वरूपे तात्पर्यम्, अपि तु विनियोगमात्रपरतैवेत्याह—सन्निधौ तदविच्छेदात् प्रत्यभिज्ञानाऽविच्छेदात् न तात्पर्यं न स्वरूपपरत्वमित्यविच्छेदो विनियोगमात्रपरत्वम् । तद्यथा अवेष्टिं प्रकृत्येदमाम्नायते एतया ऽन्नाद्यकामं याजयेदिति । तत्र सन्देहः । किमवेष्टिः कर्मान्तरमेतत्फलं प्रति विधीयते उत फले विनियोगमात्रमेत ? दिति । किं प्राप्तम् ? फलस्यो द्देश्यतया तद्विधानाऽनुपपत्तेस्तत्र कर्म विधातव्यम् । द्वयोरुद्देश्ययोर्मिथः सम्बन्धाऽभावात् । विधीयते चेत् कर्मान्तरमिति

१ समाम्नानेन । २ पु० पा० ।
२ विषयत्व । २ पु पा० ।

**एवं च कर्म्मणो विधेयत्वं तद्भेदोपोद्धातः । विनियोगपरता तु तृतीये वक्ष्यते । न हि श्रुत्यादिमात्रात्तादर्थ्यमित्यु-**

प्राप्ते ऽभिधीयते । सत्यमप्रत्यभिज्ञायामेव,मिह त्ववेष्टिसन्निधौ तत्पाठात् स्फुटतरं तत्प्रत्यभिज्ञानमपवादकमौत्सर्गिककर्मस्वरूपपरत्व विघटयद्विनियोगमात्रपरतामापादयतीति सिद्धमस्य प्रकरणान्तरप्रत्युदाहरणात्वमिति दर्शिता षट्प्रमाणी कर्मस्वरूपपरतायाम् ।

यद्येषा कर्मस्वरूपपरत्वप्रतिपादनी कथं तर्हि भेदो लक्षणार्थ ? इत्यत आह—एव च कर्मणो विधेयत्व तद्भेद उपोद्घातः । यद्यपि भेद एव लक्षणार्थः, तथाप्यस्यैव स्वरूपपरत्वप्रतिपादनमन्तारेणाऽशक्या प्रतिपत्तिरित्युक्तम् । अतः प्रकृतभेदसिद्ध्यर्थमुपोद्घातः षट्प्रामाण्या' स्वरूपपरत्व बोधयन्नधिकरणसिद्धान्तन्यायेन भेदप्रतिपाद्यनइति भेदो ऽपि लक्षणार्थ. ।

एव तावदुत्पत्त्यर्थता विधेर्द्वितीयाध्यायगोचर दर्शयित्वइदानीं विनियोगार्थता तृतीयाध्यायविषयमादर्शयति—विनियोगपरता तु विधेस्तृतीयलक्षणे चिन्त्यते । ननु चिन्त्येतैव यदि विधिर्विनियोजकः स्यात् । न त्वयं तथा, श्रुत्यादीनामेव विनियोजकत्वात् । उक्तं हि श्रुत्यादीनि च विनियोगे कारणानीत्यत आह—न हि श्रुत्यादिमात्रात्तादर्थ्यमित्युक्तम् । न खल्वत्र स्वन्धमात्र चिन्त्यते ऽपि तु पारार्थ्यं, यथाह 'अथातः शेषलक्षणं', 'शेष परार्थत्वा'दिति । न च तच्छ्रुत्यादिमात्रगोचरो ग्राम गच्छन् वृक्षमूलान्युपसर्पति । प्रयाजशेषेण हवींष्यभिघारयतीत्यादिषु तेषां दृष्टव्यभिचारतया परार्थत्वं प्रति प्रामाण्याऽभावात् । तथा च व्रीहीनवहन्तीत्यादावपि भावना स्वभावेन भाव्यमपेक्षमाणा ऽपि समानपदोपादानाऽवघातत्यागेन व्रीहिरूप गृह्णीयात् । दवीयसी त्वस्याऽपूर्वसाधनभावावस्था तपस्विनीति कर्तृसमीहितसाधनतात्मा विधिरवहन्त्यादौ

क्तम् । न चाऽनाश्रिताऽनुष्ठानं तत् । अनुष्ठानं च विधेः ।

प्रतीयमानः समीहित भाव्यमुपस्थापयत्संनिहितमप्यसमीहितत्वादवघातं हित्वा व्रीहीनुपसर्पयति । तानपि चोपसृप्य तद्रूपस्याप्यसमीहितत्वात्तन्मात्रे ऽपर्यवस्यत्समीहितोपायक्रतुसाधनीभूतपुरोडाशप्रकृतित्वाऽवस्थामस्याऽवश्यमालम्बते, तत्साधनत्व चाऽवघातस्याऽवगमयति । एव च यवेष्वप्यौपदेशिक एवाऽवघातः सिद्धो भवति । साधनीभूतपुरोडाशप्रकृतित्वस्योभयत्राऽविशेषात् । तद्विधौ सन्ति तादर्थ्ये न श्रुत्यादीनामित्युक्तमधस्तात् इत्यर्थः ।

ननु मा भूच्छ्रुत्यादिमात्रात्तादर्थ्ये प्रधानविधिरेव त्ववघातादिषु प्रत्यभिज्ञायमानो विनियोगसिद्ध्यन्यप्रयोजनत्वाऽभावात्साक्षाद्विध्यविषयानप्यपूर्वसाधनीभूतक्रत्वपेक्षितानन्तराऽदृश्यमानतुषविमोचनलक्षणकार्यतया तद्विषयाऽनुप्रवेशिनोऽवघातादीनिदमर्थ्ये नयन् तत्सिद्ध्यर्थतयोपादीयमानतया विधास्यतीति कृतमवघातादिष्ववान्तरविधिनेति शङ्कामपनेतुमाह—न चाऽनाश्रिताऽनुष्ठानं तत्तादर्थ्यम् । न खल्ववघातादय इत्येव प्रधानार्थाः, किं तु तदर्थमनुष्ठीयमानाः । कस्मात् ? तादर्थ्यमनुष्ठानमात्र श्रिताः ।

अस्त्वेव तथापि प्रकृते किमायात?मित्याह—अनुष्ठानं च विधेः । साक्षादवहन्तिविषयाऽवान्तरविधेः । अत्रेदमाकूतम् । अपूर्वविधिपक्षे हि सर्वदा प्रक्रिया घटेतापि, न त्वपूर्वविधिरिति निवेदितमधस्तात् नियोगपरीक्षायाम् । कर्तुरपेक्षितोपायतया तु विधौ सर्वमिदमिन्द्रजालप्रतिमम् । न हि प्रधानविधिप्रत्यभिज्ञानमवहन्त्यादिषु समिदादिष्विव समस्ति । न खलु य एव दर्शपूर्णमासयोः समीहित फल प्रति साधनताविधि स एवाऽवहन्त्यादीनामपि समीहित फलवत्करणोपकार प्रति साधनता विधि संभवति । परस्परपरिहारस्थितिलक्षणविरोधात् । तद्यदि प्रधानविधिरभ्युपेयेताऽवहन्त्यादिषु

**तदपि तर्हि विवक्षितम् । सत्यम् । प्रयोगविधेस्तत्सिद्धेर्वि-नियोगमात्रपरमेतत् । यथोक्तम् एवं सत्यङ्गविधिरनुवा-**

ततो ऽवहन्त्यादीनामाग्नेयादीनामिव प्रधानभावापत्तेर्न प्रधानार्थता-लक्षणं शेषत्वं स्यादिति तत्सिद्ध्यर्थमवान्तरविधिरवघातादिषु समिदादिष्विवाऽभ्युपगन्तव्यः । एवं चाऽवहन्त्यादीनामपि साक्षाद्वि-धिगोचरतया विधेयत्वं न पुनः कथंचिद्विधिसिद्ध्यर्थतयोपादीयमा-नतया कल्पितं भविष्यति । न च यस्य सिद्धि[1]रेव प्रयोजनं स विषय इत्यपि युक्तम्, अस्मन्मते विषयैकदेशे ऽप्यप्रवृत्तेः विरुद्धतया ऽस्य त-ल्लक्षणत्वाऽयोगात् । तथा हि । प्रधानस्यापि न विधिसिद्धिमात्रमपि प्रयोजनम्, अपूर्वाऽवान्तरव्यापारस्य तस्य फलसिद्धिप्रयोजनत्वात्प्रा-गेव पुनरेवकारार्थः । तस्मात् विधिविषयतया समिदादेरवघातादी-नाम विशेषे ऽप्यपूर्वान्तरव्यापारयोगलक्षणो[2] विशेषो ऽवगन्तव्यः । इद-मेव च विशेषमाह स्म महर्षिः 'तानि द्वैध'मिति । तेनाऽनुष्ठाना-ऽवगमाद्विधिमन्तरेण च तदनुपपत्तेरवघातादिषु चाऽवान्तरविधि-सिद्धिः ।

यद्येवं तदप्यनुष्ठानमपि तर्हि विवक्षितं, तथा च व्रीहीनव-हन्तीत्यादिषु व्यवस्थिताद्विपरीतता व्याहन्येत । उत्तरम्—सत्यम् । प्रयोगविधेः पौर्णमास्या पौर्णमास्यां यजेतेत्यादेस्तत्सिद्धेः अनु-ष्ठानसिद्धेः विनियोगमात्रपरमेतत् व्रीहीनवहन्त्यादिवाक्यम् । मात्रग्र-हणं च शङ्कितत्वात् प्रयोगं व्यवच्छिनत्ति, न पुनरुत्पत्तिम् । व्यव-स्थापिततद्विधिपरत्वव्याहतितादवस्थ्यात् । एतदुक्तं भवति । सर्व-स्यैव विधेश्चातूरूप्यान्नोत्पत्तिविनियोगपरता ऽपि तु विधिवाक्यना-न्तरीयकतया प्रयोगः प्रतीयमानो ऽन्यतस्तत्सिद्धेरविवक्षितो ऽस्ति । ननु नास्ति, अस्ति चेत्कथमवान्तरश्रुत्यादीनि च विनियोगे कार-णानीत्यत आह—न हि श्रुत्यादिमात्रात्तादर्थ्यमित्यविधौ न प्रमाण-

१ विधिविद्धि २ पु पा ।

**दः, न चाऽविहितमङ्गं भवतीत्यङ्गत्वाय विधातव्यमिति ।**

**तत्र श्रुत्यादिनिबन्धनत्वाद्विनियोगस्य प्रवर्त्तनमात्रत्वाद्विधेर्द्रव्यादिष्वेव शेषत्वमिति विधिरविनियोजक इति पूर्वपक्षयित्वा प्रवर्त्तनारूपमप्यविनियोजकत्वे दुर्लभमिति । असाधकं तु तादर्थ्यादिति वक्ष्यमाणरीत्या विनियोगशक्तिरुक्ता ।**

मिति सिद्धवावघातादिष्ववान्तरविधिः । तथाऽवहन्त्यादौ सत्यवान्तरविधावन्यतः प्रयोगसिद्धे. तदविवक्षेत्यथाऽऽचार्यवचनमुपनस्यति—यथोक्तम् एव हि सत्यङ्गविधिरनुवादः प्रयोगस्येति तस्याऽन्यत. सिद्धेरवघाताद्यङ्गविनियोगाय त्ववान्तरविधिरास्थातव्य इति ।

आचार्यवचनमेव पठति—न चाऽविहितमङ्ग भवतीति अङ्गत्वाय विधातव्यमिति । तत्र भगवतो महर्षेरथात' शेषलक्षणमित्युपक्रम्य प्रथममेव बादर्यधिकरणं प्रणयतो विध्यधीनमेव पारार्थ्यं लक्षणार्थश्च समतमित्याह—तत्रेत्यादिनोक्तेत्यन्तेन । अत्र दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येवमाद्युदाहरणम् । इह हि स्वर्गस्तत्कामश्च यागश्चाऽवगम्यते । तेषामन्योन्यस्य शेषशेषिभावोऽस्ति न वेति विचार्यते । तत्र श्रुत्यादिनिबन्धनत्वाद्विनियोगस्य । तथा हि व्रीहीनिति द्वितीयाश्रुतिरीप्सिततमत्व व्रीहीणामभिदधती तादर्थ्यं प्रोक्षणलक्षणस्य संस्कारस्याऽवगमयति । एवमेकहायन्येति चारुणयेति च द्रव्यगुणयो क्रिया प्रति तादर्थ्यं करणविभक्तिरिति युज्यते द्रव्यगुणसंस्काराणां शेषत्व प्रमाणसद्भावात् । यागस्वर्गतत्कामाना तु शेषत्वेन श्रुत्यादीनामन्यतमत्प्रमाणमस्ति ।

ननु मा भूवन्नन्यानि प्रमाण विधिस्तु भविष्यतीत्यत आह—प्रवर्तनामात्रत्वाद्विधेः । विधिश्रवणसमनन्तर पुरुषप्रवृत्तिदर्शनात् । प्रव-

र्तनामात्र विधिरित्यस्ति प्रमाणम्, न पुनरयं विनियोजक इति। तस्माद् द्रव्यादिष्वेव शेषभावो न स्वर्गयागपुरुषेष्विति विधिरविनियोजक इति पूर्वपक्षयित्वा प्रवर्त्तनारूपमपि अविनियोजकत्वे दुर्लभमित्यसाधकं तु तादर्थ्यादिति वक्ष्यमाणनीत्या विनियोगशक्तिरुक्ता विधेः । एतदुक्तं भवति। सत्य प्रवर्त्तनारूपो विधिः। तद्रूपतैव तस्य विनियोजकत्वमन्तरेण दुर्लभा। न खलु कर्त्रपेक्षितोपायत्वमन्तरेण प्रयोजकत्वमिति निवेदितमधस्तात्, वक्ष्यामश्चात्रैव व्याचक्षाणाः स्वर्गकामाधिकरणमसाधकं तु तादर्थ्यादिति । एवं चेत्स्वर्गकामो यजेतेति लिङो विध्युपरक्ता भावना गम्यमाना तदुपरागवशादेव समानपदोपादानमपि दुःखाकरं कर्मकर्तृसमीहाऽनास्पदत्वादपहाय भिन्नपदोपादानमपि पुरुषविशेषणमपि समीहितत्वाद्भाव्यस्वर्गं गृह्णीयात् । लब्धसमीहितभाव्या चोपायमपेक्षमाणा विधिवशादेव समीहितोपायतायां कर्म निवेशयतीति कर्मणः फलार्थत्वं विनियोग को ऽन्यो विधेर्विधातुमर्हति । तदिदमुक्तं कर्माण्यपि जैमिनिः फलार्थत्वादिति । स एव च कर्तृसमीहितोपायतारूपः फलगोचरां कर्तृसमीहामुद्वहन् फलस्य चाऽकर्तृतायां समीहाऽनुपपत्तेस्तादर्थ्यमवबोधयति। न जातु कश्चिच्चेतनः कामयते स्वर्ग आत्मानं लभतामिति, अपि तु मदनुकूलो भवेदिति। अनुकूलवेदनीयतैव हि काम्यानां काम्यता, प्रतिकूलस्वरूपवेदनीययोर्द्वेषोपेक्षाऽऽस्पदत्वात् । अतः फलस्यास्ति पुरुषं प्रति ऐदमर्थ्यम् । तदुक्तं फलं च पुरुषार्थत्वादिति । एवं स एव विधिः कर्त्रंशमुद्वहन् यस्यैव फलं प्रति प्राधान्यम् अधिकारिता पुरुषस्य तस्यैव तदुपाये कर्मणि कर्तृतया कारकतया कर्म प्रति पारार्थ्यं प्रतिपादयति। तदेतदुक्तं पुरुषश्च कर्मार्थत्वादिति । तस्मान्महर्षेरपि समतमेतदिति सिद्धम् ।

नन्वेवमेतेनैवाधिकरणेनाऽऽरब्धेन विनियोगस्य विचारितत्वात् लक्षणार्थपरिसमाप्तेर्व्यर्थ उत्तरः प्रपञ्च इत्याशङ्कामपन-

**विधिश्चेद्विनियोजको ऽकारणं श्रुत्यादीनीत्याशङ्क्योत्तरत्र श्रुत्यादिसापेक्षत्वमभिहितम् ।**

**चतुर्थे त्वनुष्ठानाङ्गता ऽङ्गपरिमाणचिन्ता ।**

**कथम् ? [1]क्रतुविध्यनुष्ठानाऽधीनः क्रत्वर्थः, पुरुषेच्छा-**

यति–विधिरित्यादिना, ऽभिहितमित्यन्तेन । अयमर्थः । सत्यमनेन विधिनिबन्धनो विनियोगो विचारितो न त्वेतावता लक्षणार्थपर्यवसानम् । उपरितनस्याशङ्कोत्तरत्वात् । तथा हि । विधिश्चेत् विनियोजकः तत एव विनियोगसिद्धेः श्रुत्यादीनां च सम्बन्धमात्रहेतुत्वात्तादर्थ्यं प्रति व्यभिचारादकारणं तानीति शङ्कितम् । तदुत्तरम् । सत्यं, विनियोजको विधिस्तथापि नाऽसहायो विनियोक्तुमुत्सहते । न जातु विनियुञ्जानो ऽपि विधिः प्रोक्षतीति च व्रीहीनिति सिद्धाऽनुगुणत्वं श्रुतिमन्तरेण व्रीहिषु प्रोक्षणं यजेतेति च पशुकाम इति विधिः पूर्वसिद्धाऽनुगुणत्वमन्तरेण पशुफलयागम् अभिघारयति च प्रयाजशेषेणेति विपरीतमपि श्रुतिमन्तरेण प्रयाजशेषे ऽभिघारणं विनियोक्तुमर्हति । तस्माद्विनियोजको ऽपि श्रुत्यादीन्सहायतया ऽपेक्षत इति तदपेक्षोत्तरेण प्रपञ्चेन प्रतिपादितेति सिद्धमर्थवत्त्वम् ।

एवं तृतीये श्रुत्यादिसहायविधिविनियोगं व्युत्पाद्य तदङ्गभावे सिद्धे चतुर्थे ऽनुष्ठानगताङ्गपरिमाणचिन्ता । अयमर्थः । प्रवर्तनात्मकत्वाद्विधेरनुष्ठापकत्वं प्रसिद्धं लोकवेदयोरिति तत्स्वरूपमविचारणीयम् । अतो ऽनुष्ठानगताऽङ्गपरिमाणचिन्ता ऽभिक्रियते कियन्त्यङ्गानि विधिना ऽनुष्ठाप्यन्ते कियन्ति निमित्तान्तरादित्येतावतापि विध्यधीनमनुष्ठानं चिन्तितं भवत्येव ।

नन्वथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति प्रतिजानानः सूत्रकारः क्रत्वर्थपुरुषार्थचिन्तामध्यायार्थमाह नाऽनुष्ठानगताङ्गपरिमाणचिन्तामित्याशयवानाक्षिपति–कथम् ? उत्तरम्–क्रतुविध्यधी-

[1] पृथगुपादानम · मू पु पा· ।

# अथ द्वितीयाध्यायस्य द्वितीयः पादः ।

अथ रचनाऽनुपपत्त्यधिकरणम् १ । **रचनाऽनुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १ ॥**

उक्तं जगज्जन्मादिकारणं परं ब्रह्मेति, तत्र परैरुद्भाविता दोषाश्च परिहृता । इदानीं स्वपक्षरक्षणाय परपक्षा प्रतिक्षिप्यन्ते । इतरथा कस्यचिन्मन्दधियस्तेषां पक्षाणां युक्त्याभासमूलतामजानतः प्रामाणिकत्वशङ्कया वैदिकपक्षे किञ्चिच्छङ्कावैकल्यं जायेतापि, अतः परपक्षप्रतिक्षेपायानन्तरः पादः प्रवर्तते । तत्र प्रथमं तावत्कापिलमतं निरस्यते, वैदिकानुमतसत्कार्यवादाद्यर्थसंग्रहेण तस्य सत्पक्षनिक्षेपसम्भावनभ्रमहेतुत्वातिरेकात् । 'ईक्षतेर्नाशब्द'मित्यादिभिर्वैदिकवाक्यानामऽतत्परत्वमात्रमुक्तम्, अत्रैव तत्पक्षस्वरूपप्रतिक्षेपः क्रियत इति न पौनरुक्त्याशङ्का ।

एवं साङ्ख्यानां दर्शनम्यिति.—

"मूलप्रकृतिरऽविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"

इति तत्त्वसंग्रहः । मूलप्रकृतिर्नाम सुखदुःखमोहात्मकानि लाघवप्रकाशचलनोपष्टम्भनगौरवावरणकार्याण्यत्यन्तातीन्द्रियाणि कार्यैकनिरूपणविवेकान्यऽन्यूनातिरेकाणि समतामुपेतानि सत्त्वरजस्तमांसि द्रव्याणि । स च सत्त्वरजस्तमसां साम्यरूपा प्रकृतिरेका स्वयमचेतनाऽनेकचेतनभोगापवर्गार्था नित्या[१]सर्वगता सततविक्रिया न कस्यचिद्विकृतिः, अपि तु परमकारणमेव । महदाद्यास्तद्विकृतयोऽन्येषां च प्रकृतयः सप्त—महान्, अहङ्कारः, शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति । तत्राहङ्कारस्त्रिविधो वैकारिकस्तैजसो, भूतादिश्च, क्रमात्सात्त्विको राजसस्तामसश्च । तत्र वैकारिकः सात्त्विक इन्द्रियादिः, भूतादिस्तामसो महाभूतहेतुभूततन्मात्रहेतुः, तैजसो राजसस्तूभयोरनुग्राहकः । आकाशादीनि पञ्च महाभूतानि, श्रोत्रादीनि पञ्च ज्ञानेन्द्रि-

१ नित्याऽव्यक्तेति लि पु उपकल्पितम् ।

य णि, वागादीनि पञ्च कर्म्मेन्द्रियाणि, मन इति केवलविकारा षोडश। पुरुषस्तु निष्परिणामत्वेन न कस्यचित्प्रकृतिर्न कस्यचिद्विकृतिः, तत एव निर्धर्मकश्चैतन्यमात्रवपुर्नित्यो निष्क्रिय सर्वगत· प्रतिशरीर भिन्नश्च, निर्विकारत्वान्निष्क्रियत्वाच्च तस्य[1]कर्तृत्व भोक्तृत्व च न सम्भवति। एव-भूतेऽपि तत्त्वे मूढा· प्रकृतिपुरुषसन्निधिमात्रेण पुरुषस्य चैतन्य प्रकृताव-ध्यस्य प्रकृतेश्च कर्तृत्व स्फटिकमणाविव जपाकुसुमस्यारुणिमान पुरुषेऽध्यस्याहङ्कर्ता भोक्तेति मन्यन्ते। एवमज्ञानाद्भोगस्तत्त्वज्ञानाच्चापवर्गः। तदेतत्[2] प्रत्यक्षानुमानागमैः साधयन्ति।

तत्र प्रत्यक्षसिद्धेषु पदार्थेषु नातीव विवादपदमस्ति[3]। आगमोऽपि कपिलादिसर्वज्ञज्ञानमूल इति सोऽपि प्रथमे काण्डे प्रमाणलक्षणे निरस्तप्राय। यदिद प्रधानमेव जगत्कारणमित्यनुमानम्, तन्निरसनेन तन्मत सर्व निरस्त भवतीति तदेव निरस्यते।

ते चैव वर्णयन्ति—कृत्स्नस्य जगत एकमूलत्वमवश्याभ्युपगमनीयम्, अनेकेभ्यः कार्य्योत्पत्त्यभ्युपगमे कारणानवस्थानात्। तन्तुप्रभृतयो ह्यवयवाः स्वाशभूतै· षड्भि· पार्श्वैः परस्पर सयुज्यमाना अवयविनमुत्पादयन्ति, ते च तन्त्वादयः स्वावयवैस्तथाभूतैरुत्पाद्यन्ते, ते च तथाभूतैः स्वावयवैरिति परमाणुभिरपि स्वकीयैः षड्भि· पार्श्वै· सयुज्यमानैरेव स्वकार्य्योत्पादनमभ्युपेतव्यम्, अन्यथा प्रथिमाऽनुपपत्तेः। परमाणवोऽप्यशित्वेन स्वाशैस्तथैवोत्पाद्यन्ते, ते च स्वाशैरिति न क्वचित्कारणव्यवस्थितिः। अतः कारणव्यवस्थासिद्ध्यर्थमेक द्रव्य विविधविचित्रपरिणामशक्तियुक्त स्वयमप्रच्युतस्वरूपमेव महदाद्यनन्तावस्थाश्रय·[4] कारणमाश्रयणीयम्। तच्चैक कारण गुणत्रयसाम्यरूप प्रधानमिति। तत्कल्पनहेतूनुपन्यस्यन्ति—

१ तस्येति नास्ति लि पु।
२ तदेवेति मु॰ पु।
३ विवादास्पदमस्तीति मु० पु०।
४ ०वस्थास्वयमिति लि पु।

"भेदाना परिमाणा[1]त्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥
कारणमस्त्यव्यक्त"मिति । अयमर्थः–विश्वरूपमेव वैश्वरूप्यम्, विचित्रसन्निवेशं तनुभुवनादि कृत्स्नं जगत् । तच्च जगद्विचित्रसन्निवेशत्वेन कार्य्यभूतं तत्सरूपाव्यक्तकारणकम् । कुतः । कार्य्यत्वात्, कार्य्यस्य हि सर्वस्य तत्सरूपा[2]त्कारणविशेषाद्विभागस्तस्मिन्नेवाविभागश्च दृश्यते । यथा घटमुकुटादेः कार्य्यस्य तत्सरूपान्मृत्सुवर्णादेः कारणाद्विभागस्तस्मिन्नेव चाविभागः । अतो विश्वरूपस्य जगतस्तत्सरूपात्प्रधानादुत्पत्तिस्तस्मिन्नेव लयश्चेति प्रधानकारणकमेव जगत् । गुणत्रयसाम्यरूपं प्रधानमेव जगत्सरूपं कारणम्, सत्त्वरजस्तमोमयसुख[3]दुःखमोहात्मकत्वाज्जगतः, यथा मृदात्मनो घटस्य मृद्द्रव्यमेव कारणम् । तदेव हि तदुत्पत्त्याख्यप्रवृत्तिशक्तिमत्,[4] तथादर्शनात् । अव्यक्तस्य गुणसाम्यरूपस्य देशतः कालतश्चापरिमितस्यैव[5] कारणत्वं भेदानां महदहङ्कारतन्मात्रादीनां परिमितत्वादवगम्यते । महदादीनि च घटादिवत्परिमितानि कृत्स्नजगदुत्पत्तौ न प्रभवन्ति । अतस्त्रिगुणं जगद्गुणत्रयसाम्यरूपप्रधानैककारणकमिति निश्चीयते ।

अत्रोच्यते–

'रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च',

अनुमीयत इत्यनुमानम्, न भवदुक्तं प्रधानं विचित्रजगद्रचनासमर्थम्, अचेतनत्वे सति तत्स्वभावाभिज्ञाऽनधिष्ठितत्वात्, यदेवं तत्तथा यथा रथप्रासादादिनिर्माणे केवलदार्वादिकम् । दार्वादेरचेतनस्य तज्ज्ञाऽनधिष्ठितस्य कार्य्यारम्भानुपपत्तेर्दर्शनात् तज्ज्ञाधिष्ठितस्य[6] कार्य्यारम्भ-

१ परिणामादिति लि॰ पु प्रमादिकम् ।
२ तत्स्वरूपादिति मु॰ पु ।
३ तमोमयतस्मिन्नेव सुखेति लि पु ।
४ तदुत्पत्त्याख्यशक्तिप्रकृतिमादिति मु पु ।
५ परिमितस्यैवेति लि पु तु नैव युक्तम् ।
६ तज्ज्ञानधिष्ठितस्येति मु॰ पु ऽत्रापि ।

प्रवृत्तिर्दर्शनाच्च[1] न प्राज्ञाऽनधिष्ठित प्रधान कारणमित्युक्तं भवति । चकारादन्वयस्यानैकान्त्यं समुच्चिनोति । न ह्यन्वित शौक्ल्य गोत्वादिकारणत्वव्याप्तम् । न च वाच्यम्—मा भूदन्वितानामपि शौक्ल्यादिधर्म्माणां कारणत्वम्, द्रव्यस्य तु हेमादेः कार्य्ये ऽन्वितस्य[2] कारणत्वव्याप्तिरस्त्येव सत्त्वादीन्यपि द्रव्याणि कार्य्येऽन्वितानि कारणत्वव्याप्तानीति । यतः, सत्त्वादयो द्रव्यधर्म्मा न तु द्रव्यस्वरूपम् । सत्त्वादयो हि पृथिव्यादिद्रव्यगतलघुत्वप्रकाशादिहेतुभूतास्तत्स्वभावविशेषा एव, न तु मृद्धिरण्यादिवद् द्रव्यतया कार्य्याऽन्विता उपलभ्यन्ते, गुणा इत्येव च सत्त्वादीनां प्रसिद्धिः । यच्च कारणव्यवस्थासिद्धये जगत एकमूलत्वमुक्तम्, तदपि सत्त्वादीनामनेकत्वाच्चोपपद्यते । अत एव कारणव्यवस्था च न सिद्ध्यति । साम्यावस्थाः सत्त्वादय एव हि प्रधानमिति तन्मतम्[3] । अतः कारणबहुत्वादनवस्था तदवस्थैव । न च तेषामपरिमितत्वेन व्यवस्था सिद्धिः, अपरिमितत्वे हि त्रयाणामपि सर्वगतत्वेन न्यूनाधिकभावाभावाद्वैषम्यासिद्धेः कार्य्यारम्भासम्भवात् कार्य्यारम्भायैव परिमितत्वमवश्याश्रयणीयम् ।

यत्र रथादिषु स्पष्टं चेतनाधिष्ठितत्वं दृष्टम्, तद्व्यतिरिक्तं सर्वं पक्षीकृतमित्याह—

## पयोऽम्बुवच्चेत् तत्रापि ॥ २ ॥

यदुक्तम्—प्रधानस्य प्राज्ञाऽनधिष्ठितस्य विचित्रजगद्रचनाऽनुपपत्तिरिति, तन्न, यतः, 'पयोऽम्बुव'त्प्रवृत्तिरुपपद्यते । पयसस्तावद्दधिभावेन परिणममानस्यानन्यापेक्षस्याऽऽद्यपरिस्पन्दनप्रभृतिपरिणाम[4]परम्परा स्वत एवोपपद्यते, यथा च वारिदविमुक्तस्याम्बुन एकरसस्य नारिकेलतालचूतकपित्थनिम्बतिन्तिडचाद्वि[5]विचित्ररसरूपेण परिणामप्रवृत्तिः स्वत एव

१ दार्वादेरचेतनस्य तस्य ज्ञानधिष्ठितस्य कार्यारम्भानुपपत्तेर्दर्शनाच्चेति लि पु ।
२ कार्यान्वितेति सर्वत्रात्र मु पु ।
३ त्वन्मतमिति क्वचित् । ४ आद्यपरिणामप्रवृत्तिपरिणामेति लि पु ।
५ नालिकेर तिन्तिणयादि इति मु पु ।

दृश्यते, तथा प्रधानस्यापि परिणामस्वभावस्यान्यानधिष्ठितस्यैव प्रतिसर्गावस्थाया सदृश[1] †परिणामेनावस्थितस्य सर्गावस्थाया गुणवैषम्यनिमित्तविचित्रपरिणाम उपपद्यते । यथोक्तम्†—"परिणामतः सलिलवत् प्रति, प्रतिगुणाश्रयविशेषा"दिति । तदेवमव्यक्तमन्यानपेक्ष प्रवर्तत इति चेत्, अत्रोत्तर[2]"तत्रापी"ति । यत्[3]क्षीरजलादि दृष्टान्ततया निदर्शितम्, तत्रापि प्राज्ञाऽनधिष्ठाने प्रवृत्तिर्नोपपद्यते, तदपि पूर्वमेव[4] पक्षीकृतमित्यभिप्रायः । उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धी'त्यत्र दृष्टपरिकरान्तररहितस्यापि स्वासाधारणपरिणाम उपपद्यत इत्येतावदुक्तम्, न प्राज्ञाधिष्ठितत्व पराकृतम्, योऽप्सु तिष्ठन्नित्यादिश्रुतेः ।

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥

इतश्च[5]। सत्यसङ्कल्पेश्वराधिष्ठानानपेक्षपरिणामित्वे सर्गव्यतिरेकेण प्रतिसर्गावस्थाया अनवस्थितिप्रसङ्गाच्च न प्राज्ञानधिष्ठित प्रधान कारणम् । प्राज्ञाधिष्ठितत्वे तस्य सत्यसङ्कल्पत्वेन सर्गप्रतिसर्गविचित्रसृष्टिव्यवस्थासिद्धि । न च वाच्यम्—प्राज्ञाधिष्ठितत्वेऽपि तस्यावाप्तसमस्तकामस्य परिपूर्णस्यानवधिकातिशयानन्दस्य निरवद्यस्य निरञ्जनस्य सर्गप्रतिसर्गव्यवस्थाहेत्वभावाद्विषमसृष्टौ निर्दयत्वप्रसङ्गाच्च समानोऽय दोष इति । परिपूर्णस्यापि लीलार्थं प्रवृत्तिसम्भवात्, सर्वज्ञस्य तस्य परिणामविशेषपञ्चप्रकृतिदर्शनरूपसर्गप्रतिसर्ग[6]विशेषहेतोस्सम्भवात्, क्षेत्रज्ञकर्म्मणामेव विषमसृष्टेर्व्यवस्थापकत्वाच्च । नन्वेव क्षेत्रज्ञपुण्यापुण्यरूपकर्म्मभिरेव सर्वा व्यवस्थाः सिद्ध्यन्तीति कृतमीश्वरेणाधिष्ठात्रा, पुण्यापुण्यरूपानुष्ठितकर्म्मसंस्कृता प्रकृतिरेव पुरुषार्थानुरूप तयातया व्यवस्थया परिणस्यते, यथा विषा-

१ ०वस्थाया दृश्येति लि पु ।

†† एतच्चिह्नान्तर्गत पाठो लि पु० त्रुटित ।

२ अत उत्तरमिति पु द्वयेपि । ३ यस्त्विति मु पु० ।

४ पूर्वन्नेति लि पु ।

५ इतश्चेति सूत्रग्रहणानन्तरमेव पु द्वयेऽपि भवति, तथैव श्रुतप्रकाशिकातोऽपि लभ्यते ।

६ प्रतिसर्गेति नास्ति मु० पु ।

दिदूषितानामन्नपानादीनामौषधविशेषाप्यायितानां च सुखदुःखहेतुतभूतः परिणामविशेषो देशकालव्यवस्थया दृश्यते । अतस्सर्गप्रतिसर्गव्यवस्था देवादिविषमसृष्टिः कैवल्यव्यवस्था च सर्वप्रकारपरिणामशक्तियुक्तस्य प्रधानस्यैवोपपद्यत इति । अनभिज्ञो भवान्पुण्यापुण्यकर्म्मस्वरूपयोः । पुण्यापुण्यस्वरूपे हि शास्त्रैकसमधिगम्ये । शास्त्रं चानादिनिधनाविच्छि-न्न[1]सम्प्रदायानाघ्रातप्रमादादिदोषगन्धो वेदा[2]ख्याक्षरराशिः । तच्च परम-पुरुषाराधनतद्विपर्य्ययरूपे कर्म्मणी पुण्यापुण्ये, तदनुग्रहनिग्रहायत्ते च तत्फले सुखदुःखे इति वदति । तथा चाह द्रमिडा[3]चार्य्यः "फलसंविभ-न्त्सया हि कर्मभिरात्मानं पिप्रीषन्ति, स प्रीतोऽलं फलायेति शास्त्रम-र्य्यादे"ति[4] । तथा च श्रुतिः "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभि"रिति । तथा च भगवता स्वयमेवोक्तम्–

"यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव"इति,
"तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिष्वि"ति च ।

स च भगवान्पुरुषोत्तमोऽवाप्तसमस्तकामः सर्वज्ञः सर्वेश्वरः सत्य-सङ्कल्पः स्वमाहात्म्यानुगुणलीलाप्रवृत्त एतानि कर्माणि समीचीना-न्येतान्यऽसमीचीनानीति कर्म्मद्वैविध्यं संविधाय तदुपादानोचितदेहेन्द्रि-यादिकं तन्नियमनशक्तिं च सर्वेषां क्षेत्रज्ञानां सामान्येन प्रदिश्य[5]स्वशा-सनावबोधि शास्त्रं च प्रदर्श्य तदुपसंहारार्थं चान्तरात्मतयाऽनुप्रविश्या-ऽनुमन्तृतया च नियच्छँस्तिष्ठति । ते क्षेत्रज्ञास्तु तदाहितशक्तयस्तत्प्र-दिष्टकरणकलेवरादिकास्तदाधाराश्च स्वयमेव स्वेच्छानुगुण्येन पुण्या-

१ पाठेत्यधिकं मु. पु. । २ गन्धवेदेति समस्तं पु. द्वयेऽपि ।
३ द्रविडेति लि. पु. ।
४ ०संविधत्सया हि कर्मभिरात्ममानं –इति मु. पु. ०संविभत्सया हि कर्मभिरामानं फलायेति–इति लि. पु. ।
५ प्रदर्श्येति मु० पु० ऽत्रापि ।

पुण्यरूपे कर्म्मणी उपाददते[1] । ततश्च पुण्य[2]रूपकर्म्मकारिण स्वशासनानुवर्तिन ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयति[3], शासनातिवर्तिन च तद्विपर्ययैर्योजयति । अतः स्वातन्त्र्यादिवैकल्यचोद्यानि नावकाश लभन्ते । दया हि नाम स्वार्थनिरपेक्षा परदु.खासहिष्णुता । सा च स्वशासनातिवृत्तिव्यवसायिन्यपि वर्तमाना न गुणायावकल्पते, प्रत्युतापुस्त्वमेवावहति । तन्निग्रह एव तत्र गुणः, अन्यथा शत्रुनिग्रहादीनामगुणत्वप्रसङ्गात् । स्वशासनातिवृत्तिव्यवसायिनि[4]वृत्तिमात्रेणानाद्यनन्तकल्पोपचितदुर्विग्रहानन्तापराधानङ्गीकारेण निरतिशयसुखसवृद्धये स्वयमेव प्रयतते । यथोक्तम्—

"तेषा सततयुक्ताना भजता प्रीतिपूर्वकम् ।
ददामि बुद्धियोग त येन मामुपयान्ति ते ॥
तेषामेवानुकम्पाऽर्थमहमज्ञानज तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते"ति ।

अतः प्राज्ञानधिष्ठित प्रधान न कारणम् ।

अथ स्याद्यद्यपि प्राज्ञानधिष्ठितायाः प्रकृतेः परिस्पन्द[5]प्रवृत्तिरपि न सम्भवतीत्युक्तम्, तथाऽप्यनपेक्षाया एव परिणामप्रवृत्तिः सम्भवति, तथादर्शनात् । धेन्वादिनोपभुक्त[6] हि तृणोदकादि स्वयमेव क्षीराद्याकारेण परिणममान दृश्यते, अतः प्रकृतिरपि स्वयमेव जगदाकारेण परिणस्यत इति, तत्राह—

## अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥

१ उपाददते—इति लि० पु० ।
२ पुण्यापुण्येति लि० पु० ।
३ वर्धयते—इति प्राय· पाठ ।
४ व्यवसायिनीति भिन्न पद मु० पु० ।
५ स्पन्देति मु० पु० ।
६ देवादीना नोपयुक्तमिति लि० पु० ।

नैतदुपपद्यते, तृणादेः प्राज्ञानधिष्ठितस्य परिणामाभावाद्दृष्टान्तासिद्धेः। कथमसिद्धिः। 'अन्यत्राभावात्'। यदि हि तृणोदकादिकमनडुहाद्युपभुक्त[1] प्रहीणं वा क्षीराकारेण पर्यणस्यत, ततः प्राज्ञानधिष्ठितमेव परिणमत इति वक्तुमशक्ष्यत,[2] न चैतदस्ति। अतो धेन्वाद्युपभुक्तं प्राज्ञ एव क्षीरीकरोति। 'पयोऽम्बुवच्चेत्तत्रापी'त्युक्तमेवाऽत्र प्रपञ्चितम्, तत्रैव व्यभिचारप्रदर्शनाय।

## पुरुषाश्मवदिति चे,त्तथाऽपि ॥ ५ ॥

अथोच्येत–यद्यपि चैतन्यमात्रवपुः पुरुषो निष्क्रियः, प्रधानमपि दृक्शक्तिविकलम्, तथाऽपि पुरुषसन्निधानादचेतनं प्रधानं प्रवर्तते, तथा दर्शनात्। गमनशक्तिविकलदृक्शक्तियुक्तपङ्गुसन्निधानात्तच्चैतन्योपकृतो दृक्शक्तिविकलः प्रवृत्तिशक्तियुक्तोऽन्धः प्रवर्तते, अयस्कान्ताश्मसन्निधानाच्चाऽयः प्रवर्तते, एवं प्रकृतिपुरुषसंयोगकृतो जगत्सर्गः प्रवर्तते। यथोक्तम्–

"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति।

पुरुषस्य प्रधानोपभोगार्थं कैवल्यार्थं च पुरुषसन्निधानात्प्रधानं सर्गादौ प्रवर्तत इत्यर्थः। अत्रोत्तरम् 'तथाऽपी'ति। एवमपि प्रधानस्य प्रवृत्त्यसम्भवस्तदवस्थ एव, पङ्गोर्गमनशक्तिविकलस्यापि मार्गदर्शनतदुपदेशादयः कादाचित्का विशेषाः सहस्रशः सन्ति, अन्धोऽपि चेतनः सँस्तदुपदेशाद्यवगमेन प्रवर्तते, तथाऽयस्कान्तमणेरप्यऽयःसमीपगमनादयस्सन्ति। पुरुषस्य तु निष्क्रियस्य न तादृशा विकाराः सम्भवन्ति। सन्निधानमात्रस्य नित्यत्वेन नित्यसर्गप्रसङ्गो नित्यमुक्तत्वेन बन्धाभावोऽपवर्गाभावश्च[3] ॥

## अङ्गित्वानुपपत्तेश्च ॥ ६ ॥

१ ०द्युपयुक्तमिति क्वचित्।

२ परिणस्यते वक्तुं शक्येत–इति मु० पु०, परिणस्यते वक्तुमशक्ष्यन्ते–इति लि० पु०।

३ ०वर्गाभावश्चेतिलि० पु०।

गुणानामुत्कर्षनिकर्षनिबन्धनाङ्गाङ्गिभावाद्धि जगत्प्रवृत्तिः 'प्रतिप्रतिगुणाश्रयविशेषा'दिति वदद्भिरेव द्भिरभ्युपगम्यते । प्रतिसर्गावस्थायान्तु साम्यावस्थाना सत्त्वरजस्तमसामऽन्योन्याधिक्यन्यूनत्वाभावादङ्गाङ्गिभावानुपपत्तेर्न जगत्सर्ग उपपद्यते । तथाऽपि वैषम्याभ्युपगमे नित्यसर्गप्रसङ्गः । अतश्च न प्राज्ञानधिष्ठित प्रधान कारणम् ।

## अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ ७ ॥

दूषितप्रकारातिरिक्तप्रकारेण* प्रधानानुमितौ च प्रधानस्य ज्ञातृत्वशक्तिवियोगात्[1] त एव दोषाः प्रादुष्ष्यु । अतो न कथञ्चिद प्यनुमानेन प्रधानसिद्धिः ।

## अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥

अनुमानेन प्रधानसिद्ध्यभ्युपगमेऽपि प्रधानेन प्रयोजनाभावान्न तद नुमातव्यम् । "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्ये"ति प्रधानस्य प्रयोजन पुरुषभोगापवर्गावभिमतौ, तौ च न सम्भवतः । पुरुषस्य चैतन्यमात्रवपुषो निष्क्रियस्य निर्विकारस्य निर्मलस्य तत एव नित्यमुक्तस्वरूपस्य प्रकृतिदर्शनरूपो भोग,स्तद्वियोगरूपोऽपवर्गश्च न सम्भवति । एवरूपस्यैव प्रकृतिसन्निधानात् तत्परिणामविशेषसुखदुःखदर्शनरूपभोगसम्भावनाया प्रकृतिसन्निधानस्य नित्यत्वेन कदाचिदप्यपवर्गो न सेत्स्यति ।

## विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥

विप्रतिषिद्ध चेद साङ्ख्याना दर्शनम् । तथा हि, प्रकृते परार्थत्वेन दृश्यत्वेन भोग्यत्वेन प्रकृतेर्भोक्तारमधिष्ठातार[2] साक्षिण च पुरुषमभ्युपगम्य प्रकृत्यैव साधनभूतया तस्य कैवल्यमपि प्राप्य वदन्त एव तस्य नित्य[3]निर्विकारचैतन्यमात्रस्वरूपतया अकर्तृत्व कैवल्य च स्वरूपमेवाहुः । तत एव बन्धमोक्षसाधनानुष्ठान मोक्ष च प्रकृतेरेवाहु । एवभूतनित्यनिर्विकारोदासीनपुरुषसन्निधानात्प्रकृतेरितरेतराध्यासेन सर्गादिप्रवृत्ति पुरुषभोगापवर्गार्थत्व चाहुः—

* ०तिरिक्तप्रकारान्तरेणेति मु० पु० ।

१ प्रधानास्त्वज्ञातृशक्तित्वयोगादिति लि० पु० ।

२ द्रष्टारमिति मु० पु० ऽधिकम् । ३ नित्येति मु० पु० ऽत्र नास्ति ।

"सङ्घातपरार्थत्वात् त्रिगुणादिविपर्य्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥
"तस्माच्च विपर्य्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्य माध्यस्थ्य द्रष्टृत्वमकर्त्तृभावश्चे"ति ।
"पुरुषविमोक्षनिमित्त तथा प्रवृत्तिः प्रधानस्य ॥"-

इत्युक्त्वैवमाहुः-

"तस्मान्न बध्यते ऽद्धा न[1]मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृति"रिति, ।

तथा-

"तस्मात्तत्संयोगादचेतन चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीन ॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृत. सर्ग"इति ।

साक्षित्वद्रष्टृत्वभोक्तृत्वादयो नित्यनिर्विकारस्याकर्तुरुदासीनस्य कैवल्यैकस्वरूपस्य न सम्भवन्ति, एवरूपस्य तस्याध्यासमूलो भ्रमोऽपि न सम्भवति, अध्यासभ्रमयोरपि विकारत्वात् । प्रकृतेश्च[2] तौ न सम्भवतः, तयोश्चेतनधर्म्मत्वात् । अध्यासो हि नाम चेतनस्यान्यस्मिन्नन्यधर्मानुसन्धानम्, स च चेतनधर्म्मो विकारश्च । न च पुरुषस्य प्रकृतिसन्निधिमात्रेणाध्यासादयः सम्भवन्ति, निर्विकारत्वादेव । सम्भवन्ति चे,न्नित्य प्रसज्येरन् । सन्निधेरकिञ्चित्करत्व च 'न विलक्षणत्वा'दित्यत्र प्रतिपादितम् । प्रकृतिरेव संसरति बध्यते मुच्यते चे,त्कथ नित्यमुक्तस्य पुरुषस्योपकारिणी सेत्युच्यते । वदन्ति हि-

"नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थक चरती"ति ।

---

१ बध्यते नापोति मु० पु० ।

२ ॰प्रकृतिश्चेति लि० पु० ।

तथा,[1] प्रकृतिर्येन पुरुषेण यथास्वभावा दृष्टा, तस्मात्पुरुषात्तदानीमेव निवर्तत इति चाहुः—

"रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथाऽऽत्मान प्रकाश्य विनिवर्तते प्रकृतिः ॥
प्रकृतेः सुकुमारतर न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्ये''ति ।

तदप्यसङ्गतम्, पुरुषो हि नित्यमुक्तत्वान्निर्विकारत्वाच्च ता कदाचिदपि पेश्यति नाध्यस्यति च, स्वय च † साऽऽत्मान[2] न पश्यति, अचेतनत्वात् । पुरुषस्य स्वात्मदर्शन स्वदर्शनमिति नाध्यस्यति च,† स्वयमचेतनत्वा, त्पुरुषस्य च दर्शनरूपविकारासम्भवात् । अथ सन्निधिमात्रमेव दर्शनमित्युच्यते, सन्निधेर्नित्यत्वेन नित्यदर्शनप्रसङ्ग इत्युक्तम् । स्वरूपातिरिक्तकादाचित्कसन्निधिरपि नित्यनिर्विकारस्य नोपपद्यते । किञ्च, मोक्षहेतुस्तु स्वसन्निधानरूपमेव[3] दर्शन चे,द्बन्धहेतुरपि तदेवेति नित्यवद्बन्धो मोक्षश्च स्याताम् । अयथादर्शन बन्धहेतु., यथावत्स्वरूपदशन मोक्षहेतुरिति चेत्, उभयविधस्यापि दर्शनस्य सनिधानरूपतानतिरेकात् सदोभयप्रसङ्ग एव । सन्निधेरनित्यत्वे तस्य हेतुरन्वेषणीय,स्तस्यापीत्यनवस्था । अथैतद्दोषपरिजिहीर्षया स्वरूपसद्भाव एव सन्निधिरिति, तदा स्वरूपस्य नित्यत्वेन नित्यवद्बन्धमोक्षौ । अत एवमादेर्विप्रतिषेधात् साख्याना दर्शनमसमञ्जसम् ॥

येऽपि कूटस्थनित्यनिर्विशेषस्वप्रकाशचिन्मात्र ब्रह्माविद्यासाक्षित्वेनापारमार्थिकबन्धमोक्षभागिति वदन्ति, तेषामप्युक्तनीत्या ऽविद्या[4]साक्षित्वाध्यासाद्यसम्भवादसामञ्जस्यमेव । इयांस्तु विशेष., साख्या जननमरणप्रतिनियमादिव्यवस्थासिद्ध्यर्थं पुरुषबहुत्वमिच्छन्ति, ते तु तदपि नेच्छन्तीति सुतरामसामञ्जस्यम् । यत्तु प्रकृतेः पारमार्थ्यापारमार्थ्यविभागेन

१ यथेति मु० पु० ।
†† एतच्चिह्नान्तर्गत पाठो लि० पु० त्रुटित । २ स्वात्मानमिति मु० पु० ।
३ स्वसन्निधिमात्रमेवेति मु० पु० । ४ उक्त नित्याविद्येत्युपकल्पित लि० पु ।

वैधर्म्यमुक्तम्, तदयुक्तम्, अपारमार्थिकत्वे [इव] पारमार्थिकत्वेऽपि नित्यनिर्विकारस्वप्रकाशैकरसचिन्मात्रस्य स्वव्यतिरिक्तसाक्षित्वाद्यनुपपत्तेः। अपारमार्थिकत्वे तु तस्या दृश्यत्वबाध्यत्वाभ्युपगमात्सुतरामसङ्गतम्।

औपाधिकभेदवादेऽपि[1] उपाधिसम्बन्धिनो ब्रह्मणोऽयमेव स्वभाव इत्युपाधिसम्बन्धाद्यनुपपत्तेरसामञ्जस्यं पूर्वमेवोक्तम्॥

रचनानुपपत्त्यधिकरणं समाप्तम्॥ १॥

अथ महद्दीर्घाधिकरणम् २।

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्॥ १०॥

प्रधानकारणवादस्य युक्त्याभासमूलतया विप्रतिषिद्धत्वाच्चाऽसामञ्जस्यमुक्तम्। सम्प्रति परमाणुकारणवादस्याप्यसामञ्जस्यं प्रतिपाद्यते 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्या'मिति। 'असमञ्जस'मिति वर्तते, 'वा'-शब्दश्चार्थे। ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवत् त्र्यणुकोत्पत्तिवादवदन्यच्च तदभ्युपगतं सर्वमसमञ्जसम्। परमाणुभ्यो द्व्यणुकादिक्रमेण जगदुत्पत्तिवदन्यदप्यसमञ्जसमित्यर्थः। तथा हि, तन्तुप्रभृतयो ह्यवयवाः स्वांशैः षड्भिः पार्श्वैः संयुज्यमाना अवयविनमुत्पादयन्ति, परमाणवोऽपि स्वकीयैः षड्भिः पार्श्वैः संयुज्यमाना एव द्व्यणुकादीनामुत्पादका भवेयुः। अन्यथा परमाणूनां प्रदेशभेदाभावे सति सहस्रपरमाणुसंयोगेऽप्येकस्मात्परमाणोरनतिरिक्तपरिमाणतया ऽणुत्वह्रस्वत्वमहत्त्वदीर्घत्वाद्यसिद्धिः स्यात्। प्रदेशभेदाभ्युपगमे परमाणवोऽपि सांशाः स्वीयैरंशैः, ते च स्वकीयैरंशैरित्यनवस्था। न च वाच्यम्—अवयवाल्पत्वमहत्त्वाभ्यां हि सर्षपमहीधरयोर्वैषम्यम्, परमाणोरप्यनन्तावयवत्वेऽवयवानन्त्यसाम्यात्सर्षपमहीधरयोर्वैषम्यासिद्धेरवयवापकर्षकाष्ठाऽवश्यमभ्युपगमनीयेति परमाणूनां प्रदेशभेदाभावे सत्येकपरमाणुपरिमाणातिरेकी प्रथिमा न जायेतेति सर्षपमहीधरयोरेवासिद्धेः। किं कुर्म इति चेद्वैदिकः पक्षः परिगृह्यताम्।

[1] औपाधिकभेदाभेदवादेपीति लि० पु०।

यत्तु परैर्ब्रह्मकारणवाददूषणपरिहारपरमिदं[1] सूत्रं व्याख्यातम्, तदसङ्गतं पुनरुक्तं च ब्रह्मकारणवादे परोक्तान्दोषान् पूर्वस्मिन् पादे परिहृत्य परपक्षप्रतिक्षेपो ह्यस्मिन् पादे क्रियते[2]। चेतनाद्ब्रह्मणो जगदुत्पत्तिसम्भवश्च 'न विलक्षणत्वा'दित्यत्रैव प्रपञ्चितः । अतो ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वोत्पत्तिवदन्यच्च तदभ्युपगतं सर्वमसमञ्जसमित्येव सूत्रार्थः

किमत्रान्यदऽसमञ्जसमित्यत्राह—

## उभयथापि[3] न कर्मातस्तदभावः ॥ १२ ॥

परमाणुकारणवादे हि परमाणुगतकर्मजनिततत्संयोगपूर्वकद्व्यणुकादिक्रमेण जगदुत्पत्तिरिष्यते, तत्र निखिलजगदुत्पत्तिकारणभूतपरमाणुगतमाद्यं कर्मादृष्टकारितमित्यभ्युपगम्यते—'अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानी'ति । तदिदं परमाणुगतं कर्म स्वगतादृष्टकारितमात्मगतादृष्टकारितं वा । उभयथाऽपि न सम्भवति, क्षेत्रज्ञपुण्यपापानुष्ठानजनितस्यादृष्टस्य परमाणुगतत्वासम्भवात् । सम्भवे च सर्वदोत्पादकत्वप्रसङ्गः । आत्मगतस्य चादृष्टस्य परमाणुगतकर्मोत्पत्तिहेतुत्वं न सम्भवति । अथादृष्टवदात्मसंयोगादणुषु कर्मोत्पत्तिस्तदा तस्यादृष्टप्रवाहस्य नित्यत्वेन नित्यसर्गप्रसङ्गः । नन्वदृष्टं विपाकापेक्षं फलायालम्, कानिचिददृष्टानि तदानीमेव विपच्यन्ते, कानिचिज्जन्मान्तरे, कानिचित्कल्पान्तरे। अतो विपाकापेक्षत्वाच्च सर्वदोत्पादकत्वप्रसङ्ग इति । नैतत्, अनन्तै[4]रात्मभिरसङ्केतपूर्वकमयुगपदनुष्ठिताऽनेकविध[5]कर्मजनितानामदृष्टानामेकस्मिन् काले एकरूपविपाकस्याप्रामाणिकत्वात् । अत एव युगपत्सर्वसंहारो द्विपरार्द्धकालमविपाकेनावस्थानं च न सङ्गच्छते। न चेश्वरेच्छाऽऽहितविशेषादृष्टसंयोगादणुषु कर्म, आनुमानिके-

१ परिहारमिदमिति मु० पु० ।
२ क्रियते च तस्मादिति लि० पु० ।
३ अपिर्नास्ति सूत्रे मु० पु० ।
४ अतोऽनन्तैरिति लि० पु०
५ ०नेकविविधेति पु० द्वयेपि ।

श्वरासिद्धेः 'शास्त्रयोनित्वा'दित्यत्रोपपादितत्वात् । अतो जगदुत्पत्तेरणु-गतकर्मपूर्वकत्वा[1]भावः ।

**समवायाभ्युपगमाच्च साम्या[2]दनवस्थितेः ॥ १२ ॥**

'समवायाभ्युपगमाच्चा'समञ्जसम् । कुतः । 'साम्यादनवस्थितेः' । समवायस्याप्यवयवि[3]जातिगुणवदुपपादकान्तरापेक्षासाम्या,दुपपादकान्तरस्यापि तथेत्यनवस्थितेरसमञ्जसमेव । एतदुक्तं भवति—अयुतसिद्धानामाधाराधेयभूतानां'मिह'प्रत्ययहेतुर्यः सम्बन्धः स समवाय इति समवायोऽभ्युपगम्यते । अपृथक्स्थित्युपलब्धीनां जात्यादीनां तथाभावस्य निर्वाहकत्वेन चेत्समवायोऽभ्युपगम्यते, समवायस्यापि तत्साम्यात्तथाभावे हेतुरन्वेषणीयः, तस्यापि तथेत्यनवस्थितिः । समवायस्य तदपृथक्सिद्धत्व स्वभाव इति परिकल्प्यते चेत्, जातिगुणादीनामेवैष स्वभावः परिकल्पनीय, न पुनरदृष्टचरं समवायमभ्युपगम्य तस्यैष स्वभाव इति कल्पयितुं युक्तमिति । समवायस्य नित्यत्वे ऽनित्यत्वे चायं दोषः समानः ।

नित्यत्वे दोषान्तरं चाह—

**नित्यमेव च भावात् ॥ १३ ॥**

समवायस्य सम्बन्धत्वात् सम्बन्धस्य नित्यत्वे सम्बन्धिनो जगतश्च नित्यमेव भावादसमञ्जसम् ।

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥**

परमाणूनां पार्थिवाप्यतैजसवायवीयानां चतुर्विधानां रूपरसगन्धस्पर्शवत्त्वाभ्युपगमादभिमतनित्यत्वसूक्ष्मत्वनिरवयवत्वादिविपर्ययेणानित्यत्वस्थूलत्वसावयवत्वादि प्रसज्यते, रूपादिमतां घटादीनामनित्यत्व[4]-तथाविधकारणान्तरारब्धत्वादिदर्शनात् । न हि दर्शनानुगुण्येनादृष्टोऽर्थः कल्प्यमानः स्वाभिमतविशेषे व्यवस्थापयितुं शक्यः । दर्शनानुगुण्येन हि परमाणूनां रूपादिमत्त्वं च त्वया कल्प्यते । अतोऽप्यसमञ्जसम् ।

१ पूर्वगत्वेति मु० पु० ।
२ सामान्यादिति मु० पु० ।
३ अवयव—इति लि० पु० ।
४ अनित्यत्वमिति व्यस्त पु० द्वयेपि ।

अथैतद्दोषपरिजिहीर्षया परमाणूनां रूपादिमत्त्वं नाभ्युपगम्यते, तत्राह–

उभयथा च दोषात् ॥ १५ ॥

न केवलं परमाणूनां रूपादिमत्त्वाभ्युपगम एव दोषः, रूपादिविरहेऽपि कारणगुणपूर्वकत्वात् कार्य्यगुणानां पृथिव्यादयो रूपादिशून्याः स्युः । तद्दोषपरिजिहीर्षया रूपादिमत्त्वाभ्युपगमे पूर्वोक्तदोष इत्युभयथा च दोषादसमञ्जसम् ।

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १६ ॥

कापिलपक्षस्य श्रुतिन्यायविरोधपरित्यक्तस्यापि सत्कार्य्यवादादिना क्वचिदंशे वैदिकैः परिग्रहोऽस्ति, अस्य तु काणादपक्षस्य केनाप्यंशेनापरिग्रहादनुपपन्नत्वाच्चात्यन्तमनपेक्षैव निःश्रेयसार्थिभिः कार्या ॥

महद्दीर्घाधिकरणं समाप्तम् ॥ २ ॥

---

अथ समुदायाधिकरणम ३ । समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥

परमाणुकारणवादिनो वैशेषिका निरस्ताः, सौगताश्च जगतः परमाणुकारणत्वमभ्युपगच्छन्तीत्यनन्तरं तन्मतेऽपि जगदुत्पत्तितद्व्यवहारादिकं नोपपद्यत इत्युच्यते ।

ते च चतुर्विधाः, केचित्पार्थिवाप्यतैजसवायवीयपरमाणुसंघातरूपान् भूतभौतिकान् बाह्यांश्चित्तचैत्तरूपांश्चाभ्यन्तरानर्थान् प्रत्यक्षानुमानसिद्धानभ्युपयन्ति । अन्ये तु बाह्यार्थान् सर्वान् पृथिव्यादीन् विज्ञानानुमेयान् वदन्ति । अपरे त्वर्थशून्यं विज्ञानमेव परमार्थसत्, बाह्यार्थास्तु स्वाप्नार्थकल्पा इत्याहुः । त्रयोऽप्येते स्वाभ्युपगतं वस्तु क्षणिकमाचक्षते, उक्तभूतभौतिकचित्तचैत्तव्यतिरिक्तमात्माकाशादिकं स्वरूपेणैव नानुमन्यन्ते । अन्ये तु सर्वशून्यत्वमेव सङ्गिरन्ते ।

तत्र ये बाह्यार्थास्तित्ववादिन,स्ते तावन्निरस्यन्ते । ते चैवं मन्यन्ते–रूपरसस्पर्शगन्धस्वभावाः पार्थिवाः परमाणवो, रूपरसस्पर्शस्वभावा

आप्या, रूपरसस्पर्शस्वभावास्तैजसाः, स्पर्शस्वभावाश्च वायवीयाः पृथिव्यप्तेजोवायुरूपेण सहन्यन्ते। तेभ्यश्च पृथिव्यादिभ्यः शरीरेन्द्रियविषयरूपसघाता भवन्ति। तत्र च शरीरान्तर्वर्तिग्राहकाभिमानरूढो विज्ञान[1]सन्तान एवात्मत्वेनावतिष्ठते। तत एव सर्वो लौकिको व्यवहारः प्रवर्तत इति।

तत्राभिधीयते—

'समुदाय उभयहेतुकेऽपि तदप्राप्तिः,'

योऽयमणुहेतुकः पृथिव्यादिभूतात्मकः समुदायः, यश्च पृथिव्यादिहेतुकः शरीरेन्द्रियविषयरूपः समुदाय,स्तस्मिन्नुभयहेतुकेऽपि समुदाये तत्प्राप्तिर्नोपपद्यते। जगदात्मकसमुदायोत्पत्तिर्नोपपद्यत इत्यर्थः। परमाणूना पृथिव्यादिभूताना च क्षणिकत्वाभ्युपगमात्क्षणविनाशिन. परमाणवो भूतानि च कदा सहतौ व्याप्रियन्ते,[2] कदा वा सहन्यन्ते, कदा च विज्ञानविषयभूताः, कदा च हानोपादानादि[3]व्यवहारास्पदता भजन्ते, को वा विज्ञानात्मा, क च विषय स्पृशति, कश्च[4] विज्ञानात्मा कमर्थ कदा वेदयते, क वा विदित[5]मर्थ कश्च कदोपादत्ते। स्प्रष्टा हि नष्टः स्पृष्टश्च नष्टः, तथा वेदिता विदितश्च नष्टः, कथ चान्येन स्पृष्टमन्यो वेदयते-कथ चान्येन विदित[6]मर्थमन्य उपादत्ते। सन्तानानामेकत्वेऽपि सन्तानिभ्यस्तेषा वस्तुतो वस्त्वन्तरत्वानभ्युपगमाच्च तन्निबन्धन व्यवहारादिक,मुपपद्यते। अहमर्थ एवात्मा, स च ज्ञातैवेति चोपपादित पुरस्तात्।

## इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात्[7] ॥ १८ ॥

---

१ रूपो ज्ञानेति लि० पु०।

२ कमर्थमिति लि० पु० अत्राधिकम्।

३ कदा च ज्ञानादीति लि० पु०। ४ स्वशरीरश्चेति लि० पु०।

५ वेदितमिति लि० पु०। ६ क वावेदितमिति लि० पु०।

७ ०त्वादिति चेचोत्पत्तिमात्रनिमित्तत्वादिति लि० पु० पश्चादुपकल्पित शोधयित्रा। शाङ्करानुसारेण। "अयमेवा ऽकृत्रिमो वृत्तिसिद्ध पाठ" इतिश्रुतप्रकाशिका भ्युपेत साम्प्रदायिकस्तु ग्रन्थे स्थापितः।

## Commentary

That is to say, these qualities are preceded by (originate from) like qualities in the material causes of the substances to which they belong for instance the colour of the cloth originates from the colour of the threads constituting it as it is this latter that it is found invariably to follow If it were not so, then any and every quality might appear in the cloth, there being no restrictive cause

This sets aside the view that in all things, there is a single colour of whiteness which is always recognised as such Because if such were the case then, there would be no varying shades of colours Hence the said recognition must be regarded as pertaining to the generality of 'whiteness'

The colour &c, of the earth-atom is produced by a process of *cooking* (or baking) by contact with fire, and in the atom they are not due to any similar qualities in a material cause of the atom Hence it is with a view to preclude such quality &c, that the author has added the qualification '*apākaja*' It is only when the *production* of the qualities has been established, that there can be any consideration as to whether they are due to similar qualities in the cause, or they are not so due, hence as there is no production of the colour &c, of water &c, (which are natural to these), the case of these could not be brought forward against the statement of the text

The fact of the qualities being preceded by like qualities in the cause has been asserted simply by way of pointing out this character, and not for defining strictly the qualities thus preceded, because *caused fluidity* and *speed* are such as could appear even without the precedence of like qualities in the cause In the case of these two qualities, the character of being preceded by like qualities in the cause must be regarded as referring to such of these qualities as inhere in substances produced out of things having *speed* and in those having water for their constituent

*Text (59)* —*Intellect Pleasure, Pain, Desire, Aversion, Effort, Virtue, Vice, Faculty and Sound are not preceded by (donot originate from) like qualities in the cause*

## Commentary.

These qualities are not due to like qualities subsisting in the material causes of the substances in which they inhere

---

*Text (60)* —*Intellect, Pleasure, Pain, Desire, Aversion, Effort, Virtue, Vice, Faculty, Sound, Aggregate-dimension, Secondary Conjunction, Caused Fluidity, Priority and Posteriority are not produced by cooking, they are produced by Conjunction*

## Commentary

**Page 99**] From Intellect, down to Faculty, all are produced by the Conjunction of the Self with the Mind Sound is, produced by the Conjunction of *Ākāça* with the sounding drum Aggregate-dimension is produced by the conjunction of many things, one after the other Secondary Conjunction is produced by conjunction Caused Fluidity is produced by the conjunction of fire Priority and Posteriority are produced by the conjunction of the object with Time and Space And the Colour, Taste, Odour and Touch of the Earth-atom is produced by the contact of Fire

---

*Text (61)* —*Conjunction, Disjunction and Speed are produced by actions*

## Commentary

That is to say, the primary or initiatory Conjunction and Disjunction are produced by Action, (the subsequent Conjunctions being the effects of previous Conjunction )

---

*Text (62)* —*Sound and Secondary Disjunction are produced by Disjunction*

## Commentary

The first sound is produced by disjunction *also*, while the secondary disjunction is produced by disjunction alone

---

*Text (63)*—*Priority, Posteriority, Duality, Dual Separateness, &c are dependent upon the Intellect*

## Commentary

That is to say, the Intellect is the instrumental cause in the production of these qualities

"*Etc*" includes the Separateness of *Three* and the rest

---

*Text (64)*—*Colour, Taste, Smell, Non-hot Touch, Sound, Dimension, Singleness, Single Separateness and Viscidity are productive of their likes*

## Commentary

The Colour of the cause produces the colour of the effect, its Taste produces the taste, its Smell the smell, Touch the touch, Viscidity the viscidity, and Large dimension the same dimension, in the effect As for Sound, it produces another sound in its own substratum

By 'cause' is meant *cause in general*, and not merely the non-material cause, otherwise it would not be proper to preclude the hot touch of the instrumental cause of unlike qualities brought about by cooking

*Objection*—"If such be the case, then how could Colour be the cause of Cognition (which is not like, or cognate with, it)"

*Reply*—The restriction—in the shape *the productiveness of their likes*—has been made, barring the productiveness of cognition

---

*Text (65)*—*Pleasure, Pain, Desire, Aversion and Effort are productive of their unlikes*

## Commentary

That is to say, Pleasure is productive of Desire, Pain of Aversion, Desire and Aversion of Effort, and Effort of Action

*Objection* "The Pleasure of the son must be regarded as producing its like, in the shape of the Pleasure of the father, otherwise, there could be no explaining of the delight that the father feels at his son's happiness"

*Reply* There is not much in this, the process in such cases is that the father notices certain marks in the face and general countenance of his son, from which he infers the existence of Pleasure in him, and then there is a Pleasure produced in himself And in the production of this Pleasure, the cause is not the son's pleasure, which does not last all this time, in fact its origin must be the purely inferential knowledge of the son's Pleasure

**Page 100** ] *Conjunction, Disjunction, Number, Gravity, Fluidity, Hot touch, Knowledge, Virtue, Vice and Faculty are productive of likes as well as unlikes*

## Commentary

From Conjunction there proceeds a like quality in the shape of the secondary conjunction,—and also an unlike quality in the shape of the Dimension of the *double layer* of cotton (which is produced by the conjunction of the two layers)

From Disjunction is produced the like quality of another Disjunction, and the unlike quality of Sound

From the Number *one* in the cause is produced the like quality of the number *one* in the effect, and from the Numbers two and *Many* are produced the unlike qualities of the *Atomic* and *Large* Dimensions

From Gravity is produced a like quality in the shape of further Gravity, and also an unlike one in the shape of Falling

From Fluidity follows another fluidity, as also the action of *flowing*

From Hot Touch is produced another Hot Touch, and also the Colour &c, of the Earth-atom

From Knowledge is produced knowledge, as well as Faculty

From Virtue follows another Virtue, as also Pleasure

From Vice follows Vice, and also Pain

From Faculty follows Faculty, and also Remembrance

---

*Text* (68) —*Colour, Taste, Smell, Touch, Dimension, Viscidity, Effort, are productive (of qualities) in other things*

**Commentary**

The Colour &c, inhering in the constituent parts produce, as far as possible, Colour &c, in the whole made up of those parts The effort inhering in the Self is the cause of the action of his hands

---

*Text* (69),—*Conjunction, Disjunction, Number, Single Location, Gravity, Fluidity, Speed, Virtue and Vice are productive (of qualities) in both*

**Commentary**

That is to say, these produce qualities in their own substrates, as well as in other things For instance, the conjunctions existing in the threads produce in *themselves* the cloth, while the conjunction of the object and the sense-organs produces knowledge in the Self The Disjunction of the bamboo fibres produces sound elsewhere, in the *Ākāça*, and the Disjunction of the bamboo fibre and the *Ākāça* produces sound in the *Ākāça* which is also a substrate of the Disjunction The Number *one* inhering in the constituent parts produces the same Number in the *whole*, and also, the Numbers *two* and the rest *in themselves* The single separateness in the parts produces similar separateness in the whole, and the double and treble separateness in their own substrates The Gravity, Fluidity and Speed of the

cause produce like qualities in the Effect, and also action in their own substrates Virtue and Vice produce Pleasure and Pain in the Self, and also the action of burning &c, in the Fire (kindled at sacrifices)

**Page 101**] *Gravity, Fluidity, Speed, Effort, Virtue, Vice and Conjunction of a particular kind, are the causes of actions*

## Commentary

From Gravity follows the action of falling, from Fluidity, flowing, from speed, the consecutive actions of the shot arrow, from Effort, the actions of the body, limbs &c, from Virtue and Vice the actions of fire &c, and from the particular kind of Conjunction, in the form of *moving* and *striking*, is also produced action, as will be explained later on

*Text* (71) —*Colour, Taste, Smell, non-hot Touch, Number, Dimension, Single Separateness, Viscidity, and Sound are non-material causes*

## Commentary

The "Immaterial cause" is that which is in touch with the material cause, and has a well-known efficiency (towards the effect) This 'touch' consists in *inhering in the material cause*, and also in *inhering in the same substratum in which the material cause inheres* For instance, the material cause of Pleasure &c, is the Self, and therein inheres the contact of the Self and the Mind, and this contact is the Immaterial Cause of Pleasure &c

*Objection* "If such be the case, then Virtue and Vice also would be Immaterial causes'

*Reply* Not so, because they are never duly recognised as having any causal efficiency towards the production of the specific qualities of the whole Self, that is to say, Virtue does not produce Vice and Pain, nor does Vice produce Virtue and Pleasure

In the same way it may be shown that the definition does not apply to Cognition &c As for the contact of the Cogniser and the Mind it is recognised as having a universal causal efficiency, and it is this peculiarity in this contact that makes it the "Immaterial cause"

Then again, we find the *Colour of the Threads* inhering in the Threads, wherein also inheres the cloth which is the material cause of the *Colour of the Cloth*, and thence the Colour of the Threads is recognised as the Immaterial cause of the Colour of the Cloth And of this latter Taste &c, could not be the immaterial cause, as it is the Colour of the Threads alone which is found, by positive and negative induction, to have the necessary causal efficiency

Similarly we may explain the case of Taste &c Hot Touch is also the Efficient or Instrumental cause of the qualities produced by cooking, hence the author mentions only the *non-hot* 'Touch'

Colour, Taste, Smell, Non-hot Touch, Dimension and Viscidity are such Immaterial causes as inhere in the same substratum as the material cause, as it is only when these subsist in the material cause that they produce, in the effect, their likes Sound is an Immaterial cause that inheres in the material cause, as it is when subsisting in Ākāça that it produces another Sound, and that too in the *Ākāça* itself Number and Separateness can be the Immaterial cause of both kinds when subsisting in the (material) cause, they produce, respectively, in the cause, *singleness* and *separateness*, while in their own substratum, they produce *duality* and *dual separateness*, repectively

---

[**Page 102**] *Text (72) —Intellect, Pleasure, Pain, Desire, Aversion, Effort, Virtue, Vice and Faculty have the character of efficient (or instrumental) causes*

नेपथ्याभिमुखमवलोक्य, आद्रियतान्तावदियमार्यया रगभूमिः ।

प्रविश्य नटी ।

* अय्य एसम्हि, आणाविज्जउ पिअप्पेसणो, एसोपरिअणो ।

सूत्रधारः—अपि नाम सत्वोपपन्नसामाजिकसमादिष्टनाटकसाधन समुचितभूमिका परिग्रहे सन्नह्यन्ति कुशला. कुशीलवाः ।

नटी† करचलणदिट्ठिकप्पाखु एदे अय्यस्सकिणतुह चिंतिए तूरंति एदं उण परिपुच्छमि किंणामअं कीरिसरूपअ अहिणेदु आरद्धन्ति ।

सूत्रधारः—आर्ये किन्नजानासि सङ्कल्पसूर्योदयाख्य नायकीकृतविवेकं नवीन नाटक ।

---

* आर्य एषास्मि आज्ञाप्यता प्रियप्रेषणा एषपरिजन' ।

† करचरणदृष्टिकल्पाः खल्वेते आर्यस्य किच तव चिन्तिते त्वरन्ते इद पुनः परिएच्छामि किन्नामकं कीदृश रूपकमभिनेतुमारब्धमिति ।

---

इदानीं । सूत्रधारो नटी ब्रूते मारिष वा विदूषकम । स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखं । इत्यामुखलक्षणात् ॥ प्रस्तावनार्थं नटीमाह्वयति । आद्रियतामिति—। इयं रङ्गभूमिरार्यया त्वया आद्रियता आदरविषय. क्रियता त्वयात्रागन्तव्य मित्यर्थ । नटी सूत्रभृतोरन्योन्यमार्येति सम्बोधन कार्यं । तदुक्त। विप्रामात्याग्रजाश्चार्य-नटीसूत्रभृतो मिथः । इति ।

प्रविश्य नटी आहेतिशेषः । किमाहेत्यत आह । आर्य एषास्मि आज्ञाप्यता प्रयप्रेषणा एष परिजनः ।

सत्वोपपन्ना. सत्वगुणोपपन्ना. तेच ते सामाजिकाश्च तैस्समादिष्टस्य साधन कल्पनं तस्मिन्नुचिताः भूमिका स्सन्नह्यन्ति कुशीलवा. शैलूषा. । अपि नामेति प्रश्ने ।

करचरणदृष्टिकल्पा' खल्वेते आर्यस्य किन्नयुष्मच्चिन्तिते त्वरन्ति , एतत्पुन परिएच्छामि किन्नाम कीदृशं रूपकमभिनेतुमारब्धमिति ।

न जानासि किमिति प्रसिद्धिद्योतन । प्रयोज्यस्य रूपकस्यातिशयमाह ।

भावं विदन्ति परमत्र परावरज्ञाः
प्रज्ञाधनाः प्रगुणनूतनसंविधानम् ।
यस्मिन्गुणास्तनुभृतस्सदसत्प्रकाराः
पात्री भवन्त्यनुगुणैरधिदैवतैः स्वैः ॥ ८ ॥

अपिच–

विवेकप्रागल्भ्यस्फुरितरणवीरव्यतिकरः
परब्रह्मोदन्तप्रकटितदयावीरविभवः ।
प्रबुद्धक्षेत्रज्ञस्थितिघटितशान्ताकृतिरभूत्
प्रयोगश्चित्रोऽयं भवरसभुजामप्यभिमतः ॥ ९ ॥

भावमिति–। अत्र नाट्ये परावरज्ञाः परानवरांश्च जानन्त प्रज्ञा प्रकृष्ट ज्ञानं धन येषा ते तथोक्ताः। प्रगुणं प्रकृष्टगुण नूतनं संविधानं कल्पनं यस्मिन् तं परं उत्कृष्ट भावं स्थायिभाव शम विदन्ति। यस्मिन्नाट्ये सदसत्प्रकारा स्वभावाः येषा ते तथा तनुभृत जीवस्य गुणा विवेकमहामोहादय' अनुगुणै अनुरूपै स्वै' अधिदैवतैः अधिष्ठातृभि पात्रीभवन्ति पात्राणि भवन्ति। केवलगुणाना तत्सम्भवसामर्थ्याभावात् स्वाभिमानदेवताद्वारा तथात्व ॥ ८ ॥

एवमस्य नाट्यस्य मुमुक्षुभिरुपादेयत्वमुक्त्वा संसारिभिरप्यादरणीयत्वमाह।

विवेकेति–। विवेकस्य प्रागल्भ्येन प्रौढ्या तद्वर्णनेनेत्यर्थ स्फुरित प्रकाशितः रणवीरस्य युद्धवीरस्य व्यतिकरस्सम्बन्धो यस्मिन् स तथोक्तः। युद्धवीरदयावीरदानवीरभेदेन वीरस्त्रिविध। तदुक्त–वीरो युद्धदयादानभेदेन त्रिविधो भवेत्। इति तेषु च। विषमस्त्रास्त्रपातेषु समरादप्यधावन। भीताभयप्रदानञ्च युद्धवीरस्य लक्षण। इति रणवीरस्य लक्षणमुक्त। परब्रह्मोदन्तेन परमात्मवृत्तान्तकथनेन प्रकटित प्रपञ्चितः दयावीरस्य विभवो यस्मिन् स तथा। य परव्यसने दु खीदयावीरस्ससमत.। इति तल्लक्षण। इद च भगवत एवासाधारण परदु खदु खित्व। (भगवत परदुःखदु खित्वं नामपरदु'खापचिकीर्षिता इति यावत्)

व्यसनेषु मनुष्याणां भृश भवति दुःखितः।
सञ्जातबाष्प' परवीरहन्ता रामो मुहूर्तं विमनाबभूव।
गोविन्देति यदाक्रन्दत् कृष्णामा दूरवासिनम्।
ऋण प्रवृद्धमिव मे हृदयान्नापसर्पति ॥

इत्यादिषु यथा दर्शनात। प्रबुद्धस्य ज्ञानिनः मुमुक्षोरिति यावत–क्षेत्रज्ञस्य जीवस्य स्थित्या मुकुलयति विविस्सामित्यादिभिरुपरिष्टाद्वक्ष्यमाणया घटिता सम्बद्धाशान्तस्य शान्तिरसस्याकृतिराकारो यस्मिन्सतथा। अत एव चित्रः अय प्रयोग. भवरसभुजां सासारिकसुखानुभवितृणामप्यभिमतो अभूत ॥ ९ ॥

अमुष्यतावदतिशयोक्तावप्यवधिमपि न संभावयामि । कतिकति न सन्त्यकूपारशिखाः किन्ते परिष्कृतपुरुषोत्तमपाणिपद्मः पाञ्चजन्यः । किं च

ये लोकानिह वंचयंत्यविरलोदंचन्महःकंचुकाः
ते तिष्ठन्तु महद्गृहेषु मणयःकिन्तैरिदं चिन्त्यतां ।
श्रीवत्सप्रतिवेशदीपरुचिना सार्धं किमाभाष्यते
पद्मोल्लासनदर्पणेन मणिना प्रत्नेषु रत्नेष्वपि ॥१०॥

इतश्चायमतीव बहु मन्तव्यः ।

अपदिश्य किमप्यशेषगुप्त्यै
निगमान्तेषु निरूढगौरवेण ।
प्रविभक्तहिताहितः प्रयोगः
कविना कारुणिकेन कल्पितोसौ ॥ ११ ॥

एतद्वैभवस्यापरिच्छिन्नतामाह

अमुष्येति—। अमुष्य नाटकस्यातिशयोक्तौ वैभवकथने क्रियमाणायामवधि पर्य्यवसानं न सम्भावयामि । बहुधा विचिन्त्य न पश्यामीत्यर्थः । अपि शब्दः पूर्वोक्तातिशयादतिशयान्तरं समुच्चिनोति । ननु किमेतदेव मुहुः प्रशंससि सहृदयहृदयङ्गमानां रूपकान्तराणामपि बहूनां विद्यमानत्वादित्यत आह

कतिकतीत्यादि—। कति कति न सन्तीत्यनेन तेषामसंख्यतात्वं द्योत्यते पुरुषोत्तमशब्दो नारायणपरः ।

यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः ।
अतोस्मि लोकेवेदे च प्रथितः पुरुषोत्तमः ॥

इत्युक्तेः । परिष्कृतः अलङ्कृतः पुरुषोत्तमपाणिपद्मो येन स तथोक्तः किन्ते पाञ्चजन्य इत्यनेन पाञ्चजन्यातिशयस्तेषां नास्तीति व्यज्यते उक्तमेवार्थं भग्यन्तरेणाह ।

यइति—। अविरलं निरन्तरं यथाभवति तथा उदञ्चत उद्गच्छत महः कान्तिरेव कञ्चुको येषां ते तथोक्ताः । येमणयः इह लोके लोकान् जनान् । लोकस्तु भुवने जनेत्युक्तत्वात् । वञ्चयन्ति इमे श्लाघ्या मणय इति मोहयन्ति । ते महद्गृहेषु धनिनां गृहेषु तिष्ठन्तु । ततः किमित्यत आह—किन्तैरिति । तैर्नकिञ्चिदपि प्रयोजनमित्यर्थः । इदं वक्ष्यमाणं चिन्त्यतां । श्रीवत्सस्य प्रतिवेशे प्रतिगृहे यो दीपः स एव रुचिर्यस्य तेन । पद्मायाः श्रियः उल्लासनं सन्तोषहेतुः दर्पणः मुकुरः तथाभूतेन मणिना कौस्तुभेन सार्द्धं तत्सदृशतयेत्यर्थः । प्रत्नेषु पुरातनेष्वपि किञ्चिदाभाष्यतं उच्यते किं । अन्यान्यपि रूपकाणि शतशस्सन्तु नाम । तेषु न किञ्चिदप्यनेन सदृशमितिभावः ॥ १० ॥

अस्य बहुमन्तव्यत्वे हेत्वन्तरमाह—इतश्चेति । तत्किमित्यपेक्षायामाह ।

अपदिश्येति—। निगमान्तेषु उपनिषत्सु निरूढं स्थिरं गौरवं गुरुत्वं यस्य

नटी—*अय्य, कस्स उण कइणो पओओ एसो जहु बहु माणेण अह्मे सुवि, पअडिअपक्खवाआ एसा परिसआ

सूत्रधार:—आर्ये किन्न श्रुतमिदन्ते । अस्ति खलु । सकललोक-सभावनीयस्य विश्वातिशायिनो विश्वामित्रगोत्रभूषणस्य विशुद्धविद्या-विहारपुण्डरीकस्य पुण्डरीकाक्षसोमसुत्सभवस्यानन्तगुणशेवधेरनन्तसूरेरा-त्मसभव: श्रीरंगराजद्दिव्याज्ञालब्धवेदान्ताचार्यपद: कवितार्किकसिंह-इति प्रख्यातगुणसमाख्य: छात्रजननिबद्धजैत्रध्वजप्रसाधितदशदिशासौध: सर्वतन्त्रसङ्कटप्रशमनविशङ्कटमति: श्रीमद्वेङ्कटनाथोनामकवि: ।

---

* आर्य कस्य पुन कवे प्रयोग एष यत्र बहुमानेन अस्मास्वपि प्रकटितपक्षपा तैषा परिषत् ।

---

तेन—अनेन वेदान्ताचार्येणेति सूच्यते । कारुणिकेन दयालुना कविना प्रविभक्ते प्रक र्षेण विवेचिते हिताहिते यस्मिन स तथा । असौ प्रयोग, अशेषगुप्त्यै गोपनाय तदवबोधायेत्यर्थ । कल्पित' किमपि रूपकमपदिश्य व्याजीकृत्य कल्पित । परमद यालुर्भगवान् कवितार्किकसिंह' सर्वजगदुज्जिजीविषया किञ्चिन्नाट्य व्याजीकृत्य वेदा न्तरहस्यानि प्राचीकशदिति भाव ॥ ११ ॥

कविनेति कवि' प्रस्तुत सकइति पृच्छति । आर्य कस्य पुन, कवे: प्रयोग एष'—यत्र बहुमानेनास्मास्वपि प्रकटितपक्षपाता एषा परिषत ।

यत्र कवौ विशुद्धाना अनवद्याना देवतान्तरस्पर्शगन्धरहिताना विद्याना विहारार्थं हृदयपुण्डरीक यस्य तस्य । पुण्डरीकाक्षसोमसुत पुण्डरीकाक्षनाम्न सोमपी यिन सम्भव उत्पत्तिर्यस्य तस्य । अनन्तानामसख्याना गुणाना शमदमादीना शेवधेर्निधे: अनन्तसूरेरनन्ताख्यसूरेरात्मनस्सम्भवो यस्य स तथा । श्रीरङ्गराजदिव्याज्ञया लब्ध प्राप्त वेदान्ताचार्यपद वेदान्ताचार्यस्थान यस्य स तथा । प्रसिद्ध ह्येतत । कदाचित् भगवान् श्रीरङ्गनायकस्तद्दिव्यनगरवासिनमेनमाहूय श्रीरामानुजमुनिविरचित शारीरकमीमासा भाष्य त्वन्मुखाच्छ्रोतुकामोस्मीत्युक्त्वा स्वय च दिव्यस्थानमास्थायादित आरभ्यान्तर्मति निपुणमुपन्यास वदनारविन्दादाकर्ण्य विस्मितहृदयस्तमाभाष्य भगवान वेदान्तानामा चार्य इति सकललोकसमक्षमाचचक्षे । इति गुणसमाख्या गुणकृत नामधेय तस्य तथा । दिशा एव सौधानि दिकशब्दस्यापन्तत्ववष्टिवागुरुरित्यादौ सिद्ध सर्वेषा तन्त्राणा यत्स- कट परस्परविरोध तत्प्रशमने विशकटा विशाला मतिर्यस्य स तथा ।

प्रख्याततायोक्त तदसाधारणचिन्हमाह ।

गौडवैदर्भपाञ्चालमालाकारां सरस्वतीम् ।
यस्य नित्यं प्रशंसन्ति सन्तस्सौरभवेदिनः ॥ १२ ॥

अन्येन्द्रकं भुवनमन्यदनिन्द्रकं वा
कर्तुं क्षमे कविरभूदयमन्ववाये ।
जन्मद्वितीयमृषिभिः कथितं यतस्सा
देवी च विश्वजननी यदनन्यगोत्रा ॥ १३ ॥

अपि च–

वित्रासिनी विबुधवैरिवरूथिनीनां
पद्मासनेन परिचारविधौ प्रयुक्ता ।
उत्प्रेक्ष्यते बुधजनैरुपपत्तिभूम्ना
घण्टा हरेस्समजनिष्ट यदात्मनेति ॥ १४ ॥

---

गौडेति–॥ गौडवैदर्भपाञ्चालदेशेषु प्रयुज्यमानाना तत्तद्देशनाम्ना पदसन्दर्भविशेषाणा माला पंक्तिस्सैवाकारो यस्यास्ता यस्य सरस्वतीं सौरभवेदिन तत्परिमलाभिज्ञा । सौरभशब्दस्तदसाधारणगुणवाची । प्रशसन्ति श्लाघन्ते । अत्र । काव्येह्यभूतारीतिस्तु विशिष्टापदपद्धति । ओज प्रसादप्रमुखा विशेषास्तु गुणामता । सा वैदर्भी तथा गौडीपाञ्चालीति त्रिधोदिता । अस्पृष्टा दोषमात्राभिस्समग्रगुणगुंभिता । विपञ्चीस्वरसौभाग्या वैदर्भीरीतिरिष्यते । समस्तात्युत्भटपदामोजः कान्तिगुणान्विता । गौडीयान्ता समाचख्यूरीति रीतिविचक्षणा । अश्लिष्टश्लथभावान्तु पुराणच्छायया न्विता । मधुरा सुकुमारा च पाचाली कवयो विदु । इत्येतदनुसन्धेयम् ॥ १२ ॥

अस्यान्वयवैभवमाह ।

अन्येन्द्रकमिति ॥ अन्य इन्द्रो यस्य तत् अन्येन्द्रकं । अस्मादन्यत् अनिन्द्रक । न विद्यते इन्द्रो यस्मिस्तदनिन्द्रक वा भुवन कर्तु क्षमे समर्थे । अन्ववाये वशे । वशोन्ववायस्सन्तान–इति निघण्टुपाठात् अय कविरभूत । द्वितीय शरीरोत्पत्त्यपेक्षया जन्म ब्राह्मणयोत्पत्ति ऋषिभि यत यत्स्वीकारात्कथित यथोक्त । सहिविद्या तस्तज्जनयति । तच्छ्रेष्ट जन्म शरीरमेव मातापितरौ जनयति इति । विश्वजननी सर्वेषा मातृभूता देवी सावित्री च यदनन्यगोत्रा यस्मादन्यगोत्रा न सगोत्रेत्यर्थ । सावित्री विश्वामित्रगोत्रेति प्रसिद्धे । अन्येन्द्रकमनिन्द्रक वा भुवन कर्तु क्षम इत्यन्ववायस्य तत्सामर्थ्यवचनं । तन्मूलभूतस्य विश्वामित्रस्य तत्सम्भवात् । तदुक्त । अन्यमिन्द्र करिष्यामि लोको वास्यादनिन्द्रक इति ॥ १३ ॥

अथास्य नित्यसूर्यावतारतामाह ।

वित्रासिनीति–॥ विबुध वैरिणा वरूथिन्यस्सेना तासा वित्रासिनी भयङ्करी पद्मासनस्यास्य प्रिय पते परिचार परिचरण तस्य विधौ विधाने प्रयुक्ता प्रकर्षेण युक्ता ।

सच

विंशत्यब्दे विश्रुतनानाविधविद्य
स्त्रिंशद्वारं श्रावित शारीरकभाष्यः ।
श्रेय श्श्रीमान्वेङ्कटनाथश्श्रुतिपथ्यं
नाथप्रीत्यै नाटकमर्थ्यं व्यधितैतत् ॥ १५ ॥

नटी—*अय्य कह गाम एअस्स एअन्त णिअमन्त विआण सन्दिअ माण सस्स कक्कसअर तक्ककुलिस णिस्सुठिअ पासण्डद्दुमस ण्डाभारइ अह्मारिसकेलिजोग्गिअ रूपअ कुणज्ज

सूत्रधारः (सान्तर्हास) यदेतदुभयमार्या पर्यनुयुङ्क्ते अत्र ताव-दादौ किमेनमप्रवृत्तनिखिलकरणव्यापारमनुभवैकतानमानसमत्यन्तनिभृ-तावस्थ निबद्धारमवधारयसि· अथापि ब्रूमः ।

*आर्य कथन्नाम एतस्य एकान्तनिगमान्तवितानसन्दितमानसस्य कर्कशतरत र्ककुलिशनिस्त्रु टितपाषण्डद्रुमषण्डाभारती अस्मादृशकेलियोग्य रूपक कुर्यात् ।

हरे घण्टा उपपत्तिभूम्ना उपपात्तमहिम्ना असुर वित्रासिनभगवदाराधननिरतत्वा दिरूपपत्ति तस्य भूम्ना अतिशयेन यदात्मना यत्स्वरूपेण यच्छब्दो अय कविवर समज निष्टसञ्जातेति जनैरुत्प्रेक्ष्यते । प्रसिद्धमेतत । कदाचिदत्रभगवाननन्तसूरि पत्न्या सह श्रीवेंकटेश सेवितु सिह्माचलमासाद्य भगवन्त प्रणम्य तयासाकं क्वचिदशयिष्ट । तदातु सा सुप्ता स्ववक्त्रे प्रविशन्तीं भगवतो घण्टामद्राक्षीत् । अथ चाचिरेण गर्भमादत्त सुषुवे च भुवि वेंकटनाथ नामान सूनुमिति ॥ १४ ॥

एतादृश वैभवेनानेन विरचितमिद रूपकमित्याह ।

**विंशत्यब्दे इति**—। विशत्यब्दे विशतिसख्याकेष्वब्देषु विश्रुताः नानाविधाः विद्या· येन स तथोक्त । त्रिशत वारान् श्रावित शारीरकभाष्य येन स तथा । श्रीमान् वेंकटनाथार्य श्रेयः श्रेयोरूप श्रुतिपथ्य श्रवणहितं अर्थ्यं अर्थादनपेतं अर्थ पर मपुरुषार्थलक्षणो मोक्ष । तत्प्रापकमित्यर्थ । एतन्नाटकं नाथस्य भगवत· प्रीत्यै व्यधितः विरचितवान् । एतन्निर्माणस्य भगवत्प्रीतिरेव फल । वक्ष्यति खल्वन्ते च । **वक्ता श्रोत-वचनविषयः प्रियतां वसुदेव इति ॥ १५ ॥**

एवमस्यैतादृश वैभवमाकर्ण्य नटी शङ्कते । आर्य किन्नामैकान्तनिगमान्तवितानसन्दितमानसस्य कर्कशतरतर्ककुलिशनिस्त्रुटितपाषण्डद्रुमषण्डा भारती अस्मादृशके-लियोग्य रूपकङ्कुर्यात् । एकान्तो निश्चयो येषां ते एकान्ताः भगवदेकपरा इत्यर्थः । सन्दितं निगलितं कुर्यात किन्नाम—कथङ्कुर्यादित्यर्थ ।

**सान्तर्हासमिति**—। कथमिदमस्या बुद्धिमान्द्यमितिजात । हासं अप्रकाश्ये-त्यर्थः । उभयमिति ललिततररूपकनिर्माणे वेदान्तविचारणैकसक्तत्वं तत्परिचय च

मनुव्यासप्राचेतसपरिषदर्हा क्वचिदियं
सुधासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने ।
निरुन्ध्युः केविन्ध्याचलविकटसन्ध्यानटजटा
परिभ्रान्ता पङ्गोरुपरि यदि गङ्गा निपतति ॥ १६ ॥

अन्यदपि निध्यायतु भवती ।

गंभीरभीषणगतिगिरिखण्डनाद्यै
चूडापदं पशुपतेरपि घूर्णयन्ती ।
स्वादुप्रसन्नसुभगानि वसुन्धरायां
स्रोतांसि दर्शयति किन्नसुरस्रवन्ती ॥ १७ ॥

नटी–( सानन्द )* जुत्त एव्व एद वाहिद अय्यस्स तहवि सन्तो णाम रसो णत्थित्ति गन्धव्वाअमदेसिएहिं समट्ठिज्जइ ता अट्ठ कह तारिसस्स रसस्स णिवेसो ।

*युक्तमेवैतत् व्याहृतमार्यस्य तथापि शान्तो नाम रसो नास्तीतिगन्धर्वाग मदेशिकैस्समर्थ्यते तस्मादत्र कथ तादृशस्य रसस्य निवेश ।

विरोधित्वेनोभय प्रनुयुङ्क्ते शकते । तत्र तयोर्मध्ये आदौ वेदान्तैकपरत्वे । अनुभवै कतानं अनुभव भगवद्गुणानुभव. । एकमद्वितीय तान स्थान यस्य तत्तथा । एव विधं मानस यस्य तत्तथा । अत्यन्तनिभृता निश्चला अवस्था यस्य स तथा । निबद्धार नाटकनिर्मातार अवधारयसि किं । अथापि ब्रूम ।

मन्वित्यादि–॥ मन्वादीनामत्यन्तभगवत्परत्वात तत्परिषदामपि तथा त्वं सिद्ध । तदर्हाभवत स्वरूपरूपगुणविभूतिप्रतिपादनात्तदर्हत्व । असौ अस्य कवेस्सूक्ति सुधासिक्तासुधयैवार्द्रीकृता सती । निरतिशयभोग्यता सती । क्वचित् अस्मादृशेपि जने स्वयमुदयमन्विच्छति । तदनुभवे अस्मादृशभागमेव हेतु । अत्राय दृष्टान्तः । विन्ध्याचलवत्विकटा विशाला यस्य सन्ध्या नटस्य सन्ध्यासु नटन कुर्वतो हरस्य जटा तस्या परिभ्रान्ता परिवर्त्तमाना गंगा पंगोरुपरि निपतति यदि । के निरुन्ध्यु नकोपि निरुन्ध्यादित्यर्थ ॥ १६ ॥

निध्यायतु भावयतु । तत् सरसि कस्याप्यस्य वाणी ललितं रूपकमपि करोतीत्यत्र दृष्टान्तमाह ।

गंभीरेति–॥ गिरि हिमालय तस्य खण्डनं भेद आदि शब्देन चालनं कथ्यते । तत्र गंभीरा भीषणा गतिश्च यस्यास्ते. रुद्रस्य चूडापद शिर घूर्णयन्ती भ्रामयन्ती । सुरस्रवन्ती सुरदीर्घिका वसुन्धराया स्वादूनि मधुराणि प्रसन्नानि च सलिलानि येषु तानि । स्रोतांसि प्रवाहान् न दर्शयति किं दर्शयत्येवेत्यर्थ. ॥ १७ ॥

एतद्द्वयमपि युज्यत इति भाव ।

गन्धर्वागमः भरतशास्त्रं तत्र देशिकैराचार्यैः तस्मात् तदनभिज्ञारात् ।

पशुपतिमतस्य वेदविरुद्धताख्यापनार्थं 'पत्युरसामञ्जस्या'दिति पुनरारम्भः। यद्यपि पाशुपतशैवयोर्वेदाविरोधिन इव केचन धर्मा प्रतीयन्ते, तथाऽपि वेदविरुद्धनिमित्तोपादानभेदकल्पनापरावरतत्त्वव्यत्ययकल्पनामूलत्वात्सर्वमसमञ्जसमेवेत्यसामञ्जस्यादित्युक्तम् ॥

पशुपत्यधिकरणं समाप्तम् ॥ ७ ॥

अथोत्पत्त्यसम्भवाधिकरणम् ८। **उत्पत्त्यसम्भवात् ॥ ३९ ॥**

कापिलादितन्त्रसामान्यात् भगवदभिहितपरमनिःश्रेयससाधनावबोधिन्यपि पञ्चरात्रतन्त्रेऽप्यप्रामाण्यमाशङ्क्य निराक्रियते ।

तत्रैवमाशङ्क्यते—परमकारणात्परब्रह्मभूताद्वासुदेवात्सङ्कर्षणो नाम जीवो जायते, सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते, तस्मादनिरुद्धसंज्ञोऽहङ्कारो जायत इति हि भागवतप्रक्रिया । अत्र जीवस्योत्पत्तिः श्रुतिविरुद्धा प्रतीयते, श्रुतयो हि जीवस्यानादित्वं वदन्ति "न जायते म्रियते वा विपश्चि"दित्याद्याः ।

**न च कर्त्तुः करणम् ॥ ४० ॥**

सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायत इति कर्त्तुर्जीवात्करणस्य मनस उत्पत्तिर्न सम्भवति, "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चे"ति परस्मादेव ब्रह्मणो मनसोऽप्युत्पत्तिश्रुतेः । अतः श्रुतिविरुद्धार्थप्रतिपादनादस्यापि तन्त्रस्य प्रामाण्यं प्रतिषिध्यत इत्येवं प्राप्ते प्रचक्ष्महे—

**विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४१ ॥**

'वा'-शब्दात्पक्षो विपरिवर्त्तते । विज्ञानं चादिश्चेति परं ब्रह्म विज्ञानादिः[1]। सङ्कर्षणप्रद्युम्नानिरुद्धानामपि परब्रह्मभावे सति तत्प्रतिपादनपरस्य शास्त्रस्य प्रामाण्यं न प्रतिषिध्यते ।

एतदुक्तं भवति—भागवतप्रक्रियामजानतामिदं चोद्यम्—यज्जीवोत्पत्तिर्विरुद्धाऽभिहितेति । वासुदेवाख्यं परं ब्रह्मैवाश्रितवत्सलं स्वाश्रित-

[1] आदीति पु० द्वयेपि ।

समाश्रयणीयत्वाय स्वेच्छया चतुर्धाऽवतिष्ठत इति हि तत्प्रक्रिया । यथा पौष्करसंहितायाम्—

"कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते ।
क्रमागतैः[1] स्वसंज्ञाभिर्ब्राह्मणैरागमं तु त" दित्यादि ।

तच्च चातुरात्म्योपासनं वासुदेवाख्यपरब्रह्मोपासनमिति सात्वतसंहितायामुक्तम्—

"ब्राह्मणानां हि सद्ब्रह्मवासुदेवाख्ययाजिनाम् ।
विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महत्" दिति ।

तद्धि वासुदेवाख्यं परं ब्रह्म सम्पूर्णषाड्गुण्यवपुः सूक्ष्मव्यूहविभवभेदभिन्नं यथाधिकारं भक्तैर्ज्ञानपूर्वेण कर्मणाऽभ्यर्चितं सम्यक् प्राप्यते । विभवार्चनाद्व्यूहं प्राप्य व्यूहार्चनात्परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यत इति वदन्ति । विभवो हि नाम रामकृष्णादिः प्रादुर्भावगणः, व्यूहो नाम[2] वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धरूपश्चतुर्व्यूहः, सूक्ष्मं तु केवलषाड्गुण्यविग्रहं वासुदेवाख्यं परं ब्रह्म । यथा पौष्करे—

"यस्मात्सम्यक् परं ब्रह्म वासुदेवाख्यमव्ययम् ।
अस्मादवाप्यते शास्त्राज् ज्ञानपूर्वेण कर्मणे" त्यादि ।

अतः सङ्कर्षणादीनामपि परस्यैव ब्रह्मणः स्वेच्छाविग्रहरूपत्वाद्[3] "ऽजायमानो बहुधा विजायत" इति श्रुतिसिद्धस्यैवाऽऽश्रितवात्सल्यनिमित्तस्वेच्छाविग्रहसंग्रहरूपजन्मनोऽभिधानात् तदभिधायिशास्त्रप्रामाण्यस्याप्रतिषेध इति ।

तत्र जीवमनोऽहङ्कारतत्त्वानां[4] मधिष्ठातारः सङ्कर्षणप्रद्युम्नानिरुद्धा इति तेषामेव जीवादिशब्दैरभिधानमविरुद्धम्, यथाऽऽकाशप्राणादिशब्दैर्ब्रह्मणोऽभिधानम् ।

१ क्रमागतैरिति लि० पु० ।
२ नामेति नास्ति लि० पु० ।
३ विचित्ररूपत्वादित्यधिकं लि० पु० ।
४ सत्वानामिति मु० पु० ।

## विप्रतिषेधाच्च ॥ ४२ ॥

विप्रतिषिद्धा हि जीवोत्पत्तिस्तस्मिन्नपि तन्त्रे । यथोक्तं परमसंहितायाम्—

"अचेतना परार्था च नित्या सततविक्रिया ।
त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते ॥
व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च ।
स ह्यनादिरनन्तश्च परमार्थेन निश्चित" इति ।

एवं सर्वास्वपि संहितासु जीवस्य नित्यत्ववचनाज्जीवस्वरूपोत्पत्तिः पञ्चरात्रतन्त्रे प्रतिषिद्धैव । जन्ममरणादिव्यवहारस्तु लोकवेदयोर्जीवस्य यथोपपद्यते, तथा 'नात्मा श्रुते'रित्यत्र वक्ष्यते । अतो जीवस्योत्पत्तिस्तत्रापि प्रतिषिद्धैवेति जीवोत्पत्तिवादनिमित्ताऽप्रामाण्यशङ्का दूरोत्सारिता ॥

यस्त्वेष केषाचिद्दूषोप', 'साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्य पञ्चरात्रशास्त्रमधीतवानिति साङ्गेषु वेदेषु पुरुषार्थनिष्ठा न लब्धेति वचनाद् वेदविरुद्धं तन्त्रमिति,—सोऽप्यनाघ्रातवेदवचसामऽनाकलिततदुपबृंहणन्यायकलापाना अज्ञामात्रविजृम्भितः । यथा

"प्रातः प्रातरनृतं ते वदन्ति
पुरोदयाज्जुह्वति येऽग्निहोत्रम्—

इत्यऽनुदितहोमनिन्दोदितहोमप्रशंसार्थेत्युक्तम्, यथा च भूमविद्याप्रक्रमे नारदेन "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चम"मित्यारभ्य सर्वं विद्यास्थानमभिधाय "सोऽहं भगवो मन्त्रविदेवास्मि नात्मवि"दिति भूमविद्याव्यतिरिक्तासु सर्वासु विद्यास्वाऽऽत्मवेदनाऽलाभवचनं वक्ष्यमाणभूमविद्याप्रशंसार्थं कृतम् । अथ वा, अस्य नारदस्य साङ्गेषु वेदेषु यत्परतत्त्वं प्रतिपाद्यते, तदलाभनिमित्तोऽयं वाद', एवमेव शाण्डिल्यस्य— इति पश्चाद्वेदान्तवेद्यवासुदेवाख्यपरब्रह्मतत्त्वाभिधानादवगम्यते । तथा वेदार्थस्य दुर्ज्ञानतया सुखा[1]वबोधार्थः शास्त्रारम्भः परमसंहितायामुच्यते—

१ स्वा—इति लि० पु० ।

"अधीता भगवन् वेदाः साङ्गोपाङ्गाः सविस्तराः ।
श्रुतानि च मयाऽङ्गानि वाकोवाक्ययुतानि च ॥
न चैतेषु समस्तेषु संशयेन विना क्वचित् ।
श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यतीति,

"वेदान्तेषु यथासारं संगृह्य भगवान्हरिः ।
भक्तानुकम्पया विद्वान् संचिक्षेप यथासुख"मिति च ।

अतः स भगवान्वेदान्तवेद्यः[1] परब्रह्माभिधानो वासुदेवो निखिलहेयप्रत्यनीककल्याणैकतानानन्तज्ञानानन्दाद्यऽपरिमितोदारगुणसागरः सत्यसङ्कल्पश्चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयाऽवस्थितान्धर्मार्थकाममोक्षाख्यपुरुषार्थाभिमुखान् भक्तानऽवलोक्याऽपारकारुण्यसौशील्यवात्सल्यौदार्यमहोदधिः स्वस्वरूपस्वविभूतिस्वाराधनतत्फलयाथात्म्यावबोधिनो वेदान् ऋग्यजुःसामाथर्वभेदभिन्नानऽपरिमितशाखान् विध्यर्थवादमन्त्ररूपान् स्वेतरसकलसुरनरदुरवगाहाँश्चावधार्य तदर्थयाथात्म्यावबोधि पञ्चरात्रशास्त्रं स्वयमेव निरमिमीतेति निरवद्यम् ॥

यत्तु परैः सूत्रचतुष्टयं कस्यचिद्विरुद्धांशस्य प्रामाण्यनिषेधपरं व्याख्यातम्, तत्सूत्राक्षरानऽनुगुणं सूत्रकाराभिप्रायविरुद्धं च । तथा हि, सूत्रकारेण वेदान्तन्यायाभिधायीनि सूत्राण्यभिधाय वेदोपबृंहणाय च भारतसंहितां शतसाहस्रिकां[2] कुर्वता मोक्षधर्मे ज्ञानकाण्डेऽभिहितम्—

"गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः" ॥—

इत्यारभ्य महता प्रबन्धेन पञ्चरात्रशास्त्रप्रक्रियां प्रतिपाद्य

'इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥
नवनीतं[3] यथा दध्नो द्विपदां ब्राह्मणो यथा ।

---

१ वेदैकवेद्य इति लि० पु० ।
२ शतसहस्रिकामिति क्वचित् । ३ नवनीतो—इति मु० पु० ।

आरण्यकं च वेदेभ्य ओषधिभ्यो यथाऽमृतम् ॥
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥
भविष्यति प्रमाणं वा एतदेवानुशासन''मिति ।

साङ्ख्ययोगशब्दाभ्यां ज्ञानयोगकर्मयोगावभिहितौ । यथोक्तम् "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनां''मिति ।

भीष्मपर्वण्यपि—

"ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः ॥
सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन य'' इति ।

कथमेवं ब्रुवाणो बादरायणो वेदविदग्रेसरो वेदान्तवेद्यपरब्रह्मभूतवासुदेवोपासनार्चनादिप्रतिपादनपरस्य सात्वतशास्त्रस्याप्रामाण्यं ब्रूयात् । ननु च

"साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने'' ॥—

इत्यादिना साङ्ख्यादीनामप्यादरणीयतोच्यते, शरीरके तु[1] साङ्ख्यादीनि प्रतिषिध्यन्ते । अत इदमपि तन्त्रं तत्तुल्यम् । नेत्युच्यते, यत,स्तत्रापीममेव शारीरकोक्तन्यायमवतारयति । किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वेति प्रश्नस्यायमर्थः—किं साङ्ख्ययोगपाशुपतवेदपञ्चरात्राणि एकतत्त्वप्रतिपादनपराणि पृथक्तत्त्वप्रतिपादनपराणि वा । यदैकतत्त्वप्रतिपादनपराणि, किं तदेकं तत्त्वम् ? यदा पृथक्तत्त्वप्रतिपादनपराणि, तदैषां परस्परविरुद्धार्थप्रतिपादनपरत्वाद्वस्तुनि विकल्पासम्भवाच्चैकमेव प्रमाणमङ्गीकरणीयम्, किं तदेकमिति । अस्योत्तरं ब्रुवन् "ज्ञानान्येतानि

१ तुस्थाने अपि. सु० पु० ।

राजर्षे विद्धि नानामतानि वै, साङ्ख्यस्य वक्ता कपिलः” इत्यारभ्य साङ्ख्ययोगपाशुपतानां कपिलहिरण्यगर्भपशुपतिकृतत्वेन पौरुषेयत्वं प्रतिपाद्य “अपान्तरतमा[1]नाम वेदाचार्यः स उच्यते” इति वेदानामपौरुषेयत्वमभिधाय “पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयं”मिति पञ्चरात्रतन्त्रस्य वक्ता नारायणः स्वयमेवेत्युक्तवान् । एवं वदतश्चायमाशयः—पौरुषेयाणां हि तन्त्राणां परस्परविरुद्धवस्तुवादितया अपौरुषेयत्वेन निरस्तप्रमादादिनिखिलदोषगन्धवेदवेद्यवस्तुविरुद्धाभिधायित्वाच्च यथावस्थितवस्तुनि प्रामाण्यं दुर्लभम् । वेदवेद्यश्च परब्रह्मभूतो नारायणः, अतस्तत्तन्त्राभिहितप्रधानपुरुषपशुपतिप्रभृतितत्त्वस्य वेदान्तवेद्यपरब्रह्मभूतनारायणात्मकतयैव वस्तुत्वमभ्युपगमनीयमिति । तदिदमाह च—

‘सर्वेषु च नृपश्रेष्ठ ! ज्ञानेष्वेतेषु दृश्यते ।
यथागमं यथा[2]न्यायं निष्ठा नारायणः प्रभु”रिति ।

यथागमं[3] यथान्यायमिति, न्यायानुगृहीतं तत्तदागमोक्तं वस्तु परामृशतो नारायण एव सर्वस्य वस्तुनो निष्ठेति दृश्यते । ब्रह्मात्मकतया तत्तत्तन्त्राभिहितानां तत्त्वानां “सर्वं खल्विदं ब्रह्म” “विश्वं नारायणः” इत्यादिना सर्वस्य ब्रह्मात्मकतामनुसन्दधानस्य[4] नारायण एव निष्ठेति प्रतीयत इत्यर्थः । अतो वेदान्तवेद्यः परब्रह्मभूतो नारायणः स्वयमेव पञ्चरात्रस्य कृत्स्नस्य वक्तेति तत्स्वरूपतदुपासनाभिधायि तत्तन्त्रमिति च तस्मिन्नितरतन्त्रसामान्यं न केनचिदुद्भावयितुं शक्यम् । अतस्तत्रैवेदमुच्यते—

एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यते” इति ।

साङ्ख्यं च[5] योगश्च साङ्ख्ययोगम्, वेदाश्च आरण्यकानि च वेदारण्यकम् । परस्पराङ्गान्ये[6]तान्येकतत्त्वप्रतिपादनपरतयैकीभूतान्येकं पञ्च

१ अवान्तरतपा इति मु० पु०, अवान्तरतमो—इति लि० पु० ।
२ तथेति लि० पु० प्रमादः । ३ यथागममिति नास्त्यत्र लि० पु० ।
४ चकारोऽधिकः मु० पु० । ५ साङ्ख्यश्चेति मु० पु० ।
६ परस्परान्वितानीति लि० पु० ।

रात्रमिति कथ्यते । एतदुक्तं भवति–साङ्ख्योक्तानि पञ्चविंशतितत्त्वानि, योगोक्तं च यमनियमाद्यात्मकं योगं, वेदोदितकर्मस्वरूपाण्यङ्गीकृत्य तत्त्वानां ब्रह्मात्मकत्वं, योगस्य च[1] ब्रह्मोपासनप्रकारत्वं, कर्मणां च तदाराधनरूपतामभि[2]दधति ब्रह्मस्वरूपं प्रतिपादयन्त्यारण्यकानि, एतदेव परेण ब्रह्मणा नारायणेन स्वयमेव पञ्चरात्रतन्त्रे विशदीकृतमिति । शारीरके च साङ्ख्योक्ततत्त्वानामब्रह्मात्मकतामात्रं निराकृतं, न स्वरूपम् । योगपाशुपतयोश्चेश्वरस्य केवलनिमित्तकारणतापरावरतत्त्वविपरीतकल्पना वेदबहिष्कृताऽऽचारो निराकृतौ, न योगस्वरूपं पशुपतिस्वरूपं च । अतः

"साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभि"रिति–

तत्तदभिहिततत्त्वस्व[3]रूपमात्रमङ्गीकार्य्यं, जिनसुगताभिहिततत्त्ववत्सर्वं न बहिष्कार्य्यमित्युच्यते, 'यथाऽऽगमं यथा[4]न्यायं निष्ठा नारायणः प्रभु"रित्यनेनैकार्थ्यात् ॥

उत्पत्त्यसम्भवाधिकरणं समाप्तम् ॥ ८ ॥

इति श्रीमद्भगवद्रामानुजाचार्य्यचरणकृतौ शारीरकमीमांसाभाष्ये ऽविरोधाख्यस्य द्वितीयाध्यायस्य द्वितीयस्तर्कपादः ॥ २ ॥

---

१ योगस्य चेति लि० पु० । २ ०ताञ्चाभीति लि० पु० ।
३ ०हिततत्तत्स्वेति मु० पु० । ४ तथेति लि० पु० पुनरपि ।

# अथ द्वितीयाध्यायस्य तृतीयः पादः ॥

अथ वियदधिकरणम् १। **न वियदश्रुतेः ॥ १ ॥**

साङ्ख्यादिवेदबाह्यतन्त्राणां न्यायाभासमूलतया वि[1]प्रतिषेधाच्चा ऽसामञ्जस्यमुक्तम् । इदानीं स्वपक्षस्य विप्रतिषेधादिदोषगन्धाभावख्यापनाय ब्रह्मकार्य्यतयाऽभिमतचिदचिदात्मकप्रपञ्चस्य कार्यताप्रकारो विशोध्यते ।

तत्र वियदुत्पद्यते न वेति संशय्यते। किं युक्तम् । 'न विय'दुत्पद्यत इति । कुतः । 'अश्रुतेः' । सम्भावितस्य हि श्रवणसम्भवः, असम्भावितस्य तु गगनकुसुमवियदुत्पत्त्यादेः शब्दाभिधेयत्वं न सम्भवति । न खलु निरवयवस्य सर्वगतस्याकाशस्यात्मन इव उत्पत्तिर्निरूपयितुं शक्यते । अत एव चोत्पत्त्यसम्भवाच्छान्दोग्ये सृष्टिप्रकरणे तेजःप्रभृतीनामेवोत्पत्तिराम्नायते "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत"ति । तैत्तिरीयका[2]थर्वणादिषु "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, खं वायुर्ज्योतिरापः" इत्यादिषु श्रूयमाणा वियदुत्पत्तिर्र्थविरोधाद्बाध्यत इत्येवं प्राप्तेऽभिधीयते–

**अस्ति तु ॥ २ ॥**

अस्ति त्वाकाशस्योत्पत्तिः । अतीन्द्रियार्थविषया हि श्रुतिः प्रमाणान्तराप्राप्तामपि वियदुत्पत्तिं प्रतिपादयितुं समर्थैव । न च श्रुतिप्रतिपन्नेऽर्थे तद्विरोधिनिरवयवत्वादिहेतुकमनुत्पत्त्यनुमानमुदेतुमलम् । आत्मनोऽप्यऽनुत्पत्तिर्न निरवयवत्वप्रयुक्तेति वक्ष्यते ।

पुनश्चोदयति–

**गौण्यऽसम्भवाच्छब्दाच्च ॥ ३ ॥**

---

१ वीति नास्ति लि० पु० ।
२ तैत्तिरीयिकेति मु० पु० ।

"तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्यादिवियदुत्पत्तिश्रुतिर्गौणीति कल्पयितु युक्तम्, "तत्तेजोऽसृजते"ति सिसृक्षोर्ब्रह्मणः प्रथम तेज उत्पद्यत इति तेजउत्पत्तिप्राथम्येन वियदुत्पत्तिप्रतिपादनासम्भवात्, "वायुश्चान्तरिक्ष चैतदमृत"मिति वियतोऽमृतत्वशब्दाच्च ।

कथमेकस्य सम्भूतशब्दस्याकाशापेक्षया गौणत्व,मग्न्याद्यपेक्षया मुख्यत्वमिति चेत्—तत्राह—

**स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥**

एकस्यैव "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्याकाशे मुख्यत्वासम्भवात् गौणतया प्रयुक्तस्य 'सम्भूत'—शब्दस्य वायोरग्निरित्यादिष्वनुषक्तस्य[1] मुख्यत्व स्यादेव । 'ब्रह्मशब्दवत्,' यथा 'ब्रह्म'—शब्द"स्तस्मादेतद्ब्रह्म† नाम रूपमन्न च जायत" इत्यत्र प्रधाने गौणतया प्रयुक्त,स्तस्मिन्नेव प्रकरणे "तपसा चीयते ब्रह्म † ततोऽन्नमभिजायत" इति ब्रह्मणि मुख्यतया प्रयुज्यते, तद्वत् । अनुषङ्गे च श्रवणावृत्ताविवाभिधानावृत्तिर्विद्यत एवेत्यर्थः ।

परिहरति—

**प्रतिज्ञाऽहानिरव्यतिरेकात् ॥ ५ ॥**

छान्दोग्यश्रुत्यनुसारेणान्यासा वियदुत्पत्तिवादिनीना श्रुतीना गौणत्वं कल्पयितुं न युज्यते, यतश्छान्दोग्यश्रुत्यैव[2] वियदुत्पत्तिरङ्गीकृता, "येनाश्रुत श्रुत"मित्यादिना ब्रह्मज्ञानेन सर्वज्ञानप्रतिज्ञानात् । तस्या हि प्रतिज्ञाया अहानिराकाशस्यापि ब्रह्म[3]कार्यत्वेन तदव्यतिरेकादेव भवति ।

**शब्देभ्यः ॥ ६ ॥**

इतश्च वियदुत्पत्तिश्छान्दोग्ये प्रतीयते । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मिति प्राक् सृष्टेरेकत्वावधारणशब्दा,दैतदात्म्यमिद

---

१ अनुक्तस्येति लि० पु० । †† एतच्चिह्नान्तर्गत पाठो लि० पु० त्रुटित ।
२ एतच्छान्दोग्ये श्रुतैवेति लि० पु० । ३ ब्रह्मेति नास्ति लि पु

सर्व"मित्येवमादिशब्देभ्यश्च कार्य्यत्वेन ब्रह्मणो ऽव्यतिरेकप्रतीतेः । न च "तत्तेजोऽसृजते"ति तेजस उत्पत्ति[1]श्रुतिर्वियदुत्पत्तिं वारयति । वियदुत्पत्त्यवचनमात्रेण तेजसः प्रतीयमान प्राथम्य श्रुत्यन्तरप्रतिपन्ना वियदुत्पत्ति न निवारयितुमलम् ।

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

'तु'-शब्दश्चार्थे । "एतदात्म्यमिदं सर्व"मित्यादिभिराकाशस्य विकारत्व[2]वचनेन तस्याकाशस्य ब्रह्मणो[3] विभाग उत्पत्तिरप्युक्तैव । 'लोकवत्', यथा लोके एते[4] सर्वे देवदत्तपुत्रा इत्यभिधाय तेषु केषाचित् तत उत्पत्तिवचनेन सर्वेषामुत्पत्तिरुक्ता स्यात्, तद्वत् । एवं च सति "वायुश्चान्तरिक्ष चैतदमृत"मिति सुराणामिव चिरकालस्थायित्वाभिप्रायम् ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

अनेनैव हेतुना मातरिश्वनो वायोरप्युत्पत्तिर्व्याख्याता । वियन्मातरिश्वनोः पृथग्योगकरणं 'तेजोऽतस्तथा ह्याहे'ति मातरिश्वनः परामर्शार्थम्[5] ।

## असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

'तु'-शब्दोऽवधारणार्थः । असम्भवो ऽनुत्पत्तिः सतो ब्रह्मण एव, तद्व्यतिरिक्तस्य कस्यचिदनुत्पत्तिर्न सम्भवति । 'अनुपपत्तेः' । एतदुक्तं भवति—वियन्मातरिश्वनोरुत्पत्तिप्रतिपादनमुदाहरणार्थम्, उत्पत्त्यसम्भवस्तु सतः परमकारणस्य परस्यैव ब्रह्मणः । तद्व्यतिरिक्तस्य कृत्स्नस्याव्यक्तमहदहङ्कारतन्मात्रे न्द्रियवियत्पवनादिकस्य[6] प्रपञ्चस्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिभिरव[7]गतकार्य्यभावस्यानुत्पत्तिर्नोपपद्यत इति ॥

वियदधिकरणं समाप्तम् ॥ १ ॥

१ ब्रह्मणो व्यति॰ तेजउत्पत्तीति लि पु ।
२ त्वेति नास्ति लि पु । ३ ब्रह्मणोऽपीति मु पु ।
४ एत इति नास्ति लि पु
५ तेजो ततस्तथा ह्याहेति मातरिश्वपरामर्शार्थमिति लि॰ पु॰ ।
६ ०न्द्रियविषयत्ववचनादिकस्येति लि पु प्रमाद ।
७ स्वेति लि पु प्रमाद ।

अथ तेजोऽधिकरणम् २। **तेजोऽतस्तथा ह्याह ॥ १० ॥**

ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ब्रह्मकार्य्यत्वमुक्तम्। इदानीं व्यवहितकार्य्याणां किं केवलात्तत्तदनन्तरकारणभूताद्वस्तुन उत्पत्तिराऽऽहो स्वित् तत्तद्रूपाद्ब्रह्मण इति चिन्त्यते। किं युक्तम्। केवलात्तत्तद्वस्तुन इति। कुतः। 'तेजस्तावदऽतो मातरिश्वन एवोत्पद्यते, "वायोरग्नि"रिति ह्याह[1]।

**आपः ॥ ११ ॥**

आपोऽपि अतः–तेजस एवोत्पद्यन्ते, "अग्नेराप." "तदपोऽसृजत"–इति ह्याह[2]।

**पृथिवी ॥ १२ ॥**

पृथिव्यऽद्भ्य उत्पद्यते, "अद्भ्य पृथिवी" 'ता अन्नमसृजन्ते'ति ह्याह।

नन्व'न्न'–शब्देन कथं पृथिव्यभिधीयते, तत्राह[3]–

**अधिकाररूपशब्दान्तरेभ्यः ॥ १३ ॥**

महाभूतसृष्ट्यधिकारात्पृथिव्येवा[4]'न्न'–शब्देनोक्तेति प्रतीयते। अदनीयस्य सर्वस्य पृथिवीविकारत्वात्कारणे कार्य्यशब्द.। तथा वाक्यशेषे भूताना रूपसशब्दने[5] "यदग्ने रोहितं रूपं तेजसस्तद्रूप यच्छुक्लं तदपा यत् कृष्णं तदन्नस्ये"त्यप्तेजसोः सजातीयमेवा'न्न'–शब्दवाच्य प्रतीयते। शब्दान्तरं च समान[6]प्रकरणे "अग्नेरापः अद्भ्यः पृथिवी"ति श्रूयते। अतः पृथिव्येवान्नशब्देनोच्यत इत्यद्भ्य एव पृथिवी जायते। उदाहृतास्तेजःप्रभृतयः प्रदर्शनार्था, महदादयोऽपि हि स्वानन्तरवस्तुन एवोत्पद्यन्ते, यथाश्रुत्य[7]भ्युपगमाविरोधात्।

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिराप. पृथिवी विश्वस्य धारिणी'॥

१ ०रित्याहेति लि पु। २ इत्याहेति मु पु।
३ अत आहेति लि॰ पु॰। ४ एव शब्दो नास्ति लि पु।
५ वाक्यशेषभूताना रूपसशब्देनेति लि पु।
६ समानमिति लि पु। ७ ०द्यन्तेत्याश्रुत्य–इति लि पु प्रमाद।

"तस्मादेतद्ब्रह्म नामरूपमन्नं च[1] जायते" ।
"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "तत्तेजोऽसृजत"त्यादयो ब्रह्मणः परम्परया कारणत्वेऽप्युपपद्यन्त इत्येवं प्राप्ते प्रचक्ष्महे—

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १४ ॥

'तु'-शब्दात् पक्षो व्यावृत्तः । महदादिकार्याणामपि तत्तदनन्तरवस्तुशरीरकः स एव पुरुषोत्तमः कारणम् । कुतः । तदभिध्यानरूपात्तल्लिङ्गात् । अभिध्यानं 'बहु स्या'मिति सङ्कल्पः । "तत्तेज ऐक्षत बहु स्यां प्रजायेयेति" "ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमही"[2]त्यात्मनो बहुभवनसङ्कल्परूपेक्षणश्रवणान्महदहङ्काराकाशादीनामपि कारणानां तथाविधेऽपूर्विकैव[3] स्वकार्य्यसृष्टिरिति गम्यते । तथाविधं चेक्षणं तत्तच्छरीरकस्य परस्यैव ब्रह्मण उपपद्यते । श्रूयते च सर्वशरीरकत्वेन सर्वात्मकत्वं परस्य ब्रह्मणोऽन्तर्यामिब्राह्मणे "यः पृथिव्यां तिष्ठन्, योऽप्सु तिष्ठन्, यस्तेजसि तिष्ठन्, यो वायौ तिष्ठन्, य आकाशे तिष्ठ"न्नित्यादि, सुबालोपनिषदि च "यस्य पृथिवी शरीर"मित्यारभ्य "यस्याहङ्कारः शरीरं, यस्य बुद्धिः शरीरं, यस्याव्यक्तं शरीर"मित्यादि ।

यच्चोक्तम् "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे"त्यादिषु श्रूयमाणा[4] ब्रह्मणः प्राणादिसृष्टिः परम्परयाऽप्युपपद्यत इति । अत्रोच्यते—

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १५ ॥

'तु'-शब्दोऽवधारणार्थः । अव्यक्तमहदहङ्काराकाशादिक्रमाद्विपर्ययेण यः सर्वेषां कार्य्याणां ब्रह्मानन्तर्यरूपः क्रमः "एतस्माज्जायते प्राण" इत्यादिषु प्रतीयते, स च क्रमस्तत्तद्रूपाद्ब्रह्मणस्तत्तत्कार्य्योत्पत्तेरेवोपपद्यते, परम्परया कारणत्वे ह्यानन्तर्यश्रवणमुपरुध्येत । अत[5] "एतस्माज्जायत" इत्यादिक्रमपि सर्वस्य ब्रह्मणः साक्षात्सम्भवोत्तम्भनम् ।

१ ०मन्नं चत्वर्मिति लि पु । २ बहुस्याम प्रजायमहीति लि पु प्रमादः ।
३ सङ्कल्पेति लि० पु ऽत्राधिकं न तु युक्तम् ।
४ श्रूयते प्राणा इति लि पु । ५ अत इति लि पु नास्ति ।

## अन्तरा विज्ञानमनसी[1] क्रमेण तल्लिङ्गादिति चे,न्ना, ऽविशेषात् ॥ १६ ॥

विज्ञानसाधनत्वादिन्द्रियाणि विज्ञानमित्युच्यन्ते[2] । यदुक्तं "मेतस्माज्जायत" इत्यादिना सर्वस्य ब्रह्मणोऽनन्तरकार्य्यत्वं श्रूयते । अतश्चानेन वाक्येन सर्वस्य साक्षाद्ब्रह्मण उत्पत्तिरभिध्यानलिङ्गावगतोत्तम्यत इति । तन्नोपपद्यते, क्रमविशेषपरत्वादस्य वाक्यस्य, अत्रापि सर्वथा क्रमप्रतीतेः । खादिषु तावच्छ्रुत्यन्तरसिद्धः क्रमोऽत्रापि प्रतीयते । तै सहपाठलिङ्गात् भूतप्राणयोरन्तराले विज्ञानमनसी अपि क्रमेणोत्पद्येते इति प्रतीयते । अतः सर्वस्य साक्षाद्ब्रह्मण एव सम्भवस्योत्तम्भकमिदं वाक्यं न भवतीति चे,न्न, 'अविशेषात्' "एतस्माज्जायते प्राण" इत्यनेनाविशेषात् । विज्ञानमनसोः खादीनां चै'तस्माज्जायत' इत्यनेन साक्षात्सम्भवरूपसम्बन्धस्याभिधेयस्य सर्वत्र प्राणादिपृथिव्यन्तानामविशिष्टत्वात्स एव विधेयो न क्रमः । श्रुत्यन्तरसिद्धक्रमविरोधाच्च नेदं क्रमपरम्, "पृथिव्यप्सु प्रलीयत" इत्यारभ्य "तम एकीभवती" त्यन्तेन क्रमान्तरप्रतीते । अतोऽव्यक्तादिशरीरकात् परस्माद्ब्रह्मण एव सर्वकार्याणामुत्पत्तिः । तेज प्रभृतयश्च[3] शब्दास्तदात्मभूतं ब्रह्मैवाभिदधति ।

नन्वेवं सर्वशब्दानां ब्रह्मवाचित्वे सति तैस्तैश्शब्दैस्तत्तद्वस्तुव्यपदेशो व्युत्पत्तिसिद्ध उपरुध्यते, तत्राह–

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोभाक्तस्तद्भावभावित्वात् ॥ १७ ॥

'तु'-शब्दश्चोदिताशङ्कानिवृत्त्यर्थः । निखिलजङ्गमस्थावरव्यपाश्रयस्तत्तच्छब्दव्यपदेशो भाक्त, वाच्यैकदेशे भज्यत इत्यर्थः । समस्तवस्तुप्रकारिणो ब्रह्मणः प्रकारभूतवस्तुग्राहिप्रत्यक्षादिप्रमाणाविषयत्वाद्वेदान्तश्रवणात्प्राक् प्रकार्य्यऽप्रतीतेः, प्रकारिप्रतीतिभावभावित्वाच्च तत्पर्य्यवसानस्य, लौके

१ ०मनसि–इति लि पु ।
२ मित्युच्यत इति लि पु । ३ चेति नास्ति लि॰ पु॰ ।

तत्तद्वस्तुमात्रे वाच्यैकदेशे[1] तेते शब्दा भक्त्वाभक्त्वा[2]व्यपदिश्यन्ते। अथ वा, तेज:प्रभृतिभिः शब्दैस्तत्तद्वस्तुमात्रवाचितया व्युत्पन्नै[3]र्ब्रह्मणो व्यपदेशो भाक्त: स्यात् अमुख्य: स्यादित्याशङ्क्य चराचरव्यपाश्रय इत्याद्युच्यते। चराचरव्यपाश्रयस्तद्व्यपदेशस्तद्वाचिशब्दश्चराचरवाचिशब्दो ब्रह्मण्यऽभाक्तो मुख्य एव। कुत। ब्रह्मभावभावित्वात्[4]सर्वशब्दानां वाचकभावस्य। नामरूपव्याकरणश्रुत्या हि[5]तथाऽवगतम् ॥

तेजोऽधिकरणं समाप्तम् ॥ २ ॥

अथाऽऽत्माधिकरणम् ३। **नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥**

वियदादेः कृत्स्नस्य परस्माद्ब्रह्मण उत्पत्तिरुक्ता। इदानीं जीवस्याप्युत्पत्तिरस्ति नेति संशय्यते। किं युक्तम्। अस्तीति। कुत:। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेः, प्राक्सृष्टेरेकत्वावधारणाच्च। वियदादेरिव जीवस्याप्युत्पत्तिवादिन्यः श्रुतयश्च सन्ति–

"यत: प्रसूता जगत: प्रसूति-
स्तोयेन[6] जीवान् विससर्ज[7] भूम्याम्"

"प्रजापतिः प्रजा असृजत" "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" "यतो वा इमानि भूतानि जायन्ते" इति। एवं सचेतनस्य जगत उत्पत्तिवचनाज्जीवस्याप्युत्पत्तिः प्रतीयते। न च वाच्यम्-ब्रह्मणो नित्यत्वा[8]"त्तत्त्वमस्या"दिभिर्जीवस्य ब्रह्मत्वावगमाज्जीवस्य नित्यत्वमिति, "ऐतदात्म्यमिदं सर्वं" "सर्वं[9]खल्विदं ब्रह्मे"त्येवमादिभिर्वियदादेरपि ब्रह्मत्वावगमात्तस्यापि नित्यत्वप्रसक्तेः। अतो जीवोऽपि वियदादिवदुत्पद्यत इत्येवं प्राप्तेऽभिधीयते–

१ वाच्यैकदेश इति लि॰ पु। २ शब्दा भात्त्वा–इति लि पु।
३ ०मात्र च वाचितया व्युत्पन्ने–इति लि पु।
४ ०भावभावितत्वादिति मु पु। ५ श्रुत्यादि–इति लि पु।
६ प्रसूतिरतोयेनेति लि पु शोधित, न तु युक्तम।
७ व्यससर्जेति लि पु॰। ८ नित्यत्ववदिति लि॰ पु।
९ सर्वमिति सकृदेव लि पु।

'नात्मा श्रुते'रिति । नात्मोत्पद्यते । कुतः । 'श्रुतेः', "न जायते म्रियते वा विपश्चित्" "ज्ञाज्ञौ द्वावजावीशनीशा"[1]वित्यादिभिर्जीवस्योत्पत्तिप्रतिषेधो हि श्रूयते । आत्मनो नित्यत्वं च ताभ्यः श्रुतिभ्य एवावगम्यते ।

'नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान्"
"अजो नित्यः शाश्वतो ऽयं पुराणो
न हन्यते हन्यमाने शरीरे" इत्यादिभ्यः ।

तत[2]श्च नात्मोत्पद्यते । कथं तर्ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपद्यते । इत्थमुपपद्यते, जीवस्यापि कार्य्यत्वात्कारणकार्य्ययोरनन्यत्वाच्च । एवं तर्हि वियदादिवदुत्पत्तिमत्त्वमङ्गीकृतं स्यात् । नेत्युच्यते, कार्य्यत्वं हि नामैकस्य द्रव्यस्यावस्थान्तरापत्तिः, तज्जीवस्याप्यस्त्येव । इयांस्तु विशेषः, वियदादेरचेतनस्य यादृशोऽन्यथाभावो न तादृशो जीवस्य । ज्ञानसङ्कोचविकासलक्षणो[3] जीवस्यान्यथाभावः, वियदादेस्तु स्वरूपान्यथाभावलक्षणः । सेयं स्वरूपान्यथाभावलक्षणोत्पत्तिर्जीवे प्रतिषिध्यते । एतदुक्तं भवति—भोग्यभोक्तृनियन्तॄन् विविक्तस्वभावान् प्रतिपाद्य, भोग्यगतमुत्पत्त्यादिकं भोक्तरि प्रतिषिध्य, तस्य नित्यतां च प्रतिपाद्य, भोग्यगतमुत्पत्त्यादिकं भोक्तृगतं चापुरुषार्थाश्रयत्वं नियन्तरि प्रतिषिध्य, तस्य नित्यत्वं निरवद्यत्वं सर्वदा सर्वज्ञत्वं सत्यसङ्कल्पत्वं करणाधिपाधिपत्वं विश्वस्य पतित्वं च प्रतिपाद्य, सर्वावस्थयोश्चिदचितोस्तं प्रति शरीरत्वं तस्य चात्मत्वं प्रतिपादितम् । अतस्सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म[4] कदाचित्स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचि-

१ द्वावजाविति लि॰ पु, द्वावजावीशनीशानीशाविति मु॰ पु॰ ।
२ अत इति मु॰ पु॰ ।
३ ०सङ्कोचविकारलक्षणा इति मु॰ पु॰ ।
४ तदित्यधिकमत्र लि॰ पु॰ ।

द्वस्तुशरीरं तिष्ठति, तत्कारणावस्थं ब्रह्म। कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरम्, तच्च कार्य्यावस्थम्। तत्र कारणावस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया[1] स्वरूपान्यथाभावरूपविकारो भवति, चिदंशस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति। उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति। कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः। अत एवैकस्यावस्थान्तरापत्तिरूपविकारापेक्षया "येनाश्रुतं श्रुत"मित्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तो "यथा सोम्यैकेने"त्यादिना नि[2]दर्शितः। ईदृश[3]ज्ञानसङ्कोचविकासकरतत्तद्देहसम्बन्धवियोगाभिप्राया जीवस्योत्पत्तिमरणवादिन्यः "प्रजापतिः प्रजा असृजते"त्याद्याः श्रुतयः, अचिदंशवत्स्वरूपान्यथात्वाभावाभिप्राया उत्पत्तिप्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च "न जायते म्रियते"इत्याद्याः। "नित्यो नित्याना"मित्याद्याश्च श्रुतयः स्वरूपान्यथात्वज्ञानसङ्कोचविकासरूपोभयविधानिष्टविकाराभावाभिप्रायाः। "स वा[4] एष महानज आत्माऽजरोऽमरोऽमृतो ब्रह्म" "नित्यो नित्याना"मित्याद्याः परविषयाः श्रुतयः। एवं सर्वदा चिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणं च नामरूपविभागाभावादुपपद्यते। "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते"ति हि[5] नामरूपविभागभावाभावाभ्यां[6] नानात्वैकत्वे च वदन्तीति।

ये त्वविद्योपाधिकं जीवत्वं[7] वदन्ति, ये च पारमार्थिकोपाधिकृतम्, ये च सन्मात्रस्वरूपं ब्रह्म स्वयमेव भोक्तृभोग्यनियन्तृरूपेण

१ भोगत्वाय शब्दाचिन्मतयेत्यपभ्रंशो लि पु।
२ नीति नास्ति लि पु। ३ यादृशेति लि पु।
४ सह–इति लि पु प्रमादः।
५ व्याक्रियते हि–इति लि पु, व्याक्रियते इति हीति सु पु।
६ विभागाभावाभावाभ्यामिति लि पु।
७ ०पाधिकत्वं जीवत्वमिति लि पु।

निबन्धनप्रवृत्तिः पुरुषार्थः। तत्र कस्य क्रतुविधितो ऽनुष्ठानं, कियत्यनुष्ठापनव्यापारः क्रतुविधेः, कस्य वा ऽनपेक्षिततद्विधिनिमित्तान्तरतः पुरुषस्येति प्रयोजकाऽप्रयोजकचिन्ता ऽपि क्रत्वनुष्ठानविधिव्यापारपरिमाणमवधार्य्यते ।

तथा हि। आमिक्षार्थत्वेन चातुर्म्मास्यप्रयोगविधिर्द्द-

नाऽनुष्ठानः क्रत्वर्थः । पुरुषेच्छानिबन्धनप्रवृत्तिः पुरुषार्थः । क्रतुना हि विधिविषयेण विषयी विधिरुपलक्ष्यते तेनार्थ्यमानानि अनुष्ठाप्यमानानीति तस्यार्थः । ततो विध्यधीनाऽनुष्ठानो भवति क्रत्वर्थः । एवं पुरुषेणापि स्वसंबन्धे निमित्तान्तरं वा विधेरन्यदुपलक्ष्यते तेनार्थ्यमानान्यनुष्ठाप्यमानानीति तस्यार्थः । ततः पुरुषेच्छानिबन्धनप्रवृत्तिः पुरुषार्थः ।

सूत्रपदार्थं व्याख्याय चिन्तायास्तदारूढतामाह—तत्र कस्य क्रतुविधितो ऽनुष्ठानम्? । एतदेव स्फोरयति—कियत्यङ्गजाते ऽनुष्ठापनव्यापारः क्रतुविधेः कस्य वा ऽनपेक्षिततद्विधिनिमित्तान्तरतः पुरुषस्याऽनपेक्षितता । तद्विधिविषयं निमित्तान्तरं पुरुषसंबन्धि तस्मात् । अतो न प्रतिज्ञासूत्रव्याघात इत्यर्थः । ननु मा भूत्प्रतिज्ञासूत्रव्याघातः, प्रयोजकाऽप्रयोजकचिन्ता त्वनुष्ठानगताङ्गपरिमाणचिन्तया कथं न विरुध्यते? इत्यत आह—प्रयोजकाऽप्रयोजकचिन्तयापि क्रत्वर्थाऽनुष्ठानविधिव्यापारपरिमाणमेवाऽवधार्यते । क्रत्वनुष्ठाने यो विधिः तस्येयति व्यापारो नेयतीति व्यापारपरिमाणं, तदेवाऽवधार्यते इत्यर्थः । तदवधारणमेव सोपपत्तिकमुदाहरति—तथा हीति । चातुर्मास्येषु वैश्वदेवे समाम्नायते । तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति । तत्रैते द्वे कर्मणी एकत्राऽऽमिक्षा हविर्विश्वेदेवा देवता, अन्यत्र तु हविर्वाजिनं वाजिनो

**ध्यानयनमनुष्ठापयति न वाजिनार्थतया, तदर्थाऽनुनिष्पन्नस्यैव तदनुप्रवेशित्वात् ।**

देवता । इह हि दध्यानयनमवगत, तच संशयः । किमयं चातुर्मास्यप्रयोगविधिरुभयार्थमपि दध्यानयनं प्रयोजयति, आहो स्विदामिक्षार्थमेवेति । तदर्थमयं कारणसंशयः किमामिक्षा दधिसंयुक्तं पय एव, किं वाऽर्थान्तरं पयस इति । किं प्राप्तम् ? रूपसंस्थानव्यपदेशलिङ्गभेदात्सत्यपि च सर्वनाम्नोऽथैष ज्योतिरितिवद्दृव्यमात्रापेक्षयाऽप्युपपत्तेर्वाजिनवदर्थान्तरमामिक्षा दधिसंयुक्तात्पयसः । दध्यानयनात्पुनरेतदुभयमपि वाजिनमामिक्षा च निष्पद्यते । द्वयमपि च चातुर्मास्यप्रयोगवचनगृहीतकर्मद्वयसाधनमिति मिथुनमपि चातुर्मास्यविधिरविशेषेण प्रयोजयतीति प्राप्तम् । एवं प्राप्तेऽभिधीयते । आमिक्षार्थत्वेन चातुर्मास्यप्रयोगविधिर्दध्यानयनमनुष्ठापयति, न वाजिनार्थतया तदर्थाऽनुनिष्पन्नस्यैव तदनुप्रवेशित्वात् । अयमभिसन्धिः । स्यादेतदेवं यद्यामिक्षा द्रव्यं न क्षीरजातीयकं भवेत्, सत्यपि तु रूपादिभेदे रसतः पयस्त्वजातेः प्रत्यभिज्ञायमानत्वात् । आमिक्षापयोरूपसंस्थानव्यङ्ग्या हि जातिस्तद्भेदे भिद्यते । इयं पुना रसविशेषव्यङ्ग्येति तद्भेदाऽभेदानुविधायिनौ भेदाभेदौ भवितुमर्हतः । अत एव सत्यपि वारिसौवीरयो रूपाद्यभेदे रसभेदाज्जातिभेदमध्यवस्यन्ति, शृतयोश्च पयसोः सान्द्रसान्द्रतरयोरपि रसतः प्रत्यभिज्ञानादभिन्नजातीयतामवधारयन्ति लौकिकाः । एकजातीयत्वेऽपि च लिङ्गादिभेदोपपत्तिस्तथा चाऽऽमिक्षा पय इति पयो वैश्वदेवं वैश्वदेवे पयसि च दध्यानयनं विनियुक्तमित्यामिक्षायां विनियुक्तं, विनियोगानुसारी च प्रयोग इति चातुर्मास्यप्रयोगविधिरामिक्षार्थत्वेन दध्यानयनमनुष्ठापयति, न वाजिनार्थत्वेन । तस्य भिन्नरसतया पयःप्रत्यभिज्ञानाऽनास्पदतया जात्यन्तरस्य दध्यानयविनि-

**एवं क्रयार्थानयननान्तरीयकस्य सप्तमस्य पदस्य। तथा पुरोडाशशेषस्यैव कपालस्य तुषोपवापमुखेन तत्संस्पर्शात्**

योगगोचरत्वात्। आमिक्षार्थदध्यानयनमनुनिष्पन्नस्य तस्य तदनुप्रवेशित्वात् न पृथक् प्रयुक्तिरिति चातुर्मास्यविध्यनुष्ठापनव्यापारपरिमाणमेव तेन सिद्धं भवति।

उदाहरणान्तरं समुच्चिनोति–एवमिति। ज्योतिष्टोमे श्रूयते। अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति, षट्पदान्यनुनिष्क्रामति सप्तमं पदं गृह्णाति। यदि हविर्धाने प्रवर्तयेयुः तर्हि तेनाक्षमुपाञ्ज्युरिति। तत्र सन्देहः। सोऽयं ज्योतिष्टोमप्रयोगविधिः क्रयार्थं चाञ्जनसाधनसप्तमपदपांसुग्रहणार्थं च किमेकहायन्यानयनमनुष्ठापयति, अथ क्रयार्थमेवेति। किं प्राप्तम्? एकहायन्यानयनादुभयनिष्पत्तेः षट्पदान्यनुनिष्क्रामतीत्यस्य क्रयवचनं पदपांसुवचनं चान्तरा समाम्नानादुभयत्र विनियोगाऽविशेषादुभयार्थः प्रयोजक इति प्राप्ते उच्यते। क्रयार्थाऽऽनयननान्तरीयकस्य सप्तमपदस्य तदनुप्रवेशित्वादिति पूर्वेण पृथगनुष्ठानमिति च परेण सम्बन्धः। एतदुक्तं भवति। सिध्येदयं मनोरथो यदि पांसुग्रहणवाक्ये निरपेक्षैकहायनी श्रूयेत। किं तु एकहायन्या सोमं क्रीणातीत्येतद्वाक्यगतायास्तस्याः सन्निधानात् बुद्धौ विपरिवर्तमानायाः पांसुग्रहणवाक्येन सम्बन्ध उपजीवनीयः। सन्निहिता च सोमक्रयार्थेमिति तन्नान्तरीयकतया सप्तमस्य पदस्य क्रयार्थानयनाऽनुप्रवेशित्वान्न पृथगनुष्ठानं ज्योतिष्टोमविधिना प्रयुज्यते इति विध्यनुष्ठानपरिमाणसिद्धिः।

उदाहरणान्तरमाह–तथेति। स्तो दर्शपूर्णमासौ, तत्रेदमाम्नायते कपाले श्रपयतीति, पुरोडाशकपालेन तुषानुपवपतीति। अत्र भवति विचारणा किमयं प्रयोगविधिः पुरोडाशार्थं च तुषोपवापार्थं चाऽविशेषेण कपालस्य प्रयोजकः, उत पुरोडाशार्थस्यैवेति।

**उत्तरार्द्धस्य चैकदेशत्वादुपात्तैकदेश्युपादेयस्यैव तत्सम्बन्धान्न पृथगनुष्ठानमिति ।**

तत्र विनियोगाऽनुसारित्वात्प्रयोजकत्वस्य विनियोगस्य च कपाले श्रपयतीत्यनेन पुरोडाशे च पुरोडाशकपालेन तुषानुपवपतीत्यनेन तुषोपवापे चाऽविशेषादुभयसाधारणस्य चैकेनापि पुरोडाशेन व्यपदेशसम्भवादुभयार्थमपि कपालं प्रयुज्यत इति प्राप्ते ऽभिधीयते । पुरोडाशशेषस्यैव कपालस्य तुषोपवापमुखेन तत्संस्पर्शात्तोपवापार्थं पृथगनुष्ठानमिति परेण सम्बन्धः । इदमत्राकूतम् । उपपद्येतैतत् यद्युपवापवाक्ये श्रपणवाक्यवत् केवलकपालवचनमश्रोष्यत, पुरोडाशसम्बन्धस्तु श्रूयते पुरोडाशकपालेनेति । न चास्य भविष्यता पुरोडाशेन सम्बन्धो ऽन्यस्तादर्थ्यात् । एवं चेत् पुरोडाशशेषस्यैव कपालस्य तुषोपवापे विनियोगः । न च विनियुक्तविनियोगलक्षणः प्रतिपत्तिविरोधः । पुरोडाशकपालशब्देन कपालस्वरूपस्य लक्षणात् । न च कपालान्तरे प्रसङ्गः । तादर्थ्येन स्वाऽधिष्ठानस्यैव सम्बन्धिनो लक्ष्यमाणत्वात् । न खलु गङ्गायां घोष इत्यत्र गङ्गाशब्दः तटान्तरं लक्षयति । अत एवाह कपालस्येति । कपालान्तरे मा प्रसाङ्क्षीदिति शङ्कया पुरोडाशशेषस्यैवेत्यवधारयति । तथा च भविष्यत्पुरोडाशार्थमेव प्रयोगविधिना कपालस्योपदापितस्य तस्यैव तुषोपवापमुखेनापि प्रधानसंस्पर्शो न पुनरपुरोडाशार्थस्यापि कपालमात्रस्य । तस्मान्न पृथगनुष्ठानमित्यत्रापि प्रयोगेयत्ता सिद्धा ।

उदाहरणान्तरमाह—उत्तरार्धस्य चेति । दर्शपूर्णमासयोः श्रूयते उत्तरार्द्धात्स्विष्टकृते समवद्यतीति । तत्रेदं चिन्त्यते । किं प्रयोगविधिना स्विष्टकृदिज्यार्थमुत्तरार्थमपि प्रयुज्यते किं वा ऽऽग्नेययागार्थं प्रयुक्तादेव पुरोडाशादपि सिध्यतीति । किं प्राप्तम् ? आग्नेयस्य पुरोडाशस्य देवतान्तरसम्बन्धाऽनुपपत्तेः शिष्टाचारविरोधात् ।

**अर्थवादत्वे हि जुह्वाद्यङ्गक्रतुप्रयोगविधिनिबन्धनानुष्ठानत्वं पर्णमयीत्वादीनां फलविधौ तदभावः । अतो**

न खल्वन्यार्थं कल्पितमन्यस्मा उपकल्पयन्ति शिष्टाः । अर्थस्य चाऽर्थेद्वयनान्तरीयकतया तदाक्षेपसामर्थ्यात् स्विष्टकृदिज्यार्थं द्रव्यान्तरं प्रयोजयतीति प्राप्ते ऽभिधीयते—उत्तरार्द्धस्य चैकदेशत्वादुपात्तैकदेशस्यु-पादेयस्यैव तत्सम्बन्धान्न पृथगनुष्ठानम् । अयमर्थः । उत्तरार्धादिति श्रुतेरवयवभागिनीयमिज्या प्रतीयते । न चाऽवयभाज कृते ऽवयविनमुपाददते लौकिकाः । न खलु मोदकशकलादाने प्रेषितो बटुर्मोदकाय घटते, न चाघटमानायास्मै प्रेषयिता कुप्यति । प्रधानयागार्थमुपात्तस्य पुरोडाशस्य ह्रवदानमात्रनिवर्त्तितप्रधानस्योत्तरार्धे ऽवदानीयतया ऽपेक्षिते स्विष्टकृदिज्या विधीयमाना तदर्था, न त्विज्यार्थमुत्तरार्धम् । अत एव तद्भाविनीज्या नाऽऽचारविरोधमावहति । सत्यपि वा तद्विरोधे श्रुतिराचाराद् बलीयसीति स्थितम् । तस्मात्प्रधानार्थप्रयोगविधिनोपात्तेनैकदेशिना पुरोडाशेनोपादेयस्योत्तरार्धस्येज्यासम्बन्धान्न पृथगनुष्ठानमिति सिद्धं प्रयोगपरिमाणम् । इतिः समाप्तौ ।

यदि प्रयोगविधिव्यापारपरिमाणाऽवधारणं लक्षणार्थो हन्ताऽसङ्गतं तर्हि फलविध्यर्थवादनिरूपणमचेत्यत आह—अर्थवादत्वे हि जुह्वाद्यङ्गक्रतुप्रयोगविधिनिबन्धनाऽनुष्ठानत्वं पर्णमयीत्वादीनां फलविधौ तदभाव. । यदि पुनर्ज्जुह्वाद्याश्रयं पर्णमयीत्वं फलाय चोद्येत तस्मिन्सति तदभावः क्रतुप्रयोगविधिनिबन्धनो ऽनुष्ठानत्वाऽभावः । इह खल्वप्रकरणाधीतमस्ति वचनं यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीति । तत्र सन्देहः । किं फलविधिरुताऽर्थवाद ? इति । यथा यस्य जीर्णे भोजनं भवति न तस्य रोगा जायन्ते इत्यतो जीर्णे भोजनस्य रुजाऽभावबीजत्वमवगम्यते

ऽर्थवादः क्रत्वर्थः फलविधिः पुरुषार्थः। सत्यपि च विध्यधीनाऽनुष्ठानत्वे पर्णमयीत्वस्य क्रतुप्रयोगविध्यविषयत्वात्पुरुषार्थत्वम्। तद्व्यापारपरिमाणं चैवमेव चिन्तितम्। प्रधाने तु यद्यपि विधितः प्रवृत्तिर्विशेषरूपा सामान्यरूपा तथैतस्मादप्यपापश्लोकश्रवणं प्रति कारणत्वमवगम्यते पर्णमयीत्वस्य। तच्च सर्वं रोचयन्ते। तस्माद्विना ऽपि कामिसबन्धम् अपापश्लोकश्रवणस्य फलत्वं प्रतीयते इति फलविधिरिति प्राप्ते ऽभिधीयते। नैवजातीयकस्य फलविधित्वं, न ह्यन्वयमात्रात्कार्यकारणभावोऽवगतिः, व्यभिचारात्। किं तु यद्यस्मिन्सति सम्भवति सत्यपि तदन्ये तदभावे न भवति तत्तस्य कार्यमिति प्रामाणिकाः। जीर्णभोजनादिवाक्यं तु प्रमाणान्तराऽनुसारात् तथा। न चेह तदप्यस्ति, विपरीतस्यापि सम्भवात्। न चाऽव्यभिचारिक्रतुपारार्थ्याय लब्धसमीहिताया जुह्वाः पर्णमयीत्वसबन्धविधिं प्रत्यस्ति सविशेषरूपा। सामान्यरूपा तु पुरुषेच्छयेत्येतावता पुरुषार्थे। इदमचार्थतत्त्वमभिसहितमाचार्येण। उभयी हि पुंसां कामना अज्ञातोपायविशेषा तद्विपरीता च। तत्राऽज्ञातोपायविशेषा समुद्दिष्टकाम्यमात्रमेव प्रयत्नं प्रसूयते। स च प्रयत्नः फलमात्रकामनाया निष्फलकर्त्तव्यतामात्रं तदुपायविशेषानवच्छेदात् सामान्यरूपा प्रवृत्तिरुच्यते। उद्देश्यमात्रविषयत्वात्। न चासौ निर्विषयः। एतावत्येव फले प्रवृत्तिः। न खल्वात्मकायवचनचेष्टाविशेषा फलरूपमवगाहन्ते। यथोक्तमाचार्येण 'फलेन साक्षात्करणे कर्तुश्चेष्टा फलार्थिनः' इति। तादृशश्च फलप्रेमा फलाऽनुबन्धात् तदुपायमात्रे प्रेमाणमाधत्ते। सो ऽपि चाऽनधिगतविशेषं तदुपायकर्त्तव्यतामात्र प्रयत्नसामान्यं प्रसूते। न च कर्त्तव्यतामात्रं कामव्यतिरिक्तं नास्तीति वक्तव्यम्। प्रतिविषयं सत्यपि कामे प्रेक्षावतां कर्त्तव्यताऽनवगमात्। न च मानसप्रत्यक्ष-

तु पुरुषे सेत्येतावता पुरुषार्थः । अङ्गापेक्षा तु करणज्ञानात्प-वेदनीया कामना ऽस्तीति शक्या दम्भरहितैरभिधातुम् । तद्विप-रीता तूपायविशेषविषयत्वादुद्दिष्टफलविशिष्टमेव प्रयत्नं जनयति। तच्च सामान्यरूपा प्रवृत्तिरूपा प्रागेव विधेरिति फलप्रवृत्तिरिव न वैधी, विशेषरूपा तु न विधिं विनेति वैधी । स्यादेतत् । इच्छाऽऽपगा-स्रोतसा प्रतिपद्यमाणः फले तदुपायविशेषाऽपरिज्ञानसेतुना प्रतिबद्ध-वृत्तिरयं चेतनस्तद्विशेषमात्रमवबोध्यतां, ततस्तदेवेच्छास्रोतः सेतुभे-दादुपायविशेषे प्रवृत्तिविशेषं प्रसोष्यतइति कृतं प्रधानविधिविषयेण प्रयोगविधिना । नन्वेवं तदेव प्रधानपर्यन्तमागतमङ्गविशेषाऽपरिज्ञा-नाऽवरुद्धं तत्परिज्ञानमात्रादङ्गेष्वपि प्रवर्तकमित्यङ्गगोचरो ऽपि न प्रयोगविधिः स्यात् । अथ कामनया निःसामान्यरूपा ऽपि प्रवृत्तिरङ्गेषु न प्राक् सिद्धा विधेः । तत्किमियमुपाये विशेषरूपा प्रवृत्तिः सिद्धचरी ? न च सामान्यसिद्धौ विशेषसिद्धिरन्यत्वात् । तस्मात्सत्यपि फलत-दुपायतदङ्गेष्विच्छाहेतुसामान्यप्रवृत्तिविषयत्वेन तुल्यत्वे फले सामा-न्यरूपैव प्रवृत्तिर्न प्रवृत्यन्तरमस्ति । सा च विधेः पूर्वमुत्पन्नेति न वैधी । तदुपाये तु सामान्यरूपेच्छा हेतुः । प्रवृत्तिर्विधेः पूर्वं यद्यपि विधितस्तु विशेषरूपा तद्बोधे सति भवेत् । तदभावे तु सत्याम-पीच्छायामसम्भवात् । न च विधिमात्रमपि प्रवृत्तिहेतुः । अनिच्छतो विधीनां शतेनाप्यप्रवृत्तेः । तेन पूर्वोत्पन्नेच्छासहकारी विधिः प्रधाने प्रवृत्तिविशेषहेतुरिति पूर्वोत्पन्नेच्छाऽधीनप्रवृत्तिविशेषत्वं प्रधान पुरु-षार्थे । अङ्गेषु तु यद्यपि विधिरिच्छासहकारी प्रवृत्तिविशेषहेतुः, अस-त्यामिच्छायां प्रयत्नाऽनुपपत्तेः । असति च तस्मिन् कायवचनचेष्ट-योरनुपजननात् । हेत्वभावे कार्याऽभावात् । तथाप्यङ्गजिज्ञासाचि-कीर्षयोरुपायविधेः पूर्वमसम्भवात् विधिनिबन्धनत्वमिति तद्धेतुः । सामान्यरूपा प्रवृत्तिरपि तन्निबन्धनेति विध्यधीनप्रवृत्तित्वात् क्रत्व-

राचीना तज्ज्ञानं तद्विधिरिति सामान्यतोपि प्रवृत्ते-स्तदायत्तत्वादङ्गं क्रत्वर्थः। इदं तर्हि कथम् प्रयोजकः कश्चित्पुरुषार्थो ऽप्रयोजकः क्रत्वर्थ इति ? किमत्र कथम्[1] ? प्रयोज्यौ ह्यत्र क्रत्वर्थपुरुषार्थावुक्तौ। तत्रैवं वक्तव्यं, प्रयोज्यः कश्चित्पुरुषार्थः कश्चित् क्रत्वर्थ इति। नैष दोषः। पुरुषार्थः क्रत्वर्थ इति समानाधिकरणसमासः। पुरुषार्थ इति विग्रहात्।

एतदुक्तं भवति। कस्य चित्कश्चित्पुरुषः किं चित्प्रयोज्यमित्यर्मः। क्रतुविधेरपि किं चित्प्रयोज्यं किं चिदप्र-

र्थमिति। सो ऽयमङ्गानामुपापाद्विशेषः। तदेतदाह—अङ्गापेक्षा तु करणज्ञानात्पराचीना, तज्ज्ञानं च विधेरिति न केवल विशेषतः सामान्यतो ऽपि प्रवृत्तेस्तदायत्तत्वात् विध्यायत्तत्वादङ्ग क्रत्वर्थम्।

अत्र चोदयति—इदं तर्हि भाष्यकारोक्त कथम् ? प्रयोजकः कश्चित्पुरुषार्थो ऽप्रयोजकः क्रत्वर्थ इति। अभिप्रायमजानानः पृच्छति—किमत्र कथम् ? चोदकः स्वाऽभिप्राय स्फोरयति—प्रधानविधितदितरनिमित्तप्रयोज्यौ ह्यत्र क्रतुपुरुषार्थावुक्तौ। तत्रैव वक्तव्य, प्रयोज्यः कश्चित्पुरुषार्थ इत्यादि। परिहरति—नैष दोष। प्रयोजक कश्चिदित्यत्र भाष्यग्रन्थे पुरुषार्थ. क्रत्वर्थश्चेति समानाधिकरणसमास। पुरुषार्थो विषय आश्रयः कामनिमित्तयोः क्रतुरर्थ विषयः क्रतुविधेरिति विग्रहात्। तदेव प्रकटयति—एतदुक्त भवति। कस्य चित्कर्मण काम्यस्य नैमित्तिकस्य वा कश्चित्पुरुष. कामी वा निमित्तवान्वा प्रयोजकः। तदेव क्रियासमभिहारेण शिष्यहिताय स्फुटयति—किं चित्कर्म काम्य वा नैमित्तिक वा कस्य चित्कामिनो वा निमित्तवतो वा प्रयोज्यमित्यर्थः। अप्रयोजकः क्रत्वर्थ इति कश्चिच्छब्दमन्तर्भाव्य व्याचष्टे—क्रतुविधेरपि किञ्चित् प्रयोज्य यथा ऽऽमिक्षाद्वा-

**योज्यम्, यथा ऽऽमिक्षावाजिनद्वारेण दध्यानयनम्। तत्र यस्मिन्प्रीतिरिति फलांशे ऽनुष्ठानं न विधित इति दर्शितम्।**

रेण दध्यानयन, कि चिदप्रयोज्य यथा वाजिनद्वारेण दध्यानयनम्। अनेन भाष्यकारीया वचनव्यक्तिर्व्याख्याता। सू ँतु पुरुषेच्छाऽधीनप्रवृत्तिः पुरुषार्थ., क्रतुविध्यधीनप्रवृत्तिश्च क्रत्वर्थ, इत्येतदेव स्थितम्।

केचिदाहुः, यस्यौपादानिकमेव शेषत्व स पुरुषार्थः। क्रतुविध्यधीनप्रवृत्तिश्च क्रत्वर्थः इत्येतदेव स्थितम्।

केचिदाहुः, यस्यौपादानिकमेव शेषत्व पुरुषार्थः यथा यागस्य फलं प्रति फलस्य वा ऽधिकारिणम्प्रति। न ह्यत्र श्रुत्यादीनामन्यतममस्ति प्रमाणम्। साध्यस्वर्गविशिष्टस्य तु यागविषयो नियोगः प्रतीयमानो ऽन्यथानुपपत्तेर्यागस्य स्वर्गसाधनतात्मिका स्वर्गस्य चाऽधिकारिभोग्यतात्मिका शेषतामाक्षिपति। तादृशशेषता पुरुषार्थता। सति तु श्रुत्यादिविनियोगे यस्यौपादानिक शेषत्व स क्रत्वर्थः, यथैकत्वादिः। संख्या हि संख्येयमवच्छिनत्ति स्वभावत इति वस्तुसामर्थ्यलक्षणेन लिङ्गेन पशुस्वरूपसम्बद्धमेकत्वमधिकारसन्निधिसमाम्नानमात्राच्चाधिकारैदमर्थ्यमापन्नमधिकारत एव। तत आत्मैदमर्थ्यनिर्वाहायाऽधिकार एवाक्षिपति करणीभूतपशुसबन्धमस्येत्यौपादानिक शेषभावः। सति च विनियोग इति क्रत्वर्थतामेवाऽऽवहति सख्यायाम्। तदेव यस्यौपादानिकमेवैदमर्थ्य स पुरुषार्थ, सति तु विनियोगे क्रत्वर्थ इति। तयोश्च श्रुत्यर्थाभ्या लक्षणाऽभिधित्सयेद सूत्र प्रवृत्त यस्मिन्प्रीतिरिति। तान् प्रत्याह—यस्मिन् प्रीतिरति फलाशे ऽनुष्ठानं न विधित इति दर्शितम्। न खलु न्यायलक्षणपरे शास्त्रे सति सम्भवे पदार्थमात्रलक्षणमुचितम्। न चोपपद्यते। न च स्वर्गयागयोरधिकारिस्वर्गयोश्च शेषशेषत्वमौपादानिक

**प्रयोजनश्येनादिफलस्याऽऽनर्थत्वम् । पुनः क्रत्वङ्गत्वेन**
सम्भवति । नियोगावेप. क्लिोपादानमुच्यते, अनुपपद्यमानश्चाक्षिपति यथा स्वर्गयागाधिकारिणा सङ्गतिमन्तरेणापि नियोगस्य नाऽनुपपत्तिस्तथोपपादित नियोगपरीक्षायाम् । विधिश्रुतिरेव तु स्वर्गकामादिश्रुतिसहिता स्वर्गयागपुरुषाणां यथायथ विनियोजिकेति विनियोगव्यापार विधेर्व्युत्पादयता दर्शितम् । तस्माद्यथोक्तस्माभि. क्रतुपुरुषार्थत्वं तदेव ज्याय. ।

सूत्रार्थ उच्यते । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र भाव्य स्वर्ग उपनीत:, तत्र सदेह कि फलांशे ऽपि भावनाया विधिरनुष्ठापयति पुरुषं, कि वा ने ? ति । तत्र भावनाविषयत्वाद्विधेर्भावनायाश्चाशत्रयविहीनाया अननुष्ठेयत्वाद्विधातुमशक्तेरशत्रयसहितायां च भावनायां साधनेतिकर्तव्यताशवत्साध्याशो ऽपि विधीयतइति साधनतदङ्गवत् फले प्यनुष्ठापयति विधि पुरुषमिति विध्यधीनाऽनुष्ठानत्वात् फलस्य न पुरुषार्थत्वमिति प्राप्ते ऽभिधीयते । सत्यमशत्रयोपेता भावना विधीयते । तथाप्यप्रवृत्तप्रवर्तनात्मको विधि: प्रवृत्तमुपनत मपि परित्यक्ष्यति । उक्त हि तद्गुणास्तु विधीयेरन्न चेदन्येन शिष्टा इति । प्रवृत्तश्च पुरुष फले । न खल्विच्छा हेतो: सामान्यप्रवृत्तेरन्या फले प्रवृत्तिरित्युक्तमधस्तात् । तदुपाये तु यद्यपीच्छा हेतु सामान्यप्रवृत्ति प्राग्विधेरस्ति तथापि विशेषरूपात्मिका कायवचनचेष्टाविशेषविधे: प्रागप्राप्तेति विधीयते । फले तु प्रवृत्तत्वान्न प्रवर्त्यते विधिनेति सिद्धमस्य पुरुषार्थत्वम् ।

विचारप्रयोजनमाह—प्रयोजनश्येनादिफलस्याऽनर्थत्वम् । यदि हि फलांशस्याऽनुष्ठान चोद्येन यथा पूर्व: पक्ष: तत' कर्तव्यतया क्रतुरपेक्षितोपायतया च गम्यमानो ऽभिचारो नाऽनर्थो । अथ पुन फलस्य न विधीयमानत्वं यथोत्तर पक्ष. तथा सति न कर्तव्यता-

**तदङ्गत्वेन च क्रतुप्रयोगविधिविषयत्वाऽविषयत्वे शेषलक्षणेन । क्रत्वर्थपुरुषार्थौ विभक्ता क्रतुशेषत्वाऽशेषत्व-**ऽवगम इति न हिंस्यादिति अकर्त्तव्यता निरपबाधा प्रवर्त्तते । अकर्त्तव्यं च दुःखफलमित्यनर्थत्व श्येनादिफलस्य सिद्ध भवति ।

ननु यदि क्रतुपुरुषार्थत्वमुखेन विधिव्यापारपरिमाणमिह चिन्त्यते असङ्गता तर्हि गोदोहनादिषु विनियोगप्रधानविचारणेत्यत आह—पुनः क्रत्वनङ्गत्वेन गोदोहनद्रव्यार्जनादेस्तदङ्गत्वेन च सख्याद्रे. क्रतुप्रयोगविधिविषयत्वाविषयत्वे दर्शिते भवत. । यथासख्यमत्र नेष्यते ।

केचिदाहु, श्रुत्यादिप्रमाणाऽतिरिक्तमुपादानमेवैकत्वादीनां विनियोजकमिति, तान्प्रत्याह—तदपि शेषलक्षणेन श्रुत्यादिनेत्यर्थः । तथा हि । गोदोहनद्रव्यार्जनादौ विधिविभक्तिरेव पुरुषार्थत्वश्रुति, एकत्वादीनां च करणाभूतपशुबन्ध तृतीयाश्रुतिः । नन्विय प्रातिपदिका-दुच्चरन्ती तदर्थमात्रगतमेकत्वमभिधातुमुत्सहते न करणगत, तत्किमस्या न करणत्वमर्थ. ? भवतु तथापि तदापि प्रातिपदिकार्थमात्रगतमेवाभिधत्ताम् । ननु किमेते असबद्धे एव मिथः करणैकत्वे प्राक् सत्यमिति वदतो युगपत् द्वयाभिधानपरत्वम् । न खलु समर्थोप्यक्षशब्दः सकृदेव परस्परासबन्धाऽनेकार्थपरः प्रयुज्यते लोके । न कदा चिदक्षमानयेत्युक्ते सहसैवाऽक्षत्रयं प्रतियन्ति लोकाः । किं तु प्रकरणादिवशादेकमेव, तदभावे वा सदिहते । अक्षाविति वा अक्षानिति वा द्वौ त्रीनक्षान्प्रतिपद्यन्तइति चेन्न । एकशेषेण सबन्धाऽवगते. । इहाप्येकप्रातिपदिकार्थसमवायलक्षण. करणैकत्वयोरस्ति सबन्ध इति चेत्किमयमभिधानवृत्तौ निमित्त न वा ? नो चेत्किं तदभिधानेन ? असत्कल्पत्वान्निमित्तत्वे तु करणस्यैव तदेकत्वम् ।

**विचारेण। परस्तु सिद्धएकशेषत्वे क्रतुविधिप्रयोगविधिव्यापारपरिमाणमात्रविचारात्। अत एवोक्तमतिक्रान्तस्तृतीयविषय इति।**

**पञ्चमे तु किं चिन्त्यते? ननु क्रमः केन प्रमाणेन? श्रुत्यादिभिः। नैतत्सारम्। चोदनालक्षणोऽर्थो धर्म्मः, स-**

एकस्य वा करणत्वमिति तृतीयाश्रुतिलभ्यत्वान्नोपादानिकं शेषत्वमिति सिद्धम्। तदिह साम्यवैषम्यविचारात्पूर्वं क्रत्वर्थपुरुषार्थौ विभक्तौ क्रतुशेषत्वाऽशेषत्वविचारेण। परतस्तु सिद्धएकशेषत्वे क्रतुप्रयोगविधिव्यापारपरिमाणमात्रविचाराद्द्रव्यानयनादौ तु क्रत्वर्थत्वपुरुषार्थत्वमुखेन प्रयोगेयत्तेति। यत एव च नौपादानिकमपि तु श्रुत्यादिलक्षणमेकत्वादे शेषत्वम् अत एव साम्यवैषम्यविचारोपक्रमे भाष्यकार आह 'अतिक्रान्तस्तृतीयविषय' इति। तार्तीयप्रमाणविषयत्वेनेति तृतीयविषयता भवति नान्यथा। यथा च तद्विषयत्वं तथोक्तमित्यर्थः।

सम्प्रति पञ्चमाध्यायचिन्तामारिप्सुस्तद्विषयं तावदाक्षिपति—पञ्चमे तु किं चिन्त्यते? चतस्रः खल्विमा विधेरवस्थास्तासां द्वितीयतृतीयचतुर्थाध्यायैस्तिस्र उत्पत्तिविनियोगरूपा निरूपिताः, षष्ठेन चाऽधिकारो निरूपयिष्यते। तत्किमपरमवशिष्यते यत्पञ्चमाध्यायगोचरः स्यादित्याशयः। समाधाता तु वक्ष्यमाणाऽभिसन्धिराह—ननु क्रमः। हन्तभोः स्थवीय एतत् क्रम इति। न पुनरयं प्रमाणगोचरः। चतसृणामपि विध्यवस्थानाऽनास्पदत्वादशाब्दत्वात्प्रत्यक्षादीनां च दवीयस्त्वात्। न च प्रमाणरहितं मीमांसायामाद्रियन्ते वृद्धा इत्याह—केन प्रमाणेन? समाधाता तु निगूढाभिसन्धिराह—श्रुत्यादिभिः। वषट्कर्तुः प्रथमभक्ष इति प्रथमपदमैन्द्रवायवाग्रान्नित्यग्रहान् गृहपतिं दीक्षयित्वेति क्त्वाश्रुतिरर्थादयश्च वक्ष्यमाणल-

**च चतुरवस्थ एवेत्युक्तम्। क्रमश्च तदतिरिक्तः, न ह्येष प्रयोगो विधेर्विषयो ऽननुष्ठेयत्वात्। अशब्दार्थत्वात्[1] क्रमव-**

चणका. प्रमाण क्रमइत्यर्थः । आक्षेप्ता स्वाभिप्रायमाह—नैतत्सारम् । चोदनालक्षणो ऽर्थो धर्म, स च विध्यभिधायिनीन्वार्द्विधेश्च चातूरूप्याच्चतुरवस्थैवेत्युक्तमधस्तात । सत्यमुक्त, किमेतावते त्यत आह—क्रमश्च तदतिवृत्तात्मा । कुत ? न ह्येष प्रयोगविधेर्विषय । तत्र विवरणकृतो हेतुमाह—अननुष्ठेयत्वात् । अनुष्ठान हि प्रयोग, तद्विधिरनुष्ठानं व्यापार तदावेशाद्वा कारक गोचरयेत् । न च क्रमो व्यापारस्तत्कारक वा व्यापारकारकाऽनुष्ठानप्रचयलभ्यत्वादस्य । ननु न तर्हि विधिरेकादशप्रयाजानित्येकादशसंख्यायाः । इयमपि क्रमवत्पदार्थाऽनुष्ठानप्रचयलभ्यैवेति न व्यापारो न च कारकम् । नावैकादशसख्या विधीयते प्रयाजादीनामपि तु तल्लक्षणस्तदभ्यास । स च पौनःपुन्येन व्यापार एव । न च पौर्णमास्यामिति प्रयोगविधिः प्रयोगमनुष्ठेय विधत्ते, किं तु तदा कर्मेति नाऽनुष्ठेयगोचरो विधिरननुष्ठेयश्चाय तार्तीयः पाठ्क्रमिकश्च क्रमः । तस्मान्न प्रयोगविषयः ।

निबन्धनकृतो हेतुमाह—अशब्दार्थत्वात् । इदमत्राकूतम् । यद्यपि भावार्थविषयो विधि, तथापि न साक्षाद्भावार्थे प्रेरयति नियोज्यम्, अपि तु स्वात्मनि । इदमेव चास्य स्वात्मनि प्रेरकत्व यत्तिरश्चीनतया तदवबोधः । पुरुषस्य तदवबोधवत्तैव चास्य नियोज्यता । स तु विधिः कार्यस्वभावो भावार्थविषयो ऽवगम्यमानो भावद्रव्यगुणसंख्याक्रमादिना सर्वेण प्रयोजनेनाऽन्वित स्वशब्देन प्रयोजन सदभिधीयते । भावाद्यभिधायिनश्च शब्दाः स्वार्थास्तदैदमर्थ्यापन्नानेवाचक्षते । तदिद ग्राहकग्रहणमुच्यते । ततश्चाप्रेरयन्नप्ययं विधिर्भावार्थादिषु तैर्विना स्वसिद्धिमनासादयंस्तया च विना ऽऽत्मसिद्धत्वाऽभावेन साध्यत्वाऽनुपपत्तेः सर्वानेव तानाक्षिपति ।

[1] अपदार्थत्वात् मू पु पा ।

**व्यतिरेकेणेदन्तया ऽनिरूपणात् । पदार्था हि क्रमेणाऽनु-**

तिष्ठन्त इति । तदिदमेषां विधिविषयत्वम् । यथाह यत्तु तत्सिद्ध्यर्थमुपादीयते तद्विधेयमिति तत्रैव व्यवहार इति । तदेव च तेन स्वसिद्ध्यर्थमाक्षिप्य यत्तत्सिद्ध्यर्थं तच्च तत्सिद्ध्यर्थं यद्विधिनाऽऽत्मैदमर्थ्यमापादितम्, तच्चाऽऽपादित यत्तत्सन्निधिसमाम्नातम् । तत्र वषट्कर्तुः प्रथमभक्ष इत्येवमादेरधिकारविधिसन्निधौ स्वशब्देन समर्पितस्य पदार्थभूतस्य क्रमस्य भवतु विधेयता तादर्थ्यस्य, पाञ्चमिकस्य त्वशब्दार्थस्य गृहपति दीक्षयित्वेत्येवमादेस्तदैदमर्थ्याभावात्कथं तत्सिद्ध्यर्थतयोपादानम् ? न च दीक्षयित्वेति क्त्वाश्रुतिः पूर्वकालतामभिदधाति, मुख व्यादाय स्वपितीत्यत्र व्यभिचारात् । स्वापोत्तरकालमेव हि मुखव्यादानम् । न च ये मुखव्यादानान्निद्राणस्य पराञ्च क्षणास्तान्विवक्षित्वा व्याख्येया लोकाधीनावधारणत्वाच्छब्दार्थसम्बन्धस्य, व्यादानस्य तु पुरस्तात्तनेष्वपि निद्राणां क्षणेषु मुख व्यादाय स्वपितीति सोरस्ताड क्रन्दन्तो ऽपि प्रयोगस्या[१] ऽनिवृत्ते. । समानकर्तृकतैवाऽव्यभिचारिणी क्त्वार्थः । समानकर्तृके ऽर्थे वर्तमानाच्च धातोर्विधीयमानं य एव पूर्वं प्रयुज्यते तत्रैव क्त्वाप्रत्यय प्रयुञ्जते लौकिकाः । यथाप्रयोग चाऽर्थप्रत्ययो यथाप्रतीति चाऽनुष्ठानमिति कुत पूर्वकालार्थताभिमानः प्रयोगोपाधिरित्यशब्दार्थोय क्रमः, तथा चाऽविधेय इत्यननुष्ठेयत्वादिति युक्तम् ।

मा नाम भूत्क्रमस्य व्यापारवत्त्वतो ऽनुष्ठेयत्वम्, अनुष्ठेयावच्छेदकतया तु भविष्यति । तथा हि । व्यापारा क्रमेणावच्छिद्यन्ते तेन तदवच्छेदकतयैकत्वादिवत्क्रमो ऽनुष्ठास्यतइत्यत आह—क्रमव्यतिरेकेणेदन्तया अनिरूपणात् । अनुष्ठेयावच्छेदकमनुष्ठेयं, तच्चाऽनुष्ठेयं यच्चोदित, समुदायिनश्च पदार्थाश्चोदिता नेषां समुदायस्तवच्छेदश्च क्रमस्तदाश्रयणात्समुदायिनः पदार्थान्नानुष्ठेय इत्यर्थः ।

१ लोकप्रयोगस्य ।

**ष्ठीयन्ते न तु क्रमः । नापि विनियोगविधेरुत्पत्तिवि-धेर्वा । अत एव नाधिकारविधेः । अनियोज्यत्वात्[1] । स्याच्च तावच्छ्रौत्रे क्रमनियमे तत्परो विधिरर्थादिषु तत्प-**

नापि तस्य स्वतो ऽनुष्ठेयतेत्याह—पदार्था हि क्रमेणाऽनुष्ठीयन्ते न क्रमः । पदार्था इति बहुवचन बहुत्वेकार्थसमवेतसमुदायाश्रयत्व क्रमस्य सूचयति । तेन न स्वतो नापि परत क्रमस्याऽनुष्ठेयत्वमिति न प्रयोगविधिगोचरः क्रम इति सिद्धम् ।

ननु मा विदध्यात्प्रयोगविधि., उत्पत्तिविधिर्विनियोगविधिर्वा विधास्यति । न खल्वेतावनुष्ठानगोचरौ स्वरूपसबन्धपरत्वादित्यत आह—नापि विनियोगविधेरुत्पत्तिविधेर्वा विषय इत्यनुषज्यते । कुतः ? अत एव अननुष्ठेत्वादेव । अयमभिप्राय. । सर्व एवाय विधिश्चतूरूप, तदभिधानमेव त्विदम्परतया भिद्यत इत्युक्तम् । अतश्चोत्पत्तिविनियोगयोरपि प्रयोगव्याप्तत्वात्क्रमे च प्रयोगस्याऽभावादिति व्यापकनिवृत्त्या व्याप्तयोरुत्पत्तिविनिवृत्तिरिति । अथाधिकारस्य विषयः कस्मान्न भवती? त्यत आह—नाऽधिकारविधेः । अत्रापि विषय इत्यनुषज्यते । कुत ? अनियोज्यत्वात्, मा नाम भूदनुष्ठेयगोचरो ऽधिकारविधिः नियोज्य गोचरयति, चेतनश्च नियोज्यः । क्रमस्य चैतन्यमिति च स्थवीयः । न च निमित्तत्व प्रागसिद्धेः । तस्मात् अननुष्ठेयत्वादपदार्थत्वादनियोज्यत्वाच्च न विधिविषयः क्रम इति । नन्वपदार्थत्वादित्यसिद्धो हेतु, दीचयित्वेति क्त्वार्थत्वात्क्रमस्य । तथा च तत्परो विधिरित्यत आह—स्याच्च तावच्छ्रौतक्रमनियमे तत्परो विधिः । अर्थादिषु तत्परविध्यसम्भवः । अयमर्थः । व्यभिचारात् पूर्वकालता न क्त्वार्थ इत्युक्तम् । तथा चाऽपदार्थत्वादितिनाऽसिद्धो हेतुः । अभ्युपगम्याप्युच्यते । श्रोतव्यतिरिक्तः पाठ्क्रमिकः क्रम इति धर्मिविशेषणान्न भागासिद्धो

१ अविनियोज्यत्वात् · मू· पु· पा· ।

**रविध्यसंभवः । उच्यते । प्रयोगो विध्यर्थ इत्युक्तम् । क्रमभेदश्च प्रयोगविशेषः । तथा हि । क्रमेण पदार्था अनुष्ठीयन्ते इत्युच्यते ।**

ऽपदार्थत्वादिति हेतुः । अर्थादिषु क्रमव्यापकत्वादिति ।

एवमाक्षिप्य समाधत्ते—उच्यते । प्रयोगो विध्यर्थ इत्युक्तम् । ततः किमित्यत आह—क्रमभेदश्च प्रयोगविशेष । अयमर्थः । क्रमेण हि प्रयोगो विशेष्यते, प्रयोगान्तराद्व्यावर्त्यते । तथा हि । तएव पदार्थाः क्रमभेदेन प्रयुज्यमानाः प्रयोगक्रमभेदमाधातुमर्हन्ति वर्णा इव तत्त्वेपि गवेवेगनदीदीनजराराजेतिपदभेदबुद्धिम् । अन्यथा ऽर्थधीभेदो न स्यात् । असति तु हेतुभेदे कार्यभेदस्याऽऽकस्मिकत्वप्रसङ्गात् इति ।

ननूक्त पदार्था विधीयन्ते न तत्समुदायः । पदार्थाऽनुष्ठानान्निष्पन्नो हि सः । न च श्रितः क्रमो न पदार्थान्प्रत्येक तेष्वनिरूपणादत पदार्थविषयो विधिर्न क्रम गोचरयति । न चाय शब्दार्थो येन कार्यैदमर्थ्यापत्त्या तत्सिद्ध्यर्थतयोपादीयमानतया विधेय. स्यादित्यत आह—तथा हि । क्रमेण पदार्था अनुष्ठीयन्तइत्युच्यते । इदमत्राकूतम् । यत्तावदुच्यते न क्रमो नाम पदार्थवृत्ति प्रत्येक तेष्वनिरूपणात् इति, तदयुक्तम् । सयोगविभागावयविद्वित्वादिसख्यादीना प्रत्येकमनिरूप्यमाणानामपि पदार्थवृत्तिदर्शनात् । अथाऽनुपलम्भात् । तदयुक्तम् । सयोगादिवदेव पदार्थाश्रितस्य तस्योपलब्धे । तथा हि । सयोगादय सद्वितीय पदार्थमाश्रयन्तो नैकत्र निरूप्यन्ते न च समुदायाश्रयाः । न च भवत' समूहः सयुक्त इति प्रत्ययव्यपदेशौ, अपि त्वनेनैतत्सयुक्तमिति वा संयुक्ते एते इति वा । समुदायैकार्थसमवायस्तु सयोगादीनाम् । तेभ्यो ऽपि च क्रमस्य पूर्वाऽपरत्वाऽपरनाम्न. प्रत्येकपदार्थाऽऽधारताविशेष । तथापि तु

त्रिधा ऽवस्थित वदन्ति, सर्वेऽप्येते अविद्याशक्तेरुपाधिशक्तेर्भोक्तृभोग्य[1]नियन्तृशक्तीना च प्रलयकालेऽवस्थानेऽपि तदानीमेकत्वावधारणं नामरूपविभागाभावा[2]देवोपपादयन्ति । "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" "न कर्म्माऽविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चे"ति सूत्राभ्या जीवभेदस्य तत्कर्मप्रवाहस्य चानादित्वाभ्युपगमात्* । इयान् विशेषः, एकस्याऽनाद्यविद्यया ब्रह्म स्वयमेव मुह्यति, अन्यस्य पारमार्थिकानाद्युपाधिना ब्रह्म स्वयमेव[3] बध्यते, उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् । अपरस्य ब्रह्मैव विचित्राकारेण परिणमते कर्मफलानि चानिष्टानि भुङ्क्ते । नियन्तृशस्य भोक्तृत्वाभावेऽपि सर्वज्ञत्वात्स्वस्मादभिन्न भोक्तारमनुसन्दधातीति स्वयमेव भुङ्क्ते । अस्माक तु स्थूलसूक्ष्मावस्थचिदचिद्वस्तुशरीर ब्रह्म कार्यकारणोभयावस्थावस्थितमपि सर्वदा निरस्तनिखिलदोषगन्ध सत्यसङ्कल्पत्वाद्यऽपरिमितोदारगुणसागरमवतिष्ठते, प्रकारभूत[4]चिदचिद्वस्तुगता अपुरुषार्था स्वरूपान्यथाभाव[5]श्चेति सर्वं समञ्जसम् ॥

आत्माऽधिकरणं समाप्तम् ॥ ३ ॥

---

अथ ज्ञाधिकरणम ४ । **ज्ञोऽत एव ॥१९ ॥**

वियदादिवज्जीवो नोत्पद्यत इत्युक्तम् । तत्प्रसङ्गेन जीवस्वरूप निरूप्यते । किं नु[6] कपिलाभिमतचिन्मात्रमेवात्मनः स्वरूप,मुत कणभुगभिमतपाषाणकल्प[7]मचित्स्वरूपमेवागन्तुकचैतन्यगुणकम्, अथ ज्ञातृत्वमेवास्य स्वरूपमिति । किं युक्तम् । चिन्मात्रमिति । कुत । तथा[8] श्रुतेः, अन्तर्यामिब्राह्मणे हि "य आत्मनि तिष्ठ"न्निति माध्यन्दिनीयपर्यायस्य स्थाने "यो विज्ञाने तिष्ठ"न्निति काण्वा अधीयते । तथा— 'विज्ञान यज्ञ तनुते कर्माणि तनुतेऽपि चे"ति कर्तुरात्मनो विज्ञानमेव

---

१ भोग्येति नास्त्यत्र लि पु । २ विभागादिति लि पु ।
* ०गमाच्चेति पु द्वयेपि ।
३ ब्रह्मस्वरूपमेवेति लि पु । ४ भूतेति नास्ति लि पु ।
५ ०भावा इति मु पु० । ६ किं सुगत-इति मु पु ।
७ ०कल्पस्वरूपमिति पु० द्वयेपि । ८ तथाचेति लि पु ।

स्वरूपं श्रूयते । स्मृतिषु च "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः" इत्यादिष्वात्मनो ज्ञानस्वरूपत्वं प्रतीयते । अपरस्तु जीवात्मनो ज्ञानत्वे ज्ञातृत्वे च[1] स्वाभाविकेऽभ्युपगम्यमाने तस्य सर्वगतस्य सर्वदा सर्वत्रोपलब्धिप्रसङ्गात्करणानां[2] च वैयर्थ्यात्सुषुप्तिमूर्छादिषु सतोऽप्यात्मनश्चैतन्यानुपलब्धेर्जाग्र[3]त्सामग्र्यां सत्यां ज्ञानोत्पत्तिदर्शनादस्य न ज्ञानं स्वरूपं, नापि ज्ञातृत्वम्, आगन्तुकमेव चैतन्यं सर्वगतत्वं चात्मनोऽवश्याभ्युपेत्यम्, सर्वत्र कार्योपलब्धेः सर्वत्रात्मनः सन्निधानाभ्युपगमाच्छरीरगमनेनैव कार्यसम्भवे सति गति[4]कल्पनायां प्रमाणाभावाच्च । श्रुतिरपि सुषुप्तिवेलायां ज्ञानाभावं दर्शयति "नाह[5] खल्वयमेवं सम्प्रत्यात्मानं जानात्य[6]यमहमस्मीति नो एवेमानि भूतानी"ति, तथा मोक्षदशायां ज्ञानाभावं दर्शयति "न प्रेत्य सञ्ज्ञाऽस्ती"ति । ज्ञानस्वरूपमित्यादिप्रयोगस्तु ज्ञानस्य तदसाधारणगुणत्वेन लाक्षणिक इत्येवं प्राप्ते प्रचक्ष्महे—

'ज्ञोऽत एव,'

'ज्ञ एव' अयमात्मा ज्ञातृस्वरूप एव, न ज्ञानमात्रम्, नापि जडस्वरूपः । कुतः । 'अत एव'—श्रुतेरेवेत्यर्थः । नात्मा श्रुतेरिति प्रकृता श्रुतिरेतः'—शब्देन परामृश्यते । तथा छान्दोग्ये प्रजापतिवाक्ये मुक्तामुक्तात्मस्वरूपकथने "अथ यो वेदेदं जिघ्राणीति स आत्मा" "मनसैवैतान्कामान्पश्यन् रमते य एते ब्रह्मलोके" "सत्यकामः सत्यसङ्कल्पः" "नोपजनं स्मरन्निदं शरीरम्" । अन्यत्रापि "न पश्यो मृत्युं पश्यति" । तथा वाजसनेयके "कतम आत्मे"ति पृष्ट्वा "योऽय[7] विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इति, "तथा विज्ञातारमरे केन विजानीयात्" "जानात्येवायं पुरुषः", तथा "एष हि[8] श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" "एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः" इति ।

---

१ ०त्मनो ज्ञातृत्वे चेति लि पु । २ कारणानामिति लि पु ।
३ जाग्रत इति लि पु । ४ गतीति नास्ति लि पु ।
५ नाहमिति पु टुर्येऽपि । ६ जानामीति मु पु ।
७ अयमिति नास्ति लि पु । ८ एष एव हीति लि पु ।

यत्तूक्तं ज्ञातृत्वे स्वाभाविके सति सर्वगतस्य तस्य[1] सर्वदा सर्वत्रोपलब्धिः प्रसज्येतेति, अत्रोच्यते—

**उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥**

नायं सर्वगतः, अपि त्वणुरेवायमात्मा । कुतः । 'उत्क्रान्तिगत्यागतीनां' श्रुतेः । उत्क्रान्तिस्तावच्छ्रूयते—"तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा[2] मूर्ध्नो वा ऽन्येभ्यो वा शरीरदेशेभ्य" इति । गतिरपि—"ये वै के चाऽस्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"ति । आगतिरपि[3] "तस्माल्लोकात्पुनरेत्यऽस्मै[4] लोकाय कर्मण" इति । विभुत्वे ह्येतां उत्क्रान्त्यादयो नोपपद्येरन् ।

**स्वात्मना चोत्तरयोः ॥ २१ ॥**

'च'-शब्दोऽवधारणे । यद्यपि शरीरवियोगरूपत्वेनोत्क्रान्तिः स्थिरस्या[5]त्मनः कथंचिदुपपद्यते । गत्यागती तु न कथंचिदुपपद्येते । अतस्ते स्वात्मनैव सपाद्ये ।

**नाणुरतच्छ्रुतेरिति चे,न्ने,तराधिकारात् ॥ २२ ॥**

"योऽयं विज्ञानमयः प्राणेष्वि"ति जीवं प्रस्तुत्य "स वा एष महानज आत्मे"ति महत्त्व[6]श्रुतेर्नाणुर्जीव 'इति चे,न्न,इतराधिकारात्,' जीवादितरस्य प्राज्ञस्य तत्राधिकारात् । यद्यप्युपक्रमे जीवः प्रस्तुत,स्तथाऽपि "यस्यानुवित्तः प्रतिबुद्ध आत्मे"ति मध्ये परः प्रतिपाद्यत इति तत्सम्बन्धीदं महत्त्वं न जीवस्य ।

**स्वशब्दोन्मानाभ्यां च ॥ २३ ॥**

साक्षा'दणु'-शब्द एव श्रूयते—

"एषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन्प्राणः पञ्चधा संविवेशे"ति ।

---

१ तस्येति नास्ति लि पु ।
२ चक्षुषो भ्रुवो—इति लि पु । ३ आगतिरपीति त्रुटितं लि पु॰ ।
४ ०रेत्यास्मै—इति पु द्वयेऽपि पाठः । ५ स्थितस्येति लि॰ पु ।
६ मत्वा—इति लि पु॰ ।

उद्धृत्य मानमुन्मानम् । अणुसदृश वस्तूद्धृत्य तन्मानत्व जीवस्य श्रूयते–

"बालाग्रशतभागस्य शतधा कल्पितस्य च ।

भागो जीवः स विज्ञेयः" इति,[1]

"आरा[2]ग्रमात्रो ह्यवरोऽपि दृष्ट" इति च ।

अतोऽणुरेवायमात्मा ॥

अथ स्यादात्मनो ऽणुत्वे सकलशरीरव्यापिनी वेदना नोपपद्यत इति, तत्र मतान्तरेण परिहारमाह–

## अविरोधश्चन्दनवत् ॥ २४ ॥

यथा हरिचन्दनबिन्दुर्देहैकदेशवर्त्यऽपि सकलदेहव्यापिनमाह्लादं जनयति, तद्वदात्माऽपि देहैकदेशवर्त्ती सकलदेशवर्तिनी वेदनामनुभवति ।

## अवस्थितिवैशेष्यादिति चेन्ना,भ्युपगमाद्धृदि हि[3] ॥ २५ ॥

हरिचन्दनबिन्द्वादेर्देहदेशविशेषावस्थितिविशेषात्तथाभावः, आत्मनस्तु तन्न विद्यत इति चेन्न, आत्मनोऽपि देहदेशविशेषे स्थित्यभ्युपगमात् । हृदयदेशे ह्यात्मनः स्थितिः श्रूयते "हृदि ह्ययमात्मा तत्रैकशत नाडीना"मिति, तथा "कतम आत्मे"ति प्रकृत्य योऽयं विज्ञानमयः प्राणेषु हृद्यऽन्तर्ज्योति' रिति । आत्मनो हि देह[4]देशविशेषस्थितिख्यापनाय चन्दनदृष्टान्तः प्रदर्शित•, न तु चन्दनस्य देशविशेषापेक्षा ।

एकदेशवर्त्तिनः सकलदेहव्यापिकार्य्यकरत्वे प्रकार[5] स्वमतेनाह–

## गुणाद्वा ऽऽलोकवत् ॥ २६ ॥

'वा'–शब्दो मतान्तरव्यावृत्त्यर्थः । आत्मा स्वगुणेन ज्ञानेन सकलदेह व्याप्यावस्थितः । 'आलोकवत्,' यथा मणिद्युमणिप्रभृतीनामेकदेशवर्त्तिना-

---

१ स चानन्त्याय कल्पत इति–मु पु अधिकमत्रास्ति ।

२ अरेति मु पु । ३ हीति सूत्रे नास्ति लि पु ।

४ हि देहेति लि पु नास्ति । ५ ०त्वप्रकारमिति मु पु• ।

मालोकोऽनेकदेशव्यापी दृश्यते, तद्वद्धृदयस्थस्यात्मनो ज्ञानं सकलदेहं व्याप्य वर्त्तते । ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिर्मणिप्रभावदुपपद्यत इति प्रथमसूत्रे स्थापितम् ।

ननूक्तं विज्ञान[1]मात्रमेवात्मेति, तत्कथं ज्ञानस्य स्वरूपव्यतिरिक्त[2]गुणत्वमुच्यते, तत्राह—

**व्यतिरेको गन्धवत्तथा च दर्शयति ॥ २७ ॥**

यथा पृथिव्या गन्धस्य गुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकः, तथा ज्ञानामीति ज्ञातुर्गुणत्वेन प्रतीयमानस्य ज्ञानस्या[3]त्मनो व्यतिरेकः सिद्धः । दर्शयति च श्रुतिः[4]—"जानात्येवायं पुरुष"इति ।

**पृथगुपदेशात् ॥ २८ ॥**

स्वशब्देनैव ज्ञानं विज्ञातुः पृथगुपदिश्यते—"न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत" इति ।

यत्तूक्तं "यो विज्ञाने तिष्ठन्" "विज्ञानं यज्ञं तनुते" "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः" इत्यादिषु ज्ञानमेवात्मेति व्यपदिश्यत इति, तत्राह—

**तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥**

'तु'—शब्दश्चोद्यं व्यावर्तयति । तद्गुणसारत्वाद् विज्ञानगुणसारत्वादात्मनो विज्ञानमिति व्यपदेशः । विज्ञानमेवास्य सारभूतो गुणः, यथा प्राज्ञस्यानन्दः सारभूतो गुण इति प्राज्ञ[5] 'आनन्द'—शब्देन व्यपदिश्यते "यदेष[6] आकाश आनन्दो न स्यात्" "आनन्दो ब्रह्मेति व्यजाना"दिति । प्राज्ञस्य ह्यानन्दस्सारभूतो गुणः "स एको ब्रह्मण आनन्दः" "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने"ति । यथा वा "सत्यं ज्ञानमनन्तं ब्रह्मे"ति विपश्चितः प्राज्ञस्य 'ज्ञान'—शब्देन व्यपदेशः । "सह ब्रह्मणा

---

१ विज्ञानेति मु पु ।   २ व्यतिरिक्तेति लि पु० नास्ति ।
३ ज्ञानस्येति नास्ति लि पु ।
४ प्रतीयमानस्य ज्ञानस्यात्मनोव्यतिरेकसिद्धि दर्शयति च श्रुतिरिति मु० पु०
५ प्राज्ञ इति नास्ति लि पु ।   ६ यज्ञेष्विति लि० पु० प्रमादः ।

विपश्चिता" "यस्सर्वज्ञ" इत्यादिषु प्राज्ञस्य ज्ञानं सारभूतो गुण इति विज्ञायते ।

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

विज्ञानस्य यावदात्मभाविधर्मत्वेन तद्व्यपदेशे[1] न दोषः । तथा च खण्डादयो यावत्स्वरूपभाविगोत्वादिधर्मशब्देन गौरिति व्यपदिश्यमाना दृश्यन्ते, स्वरूपनिरूपणधर्मत्वादित्यर्थः । 'च'-कारो[2] ज्ञानवदात्मनोऽपि स्वप्रकाशत्वेन ज्ञानमिति व्यपदेशे न दोष इति समुच्चिनोति ।

यच्चोक्तं सुषुप्त्यादिषु ज्ञानाभावाच्च ज्ञानस्य स्वरूपानुबन्धिधर्मत्वमिति, तत्राह—

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

'तु'-शब्दश्चोदिताशङ्कानिवृत्त्यर्थः । 'अस्य' ज्ञानस्य सुषुप्त्यादिष्वपि विद्यमानस्य जागर्य्यादिष्वभिव्यक्तिसम्भवात्स्वरूपानुबन्धिधर्मत्वोपपत्तिः । 'पुंस्त्वादिवत्', यथा पुंस्त्वाद्यसाधारणस्य धातोर्बाल्यावस्थाया सतोऽप्यनभिव्यक्तस्य युवत्वे[3]ऽभिव्यक्तौ पुंसस्तद्वत्ता न कादाचित्की भवति । सप्तधातुमयत्वं हि शरीरस्य स्वरूपानुबन्धि,

"तत्सप्तधातु त्रिमलं द्वियोनि
चतुर्विधाहारमयं शरीर"मिति—

शरीरस्वरूपव्यपदेशात् । सुषुप्त्यादिष्वप्यहमर्थः प्रकाशत इति प्रागेवोक्तम् । तस्य विद्यमानस्य ज्ञानस्य विषयगोचरत्वं जागर्य्यादावुपलभ्यते । एते चात्मनो ज्ञातृत्वादयो धर्माः [4]प्रागेवोपपादिताः । अतो ज्ञातृत्वमेव जीवात्मनः स्वरूपम् । स चायमात्माऽणुपरिमाणः । "न प्रेत्य संज्ञाऽस्ती"त्यपि न मुक्तस्य ज्ञानाभाव उच्यते, ऽपि तु "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती"ति संसारदशायां यद्भूतानुविधायित्वप्रयुक्तं जन्मनाशादिदर्शनम्, तन्मुक्तस्य न विद्यते,

---

१ ०धर्मत्वात्तेन व्यपदेशो–इति लि पु०, मु० पु ऽपि व्यपदेशो–इति ।
२ चकारादिति लि० पु ।
३ युवत्त्वे–इति लि पु० प्रमादः । ४ ०दयोऽर्था इति लि पु ।

"न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः"[1] ॥

"नोपजनं स्मरन्निदं शरीरं" "मनसैतान्कामान्पश्यन् रमते" इत्यादिश्रुत्यैकार्थ्यात् ॥

सम्प्रति ज्ञानात्मवादे तस्य सर्वगतत्वे [च] दूषणमाह–

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥**

'अन्यथा'–सर्वगतत्वपक्षे तस्य ज्ञानमात्रत्वपक्षे च[2] नित्यमुपलब्ध्यनुपलब्धी सहैव प्रसज्येयाताम्, 'अन्यतरनियमो वा', उपलब्धिरेव वा नित्यं स्यादनुपलब्धिरेव वा । एतदुक्तं भवति–लोके तावद्वर्तमानयोरात्मोपलब्ध्यनुपलब्ध्योरयं ज्ञानात्मा सर्वगतो हेतुः स्यात्, उपलब्धेरेव वा, अनुपलब्धेरेव वा । उभयहेतुत्वे सर्वदा सर्वत्रोभयं प्रसज्येत । यद्युपलब्धेरेव, सर्वस्य सर्वदा सर्वत्रानुपलम्भो न स्यात् । अथानुपलब्धेरेव, सर्वदा सर्वत्रोपलब्धिर्न स्यादिति । अस्माकं शरीरस्यान्तरेवावस्थितत्वादात्मनस्तत्रैवोपलब्धिर्नान्यत्रेति व्यवस्थासिद्धिः । करणायत्तोपलब्धेरपि[3] सर्वेषामात्मनां सर्वगतत्वेन सर्वैः करणैः सर्वदा संयुक्तत्वाददृष्टादेरप्यनियमादुक्तदोषः समानः ॥

ज्ञाधिकरणं समाप्तम् ॥ ४ ॥

---

अथ कर्त्रधिकरणम् ५ । **कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

अयमात्मा ज्ञाता, स चाणुपरिमाण इत्युक्तम् । इदानीं किं स एव कर्त्ता, उत स्वयमकर्त्तैव सत्त्वऽचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यती[4]ति चिन्त्यते । किमत्र युक्तम् । अकर्त्तैवात्मेति । कुतः । आत्मनो ह्यकर्तृत्वं गुणानामेव च कर्तृत्वमध्यात्मशास्त्रेषु श्रूयते । तथा हि, कठ-

---

१ सर्वज्ञ इति इति लि पु ।

२ ज्ञानमात्रपक्षे च नासात्मनमित्यर्थः तथा तस्य ज्ञानमात्रपक्षे चेति लि· पु प्रामादिकम् ।

३ अपिशब्दो नास्ति लि पु । ४ ०,ध्यवस्यतीति लि पु· ।

वल्लीषु जीवस्य[1] "न जायते म्रियत" इत्यादिना जन्मजरामरणादिकं सर्वं प्रकृतिधर्मं प्रतिषिध्य हननादिषु क्रियासु कर्तृत्वमपि प्रतिषिध्यते—

"हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यत" इति ।

हन्तारमात्मानं जानन्न जानात्यात्मानमित्यर्थः । तथा च भगवता स्वयमेव जीवस्याकर्तृत्वं स्वरूपं कर्तृत्वाभिमानस्तु व्यामोह[2] इत्युच्यते—

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते" ॥
"नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यती"ति,[3]
"कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यत" इति च ।

अतः पुरुषस्य भोक्तृत्वमेव, प्रकृतेरेव तु कर्तृत्वमेव प्राप्ते प्रचक्ष्महे

'कर्ता शास्त्रार्थवत्त्वात्'

आत्मैव कर्ता, न गुणाः[4] । कस्मात् । शास्त्रार्थवत्त्वात्', शास्त्राणि हि 'यजेत स्वर्गकामः" मुमुक्षुर्ब्रह्मोपासीतेत्येवमादीनि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते । न ह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्येत[5] । शासनाच्च शास्त्रम्, शासनं च प्रवर्तनम् । शास्त्रस्य च प्रवर्तकत्वं बोधजननद्वारेण, अचेतनं च प्रधानं न [6]बोधयितुं शक्यम् । अतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव कर्तृत्वे भवेत् । तदुक्तं "शास्त्रफलं प्रयोक्तरी"ति । यदुक्तम् "हन्ता चेन्मन्यत" इत्यादिना हननक्रियायामकर्तृत्वमात्मनः श्रूयत इति, तदात्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यते । यच्च "प्रकृतेः क्रियमाणानी"त्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति, तत्सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवेकेन गुणानामेव कर्तृत्वमित्युच्यते । तथा च तत्रैवोच्यते

१ जीव स इति लि पु प्रमादः । २ ०भिमानव्यामोह इति लि पु ।
३ इतिशब्दो नास्ति पु० द्वयेपि । ४ गुण.—इति लि० पु ।
५ नियुज्यते—इति पु द्वयेपि । ६ नेति नास्ति लि पु, भाष्ये तु तेन ।

"कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मस्वि"ति । तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते–

"तत्रैव सति कर्त्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मति' रिति,
अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं[1] चैवात्र पञ्चम"मिति ।

अधिष्ठानादिदैवपर्य्यन्तसापेक्षे सत्यात्मनः कर्तृत्वे य आत्मानमेव केवलङ्कर्त्तारं मन्यते, न स पश्यतीत्यर्थः ।

**उपादानाद्विहारोपदेशाच्च ॥ ३४ ॥**

"स यथा महाराज" इति प्रकृत्य "एवमेवैष एतान्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तत" इति प्राणानामुपादाने विहारे च कर्तृत्वमुपदिश्यते ।

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥**

"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे'ति लौकिकवैदिकक्रियासु कर्तृत्वव्यपदेशाच्च कर्त्ता । 'विज्ञान'–शब्देन नात्मनो व्यपदेशः अपि त्वऽन्तःकरणस्य बुद्धेरिति चेत्, एवं सति 'निर्देश[2]विपर्ययः' स्यात्, बुद्धेः[3] करणत्वाद्विज्ञानेनेति करणविभक्तिनिर्देशः स्यात् ।

**उपलब्धिवदनियमः ॥ ३६ ॥**

आत्मनोऽकर्तृत्वे दोष [4] उच्यते, यथाऽऽत्मनो विभुत्वे 'नित्योपलब्ध्यनुपलब्धिप्रसङ्ग' इत्यादिनोपलब्धेरनियम उक्तः तद्वदात्मनोऽकर्तृत्वे प्रकृतेश्च कर्तृत्वे तस्याः सर्वपुरुषसाधारणत्वात्सर्वाणि कर्माणि सर्वेषां भोगाय स्युः, नैव वा कस्यचिदात्मनः । विभुत्वाभ्युपगमात्सन्निधानमपि सर्वेषामविशिष्टम् । अत एव चा[5]न्तःकरणादीनामपि नियमो नोपपद्यते, यदायत्ता व्यवस्था स्यात् ।

---

१ देवमिति लि पु प्रमादः ।
२ निर्देशमिति लि पु ।  ३ बुद्धे–इति लि॰ पु ।
४ दोष–इति लि पु ।  ५ चेति नास्ति लि पु ।

## शक्तिविपर्ययात् ॥ ३७ ॥

बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वानुपपत्तेर्भोक्तृत्वशक्तिरपि तस्या एव स्यादित्यात्मनो भोक्तृत्वशक्तिर्हीयेत, भोक्तृत्वं च बुद्धेरेव संपद्यत इत्यात्मसद्भावे प्रमाणाभावश्च स्यात्। "पुरुषोऽस्ति भोक्तृभावा"दिति हि तेषामभ्युपगमः।

## समाध्यभावाच्च[1] ॥ ३८ ॥

बुद्धेः कर्तृत्वे मोक्षसाधनभूतसमाधावपि सैव कर्त्री स्यात्। स च समाधिः प्रकृतेरन्योऽस्मी†त्येवंरूपः। न च प्रकृतेरन्योऽस्मी†ति प्रकृतिः समाधातुमलम्। अतोऽप्यात्मैव कर्ता।

नन्वात्मनः कर्तृत्वेऽभ्युपगम्यमाने सर्वदा कर्तृत्वं नोपरमेदित्यत्राह[2]–

## यथा च तक्षोभयथा ॥ ३९ ॥

वागादिकरणसपन्नोऽप्यात्मा यदे[3]च्छति, तदा करोति, यदा तु नेच्छति, तदा न करोति। यथा तक्षा वास्यादिकरणसंविधानेऽपीच्छानुगुण्येन करोति[4] न करोति च। बुद्धेस्त्वचेतनायाः कर्तृत्वे तस्या भोगवाञ्छादिनियमकारणाभावात्सर्वं[illegible]। न ह्यचेतनस्य क[illegible] ॥

कर्त्रधिकरणं[illegible]तनम्। शास्त्र[illegible]

अथ परायत्ताधिकरणम् ६। **परात्तु [illegible]श्रुतः[5] ॥ ४० ॥**

इदं जीवस्य कर्तृत्वं किं स्वातन्त्र्येणोत परमात्मायत्तमिति। किं प्राप्तम्। स्वातन्त्र्येणेति। परमात्मायत्तत्वे हि विधिनिषेधशास्त्रानर्थक्यं प्रसज्येत[6]। यो हि स्वबुद्ध्या प्रवृत्तिनिवृत्त्यारम्भशक्तः, स एव नियोज्यो भवति। अतः स्वातन्त्र्येणास्य कर्तृत्वमिति प्राप्तेऽभिधीयते–

---

१ समाधावभावाच्चेति लि पु सूत्रपाठ।
†† एतच्चिह्नान्तर्गत पाठो लि पु त्रुटित।
२ नोपरमतेत्यत्राहेति लि पु, नोपरमेतेत्यत्राहेति मु पु।
३ यथेति लि पु प्रमाद। ४ करोतीति त्रुटित लि पु।
५ ०च श्रुतेरिति सूत्रपाठो लि पु प्रामादिक।
६ प्रसज्यते–इति लि पु।

"परात्त्वि"ति । 'तु'-शब्दः पक्ष व्यावर्तयति । 'तत्' कर्तृत्वमऽस्य 'परात्' परमात्मन एव हेतोर्भवति । कुत । 'श्रुते.' "अन्त.प्रविष्टः शास्ता जनाना सर्वात्मा" "य आत्मनि तिष्ठन्नात्मनो ऽन्तरो[1] यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत" इति । स्मृतिरपि-

"सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहन च" ।
"ईश्वरस्सर्वभूताना हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायये"ति ।

नन्वेवं विधिनिषेधशास्त्रानर्थक्य प्रसज्येतेत्युक्तम्, तत्राह-

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४१ ॥**

सर्वासु क्रियासु पुरुषेण कृत प्रयत्नमुद्योगमपेक्ष्यान्तर्यामी परमात्मा तदनुमतिदानेन प्रवर्तयति, परमात्मानुमतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यत इत्यर्थः । कुत एतत् । 'विहितप्रतिषिद्धावैयर्थ्यादिभ्य' । आदिशब्देनानुग्रहनिग्रहादयो गृह्यन्ते । यथा द्वयोः साधारणे धने परस्वत्वापादनमन्यतरानुमतिमन्तरेण नोपपद्यते, तथाऽपी[2]तरानुमतिः स्वेनैव कृतेति तत्फलं तस्यैव[3] भवति । पापकर्मसु निवर्तनशक्तस्याप्य[4]नुमन्तृत्व न निर्दयत्वमावहतीति साङ्ख्यसमयनिरूपणे प्रतिपादितम् । नन्वेवम्, "एष ह्येव साधु कर्म्म कारयति त †यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति त †यमधो निनीषती" त्युन्निनीषयाऽधोनिनीषया च स्वयमेव साध्वसाधुनी कर्मणी कारयत्येतच्चोपपद्यते । उच्यते, एतच्च सर्वसाधारणम्, यस्त्वतिमात्रपरमपुरुषानुकूल्ये व्यवसित[5] प्रवर्तते, तमनुगृह्णन् भगवान्स्वयमेव स्वप्राप्त्युपायेष्वति[6]कल्याणेषु कर्मस्वेव[7] रुचि

१ यमयतीति मु पु ऽधिकमिह ।  २ अथापीति लि पु ।
३ ०मतेस्तुस्वेनेव कृतमिति तत्फल स्वस्यैवेति लि पु ।
४ अपिर्नास्ति लि पु ।  †† एतच्चिह्नान्तर्गत पाठो लि पु त्रुटित ।
५ ०.नुकूल्ये व्यवस्थित इति लि पु ।  ६ ०ष्वति-इति लि पु ।
७ स्वेव कर्मस्वेवेति मु पु ।

जनयति । यश्चातिमात्रप्रातिकूल्ये व्यवसितः प्रवर्तते, तं निगृह्णन्स्वप्राप्तिविरोधिष्वधोगतिसाधनेषु कर्मसु रुचिं जनयति । यथोक्तं भगवता स्वयमेव–

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः."–

इत्यारभ्य

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते"ति ।

तथा

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्"इत्यादि[1]
"मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः"–इत्यन्तमुक्त्वा
"तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनि"ष्वित्युक्तम् ॥

परायत्ताधिकरणं समाप्तम् ॥ ६ ॥

---

अथांशाधिकरणम् ७ । **अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४२ ॥**

जीवस्य कर्तृत्वं परमपुरुषायत्तमित्युक्तम् । इदानीं किमयं जीवः परस्मादत्यन्तभिन्नः[2], उत परमेव ब्रह्म भ्रान्तम्, उत ब्रह्मैवोपाध्यवच्छिन्नम्, अथ ब्रह्मांश इति संशय्यते । श्रुतिविप्रतिपत्तेः संशयः[2] । ननु 'तदनन्यत्वमारम्भणशब्दादिभ्यः' 'अधिकं तु भेदनिर्देशा'दित्यत्रैवायमर्थो निर्णीतः[3] । सत्यम्, स एव नानात्वैकत्वश्रुतिविप्रतिपत्त्या ऽऽक्षिप्य[4] जीवस्य ब्रह्मांशत्वोपपादनेन[5] विशेषतो निर्णीयते । यावद्धि[6]जीवस्य

---

१ इत्यादिनेति लि पु । २ परस्मादत्यन्तभिन्न इति लि० पु० अधिकमत्र ।
३ वर्णित इति लि० पु० । ४ आक्षिप्येति लि० पु० नास्ति ।
५ ०पपादने–इति लि पु० । ६ हीति लि० पु० नास्ति ।

ब्रह्मांशत्वं न निर्णीतम्, तावज्जीवस्य ब्रह्मणोऽनन्यत्वं ब्रह्मणस्तस्माद-धिकत्वं च न प्रतितिष्ठति । किं तावत्प्राप्तम् । अत्यन्तभिन्न इति । कुतः । 'ज्ञाज्ञौ द्वावजावीशनीशा'वित्यादिना भेद[1]निर्देशात् । ज्ञाज्ञयोरभेदश्रुतयस्त्वग्निना सिञ्चेदितिवद् विरुद्धार्थप्रतिपादनादौपचारिक्यः । ब्रह्मणोऽंशो जीव इत्यपि न साधीयः, एकवस्त्वेकदेशवाची ह्यं'श'-शब्दः । जीवस्य ब्रह्मैकदेशत्वे तद्गता दोषा ब्रह्मणि भवेयुः । न च ब्रह्मखण्डो जीव इत्यंशत्वोपपत्तिः,[2] खण्डभावा[3]नर्हत्वात् ब्रह्मणः, प्रागुक्तदोषप्रसङ्गाच्च । तस्मादत्यन्तभिन्नस्य च तदंशत्वं दुरुपपादम् । यद्वा, भ्रान्तं ब्रह्मैव जीवः । कुतः । "तत्त्वमसि 'ऽयमात्मा ब्रह्मे"त्यादि-ब्रह्मात्मभावोपदेशात् । नानात्ववादिन्यस्तु प्रत्यक्षादिसिद्धा[4]र्थानुवादित्वादनन्यथासिद्धाऽद्वैतोपदेशपराभिः श्रुतिभिः प्रत्यक्षादय इवाविद्यान्तर्गताः ख्याप्यन्ते । अथ वा, ब्रह्मैवानाद्युपाध्यवच्छिन्नं जीवः । कुतः । तत एव ब्रह्मात्मभावोपदेशात् । न चा[5]यमुपाधिर्भ्रान्तिपरिकल्पित इति वक्तुं शक्यम्, बन्धमोक्षादिव्यवस्थाऽनुपपत्तेरित्येवं प्राप्तेऽभिधीयते—

ब्रह्मांश इति । कुतः । 'नानाव्यपदेशा'दन्यथा च'—एकत्वेन व्यपदेशात् । उभयथा हि व्यपदेशो दृश्यते । नानात्व[6]व्यपदेशस्तावत्स्रष्टृत्व-सृज्यत्वनियन्तृत्वनियाम्यत्वसर्वज्ञत्वाऽज्ञत्वस्वाधीनत्वपराधीनत्वशुद्धत्वा-शुद्धत्वकल्याणगुणाकरत्वतद्विपरीतत्वपतित्वशेषत्वादिभिर्दृश्यते । 'अन्यथा चा'भेदेन व्यपदेशोऽपि "तत्त्वमसि" "ऽयमात्मा ब्रह्मे"त्यादिभिर्दृश्यते । 'अपि दाशकितवादित्वमधीयत एके'—"ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा" इत्याथर्वणिका ब्रह्मणो दाशकितवादित्वमप्यधीयते । ततश्च सर्वजीवव्यापित्वेनाभेदो व्यपदिश्यत इत्यर्थः । एवमुभयव्यपदेशमुख्यत्व-सिद्धये जीवोऽयं ब्रह्मणोऽंश इत्यभ्युपगन्तव्यः । न च भेदव्यपदेशाना

---

१ वजावित्यादिभेदेतिलि० पु० । २ उत्पत्त्यशतोपपत्तिरिति लि० पु० प्रमाद ।
३ खण्डनेति मु० पु० । ४ प्रत्यक्षासिद्धेति लि० पु०, न तु युक्तम ।
५ न वेति लि० पु० । ६ त्वेति नास्ति लि० पु० ।

प्रत्यक्षादिप्रसिद्धार्थत्वेनान्यथा[1]सिद्धत्वम्, ब्रह्मसृज्यत्वतन्नियाम्यत्वतच्छरीरत्वतच्छेषत्वतदाधारत्व[2]तत्पाल्यत्वतत्संहार्यत्वतदुपासकत्वतत्प्रसादलभ्यधर्मार्थकाममोक्षरूपपुरुषार्थभोक्तृत्वादय[3] स्तत्कृतश्च जीवब्रह्मणोर्भेदः प्रत्यक्षाद्यऽगोचरत्वेनाऽनन्यथासिद्धः। अतो न जगत्सृष्ट्यादिवादिनीनां प्रमाणान्तरसिद्धभेदानुवादेन मिथ्यार्थोपदेशपरत्वम्। न चाखण्डैकरसचिन्मात्रस्वरूपेण ब्रह्मणा ऽऽत्मनो ऽतद्भावानुसन्धानं बहुभवनसङ्कल्पपूर्वकवियदादिसृष्टिं जीवभावेन तत्प्रवेशं विचित्रनामरूपव्या[4]करणं तत्कृताऽनन्तविषयानुभवनिमित्तसुखदुःखभागित्वम्[5]भोक्तृत्वेन तत्र स्थित्वा तन्नियमनेनान्तर्यामित्वं जीवभूतस्य स्वस्य कारणब्रह्मात्मभावानुसन्धानं संसारमोक्षं तदुपदेशशास्त्रं च कुर्वाणेन भ्रमितव्यमित्युपदिश्यते, तथा सत्युन्मत्तप्रलपितत्वापातात्। उपाध्यवच्छिन्नं ब्रह्म जीव इत्यपि न साधीयः, पूर्वनिर्दिष्टनियन्तृनियाम्यत्वादिव्यपदेशबाधादेव[6]। न हि देवदत्तादेरेकस्यैव गृहा[7]द्युपाधिभेदान्नियन्तृनियाम्यभावादिसिद्धिः। अत उभयव्यपदेशोपपत्तये जीवोऽयं ब्रह्मणोऽंश इत्यभ्युपेत्यम्।

## मन्त्रवर्णात् ॥ ४३ ॥

"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी"ति मन्त्रवर्णाच्च ब्रह्मांशो जीवः। अंशवाची हि 'पाद'-शब्दः। विश्वा भूतानीति जीवानां बहुत्वाद् बहुवचनं मन्त्रे। सूत्रेऽप्य 'ऽंश' इत्येकवचनं जात्यभिप्रायम्, 'नात्मा श्रुते'रित्यत्राप्येकवचनं[8] जात्यभिप्रायम्।

"नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान्"–

इत्यादिश्रुतिभ्य ईश्वराद्भेदस्यात्मनां बहुत्वनित्यत्वयोश्चाभिधीयमानत्वात्। एवं नित्यानामात्मनां बहुत्वे प्रामाणिके सति ज्ञानस्वरू-

१ ०ऽनन्यथेति लि० पु० विपरीतम्।
२ तदाध्यक्षत्वेति लि० पु०।
३ ०भाक्त्वादय इति लि० पु०।
४ व्या–इति नास्ति लि० पु०।
५ म–इति नास्ति लि० पु०।
६ ०भावादेवेति लि० पु०।
७ ०रेकस्यैकस्यैव गृहेति लि० पु०।
८ एकवचनमिति पुनर्नास्ति लि० पु०।

यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज ।

तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः" ॥—

इत्यादिना। चकाराच्छ्रुतयोऽपि "यस्यात्मा शरीर"मित्यादिना ऽऽत्मशरीरभावेनाशांशित्वं वदन्तीत्युच्यते ।

एवं ब्रह्मणोऽंशत्वे ब्रह्मप्रवर्त्यत्वे ज्ञत्वे च सर्वेषां समाने केषाञ्चिद्वेदाध्ययनतदर्थानुष्ठानाद्यनुज्ञा, केषाञ्चित्तत्परिहारः, केषाञ्चिद्दर्शनस्पर्शना[1]द्यनुज्ञा, केषाञ्चित्तत्परिहारश्च शास्त्रेषु कथमुपपद्यत इत्याशङ्क्याह—

**अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४७ ॥**

सर्वेषां ब्रह्मांशत्वज्ञत्वादिनैकरूपत्वे सत्यपि ब्राह्मणक्षत्रियवैश्यशूद्रादिरूपशुच्यशुचिदेहसम्बन्धनिबन्धनावनुज्ञापरिहारावुपपद्येते, 'ज्योतिरादिवत्,' यथाऽग्नेरग्नित्वेनैकरूपत्वेऽपि श्रोत्रियागारादग्निराह्रियते, श्मसानादेस्तु परिह्रियते, यथा चा[2]न्नादि श्रोत्रियादेरनुज्ञायते, अभिशस्तादेस्तु परिह्रियते ।

**असन्ततेश्चाव्यतिकरः ॥ ४८ ॥**

ब्रह्मांशत्वादिनैकरूपत्वे सत्यपि जीवानामन्योन्यभेदादणुत्वेन प्रतिशरीरं भिन्नत्वाच्च भोगव्यतिकरोऽपि न सम्भवति । भ्रान्तब्रह्मजीववादे चोपहितब्रह्मजीववादे च जीवपरयोर्जीवानां च भोगव्यतिकरादयः सर्वे दोषास्सन्तीत्यभिप्रायेण स्वपक्षे[3] भोगव्यतिकराभाव उक्तः ।

ननु भ्रान्तब्रह्मजीववादेऽप्यविद्याकृतोपाधिभेदाद्भोगव्यवस्थादय उपपद्यन्ते, तत्राह—

**आभास एव च ॥ ४९ ॥**

अखण्डैकरसप्रकाशमात्र[4]स्वरूपस्य† स्वरूपतिरोधानपूर्वकोपाधिभेदोपपादनहेतुराभास एव । प्रकाशैकस्वरूपस्य† प्रकाशतिरोधानं प्रका-

१ दर्शनस्य प्राशनेति लि० पु० । २ वेति लि० पु० ।

३ जीवानां च भोगादयः सर्वेषां सन्त्यभिप्रायेण स्वपक्षे भोगाद्यशरीरादयः यथाग्नेरनेकत्वे–इति लि० पु० । ४ मात्रेति नास्ति लि० पु० ।

†† एतच्चिह्नान्तर्गतः पाठो लि० पु० त्रुटितः ।

द्वितीयपदार्थज्ञानाऽधीनाऽनिरूपणमात्रेण सयोगादितुल्यता क्रमस्य । तेन भवत्यपि तद्रूपतया स द्वितीयवृत्तिः पूर्वत्वाऽपरत्वरूपेण केवलपदार्थवृत्तिर्वा । उभयथापि पदार्थवृत्तिरेव न समुदायवृत्तिस्तथोपलम्भात् । न हि भवति कर्मणां समूहः पूर्व इति वा पर इति वा कर्मैक कर्मान्तराऽपेक्षया पूर्वं तदपेक्षया च कर्मान्तरमपरम् । पूर्वापरत्वे एव वा ऽप्यवधिमत्पदार्थनिरूपणीये तद्वितीतिर्वा क्रमः । तयोश्च शब्दकर्मादावुपलब्धेस्तदाश्रितत्वमिष्यते । तेन यद्यपि प्रत्येक पदार्थेषु प्रातिस्विको विधि. यद्यपि च प्रयोगविधिरवलम्बते स च यौगपद्यानुष्ठानानुपपत्तेस्तद्वत्प्रयोगविधाने ज्वरहरतक्षकचूडारत्नाऽलङ्कारोपदेशवदप्रामाण्यप्रसङ्गात् यथा शक्त्यादित्युपस्थापितक्रमभेदं समुच्चितपदार्थानुष्ठानभेद विदधत्क्रममपि विधत्ते । न खल्वस्मिन्नविधीयमाने एतद्विशिष्टपदार्थाऽनुष्ठानविधिसम्भवः ।

यदपि मत, यत एव सो ऽपेक्षिष्यते विधिना ऽत एव न विधायिष्यते । न हि यद्यद्विधिना ऽपेक्ष्यते तत्तद्विधीयतइति कश्चिन्नियमहेतुरस्ति । अधिकारस्याप्याधेयत्वात्कर्त्तैव तु तत्सिद्ध्यर्थे विधीयते । क्रमभेदस्य त्वपेक्षितत्वाद्विधीना प्रमातुरस्य च प्रतीतिरन्यस्य चाऽप्रतीतेः प्रतीतिपूर्वकत्वाच्चाऽनुष्ठानस्य प्रेक्षावतामाद्रियते विधिरिति ।

अत्रोच्यते । किं पुनर्विधेय मन्यते भवान् यदत्र नास्ति? ननूक्तं नियोगसिद्ध्यर्थतयोपादीयमान तदिति । किमिद तत्सिद्ध्यर्थमिति? तत्साधनं चेत्कथमेकत्वादिनो विधेयत्वम् । न हि तत्कारकम् । कारकावच्छेदकं तदिति चेत् । क्रमो ऽप्यनुष्ठेयवस्त्ववच्छेदकतया ऽनुष्ठेयस्य च कारकतया तादृश एव । न चैष समुदायायत्त[1] इत्युक्तम् । अथ न तत्सिद्ध्यर्थं मति तत्कारक विधेयमपि तु तदेदमर्थ्यमापन्न द्वेय च तद्विनियोगत उपादानतश्च विनियोगतस्तार्त्तीयात्पशोः उपादानतश्च तुर्थात् । तदेकत्वादीनां तूभयवि-

१ समुदायाश्रय २ पु पा ।

थमपि शेषत्वं शब्दार्थस्य क्रमस्तु पाञ्चमिको न शब्दार्थ इत्युक्तम्। तत्किमिदानीं विश्वजिता यजेतेत्यशब्दार्थतैवेति चेत्। तर्हि दीक्षयित्वेत्यत्रापि पूर्वकालतामभिधेयापि शब्दार्थः कथं चिदिति श्रोतः क्रमो विशेषत इति तत्सिद्ध्यर्थतयोपादीयतइति विधेयः। अपि च शब्दोपात्त एव तत्सिद्ध्यर्थतयोपादीयतइत्यत्र को हेतुः? तस्यैव तादर्थ्याऽवगम इति चेत्। ननु तस्य तादर्थ्यं किं तत्प्रतिपादकः शब्दोऽवबोधयेत्, उतानुष्ठायैकार्थाभिधायी शब्दः? न तावत् पूर्वः कल्पः। न हि श्रुत्यादिमात्रात् तादर्थ्यमित्युक्तम्। अनुष्ठेयकार्याऽभिधायी तु शब्दो यदेव तदनन्तरं बुद्धौ विपरिवर्त्तते येन प्रयोजनेनाऽन्वितं स्वार्थं प्रयोजनं यदभिधत्ते तेन तत्सन्निधापनमात्रोपयोगो शब्दः। सन्निधापनं वा ऽन्यतो ऽप्यर्थादेरिति शब्दोपात्तत्व क्वोपयुज्यते? तेन नास्य प्रमाणान्तरसमधिगम्यत्वादविधेयत्वम्। अर्थादिसहायस्य शब्दस्यैव प्रामाण्यात्। अन्यथा त्वनभिधेयक्रमवादिनो ऽप्यचोदनालक्षणत्वेन क्रमस्य शास्त्रविचाराऽनर्हत्वप्रसङ्गात्।

यच्चोच्यते विधेयत्व प्रयुक्त्या व्याप्तम्, सा च क्रमे नास्ति, तदुत्तरकालत्वात्क्रमस्य, अत एव प्रयुक्त्यनन्तरमयं विचारितस्तस्माद्विधेयत्वव्यापिका प्रयुक्तिः क्रमान्निवर्त्तमाना व्याप्यं विधेयत्वमपि निवर्त्तयति वृक्षतेव शिंशपात्वमारादुपलभ्यमानादेकशिलामयाद्गिरिप्रदेशादिति। तदयुक्तम्। प्रयुक्त्यनन्तरकालत्वस्याऽसिद्धेः। विद्धान एव हि प्रयोगमयं प्रयोगविधिर्येन येन विना ऽन्यतो ऽप्राप्तेन प्रयोगसंबन्धेन न निर्वहति तत्सर्वं तच्छेषतया विधत्ते। एवलक्षणकश्च श्रुत्यादिसमर्पितः क्रम इति कथं प्रयुक्त्युत्तरकालः? तस्माद्व्यापकाऽनुपलब्धिरसिद्धा। न चतुर्थे स्वरूपेण प्रयुक्तिर्विचारिता, किं तर्हि, प्रयुज्यमानपदार्थैयत्तयेत्युक्तं, तद्विज्ञानं च क्रमभेदनियमाऽवगमे हेतुः प्रयुज्यमानपदार्थैयत्तानवधारणं हीति यावत्। न च पदार्थवत्क्रमो ऽव-

**तथा च प्रयोगविधिविषयत्वान्न चोदनालक्षणत्वमतिवर्त्तते । तत्र प्रथमं क्रमवद्व्यतिरेकेणेदन्तया ऽनिरूपितत्वात् अप्रयोज्यतामविनियोज्यतामनुत्पाद्यतां च मत्वा ऽविधिविषयत्वमाशङ्क्य प्रयोगविधिविषयता दर्शिता । उत्तरवर्णकेन तूदाहरणशुद्धिः कृता । दीक्षापदार्थस्य प्राप्तेः ।**

गतः स पदार्थान्तराऽनुप्रवेशे भज्येत । क्रमावधारणेन तु विना नेयत्ताऽवगमभङ्गः । नापि हि क्रमेष्वियत्ता तादवस्थात् । तस्मान्नाऽय प्रयोगोत्तरकालः क्रमविचारो ऽपि तु तदियत्तावधारणोत्तरकालः । तद्धेतुत्वात् । तस्मात्प्रयुज्यमानपदार्थाश्रयस्तच्छेषक्रमो विधेयश्चेति साम्प्रतम् । तदिदमुक्तं तथा हि क्रमेण पदार्था अनुष्ठीयन्त इत्युच्यते । स्वरूपेणाऽननुष्ठेयो ऽप्यशब्दोपात्तो ऽपि अनुष्ठेयावच्छेदकतया तद्विधो विधेय इत्यर्थः । यथा चैवंविधस्यापि विधेयत्वं तथोपपादितमधस्तादिति बहुविस्तराद्बिभ्यतोऽपि विस्तरे पतिताः स्मः । तस्मादास्तान्तावत् ।

तथा च चतुर्विधविधिव्यापाराऽगोचरत्वाद्यच्चोदनालक्षणत्वमाक्षिप्तं तत्प्रयोगविधिव्यापारविषयतां दर्शयता परिहृतमित्याह—तथा च प्रयोगविधिविषयत्वान्न चोदनालक्षणत्वमतिवर्त्तते क्रमः । एवं प्रमेयं परिशोध्य विचारस्वरूपमादर्शयति—तत्र प्रथमं क्रमवद्व्यतिरेकेणेदन्तया ऽनिरूपितत्वादप्रयोज्यतामविनियोज्यतामनुत्पाद्य तां च मत्वा विधिविषयत्वमाशङ्क्य प्रयोगविधिविषयता दर्शिता । प्रथमं दर्शितेति संबन्धः । कृतव्याख्यानमेतदाक्षेपपरिहारयोः ।

वर्णकान्तरमाह—उत्तरवर्णकेनेत्यादिना, कृतेत्यन्तेन । अत्र चोत्तरवर्णके नोदाहरणपरिशुद्धिस्तद्विधो कृतेति प्रथममध्यमाऽवसानैः ग्रन्थयोजनम् । तत्रोदाहरणं सत्रे ये यजमानास्त ऋत्विज इत्याम्नायन्ते । अध्वर्युं गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत

**अनभिधेयस्यापि कथं चित्प्रतीयमानस्य विशिष्टक्रमाऽनुष्ठानस्य[1] विध्यर्थत्वात्कर्तृविशेषविधावध्वर्युसम्बन्धस्या-**

उद्गातार ततो होतार ततस्त प्रतिप्रस्थाता दीक्षयित्वा गाथिनो दीक्षयतीत्यादि, ग्रावस्तुत होता ब्रह्मणो दीक्षयति ब्रह्मचारी वा ऽऽचार्यप्रेषित इत्यन्तम्। तत्र सशय:। किं तत्तत्पदार्थविशिष्टा दीक्षा विधीयते उत क्रम? इति। तत्तत्पदार्थविशिष्टदीक्षाविधानेनैवाऽर्थ-लभ्यत्वात्क्रमस्य पृथगनवगमाच्च दीक्षैव विधीयतइति प्राप्ते विधेयान्तराऽभावात्क्रम एव विधीयत इत्याह-दीक्षापदार्थस्य प्राप्ते। याजमानत्वात्सूत्रे गृहपत्यादीना चोदकत एव प्राप्ता दीक्षेति सा तावन्न विधातव्या। ननु क्रमोऽप्यशब्दार्थ इति न विधातव्य:। उक्त हि 'न क्त्वाश्रुति: पूर्वकालतामाहे'त्यत आह-अनभिधेयस्यापि कथ चित्प्रतीयमानस्य विशिष्टक्रमस्यानुष्ठानस्य विध्यर्थत्वात्। अयमर्थ.। कुत एतत् क्त्वाश्रुतेर्न पूर्वकालता ऽर्थ इति। तदभावे ऽपि प्रयोगदर्शनादिति चेत्। नन्वेव सति समानकर्तृकत्वमपि नार्थ. स्या, दलखलूपपदाद्वातोस्तदभावे ऽपि प्रतिषेधमात्रे प्रयोगदर्शनात्, खलूक्त्वा अलं भुक्त्वेति। यद्युच्येत न व्यभिचारादशब्दार्थत्व ब्रूम:। मा भूदक्षादिशब्दानामनेकार्थानामानर्थक्यम्, अपि त्वनन्यलभ्य. शब्दार्थ इति स्थिति:। प्रयोगोपाधिलभ्या च पूर्वाऽपरकालतेत्युक्तम्। न त्वेव सति समानकर्तृकतेति सैव व्यभिचरत्यपि क्त्वार्थ:। क: पुनस्तर्हि प्रयोगोपाधि:? समानकर्तृकत्वे ऽपि धात्वर्थयोर्य एव पूर्वं प्रयुज्यते धातुस्तत्रैव क्त्वाप्रत्ययो लौकिकाना नान्यत्र। सत्यं, प्रयोगनियमे सिद्धे स्यादेव, न त्वयमस्ति। स खल्वन्वाख्यानाद्वा गम्यो भवेल्लोकतो वा। न तावत् क्त्वान्त पूर्वं प्रयोक्तव्यमाख्यातादिति कस्य चिदन्वाख्यान समस्ति। नापि क्त्वान्तमेव लोक: पूर्वं प्रयुङ्क्ते। आख्यातादपि परस्तात्कवीनामृषीणामाम्नाये च क्त्वान्तपद

१ कर्मानुष्ठानस्य मू पु पा।

ऽऽनर्थक्यात् अनेकार्थविधितो वाक्यभेदात् । दीक्षापदार्थस्य तु प्रतिप्रधानावृत्तेः अनुष्ठानविशेषविधिरेकाप्रयोगदर्शनात् । तस्मादनन्यथासिद्धेः समानकर्तृकतावत्पूर्वकालता तदर्थ इति परमार्थः ।

मा भूत्तथा, अनभिधेयापि कथ चित्प्रतीयमानतयाविधेयाऽभावात्सैव तावद्विधातव्या, तथा चाऽनर्थको ऽयं काकदन्तानामिवक्त्रः पूर्वकालताभिधानस्य विचार इति । अथोच्यते । मा विधायि दीक्षा, चोदकप्राप्ताया तु तस्यामध्वर्युप्रभृतय. कर्तृविशेषा विधायिष्यन्ते । ततः किं क्रमविधिनेत्यत आह—कर्तृविशेषविधावध्वर्युसम्बन्धस्याऽनर्थकत्वादाध्वर्यवी हि प्रकृतौ दीक्षा ऽवगतेति किमत्राऽध्वर्युसम्बन्धविधिना ? प्राप्तत्वात् । इतश्चाऽनेकार्थविधितो वाक्यभेदात् अध्वर्युं गृहपतिमध्वर्युं ब्रह्माणमध्वर्युं होतारमित्यनेकेर्थास्तद्विधौ वाक्य भिद्येतेति । ननु च तथापि प्रतिपदार्थं दीक्षाऽऽवृत्तौ कुतो न वाक्यभेद ? इत्याह—दीक्षापदार्थस्य तु प्रतिप्रधानाऽऽवृत्तेः । मम दीक्षासमभिव्याहारौ विधीयेते । यजमानसंस्कारो हि दीक्षा, सा गुणत्वात्प्रतियजमानमावर्ततइति न्यायप्राप्तो ऽयमर्थः । इत्य क्रमविधौ न वाक्यभेदो ऽर्थैकत्वादित्याह—अनुष्ठानविशेषविधेरेकार्थत्वात् । विशेष्यते ऽनेनानुष्ठानमिति अनुष्ठानविशेषः क्रमः । एवं तु वदत आचार्यस्य सयोगादिवदनेकपदार्थवृत्तिकः क्रमो ऽभिमत इति ।

कश्चिदाहाऽध्वर्युविधावनियम इति । तस्याऽर्थमेके व्याचक्षते । अत्र हि ये यजमानास्तऋत्विज इति ऋत्विक्कार्ये यजमानविधानादृत्विजो निवृत्ताः, यजमाना एव तु तत्तदृत्विक्कार्यकरणाल्लब्धर्त्विग्व्यपदेशा न पुनरिह तत्त्वतो ऽध्वर्य्वादयः सन्ति, तेन येनैव केन चित्क्व चित्कदा चिदाध्वर्यव यजमानेन कृतं तेनाऽध्वर्युव्यप

र्थत्वात्। तद्विधौ न पूतः पावयतीति प्रतिषेधादितरमन्य-देशभाजा ऽऽध्वर्यवान्तरं कर्तव्यमिति न कश्चिन्नियमहेतुरस्ति। तेनाऽऽध्वर्यवी दीक्षा गृहपतेर्येन कृता स एव ब्रह्मादिदीक्षायामनेन-वचनेन नियम्यते। एवं प्रतिप्रस्थात्रादिनियमोऽपीति न विधेयान्त-राऽभावः। तदेतदालोचनीयम्। कथं नियमहेतुर्नास्तीति। ननु यद्यत्र नियामकं प्रमाणं नास्ति ततो ब्रह्मादयो ऽप्यनियताः। तथा हि। य एव ब्रह्मकार्यकरणाद् ब्रह्मा स एव होतृनेष्ट्रादिकार्य-करणाद्धोतृनेष्ट्रादि। एव होत्रादिर्ब्रह्मनेष्ट्रादिकार्यकरणाद् ब्रह्मनेष्ट्रादिः, एवं नेष्ट्रादयो ब्रह्मनेष्ट्रादयस्तथा ब्रह्माप्यध्वर्य्वादिरिति नियम्यमा-नानां नियमविषयाणां चाऽव्यवस्थानात्किमाश्रयो नियमः कल्पयि-ष्यते? ब्रह्मादिष्वध्वर्युदीक्षाविधिना खल्वन्ये नेष्ट्रादयो निवर्त्त-नीयाः। तत्र व्यावर्त्यानां ब्रह्मादिदीक्षायां नेष्ट्रादीनां विधेयस्य चाऽऽध्वर्यवोरव्यवस्थानात्संकरेण न शक्या व्यावृत्तिः प्रतिपत्तुम्। न ह्यवघातनखनिर्भेदादीनां संकरेण व्रीहीनवहन्तीति नियमः कल्प्यते। तस्मादस्यर्त्विजः कर्मणि प्रथमं यः प्रवृत्तो यजमानस्तेनैव तदीय सर्वमेव समापनीयं, न यजमानान्तरेणार्त्विज्यान्तरकारिणा ऽनौचि-त्यादङ्गीकर्त्तव्यम्। अव्यवस्थायामनौचित्यप्रसङ्गात्। प्रकरणसाम-र्थ्यादिवदौचित्यमपि हि वाक्यार्थाऽवधारणोपायं सङ्गिरन्ते शाब्दाः। अतश्चौचित्यमेव नियमहेतुरस्तीति नियमतो ऽपि न विधातव्य इति स्थानीय एतदतो न दूषितमाचार्येण।

ये त्वन्ये मन्यन्ते दीक्षाया आध्वर्यवीत्वाद्गृहपत्यादेश्चा-न्येषां च दीक्षायामध्वर्युः प्राप्त एव गृहपत्यादिषु विधानेन तदन्येभ्यः परिसंख्यायते। तत्परिसंख्यायामेव च नियमोक्तिर्भक्त्या ऽनन्यनिवृ-त्तिसाम्यं च भक्तिरिति तन्निरासायाह—न पूतः पावयतीति प्रतिषेधा-त्तत्र विधिसंभवेन दोषत्रयवती परिसंख्योचितेति प्रसिद्धतरत्वादन भिधाय वचनविरोधो दर्शितः, होतृदीक्षाऽनन्तरमध्वर्युदीक्षाविधौ

**स्तेषां यतो विशेषः स्यादिति। अब्राह्मणस्याऽऽर्त्विज्याऽभावादुत्तराश्रमिणोश्च ब्रह्मचारिणश्चाऽऽचार्य्यपरतन्त्रत्वात्।**

नादीक्षितोऽध्वर्युः पूतः कथमध्वर्युप्रभृतीन्पावयेद्दीक्षयेदिति। तस्मान्निषेधफला परिसङ्ख्या निषेधेऽनुपपन्ना, फलाऽभावादित्यर्थः। न चाऽध्वर्युदीक्षायां प्रतिप्रस्थाता न प्राप्तो येन तं प्रति प्रतिप्रस्थातेति वचनं प्रतिप्रस्थातारं विदध्यादित्याह—इतरमध्वर्युमन्यः प्रतिप्रस्थाता पावयति विनाऽपि वचनात्। आध्वर्यवे हि कर्मणि प्रकृतावेवाऽध्वर्युपुरुषाः प्रतिप्रस्थात्रादयो विहिताः। यदा खल्वध्वर्युरसमर्थः कर्मान्तरव्यासङ्गित्वात्स्वात्मनि क्रियाविरोधित्वाद्वा तदा तदीयं कर्म तत्पुरुषाः प्रतिप्रस्थात्रादयः कुर्वन्तीति स्थितम्। तदयं स्वात्मनि क्रियाविरोधादात्मानं दीक्षयितुमसमर्थ इति स्वपुरुषेण दीक्षणीयः। स्वपुरुषश्च तस्य प्रतिप्रस्थातेति प्राप्तत्वान्न विधातव्यः। नन्वध्वर्युपुरुषा बहव इति तेषां प्रतिप्रस्थातृविषये वचनं भविष्यतीत्यत आह—तेषां यतो विशेषः स्यादिति। तेषामध्वर्युपुरुषाणां मध्ये यतो यस्य। सार्वविभक्तिकस्तसिः। विशेषोऽन्तरङ्गत्वलक्षणः स्यात्सोऽन्यः पावयति। आध्वर्यवे हि कर्मणि तदसामर्थ्ये सन्ति विहिता बहवः प्रतिप्रस्थातृप्रभृतय उत्तरोत्तरबहिरङ्गास्तेषामाद्यः प्रतिप्रस्थाताऽन्तरङ्ग इति तन्नियमो न विधातव्यः, प्राप्तत्वादित्यर्थः। ननु चोन्नेतृदीक्षायामध्वर्युप्रभृतीनां पूतत्वेनाऽनवकाशत्वात्पुरुषमात्रप्रसङ्गे ब्राह्मणो नियम्येतेत्यत आह—अब्राह्मणस्यार्त्विज्याभावाद् ब्राह्मणस्यैव याजनमसाधारणतया विहितमिति कुतोऽन्यच प्रसज्येतेत्यर्थः। अथ ब्राह्मणप्राप्तौ चातुराश्रम्यस्याऽविशेषप्रसक्तेर्ब्राह्मणेन सह ब्रह्मचारिणो विकल्प्यत्वाद्भिक्षुवानप्रस्थादिनिवृत्त्यर्थं वचनमित्यत आह—उत्तमाश्रमिणोश्चार्त्विज्याऽभावादिति चेहाऽनुकृष्यते। न वृत्त्या-

अर्थादिषु तु यद्यपि पदार्थपरो विधिस्तथापि तद्रूप-
र्थमात्विज्य, भिक्षुवानप्रस्थयोस्तद्वृत्तिनिषेधात् । नाऽनुग्रहार्थं, हिंसा-ऽनुग्रहयोरनारम्भीत्यनुग्रहनिषेधादित्यर्थः । न च ब्रह्मचारिणं स्वातन्त्र्येण प्रवृत्तिनिषेधार्थमाचार्यप्रेषित इति वचनम् । वचना-न्तरसिद्धं हि तस्याऽऽचार्यपारतन्त्र्यमित्याह—ब्रह्मचारिणश्चाऽऽचार्यपरतन्त्रत्वात् । तस्मादेतेभ्यो हेतुभ्यो विधेयान्तराऽभावात्क्रमस्य च विधानार्हत्वात् उत्तरवर्णकेन तद्विधौ क्रमस्य विध्यर्थं चर्मणि द्वीपिनं हन्तीतिवदुदाहरणपरिशुद्धिः कृतेति ग्रन्थयोजना ।

सम्प्रत्यर्थलक्षणस्य क्रमस्य विधेयता माह—अर्थादिष्वित्या-दिना ऽपेक्षितेत्यन्तेन । अत्रोदाहरणम् । अग्निहोत्रं जुहोति यवागूं पच-तीति । तत्र संशयः । किं होमपाकयोरनियतः क्रमः, उत पाका-ऽनन्तरं होमः ? तत्र विध्योर्होमपाकपदार्थमात्रविधानपरत्वात्पूर्व-वच्च श्रुतेरभावात् होमरूपयवागूपचनप्रयोजनक्रिययोश्च प्रमेयान्तः-पातितया क्रमनियमं प्रति प्रामाण्याऽनुपपत्तेर्द्रव्यान्तरेणापि होम-स्योपपत्तेः क्रमनियमप्रमाणाऽभावादनियम इति प्राप्ते आह—अर्था-दिषु यद्यपि पदार्थपरो विधिस्तथापि तद्रूपप्रयोजनाऽपेक्षी अनुष्ठा-नविशेषः क्रमं प्रतिपादयतीति परेण सम्बन्धः । अयमर्थः । यद्यपि क्रमविशेषे न श्रुतिरस्ति तथापि होमविधिररूपं होमं विधातुमसम-र्थस्तद्रूपभूतद्रव्यमपेक्षते यवागूं पचतीति । निष्प्रयोजनं यवागूं प्रति गुणत्वेन पाकविधानमनुपपन्नमिति यवागूः प्रयोजनापेक्षिणी । तथा चाऽग्निहोत्रं यवाग्वा ता च पाकेनेत्ययमर्थः सिद्धो भवतीति । न च प्रागसिद्धा यवागूरग्निहोत्राय कल्पत इति पदार्थपरोऽपि विधिः पदार्थरूपप्रयोजनापेक्षी अर्थसहकारीति यावत्तात्पर्यविशेषमवगम-यति । न च नियतं प्रामाण्यं, प्रमेयस्यापि प्रामाण्यदर्शनात् । यथाहुः प्रामाणिकाः 'प्रमेया च तुला प्रामाण्यवती'ति । तस्मादार्थोऽपि क्रमो विधेय इति सिद्धम् ।

**प्रयोजनापेक्षी स्वाध्यायविधिप्रत्यायितपाठक्रमनियमप्रयोजनापेक्षश्च निर्ज्ञातं च क्रममनुरुध्यमानः स्वावगतं**

अर्थादिष्वित्यादिशब्दसूचित क्रमप्राप्त पाठक्रमस्य विधेयत्वमाह—स्वाध्याय इति । अत्रोदाहरण समिधो यजति, तनूनपात यजतीत्यादि । तत्र सदेहः । किमेते समिदादयो नियतक्रमाः प्रयोक्तव्या, उत पाठक्रमेणे ? ति । श्रुत्यर्थयोरभावात्पाठक्रमस्य प्राप्तत्वान्नान्तरीयकत्वेनाऽवर्जनीयतया ऽनुप्रवेशादप्रयोजकत्वादनियतक्रमा एव समिदादय प्रयोक्तव्या इति प्राप्ते आह—स्वाध्यायविधिप्रत्यायितपाठक्रमनियमप्रयोजनापेक्षश्च विधिरनुष्ठानविशेष प्रतिपादयतीति परेण सम्बन्ध. । स्वाध्यायविधिना हि क्रमवन्ति वाक्यानि उपस्थापितानि, तदेषां क्रमस्य सति प्रयोजनसम्भवे ऽनावर्जनीयतामात्रेणोपादानमङ्गीकर्तुमुचितम् । सम्भवति च प्रयोगविध्यपेक्षितसमिदादिक्रमभेदनियम' प्रयोजनम् । न चात्र पाठक्रमस्यासामर्थ्यम् । तथा हि । क्रमेण वाक्यानि पठ्यन्ते तेनैवाऽप्रतीतचरास्तदर्था अपि प्रकाश्यन्ते कारणक्रमाऽनुविधानात् कार्यक्रमस्य, वाक्यविज्ञानजनितत्वाच्च तदर्थविज्ञानस्य, यथावगमं चाऽनुष्ठानात्प्रेक्षावताम् । तेनाऽयं पाठक्रमः स्वाध्यायविधिना ऽपि प्रयोजनाकाङ्क्षः सामर्थ्येन च तदसम्भवान्निराकृतः प्रयोगविधिना समिदादिक्रमनियमलक्षणप्रयोजने व्यवस्थाप्यत इति पाठक्रमसध्रीचीनप्रयोगविधिविधेयक्रमनियमसिद्धि । नानाधिकारेषु तु क्रमभेदपठितेष्वप्येकप्रयोगवचनसग्रहाऽभावात् असम्बद्धेषु[1] न क्रमः सम्भवतीति स्वाध्यायविध्युत्पादितापि प्रयोजनाकाङ्क्षा तदसम्भवात्प्रलीयते ।

अक्षरार्थस्तु स्वाध्यायविधिप्रत्यायितो यः पाठक्रमनियमस्तत्प्रयोजन च तदपेक्षप्रयोगविधिरिति । आदिशब्दसूचितामेव प्रवृत्तिक्रमनियमस्य विधेयतामाह—निर्ज्ञातमिति । वाजपेये सप्तदश प्राजापत्यान्पशूनालभतइति श्रूयते । तत्र सप्तदशैते यागा वाजपेयाङ्गभूता

१ असबन्धेषु १ पु पा ।

च सहभावमत्यन्तमबाधमानो ऽनुष्ठानविशेषं प्रतिपाद· वाजपेयप्रयोगविध्यापादितसहप्रयोगाश्चोदकप्राप्ताश्चैतेषु प्रोक्षणादयो धर्मास्ते ऽपि च धर्मिसहभुवः सहैव प्रयोक्तव्या नैकैकशः कार्त्स्न्येन समापनीया इति समधिगतम् । तत्र प्रथमपदार्थो नियमप्रमाणा-ऽभावाद्यत्र क्व चन पशौ प्रयोक्तव्य इति सिद्धम् । द्वितीयादिषु च पदार्थेषु संशयः । किमेते प्रथमपदार्थवदनियमेन प्रयोक्तव्या, उत प्रथमपदार्थप्रयोगक्रमेणेति । तत्र प्रतीतिपूर्वकत्वादनुष्ठानस्य प्रत्यय-समये च प्रथमपदार्थोऽनुष्ठानवद् द्वितीयादिपदार्थानुष्ठानस्य क्रमनि-यमनिरपेक्षत्वादाद्यवद् द्वितीयादयो ऽपि पुरुषेच्छाधीनाऽनुष्ठानक्रमा इति प्राप्ते आह—निर्ज्ञात क्रममनुरुध्यमानो निर्ज्ञातप्रथमपदार्थे प्रवृत्ति-क्रमवद् द्वितीयादीनामनुरुध्यमान· प्रयोगविधिरनुष्ठानविशेषं प्रति-पादयतीति । कस्मादनुरुध्यते ? इत्यत आह—स्वाऽवगत च सह-भावमत्यन्तमबाधमानः । चकारो हेतौ । वाजपेयप्रयोगविधिना हि सर्वे पदार्थाः समुच्चिताः प्रधानं प्रति प्रयुज्यमानतया संनिधाप्यन्ते । न च तेषां युगपत्प्रयोगः सम्भवतीति, यथा शक्नुयादित्युपबन्धात् । तादृशमेवाश्रयते कर्म यादृशो ऽसौ संनिधिर्नात्यन्त बाध्यते । न चास्ति विधेश्चोदकप्राप्तेषु प्रोक्षणादिषु कि चित्प्रति प्रेमा द्वेषो वा, येन किञ्चित्संनिधापयेद्व्यवधापयेद्वा । तेन तुल्यमेव सर्वेषा संनिधा-पन प्रेक्षमाणः परिहरन्नपि च व्यवधिमवर्जनीयतया ऽभिमन्यमानः पुरुषेच्छाऽधीनक्रमप्रत्ययात्पराङ्मुमपि प्रथमपदार्थप्रवृत्तिक्रम सहकारि-णमासाद्य प्रयोगमध्यएव द्वितीयादिपदार्थप्रयोग तत्तत्क्रमेणैव निय-च्छति प्रधानप्रत्यासत्तिसाम्याय । अन्यथा वैषम्य धर्माणामत्यन्त-व्यवधिमद्भावः[१] स्यात् । तथा हि । यत. प्रभृति प्रथमपदार्थो ऽनुष्ठितः तत एव प्रभृति द्वितीयादीनामनुष्ठाने आद्यपदार्थप्रवृत्ति-विषयसम्बन्धिना धर्मेण द्वितीयादिधर्माऽनुष्ठानानां षोडशभि. परप-

१ व्यवधिमत्ता· २ पु पा ·

शुभिर्व्यवधानं स्यात् । तेनाऽवर्जनीयत्वात् प्रयोगविधिरनुमन्यत-एव । सप्रदशात्तु पशोरारभ्य द्वितीयादौ पदार्थे प्रतिलोम प्रयुज्यमाने द्वात्रिंशता व्यवधान स्यात् । एवमन्येष्वपि वैषम्यं द्रष्टव्यम् । तच्च सर्वत्र सम: प्रयोगविधिर्नाऽनुमन्यते । यत: यस्मात् स्वाऽवगतं च सहभाव प्रधानं संनिधिर्नाऽत्यन्त बाधते । अन्यथा वैषम्येण बाध: स्यात् । तस्मादनुष्ठानविशेष क्रम प्रतिपादयति प्रयोगविधिरिति प्रयोगक्रमो ऽपि विधेय इति सिद्धम् ।

अपर: कल्प: । साद्यस्क्रे श्रूयते सह पशूनालभतइति । तस्य सोमविकारत्वात्ते त्रयो ऽपि पशव: सोमाङ्गभूता अग्नीषोमीय-सवनीयाऽनुबन्ध्याश्चोदकप्राप्तास्तेषां त्वप्राप्तं सहत्वं विधीयते । तद्वि-धानाच्च प्राकृत: पाठक्रमो बाधितो भवति । सवनीयकाले च तेषां सहभाव:, परिव्याणानन्तर च सवनीयकाल:, त्रिवृता यूपं परिवीयेति वचनादिति सर्वमवगतम् । इद तु संदिह्यते, किममी सवनी-यसमये त्रयो ऽपि पशव प्रयुज्यमाना अनियमेन प्रयोक्तव्या, आहो स्वित्सवनीयस्य परस्तादग्नीषोमीयाऽनुबन्ध्याविति । तत्र सवनीयस-मये त्रयाणां सहाऽनुष्ठानश्रुते: सहभावस्य सम्पादनादर्थादापतति क्रम: । तन्नियमे च परिव्याणाऽऽनन्तर्यमत्यन्तं बाध्यते । अनियमे तु पक्षे तदस्तीति नात्यन्तिको बाध: । तस्मान्नियमोऽनियम क्रमस्याऽत्र ज्यायानिति प्राप्ते पुनरुपदिश्यते । निर्ज्ञात क्रममनुरुध्यमा-न: । उत्पत्तावेव हि सवनीयस्य परिव्याणाऽनन्तरकालभाव इव क्रमो ऽपि निर्ज्ञात: । सो ऽपि बलवद्बाधकाऽनुपनिपाते सवनीयशरीराऽब-हिर्भूतो ऽशक्य: परित्यक्तुम् । ननु सहभावविरोधो ऽस्य बाधक:, अत आह—स्वावगत च सहभावमत्यन्तमबाधमान । अयमभि-संधि: । सवनीयस्थाने सहभावविधानात्सवनीयमुपसर्पत: पशू न तु तौ सवनीय: । तदौत्पत्तिकस्थानवता सवनीयेन सह भवन्तौ तद-

विरोधेन स्वसहभाव व्यवस्थापयत:, न पुन: सवनीय म्वस्थाना-च्चालयत: । तदविरोधेनापि सहभावोपपत्ते: । सहभुवामेवारम्भवि-षयत्वात् । तदिदमुक्तमवगत सह पशूनालभतइति । विध्यवगत सहभावमत्यन्तमबाधमान एकारम्भविषयत्वादिति स्थानक्रमस्यापि विधिविषयत्वमुक्तम् ।

तथा ऽपर: कल्प. । यत्र प्रधानद्वयं युगपच्चोदित यथा सारस्वतौ भवत एतद्वै दैव्य मिथुनमिति, तत्र संदेह: किमेत-योरङ्गान्यनियतक्रमेण प्रयोक्तव्यानि, उत प्रधानप्रयोगक्रमेणेति । तत्र प्रधानचोदना ऽनुविधानादङ्गचोदनाना तस्याश्च युगपत्प्रधानद्वय-विधायिनीत्वेन क्रमाभावात्प्रधानचोदनप्रयुक्ता ऽनुष्ठानानामङ्गानामपि न क्रमनियम इति प्राप्ते पुनरुपस्थिते निर्ज्ञात क्रममनुरुध्यमान: स्त्रीपुंसयो: सरस्वत्या: सरस्वतश्च खलु याज्या ऽनुवाक्यायुगलयो: क्रमसमाम्नानाद्वा असमाम्नाने वा नियमाभावे ऽपि यदा यादृश: प्रधानक्रमो विज्ञातस्तमनुरुध्यमान: प्रयोगविधिरङ्गानामनुष्ठानविशेषं क्रमनियम प्रतिपादयति यत्प्रधान प्रथमं प्रयुज्यते तदङ्गान्यपि प्रथम प्रयोक्तव्यानीति ।

ननु प्रधानचोदना तत्तत्प्रधानद्वयविधानात्प्रधानक्रमनियमे ऽप्यसमर्था किमङ्ग पुनस्तदङ्गाना क्रमनियमे, इत्यत आह—स्वाव-ऽगत च सहभावमत्यन्तमबाधमान' । इदमत्रा ऽऽकूतम् । विधा-नस्य यौगपद्यमेतत् न विधेयस्या,ऽशक्यानुष्ठानोपदेशकत्वे शब्द-स्या ऽप्रामाण्यप्रसङ्गात् । यथा शक्नुयादित्युपबन्धात् अवश्यभाविनि क्रमे प्रधानयोर्द्वयोरन्योन्य तदङ्गाना च प्रधानाभ्या सहभावं प्रत्यासत्ति-मात्यन्तिकी विदधत् प्रयोगविधिर्यावानेवा ऽवर्जनीयतया व्यवधिराप-तति तावन्मात्रमनुमन्यते ना ऽभ्यधिकं व्यवधितुमपि । प्रधानप्रक्रमेण चाङ्गप्रक्रमेण यावदनुज्ञात व्यवधान भवति । अनियमे त्वनुज्ञाता

यतीति प्रयोगान्तरमेव । चिन्तितो ऽसौ पुरस्तात् । सत्यम् । प्रयोज्येयत्ता । अप्रयोज्यस्तु क्रमः प्रयोगविशेष एव । अतः पूर्वेणाऽसिद्धेरनुष्ठानविशेषचिन्तेयमिति भिद्यते लक्षणार्थः ।

षष्ठे त्वधिकारांशो निरूप्यते । सर्वाङ्गोपसंहारस-ऽतिरिक्तं भवेत्तच्च प्रयोगविधिर्न मृष्यति । ततः स्वाऽवगतसहभाव-पीडा मा प्रसाङ्क्षीदिति मुख्यक्रमसहायप्रयोगविधिरेवाङ्गक्रमनियमप्रमाणमिति अनियमे ऽपि क्रमो विधेय इति सिद्धम् ।

तस्य चतुर्विधविधिव्यापाराऽगोचरत्वात् क्रमो न चोदनालक्षण इति यदाक्षिप्त तत्प्रयोगविशेषकत्वात् क्रमस्य परिहृतमित्युपसंहरति—तस्मात्प्रयोगाङ्गमेव क्रमः । ननु प्रयोगाङ्ग चेत् क्रमः तर्हि चतुर्थे प्रयोगचिन्तयैव चिन्तित इति नाऽध्यायान्तर प्रयोजयतीति चोदयति—चिन्तितोसौ पुरस्तात् । परिहरति—सत्य, प्रयोगाङ्ग चिन्तितम् । किं चाऽसौ प्रयोज्या ये पदार्थास्तेषामपीयत्तारूपः, प्रयोगाङ्गचिन्तित क्रमस्तु न तथेत्याह—अप्रयोज्यस्तु क्रमः । अव्यापारत्वाच्च यद्यप्रयोज्यः कीदृशस्तर्हीत्यत आह—प्रयोगविशेष एव । यथा चाऽनेन विशिष्यते प्रयोगस्तथोपपादितं पुरस्तात् । उपसंहरति—अतः पूर्वेणासिद्धेरनुष्ठानविशेषचिन्तेयम् । न चैवमेकलक्षणत्वमित्याह—इति प्रयोगगतेयत्ताप्रयोगविशेषयोर्भेदाद्धेतोः सत्यपि प्रयोगविधिविषयतायास्तुल्यत्वे भिद्यते लक्षणार्थः, इतरथा तु चोदनाऽर्थविचारसाम्येन शास्त्रमेको ऽध्यायः स्यादिति । तदनेन द्वितीयादिना पञ्चमान्तेनाऽध्यायव्यूहेनोत्पत्तिविनियोगप्रयोगरूपविध्यंशनिरूपणपरेण कर्तव्यताविषयः कर्म साङ्गमनुष्ठेयं समधिगतम् ।

अथेदानीं कस्तस्य कर्ता ऽधिकारीति निरूप्यते—अधिकारो

मर्थस्येतरस्यापीति शक्तेः शास्त्रीयत्वाच्छास्त्रीयाऽशास्त्रीयत्वाभ्याम् । तत्र यथैवाऽपेक्षितसाधनत्वं प्रवृत्तिहेतुर्नेतरत्तथा शक्यत्वमपि । शक्यता ऽपि प्रवर्त्तनात्मविधिरूपमनुप्रविशन्तीष्टसाधनतावच्छास्त्रगम्या । तथा चाऽर्थिऽपि कर्तृसमीहितसाधनात्मिकाया कर्तव्यताया: विधेरश इतीह षष्ठे ऽधिकारांशो निरूप्यते विधेः । ननु स्वर्गकामपदश्रुतेरेव लब्धा स्वर्गकामस्य पुंसः कर्तृता स्वामिता चेति किमत्र निरूपणीय ? मित्यत आह—सर्वाङ्गोपसंहारसमर्थ एव उताऽसमर्थोपीति तद्विशेषः परीक्ष्यतइत्यर्थः । ननु संशयमापन्न. परीक्षामर्हति । न चेह सशय । सामर्थ्यरहितस्याऽर्थिनो ऽधिकारस्य मानान्तरनिरस्तत्वात् । अनुपलब्धाव्यवस्थायां च सशयोत्पत्तिरित्यत आह—शक्तेः शास्त्रीयत्वाच्छास्त्रीयाऽशास्त्रीयात्वाभ्याम् । एतदुक्त भवति । स्वर्गकामस्य कर्तुरपेक्षितोपायतामनवगमयत् कर्मणः शास्त्रं सामर्थ्यमन्तरेण कर्तृत्वाऽनुपपत्तेर्यदि सामर्थ्यमपि गमयेततस्तस्यापि शास्त्राऽधीनज्ञानत्वादर्थिमात्रोद्देशेन च शास्त्रप्रवृत्तेरनियमात् सर्वेषामर्थिना तत्कर्म शक्यमभिमतसाधन चेति शास्त्राऽवगमदृढिम्ना देवर्षितिर्यगन्धबधिरशूद्रादीनामपि तत्तदशाऽनुष्ठानसामर्थ्यबाधन च्च यो यथा शक्नुयात्तस्य तथा कर्माऽभिमतसाधनमिति कल्पनायामविशेषेणाऽधिकार इति प्रतिभाति । अथ न सामर्थ्यं शास्त्रगम्यमपि तु मानान्तरसिद्धमुपजीव्य कर्तुरभिमतसाधनतामात्रमवबोधयति शास्त्र, ततस्तस्मानान्तरं यमेवार्थिनमुपनयति तत्रैव शास्त्र व्यवतिष्ठते, तदपेक्षं हि तदशास्त्रमिति । तदनेन क्रमेण शक्ते. शास्त्रीयत्वाऽशास्त्रीयत्वपर्यवसितो विचार: ।

पूर्वपक्षं गृह्णाति—तत्र यथैवाऽपेक्षितसाधनत्वं प्रवृत्तिहेतुः नेतरत् तथा शक्यत्वमपि लोकत एवाऽन्वयव्यतिरेकाभ्यामवगत-

**मात्रस्येष्टसाधनम् । शक्यं च[1] शास्त्रात्प्रतीतं कर्म्म प्रमाणान्तरविरोधेन[2] यथासम्भवं व्यवतिष्ठतइति सर्वाधिकार उक्तः । प्रमाणान्तरविषयत्वात् शक्तेरप्राप्तेः शास्त्रस्यार्थवत्त्वात् विधिरूपाऽनुगताया अपि न शास्त्रार्थता । विधिस्तु मानान्तरगम्यशक्त्यपेक्षः शब्देन प्रतीयते । न**

मिति शक्यता ऽपि प्रवर्त्तनात्मविधिरूपमनुप्रविशन्तीष्टसाधनतेव शक्यतायास्तदपेक्ष शास्त्रमप्रमाणं स्यादिति भावः । ननु नित्यवदङ्गाम्नानस्याविकल्पत्वादङ्गसाकल्यवत् प्रधानसामर्थ्यमपि विधिगोचरः । न च तत् सहस्रेणापि शास्त्रै तिर्यगादीन् प्रति शक्य शक्यतामापादयितुम्, इत्येतन्निराकर्तुमुपसंहरति—तथा च शास्त्रगम्यसमीहितसाधनतावच्छेद्यत्वे नियामकस्य प्रमाणस्याऽभावात् अर्थिमात्रस्येष्टसाधनं शक्य च शास्त्रात् प्रतीत कर्म केवल क्व चित्प्रमाणान्तरविरोधदर्शनादप्रामाण्यभिया प्रमाणान्तरविरोधेन यथासभवं ये। यावन्ति शक्नोत्युपसंहर्त्तुमङ्गानि तस्य तावद्भिरेवाङ्गैस्तत्प्रधान शक्यमभिमतसाधनमिति व्यवतिष्ठते इति शब्दाऽवगताऽर्थिमात्रद्धिन्न सर्वाऽधिकार उक्तः ।

सिद्धान्तमुपक्रमते—प्रमाणान्तरविषयत्वात्तु शक्तेरप्राप्तेः शास्त्रस्याऽर्थवत्त्वाद्विधिरूपानुगताया अपि न शास्त्रार्थता । तु शब्दात्पूर्वपक्षं व्यावर्त्तयति । भवेदेतदेवं यदि शक्तिः शास्त्रतो ऽवगम्येत, न त्वेदस्ति । अप्राप्तप्रापणं हि शास्त्रम् । न चाऽभिमतसाधनतावत्प्रमाणान्तरेणाऽप्राप्ता शक्तिः । तस्माद्विधिरूपाऽनुगतामपि शक्ति प्राप्तत्वान्न शास्त्रं गोचयरति, किं तु तां मानान्तरसिद्धामुपजीव्य कर्तृसमीहितसाधनतामप्राप्तामवगमयतीत्याह—विधिस्तु मानान्तरगम्यशक्त्यपेक्षः शब्देन प्रतीयते । नन्वेव सापेक्षत्वादप्रामाण्यप्रसङ्गः शास्त्रस्येत्यत आह—न चैव साऽपेक्षत्वदोषः । यथा माना-

[1] शक्तमपि—मू॰ पु । एवमग्ते । [2] विधानेन—मू॰ पु॰ पा॰ ।

चैवं सापेक्षत्वदोषः, यथा मानान्तरगोचरपदार्थरूपाऽपेक्षित्वे। अन्यथा सर्वः सर्वाङ्गोपसंहारसमर्थः स्यात्। कुतो यथासम्भवं व्यवस्था? प्रमाणान्तरविरोधादिति चेत्, हन्त तर्हि शब्दस्याऽप्रामाण्यम्। लक्षणप्रमाणान्तरसिद्धो यः पदार्थस्वरूपविशेषोपायप्रतिपत्तिरनन्यगोचरः शास्त्रविषयोऽभ्युपगमनीयः। तथा च नाशक्तस्य प्रवृत्तिहेतुरकर्तृकत्वादिति नाऽसमर्थस्तत्र प्रवर्त्यो गम्यतइति समर्थोऽधिकारः। सति चाऽधिकारे स कस्येति स एव पुरस्तात्प्रतिपादितः। कथं पुनस्तस्याऽभावः शङ्कितः?

न्तरगोचरपदार्थरूपाऽपेक्षित्वे स्वविषये हि मानान्तराऽपेक्षा प्रामाण्य व्याहन्ति न स्वसामग्र्या अतिप्रसङ्गात्। न च शक्यता विध्यनुगतापि शास्त्रस्य विषय इत्युक्तमित्यर्थः। अन्यथा यदि शक्तिविषय शास्त्रं स्यात् ततो नियामकप्रमाणाऽभावादर्थिपदेन सहसैव सर्वेषामर्थिनामुपस्थापनात्सर्वः सर्वाङ्गोपसंहारसमर्थः स्यात्, कुतो यथासम्भव व्यवस्था।

पूर्वपक्षी शङ्कते—प्रमाणान्तरविरोधादिति चेत्। अर्थिपदसमभिव्याहृतेन विधिना सर्वेषां तिर्यगादीनां सामर्थ्यप्रतिपादनात् तस्य च मानान्तरविरोधात्। उत्तरम्—हन्त तर्हि शब्दस्याऽप्रामाण्यम्। लक्षणप्रमाणान्तरसिद्धो यः पदार्थस्वरूपविशेषः शक्यतालक्षणः तदुपायप्रतिपत्तिर्यस्य शास्त्रविषयस्य सोऽनन्यगोचरोऽभ्युपगमनीयः। तथा च शक्यतायाहि नियामके प्रमाणे सति समर्थाधिकारसिद्धिः। यत्पुनराद्ये विचारितं किमधिकारोऽस्ति न वेति, तस्याऽत्र सङ्गतिमाह—सति चाऽधिकारे धर्मिणि कस्य समर्थस्येति तद्विशेषनिरूपणा घटते नान्यथेति स एवाऽधिकारसद्भाव एव पुरस्तात् प्रतिपादित। ननु स्वर्गकामो यजेतेत्येवमादिभ्य.

For, the determinants of contradictability, such as perceptibility, are common to both Nor can Scripture[1] be said to be unauthoritative by teaching a negation which is not absolutely real What it teaches is the unreality of all else than Brahman, including the universe and its negation as well, and hence Scripture is not unauthoritative

Now (asks the opponent), in what manner is the universe the counter-entity of this negation, is it in its own character (*sva-rūpēna*),[2] or, secondly, is it without contradicting its character of being distinct from non-entity, or, lastly, is it in its absolutely real aspect (*pāramārthikatva-ākārēna*) It cannot be the first, for, absolute negation is impossible in the case of the other etc or the silver etc which, in their character of being different from non-entity, actually exist at the time of perception, whose origin is established by Scripture[3] and other authorities, which give rise to physical action (*artha kriyā*), which have nescience (*avidyā*) for their material cause (*upādāna*) and which are destructible by the knowledge of the truth Nor can it be the second, for, since reality which is the same as non-contradictability depends for its explanation on the nature of unreality which is the same as contradictability, there is the fault of mutual dependence As regards, next, the absolutely real nature (of the universe),[4] if it is negatived in

(1) Passages like "one only without a second," "there is nothing multifold here" &c

(2) i e as qualified by its general or particular attributes

(3) In passages like *idam sarvam asrijata*

(4) This is the third case supposed above

its particular character, then the fault referred to in the first case would arise And if, for this reason, even that is said to be negatived in an absolutely real aspect, there will be the fault of infinite regression (*anavasthā*)

It is not so My view is that the universe or the presentation of the pearl-shell as silver is the counter-entity of absolute negation in its particular character (*svarūpēna*) Thus, from Scriptural passages like "There is naught here that is differentiated,"[1] we understand the negation of the universe in its own character, in the same way as we understand the negation of silver in its particular character, namely, that it is not, was not, and will not be, when, after the false perception of silver in the pearl-shell, the real substrate[2] is apprehended It cannot be said that the object of the negation is the ordinary real silver in its particular character, for, then, the false apprehension and the contradiction will not have the same object[3] and, further, the contradiction will relate to what is not in the context[4] Nor will the origin etc (of the universe) become impossible under this view For, to be uncontradicted in its own nature is not what determines that a thing has an origin etc For example, it is granted by another school that

(1) *Nēha nānāsti kim chana*

(2) Namely, the pearl-shell

(3) The false apprehension is of the falsely presented silver, while the contradiction would be that of real silver

(4) Because, it is not real silver that is falsely apprehended in the pearl-shell

the ether is without an origin,[1] though it is assumed by them that it is uncontradictable The determinant must therefore be said to be something else, as, for example, the inherent property of the thing[2] And such a determinant I too grant, though as having only a phenomenal existence (*kalpita*)

It cannot be said that the above involves a contradiction of the statement[3], namely, "either the silver in the market in its particular character, or the illusory silver in its absolutely real aspect, is the counter-entity of the absolute negation" The meaning of these words of the teacher is that the counter-entity is the illusory silver only, which is apprehended as being identical with the ordinary real silver The words "either" "or" imply that it is immaterial whether it is such a counter-entity in its particular character or in its absoluty real aspect The statement as a whole is intended to refute the view that the silver is only apprehended as being identical with what is actually present to the eyesight and to explain in addition, that it is also apprehended as being identical with the ordinary real silver It is thus stated in the *Tattvadīpikā*[4] "Hence the state-

(1) *Akāsa* or ether is eternal according to the *tārkikas*

(2) Like the being perceptible; another such determinant will be Scriptural passages declaring the origin of the thing in question

(3) In the Vivarana · *traikālika-nishēdham prati sva rūpēna āpana stham rūpyam pāramārthikatva ākārēna prātibhāsikam vā pratiyōgi*

(4) A commentary on the Vivarana

ment of the ancient teachers that only the ordinary real silver is the object of the contradiction 'this is not silver' should be explained as meaning that the object before the eye which prompts the seeker of silver to action and which is therefore directly perceived as being identical with the ordinary real silver, is the counter-entity of the negation that it is not at any time the ordinary real silver" This is the purport The particle "not," when applied to an object having a particular attribute and its counter-entity both of which are denoted by words having the same case-ending, implies, as an invariable rule, their mutual negation Thus, like the sentence "the pot is not the cloth," the sentence "this is not silver" also implies a mutual negation Now, since the knowledge of the thing expressed is exactly similar to the knowledge derived from the expression thereof, it follows that the knowledge we have of the things expressed by the sentence "this is not silver" is one of mutual negation also Thus, in the illusory silver before the eye which is expressed by the word 'this,' we perceive the reciprocal negation of ordinary silver which is expressed by the word 'silver' The knowledge denoted by the sentence "silver is not in this" is however one of absolute negation, because it is a rule that absence of relation (*samsarga*) is meant only when the particle "not" is applied to an object with a particular attribute and its contradictory which are expressed by words having different case-endings. The object of such a knowledge, in the present instance, is the absolute negation, in a phenomenal sense, of only the

illusory silver before the eye In this case unreality is explicitly understood There is thus no contradiction of an accepted tenet (*apa siddhānta*),[1] or the fault of erroneous conception (*anyathā khyāti*),[2] or any inconsistency of the text[3] Thus all is well

Would not this definition of unreality result, (asks the opponent), in absolute non-existence (*atyanta-asattva*) The being the counter-entity of absolute negation in a given substrate is, it must be conceded, the same as saying that the earthen vessel etc which are accepted as non-existent elsewhere than in that substrate, are really the counter-entity of absolute negation everywhere Otherwise it would follow that it exists elsewhere[4]

(1) The passage in the Vivarana is understood by the opponent to mean that the illusory silver cannot be negatived in its particular character, but only real silver The author says that such is not the tenet accepted by his school

(2) The opponent says that if, according to the passage in the Vivarana, the real silver, in its particular character, is the counter entit of the negation, there will be an inconsistency since the illusion and its negation will relate to different objects If, to avoid this fault, the real silver is said to be the object of the illusion also, there will be the fault of erroneous conception, since real silver cannot be illusory This objection has been sufficiently explained away in the text.

(3) The passage in the Vivarana is interpreted by our author to mean that, in the instance of the pearl shell and silver, the real silver is the object of reciprocal negation, and the illusory silver, of absolute negation

(4) It is only when the subject is acknowledged not to have real existence elsewhere that the proof of its not really existing in a given substrate will establish its absolute unreality, because, if it has real existence elsewhere in reality, the attempt to prove its unreality will be of no avail

You too have stated that they cannot exist elsewhere[1] How, then, is unreality distinguished from non entity The non-entity of a hare's horn is not of a different kind You cannot say that non-entity is only inexpressibility (*nirupākhyatva*)[2], for it is expressed by the very word 'inexpressibility' Nor is it non-apprehensibility If what is non-existent cannot be apprehended, there would be no knowledge of difference from non-entity, no contradiction of the apprehension of non-entity and no application of the word "non-existent' Nor is this non-entity the same as not being apprehended through sense-perception, for, this would equally apply to categories eternally beyond the cognisance of the senses[3]

It is not so The fact of being the counter-entity of absolute negation everywhere is, no doubt, common to both non-entity and unreality (*anirvāchya*) But absolute non-entity means the not being apprehensible as existing in any substrate whatever There is not such a non-entity in the case of the pearl-shell and silver or the universe prior to its negation[4] Neither of these two, therefore, is non-entity. It cannot be said that the silver in the pearl-shell or the universe is not, prior to its negation, apprehended as having existence This is what is meant to be signified by

(1) This refers to a passage in Vivarana

(2) i e *Sabda-vritti avishayatvam*

(3) Such as the qualities of *gurutva* (gravity), *dharma* (merit), *adharma* (demerit) and *samskāra* (faculty)

(4) By a correct perception of the pearl shell in the former case, and by the knowledge of Brahman in the latter

the word "substrate" (*upādhi*) which is synonymous with entity (*sad-arthaka*)[1] The nihilists[2] do not accept an illusion having a real substrate and hence do not grant that the silver in the pearl-shell or the universe is capable of being apprehended as having an existence in any substrate whatsoever[3]

If this be so, (says the opponent), the net result is that unreality is the same as being the counter-entity of absolute negation in every real substrate[4] This will be proving the proven in the case of substances like the ether, which, being incapable of residing

(1) This refers to the words *pratipanna upādhau* in the second definition of unreality An *upādhi* or substrate is something which imparts its own characteristic to what is proximate to it *Brahman* which is the *upādhi* in the present case imparts its own attribute of entity (or non-contradictability), though illusorily, to the universe which is proximate to it in that it is perceptible

(2) The Buddhist school known as *sūnya vādins* or *mādhyamikas*

(3) This is in answer to the opponent who says that this definition of unreality does not show it as different from the falsity or emptiness (*alīkatva* or *sūnyatva*) of everything preached by the nihilists, as they too accept, as perforce they must, an existence, which is negatived by a subsequent knowledge of emptiness The answer is that the nihilists accept neither a real substrate nor the possibility of anything being apprehended as existing in any substrate The existence they are forced to grant, prior to disillusionment, is the capability for physical action (*artha kriyā-kāritva*) which is believed in by everybody in practical life, and nothing more Hence the above definition of unreality is not nihilism

(4) The opponent studiously omits the word *pratipanna* as he thinks that it serves no purpose.

in any substance (*a-vritti*), are accepted by the dialecticians to be the counter entities of universal absolute negation If you say that, given a subject and a real substance as its substrate (*adhikarana*), the unreality of the former is the same as its being the counter-entity of absolute negation in relation to that substrate, you no doubt, by the use of the word "substrate," exclude substances that cannot reside in anything But, if a place is, by contact (*samyōga*) or inherence (*samavāya*), the substrate of an earthen vessel, then the earthen vessel becomes the counter-entity of absolute negation in that place by inherence or contact [1] And therefore you cannot escape the fault of proving the proven in the case of all substances that are capable of residing in a thing (*vrittimat*) If, on the other hand, you say that, by whatever relation[2] one is the substrate of the other, the unreality of the latter is its being the counter entity of absolute negation in the former by that very relation, then there will be the fault of proving the proven in the case of contact etc, whose nature is to cover only a part of a thing (*avyāpya vritti*)[3]

(1) For if it exists by contact, it is non-existent by inherence, and *vice versa*

(2) *i e* either by *samyōga* or by *samavāya*

(3) *e g*, if a monkey exists by contact in one part of the tree, it does not exist by contact in any other part thereof, and to that extent there is *siddha sādhana*, Cf *agrē vrikshah kapi samyōgī, mūlē na*

It cannot be argued as above The word "accepted" (*pratipanna*) signifies that, in whatever aspect (*yēna rupēna*) one thing is accepted as the substrate of another, the latter is, in that very aspect, the counter entity of absolute negation in the former[1] This aspect may be either a kind of connection (*sambandha-visēsha*) or a kind of particularization (*avacchēdaka-visēsha*) A spot of ground is not apprehended as the substrate of an earthen vessel except by a kind of connection Nor is a tree apprehended as the substrate of contact with a monkey except by a kind of particularization[2] Now, where is the fault of proving the proven if we define unreality as follows By whatever kind of connection or by whatever kind of particularization one thing is capable of being apprehended as the substrate of another, the unreality of the latter is its being the counter-entity of absolute negation in that substrate by that very kind of connection or by that very kind of particularization

(1) It is pointed out here that the word *pratipanna* has its own use

(2) Though we generally speak of the monkey on the tree, we understand it to be only at a particular point on a particular branch, (*agrē*, *madhyē* or *mūlē*) Brahmānanda however interprets these two sentences in a slightly different way *viz*, one cannot say that a thing cannot be the substrate of another if we introduce connection or particularization, because, according to him, a thing may be a substrate without either *sambandha* or *avacchēda* This interpretation appears somewhat strained

Nay, more,[1]—I may say that ether etc[2] are not the counter entity of absolute negation in the same way as they are not the counter entity of sub sequent negation (*dhvamsa-abhāva*) or antecedent negation (*prāg-abhāva*), because the absence of an establishing proof is equal in both cases[3] No direct perception can arise that the ether is not present in any particular place Nor is there any proper argument (*anukūlatarka*) to support an inference[4] If the absolute negation of ether etc. is to be apprehended merely as a general concept (*sāmānyatōdṛishta*)[5],

(1) In the above discussion it was assumed that ether &c, were the counter entity of absolute negation as held by the dialecticians and that both a substance (e g a monkey) and its absolute negation may exist in the same place (e g a tree) Now the author proceeds to affirm that he does not subscribe to the above views

(2) i e *avritti* substances

(3) The ether has neither origin nor end, because no such perception ever arises, nor can such a thing be inferred by proper argument The same may be said of absolute negation This is amplified below

(4) Brahmānanda interprets *tarka* in its special sense to mean a *reductio ad absurdum*, and gives the following explanation Weight, though not amenable to direct perception, is inferred as being non existent in light, because, otherwise, light should fall down and could be manufactured, which is absurd There is no such *reductio ad absurdum* if the absolute negation of ether is not conceded

(5) According to the Naiyayikas, inference is of three kinds *pūrvavat* or based on a cause, *sēshavat* or based on an effect, and *sāmānyatô drishta* or based on constant association As an instance of the latter may be cited the inference of the existence of the senses, which are themselves imperceptible, from the fact that the action of perception cannot take place without instruments

their subsequent and antecedent negations might also result in the same way Further, if the absolute negation of ether &c is not granted, there is no fallacy of the non-appearance of any effect [1]

So too, an earthen vessel etc and their absolute negation cannot be co existent in a single place, because there is no proof to establish that, on the spot of ground where an earthen vessel exists by contact (*saṁyōga-sambandhēna*), there is also the negation of the earthen vessel by inherence (*samavāya-sambandhēna*) Further, there is simplicity of reasoning (*lāghava*) in treating the absolute negation as that of the earthen vessel merely and to conclude therefrom that it is impossible for such negation to be co-existent with the earthen vessel, while, on the other hand, the qualification of the absolute negation by a particular connection will lead to complexity (*gaurava*) Again, it is possible to apprehend the absolute negation in relation merely to the inherence or merely to the contact of the earthen vessel [2] Nor can it be suggested that the earthen vessel is a substance not capable of

(1) If on the other hand, for example, the reciprocal negation of the earthen vessel in ether is not admitted, then ether would become identical with the earthen vessel, and there would result the absurdity that it cannot, like the earthen vessel, be produced from clay and so on

(2) *i e*, a knowledge of the contact is not necessary to apprehend the absence of inherence or *vice versa*

residing in a place,[1] for, the relation of the supporter and the supported (*ādhāra-ādhēya-bhāva*) is actually present by direct perception There is also the reason stated in the former case[2]

In the same way, contact and its negation cannot both co exist in the same substrate The sentence " the tree has contact with the monkey at its top, but not at its root," can only mean that the contact belongs to its top while the negation of the contact belongs to its root

If the above view[3] be held, unreality must be understood as the being the counter-entity of absolute negation in a substrate of pure entity[4] It cannot be inferred from this that the thing and its negation do not exclude each other and therefore the apprehension of one of them does not invalidate that of the other [5] For, though the two[6] are not exclusive of each other when having different kinds of existence, they are neverthe-

(1) And hence, being non-existent everywhere (like ether according to the dialecticians), is co-existent with its own absolute negation on the spot of ground where it stands

(2) That there is no *reductio ad absurdum* by not granting the co-existence of the earthen vessel and its negation

(3) *i e*, the view expressed in the above three paragraphs

(4) *San mātra nishtha atyanta abhāva-pratiyōgitvam,* where Brahmānanda explains *san mātra-nishtha* as *sattva vyāpaka* *San mātra* is of course Brahman

(5) The meaning is that both the universe and its negation co exist in Brahman, and, by reason of such co existence, the knowledge of *bhāva* and that of *abhāva* do not stand to each other in the relation of *bādhya* and *badhaka*

(6) Namely, a thing and its negation

less mutually exclusive when having the same kind of existence[1] It is, for instance, the rule that the earthen vessel does not phenomenally exist on the spot of ground where its absolute negation exists phenomenally It cannot therefore be contended that, owing to the phenomenality of the negation which is the object of the apprehension "this is a pearl-shell and not silver," it removes only the phenomenality of the illusory silver present before the eye, but does not take away its illusory existence, and, hence, the apprehension "this is silver" will subsist even subsequent to the negation For, when the ignorance which is the material cause of the illusory silver is destroyed by the direct perception "this is a pearl-shell," the illusory existence (of the silver) is also thereby destroyed The ignorance of the pearl-shell is indeed the material cause of the illusory silver, and when the former ceases to exist, the non-existence of the latter must necessarily follow[2] Therefore it is that, in cases where a mere indirect (*parōksha*) know ledge of the substrate does not remove the ignorance which is the material cause of illusion, the removal of the character of phenomenality does not also mean the removal of illusoriness, and hence the apprehension, such as that sugar is bitter, continues to exist

(1) In the present case the universe is phenomenal whereas its absolute negation, which is, according to the *Bhātta* school, identical with the substrate (Brahman), is real

(2) For, when the material cause is non existent, the effect must necessarily be so

In the same manner, though, prior to the direct realisation of the indivisible Brahman, the phenomenality of the universe is removed[1] by indirect knowledge, the apprehension thereof still subsists The apprehension will not however subsist when the ignorance of the substrate is itself destroyed

The opponents argue as follows If the word substrate (*upādhi*) means mere location (*adhikarana*), there will be the fault of contrary conclusion, because the quality of form (*rūpa*) is not unreal though it is the counter entity of absolute negation in the air (*vāyu*) If, on the other hand, the word means a basis (*adhishthāna*),[2] then, since the basis is no other than the object the ignorance of which is the material cause of the illusion, there is the fault of mutual dependence, because the unreality of the object will depend on the illusoriness of the apprehension, and the illusoriness of the apprehension on the unreality of the object This argument has been set at rest by the above ex-

(1) *i e* the universe is correctly understood as only phenomenal and not real

(2) The difference between *adhikarana* and *adhishthāna* may best be illustrated by an example The spot of ground is the *adhikarana* of the earthen vessel, but the clay of which the vessel is made is its *adhishthāna* *Adhikarana* is the more generic term, so that every *adhishthāna* is an *adhikarana* but not *vice versa* Further examples of *adhishthāna* are substances in respect of quality (*guna*) or action (*kriyā*) resident therein, and the rope in respect of its false presentation as a snake The *tārkikas* hold that the absolute negation of the subject is identical with the substrate only when the latter is an *adhishthāna* but not when it is any other *adhikarana* The *mīmāmsakas* and the *vēdāntins* do not of course accept this restriction

planation, for, there is no fallacy if the word 'substrate' is understood to mean location in the manner above set forth It cannot be argued from this that the above definition of unreality improperly extends (*ativyāpti*) to Brahman itself, for the reason that Brahman is non-existent in such substrates as space and time according to the scriptural passage "He alone is downward etc"[1] For, since Brahman is attributeless, the attribute of being the counter-entity of negation cannot be ascribed thereto Nor, on the other hand, can it be argued that, for the above reason, even reality (*satyatva*) cannot be ascribed to Brahman, and that, therefore, the scriptural passage "Brahman is reality, knowledge infinite etc" becomes untrue As we do not accept negation as being different from the substrate, there is no inconsistency in speaking of reality which is the negation of unreality as being the very nature (*svarūpa*) of Brahman[2] The above explanation applies equally to such descriptions of Brahman as self-evident etc For, being self-evident is only the negation of being illuminable by something else Being eternal is the negation of limitation by time Being infinite is the negation of limitation by space Being whole (*pūrna tva*) is the negation of limitation by substance Thus, though attributes of positive import are not resident

(1) *sa ēva adhastāt sa uparishtāt sa paschāt sa purastāt sa dakshinatah sa uttaratah sa ēva idam sarvam*

(2) Since Brahman is the substrate of unreality, the negation of unreality is identical with the substrate

in Brahman, the negation of all attributes is its very nature, and therefore there is no inconsistency whatever Thus all is well

## Section 6 —Third definition of unreality (1)

Or, unreality is the being removable by knowledge

Now, (says the opponent) this will apply equally[2] to a prior knowledge which is displaceable by a subsequent knowledge On the other hand, it will not include such things as an earthen vessel which may be destroyed by the fall of a hammer The same objection will remain, even if you mean that the removal should be by knowledge in its character as knowledge[3] For, in a case like the false presentation of a pearl-shell as silver, where the knowledge which dispels is of the nature of a direct perception of the substrate (*adhishthāna sākshātkāra*), there is no removal by knowledge in its character as knowledge, and hence there is incompleteness of the predicate Or, if you mean that the removal is by knowledge in any aspect included in the term 'knowledge,'[4] then the above definition will also extent to a mental impression (*samskāra*) which is removable by knowledge in its aspect as memory (*smriti*), memory being included in

(1) *Jnāna nivartyatvam*

(2) The word used by the opponent is *avyāpti*, though he really means *siddha sādhana* or the fault of proving the proven

(3) *Jnānatvēna jnāna nivartyatvam*

(4) *Jnānatva vyāpyadharmēna jnānanivartyatvam*

पूर्वस्मिन्पादे जीवोपकरणभूतभौतिकानि ब्रह्मणो जायन्त इत्युक्तम् । तदुपजीव्य तदुपहितस्य जीवस्य संसारप्रकारं वैराग्यार्थं निरूपयितुं देहान्तरारम्भकभूतसूक्ष्मसम्परिष्वक्तस्यैव लोकान्तरगमनमित्याह ।

**तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ३ । १ । १ ॥**

पूर्वस्मिन्नध्याये ब्रह्मणि समन्वयस्य स्मृतिन्यायश्रुतिविरोधनिरासेनानध्यवसायलक्षणाप्रामाण्यनिरासात्तार्तीयो विचारो भवतीत्यनयोरध्याययोर्हेतुहेतुमद्भाव सङ्गतिः । अत्र प्रथमपादे जीवस्य परलोकगमनागमनविचारेण वैराग्यं निरूप्यते "तस्माज्जुगुप्सेते"ति श्रुतेः । द्वितीयपादे त्वंपदार्थतत्पदार्थयोः परिशोधनं क्रियते । तृतीयपादे च सगुणविद्यागुणोपसंहारः । चतुर्थे पादे निर्गुणब्रह्मज्ञानस्य बहिरङ्गानि यज्ञाश्रमादीन्यन्तरङ्गानि शमादीनि च निरूप्यन्ते । अत्र श्लोकः ।

"तृतीये विरतिस्तत्त्वंपदार्थपरिशोधनम् ।
गुणोपसंहृतिर्ज्ञानबहिरङ्गादिसाधनम् ॥ "इति ।

तथा च तत्तद्विचारात्मकत्वेन तत्तदधिकरणानां तत्तपादसङ्गतिर्बोध्या ।

तत्र जीवो मुख्यप्राणेन्द्रियसहकृतो मूलाविद्याधर्माधर्मपूर्वभ्रमजन्यसंस्कारात्मकपूर्वप्रज्ञासहितः पूर्वदेहं विहाय देहान्तरं गच्छतीति श्रुतिसिद्धम् । तादृशो जीवः किं देहान्तरारम्भकैः पञ्चीकृतभूतभागैरेतद्देहवन्मुख्यप्राणादीनामाधारभूतैरसम्परिष्वक्तो गच्छति, उत सम्परिष्वक्त इति सन्देहे, मानाभावादसम्परिष्वक्तो गच्छतीति

पूर्वपक्षः । तथा च निराधारप्राणादिगमनासम्भवान्न वैराग्यमिति फलम् । सिद्धान्ते तु तत्सम्भवाद्वैराग्यमिति बोध्यम् । तत्रायं सिद्धान्तः । तदन्तरप्रतिपत्तौ देहान्तरप्रतिपत्तौ तदारम्भकभूतैः सम्परिष्वक्तो रंहति गच्छति । कुतः । प्रश्ननिरूपणाभ्याम् । तथा हि द्युलोकपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निदृष्ट्योपासनाख्यपञ्चाग्निविद्याप्रस्तावे प्रवाहणाख्यस्य राज्ञः सभां प्रविष्टं श्वेतकेतुं राजा पप्रच्छ "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती" ति । अयमर्थः । अस्मिन् लोके जलमयदधिपयःप्रभृति द्रव्यकहोमे श्रद्धापूर्वकं कृते तद्धुतं जलं यजमानं प्राप्य तद्द्वारा द्युलोकाख्याग्निं गच्छति । श्रद्धाख्याहुतित्वमापन्नं यजमानेन्द्रियाधिष्ठातृदेवास्तस्मिन्नग्नौ जुह्वति । तच्च हुतं जलं सोमाख्यदेहात्मना परिणमते । स च जलमयो देहः पर्जन्येऽग्नौ वृष्ट्यभिमानिदेवविशेषे हुतः सन्वृष्टिर्भवति । तदेव जलं सोमाख्यदेहभावं वृष्टिभावं चापन्नं पृथिव्यामग्नौ हुतं सद्व्रीहियवाद्यन्नभावमाप्नोति । ताश्चान्नभावमापन्ना आपः पुरुषाग्नौ हुताः सत्यो रेतोभावमाप्नुवन्ति । ताश्च रेतोभावमापन्नाः पञ्चमाहुतिरूपा आपो योषिदग्नौ हुता गर्भात्मना स्थिताः पुरुष इति संज्ञां लभन्त इति पुरुषवचस्त्वमपामिति वस्तुगतिः । तां वस्तुगतिं जानन्नेव राजा पञ्चम्यामाहुतौ हुतायां यथा पुरुषशब्दवाच्या आपः पुरुषाकारेण परिणमन्ते तथा किं त्वं वेत्थेति पप्रच्छ । एवं पृष्टः श्वेतकेतुः पितरं गौतममागत्योवाच, एवमहं राज्ञा पृष्टोऽस्मि तस्योत्तरं न जानामीति । स च गौतमः स्वयमप्यज्ञः सम्राजसमीपं गत्वा तां विद्यां ब्रूहीत्युवाच । एवमुक्तस्य राज्ञो गौतमं प्रति निरूपणं पञ्चाग्नि-

विद्योपदेशः । तत्र चापां पुरुषवचस्त्वप्रकारः स्फुटीकृतः । एवं प्रश्ननिरूपणाभ्यामबादिभूतसम्परिष्वक्तो रंहतीति गम्यते ॥

ननूक्तप्रश्ननिरूपणाभ्यामद्भिः सम्परिष्वक्तो गच्छतीति गम्यते । तथा च कथमवितरभूतपरिष्वङ्गसिद्धिः । तत्राह ।

**त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ ३ । १ । २ ॥**

"तु" रुक्तचोद्यनिरासार्थः । अपां त्रिवृत्करणश्रुत्या त्र्यात्मकत्वाद्देहस्य यजमानद्वारा निर्गताज्जलाज्जन्यत्वे सिद्धे, इतरभूतद्वयजन्यत्वं तत्परिष्वङ्गश्च सिद्ध्यति । यद्वा वातपित्तश्लेष्मभिस्त्रिभिः शरीरस्य त्र्यात्मकत्वाज्जलमात्रजन्यत्वं न सम्भवति, वातपित्तयोर्वायुतेजःकार्यत्वात् । तथा चावितरभूतचतुष्टयजन्यत्वमपि गन्धस्वेदापाकप्राणावकाशानां पञ्चभूतकार्याणां दर्शनात् । तर्हि श्रुतावब्ग्रहणं कथं, तत्राह "भूयस्त्वा"दिति । यद्यपि देहे पृथिवीभूयस्त्वमेव, तथाऽपि तेजआद्यपेक्षयाऽपां भूयस्त्वं बोध्यम् ॥

**प्राणगतेश्च ॥ ३ । १ । ३ ॥**

प्राणानां मुख्यप्राणचक्षुरादीनां जीवद्दशायां देहात्मनास्थितभूताश्रितानां गमनदर्शनात् "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"ति श्रुत्या मरणकाले प्राणानां गतिश्रवणाद्भूताश्रिता एव प्राणा गच्छन्तीति वक्तव्यम् । तथा च भूतसम्परिष्वक्तस्य रंहणमित्यर्थः ॥

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३।१।४ ॥**

ननु "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं

प्राणश्चक्षुरादित्य"मित्यादिना वागादीनां प्राणानामग्न्यादिषु देवेषु गतेर्लयस्य श्रवणान्न तेषां लोकान्तरं प्रति गतिर्यया भूतपरिष्वङ्गसिद्धिः स्यादिति चेन्न । "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"ति श्रुतिविरोधेन "यत्रास्ये"त्यादिश्रुते"रोषधीर्लोमानि वनस्पतीन्केशा" इति सहपाठेन भाक्तत्वावगमात् । न हि मृतस्य लोमानि केशाश्च प्रत्यक्षेण दृश्यमाना ओषधिवनस्पतिषु लयं गच्छन्तो दृष्यन्ते । अतस्तत्सहपाठादग्न्यादिषु वागादिलय औपचारिक इत्यर्थः ॥

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ३ । १ । ५ ॥**

ननु द्युलोकादिषु पञ्चाग्निष्वपामाहुतित्वे सिद्धे पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारो निश्चेतुं शक्यते । तदेव नास्ति, प्रथमे द्युलोकाख्याग्नावपामाहुतित्वस्याश्रवणात् । किं तु "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती"ति प्रथमेऽग्नौ श्रद्धैवाहुतित्वेन श्रूयत इति चेन्न । हि यतस्ता एवापः श्रद्धाशब्देनोच्यन्ते । कुतः । उपपत्तेः । अपां हि होमद्रव्यत्वेनाहुतित्वं सम्भवति । मनोवृत्तिविशेषरूपश्रद्धा तु मनसः सकाशात्पृथक्कृत्य होमायोपादातुं न शक्यते, तदाहुतिजन्यसोमाख्यशरीरादेरब्बाहुल्यानुपपत्तेश्च । तस्माच्छ्रद्धापूर्वकमस्मिन्लोकेऽब्बहुलदधिपयःप्रभृतिद्रव्यस्य हुतस्य द्युलोकाग्नावाहुतित्वेन पर्यवसानादप्सु श्रद्धाशब्दो लाक्षणिक इत्यर्थः । "आपो हास्मै श्रद्धां सन्नमन्ते पुण्याय कर्मणे" इति श्रुतावपां श्रद्धाजनकत्वश्रवणात्तेन सम्बन्धेन चाप्सु श्रद्धाशब्दस्य लक्षणा । असौ पुंस आपो दर्शनमा-

त्रेण स्नानादिपुण्यकर्मसिद्ध्यर्थं श्रद्धां सन्नमन्ते जनयन्तीति श्रुत्यर्थः ॥

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ३ । १ । ६ ॥**

ननु भवतु सोमवृष्ट्यादिक्रमेण पञ्चम्यामाहुतावपां पुरुषवचस्त्वप्रकारः । तथाऽप्यबादिभूतसंपरिष्वक्तो जीवो रंहतीत्ययुक्तमेव, अबादिवज्जीवस्य रंहणकर्तृत्वस्याश्रुतत्वादिति चेन्न । कुतः । इष्टादिकारिणां प्रतीतेः । "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ती" त्यादिना गार्हस्थ्ये स्थित्वेष्टादिकर्मकारिणां धूमादिमार्गेण चन्द्रलोकप्राप्तिमुक्त्वा, तानिष्टादिकारिणश्चन्द्रलोकस्थान्सोमराजशब्देन निर्दिशति "एष सोमो राजे"ति । इहापि पञ्चाग्निविद्यायां "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवती"ति सोमराजशब्दश्रवणात्त एवेष्टादिकारिणः प्रतीयन्ते । अतो भूतसम्परिष्वक्तजीवानां रंहणमित्यर्थः ॥

नन्विष्टादिकारिणां भूतसम्परिष्वक्तानां चन्द्रलोकं प्रति रंहणं कर्मफलभोगायेत्येतदसङ्गतम्, "ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ती"ति श्रुतौ चन्द्रलोकं गतानामिष्टादिकारिणामन्नत्वेन भक्ष्यत्वश्रवणात् । यथा यज्ञे सोमं राजानं चमसस्थमृत्विजः 'आप्यायस्व' पुनः पुनराप्याय्याप्याय्य 'अपक्षीयस्व' पुनः पुनरपक्षय्यापक्षय्य भक्षयन्त्येवमेतान्कर्मिणो देवा भक्षयन्तीति श्रुत्यर्थः ॥

तत्रोत्तरमाह ।

**भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥३।१।७॥**

'वा' शब्दश्चोदितदोषनिरासार्थः । तेषामिष्टादिकारिणामन्नत्वं भाक्तमेव, न मुख्यम् । अन्यथा 'स्वर्गकामो यजेते'ति श्रुतिबाधप्रसङ्गात् । अतः कर्मिणां देवान्प्रति पुत्रभार्यादिवद्भोगोपकरणत्वमात्रेणान्नत्वव्यपदेशः । कर्मिणामनात्मवित्त्वाच्च देवान्प्रति गुणभावेन भोग्यत्वम् । तथा हि श्रुतिरनात्मविदां देवभोग्यत्वं दर्शयति "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवाना"मिति । भेददृष्टिमाननात्मवित्त्वात्पशुवद्देवानामुपकरोति हविरादिदानेनेति देवभोग्य इति श्रुतितात्पर्यम् । यद्वाऽनात्मवित्त्वादिति सूत्रभागस्यायमर्थः । पञ्चाग्निविद्याविदात्मविच्छब्देनोच्यते । तथा चात्मवित्पञ्चाग्निविद्यावित्स न भवतीत्यनात्मवित्, तस्य भावस्तत्त्वम्, तस्मादित्यर्थः । केवलेष्टादिकारिणां पञ्चाग्निविद्याऽनभिज्ञानां देवान्प्रत्यन्नभावेन भोग्यत्वं पञ्चाग्निविद्याप्रशंसार्थं गौणमेव श्रुतावुक्तमिति भावः । नन्वन्नत्वस्य मुख्यत्वेऽपि प्रशंसा भवतीत्यत आह "तथा ही" ति । यथाऽन्नत्वस्य गौणत्वं तथा हि श्रुतिर्दर्शयति "स सोमलोके विभूतिमनुभूय पुनरावर्तत"इति । तस्येष्टादिकारिणः सोमलोके विभूत्यनुभवोऽन्नत्वस्य मुख्यत्वे न सम्भवति । तस्मादन्नत्वस्य गौणत्वात्परलोकभोगार्थं भूतसम्परिष्वक्तस्य रंहणमिति सिद्धम् ॥

**कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३ । १ । ८ ॥**

पूर्वं कर्मसमवेतानामपां पञ्चमाहुतौ पुरुषात्मना

परिणामश्रवणं हेतुमाश्रित्याबादिभूतपरिवेष्टितस्य जीवस्य रंहणमुक्तम्, तदयुक्तम्, स्वर्गादवरोहतां जीवानां कर्माभावेन तत्समन्वेतापामप्यभावात्, इत्याक्षेपसङ्गतिः । पूर्वपक्षे चन्द्रलोकभोगानन्तरं तस्मादवरोहतां कर्माभावेन तदनुगुणतिर्यगादियोनिप्राप्त्यभावान्न कर्मफलेषु वैराग्यमिति फलम्, सिद्धान्ते कर्मणः सत्त्वाद्वैराग्यमिति विवेकः । एवं हि स्वर्गिणामवरोहणं श्रूयते "तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते" इत्यारभ्य "रमणीयचरणा रमणीयां योनिमापद्येरन्कपूयचरणाः कपूयां योनि"मिति । तस्मिंश्चन्द्रलोके यावद्भोक्तव्यं कर्मोषित्वा भोक्तव्यकर्मसमाप्त्यनन्तरमेतमेव वक्ष्यमाणमध्वानमाकाशवायुधूमाभ्रादिरूपं प्रति पुनरागच्छन्ति । ते चागन्तारो रमणीयचरणाः पुण्यकर्माणो ब्राह्मणादिपुण्ययोनिं प्रविशन्ति । कपूयचरणाः कुत्सितकर्माणस्तिर्यगादियोनौ जायन्त इति । तत्र संशयः, किं स्वर्गादवरोहन्तः सानुशया उत निरनुशया इति । अनुशयशब्देनामुष्मिकफलप्रापककर्मातिरिक्तं कर्मोच्यते । तत्र "यावत्संपातमुषित्वे"ति सर्वकर्मनाशानन्तरमवरोहणश्रवणान्निरनुशया एवावरोहन्तीति प्राप्ते, ब्रूमः । कृतस्य स्वर्गसुखप्रापककर्मजातस्य भोगेनात्यये नाशेऽनुशयवानवरोहति । कुतः । दृष्टस्मृतिभ्याम् । तथाहि दृष्टा प्रत्यक्षा श्रुतिः "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वे"ति । तेषां कर्मिणां मध्ये ये केचिदिह कर्मभूमौ पुण्यं कृतवन्तस्ते

स्वर्गादवरोहन्तो रमणीयां ब्राह्मणादियोनिमापद्येरन्निति यत्तदभ्याशो ह क्षिप्रं ह्यवश्यमेवेत्यर्थः । योनिशब्दः स्थानवचनः शरीरं ब्रूते । यद्वा लोके जन्मनैव प्रतिप्राण्युच्च वचमध्यमरूप उपभोगो दृष्टः । स च निरनुशयानामवरोहाङ्गीकार आकस्मिक एव स्यादिति सूत्रस्थदृष्टशब्दार्थः । स्मृतिरपि "वर्णा आश्रमाश्च स्वकर्मनिष्ठिताः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुः श्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्त" इति सानुशयानामेवावरोहणं दर्शयति । वर्णा वर्णिनः । आश्रमा आश्रमिणः । प्रेत्यास्माल्लोकात्समुत्थाय चन्द्रलोकमधिरुह्येत्यर्थः । ततः शेषेण भुक्तफलादन्येन कर्मणाऽनुशयाख्येन जन्म प्रतिपद्यन्त इति सम्बन्धः । श्रुतं ज्ञानम् । वृत्तमाचारः । देशादयो विशिष्टा येषां ते तथोक्ता इति । यत्तु "यावत्सम्पातमुषित्वे"ति सकलकर्मनाशनन्तरमवरोहणश्रवणमिति तन्न, यावत्पदस्य स्वर्गे भोक्तव्याशेषकर्मपरत्वेन सकलकर्मपरत्वाभावादिति । तस्मात्सिद्धं सानुशयानामवरोहणम् । ते च कर्मिणो येन मार्गेण चन्द्रलोकमारुह्य स्तेनैव मार्गेणावरोहन्त्युत मार्गविशेषेण वेति प्रश्ने, उत्तरमाह "यथेतमनेवं चे"ति । धूमाकाशयोरेवारोहमार्गे श्रुतयोरवरोहमार्गे श्रुतत्वाद्यथेतं यथागतमवरोहन्तीति गम्यते । पूर्वश्रुतानां रात्र्यादीनामश्रवणादभ्राद्यधिकश्रवणाच्चानेवं पूर्वमार्गविपरीतमार्गेणावरोहन्ति, न यथाश्रुतपूर्वमार्गेणेत्यर्थः ॥

**चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३ । १ । ९ ॥**

ननु "रमणीयचरणा रमणीयां योनिमापद्येर"न्निति

श्रुतेर्बलात्सानुशयानामवरोहणमित्येतदसङ्गतं, तस्यां श्रुतौ चरणाद्योन्यापत्तिश्रवणात्, चरणस्याचारात्मकस्य कर्मणोऽनुशयाद्भिन्नत्वात्, इति चेत् । नायं दोषः, यतः कार्ष्णाजिनिराचार्य इयं चरणश्रुतिरनुशयोपलक्षणार्थेति मन्यते ॥

**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३ । १ । १० ॥**

ननु चरणश्रुतिरनुशयोपलक्षणार्थेत्यसङ्गतं, चरणस्यैव सदाचारदुराचारात्मकस्य सदसद्योनिप्रापकत्वसम्भवात् । अन्यथा कर्मण एवानुशयाख्यस्य सदसद्योनिप्रापकत्वे चरणस्यानर्थक्यं स्यादिति चेन्न । इष्टादिकर्मणां चरणाख्याचारनिर्वर्त्यत्वेन चरणापेक्षत्वात्तत्र चरणस्यार्थवत्त्वादित्यर्थः ॥

वस्तुतः कर्मचरणयोर्न भेद इत्याह ।

**सुकृतदुष्कृते एवेति तु बादरिः ॥ ३ । १ । ११ ॥**

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देनोच्येते इति मन्यते । लोक इष्टादिकारिणि धर्मं चरत्येष महात्मेति कर्मचरणयोरभेदेन प्रयोगदर्शनादित्यर्थः । तस्मादिष्टादिकारिणां चन्द्रलोकं गतानां पुनरवरोहणेऽनुशयोऽस्तीति सिद्धम् ॥

एवमिष्टादिकारिणां गत्यागती विचार्य, तेभ्यो निकृष्टानामनिष्टादिकारिणां गत्यागती विचारयितुमिष्टादिकारिण एव चन्द्रलोकं गच्छन्तीत्येतदाक्षिपति ।

**अनिष्टादिकारिणामपि च श्रुतम् ॥ ३ । १ । १२ ॥**

अत्र पापिनां शुभमार्गेण गमनमपि नास्तीति सिद्धान्तोक्त्या वैराग्यदृढीकरणात्पादसङ्गतिः । पूर्वपक्ष इष्टा-

निष्टकारिणामविशेषेण चन्द्रलोकगतेरिष्टादिकरणं व्यर्थमिति फलम्, सिद्धान्ते पापिनां चन्द्रलोकगत्यभावात्तदर्थं यज्ञादिकरणं सार्थकमिति विवेकः । अत्र पापिनां चन्द्रलोकगतिरस्ति न वेति सन्देहेऽस्तीत्याह "अनिष्टे"ति। इष्टादिकारिणामिवानिष्टादिकारिणामपि चन्द्रलोकगमनं "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"ति श्रुत्या श्रुतम् । अतो धर्मिण एव चन्द्रलोकं गच्छन्तीत्येतदसङ्गतमित्यर्थः ॥

ननु धर्मिणामधर्मिणां च चन्द्रलोकगमनं पापिनां नरकप्राप्तिबोधकशास्त्रविरुद्धमिति चेन्न, पापिनां चन्द्रलोकगमनाङ्गीकारेऽपि तत्र भोगानङ्गीकारात् । किं तु चन्द्रलोकगमनमात्रं कृत्वा ततोऽवरोहतां पापिनां नरकेष्वेवानुभव इति प्राप्ते ब्रूते ।

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ३ । १ । १३ ॥**

तुः पूर्वपक्षनिरासार्थः । भोगार्थं हि चन्द्रलोकगमनम् । तत्र पापिनां भोगासम्भवात्तद्गमनं व्यर्थमेव । अत "श्चन्द्रमसमेव ते सर्वे गच्छन्ती"ति श्रुतिरिष्टादिकारिमात्रविषया, सर्वे सुकृतिन एव चन्द्रलोकं गच्छन्तीति । पापिनस्तु यमलोकमारुह्य संयमने यमालये स्वपापानुरूपा यामीर्यातना अनुभूय पुनरिमं लोकं प्रत्यवरोहन्तीति । एवंभूतावेव तेषां पापिनामारोहावरोहौ भवतः । कुतः । तद्गतिदर्शनात् । यमलोकगतेः श्रुतौ दर्शनादित्यर्थः । "न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्—अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे"

इति "वैवस्वतं सङ्गमनं जनाना"मित्यादिकं पापिनां यमलोकगतौ लिङ्गम् । सम्यगवश्यम्भावेन परः परस्ताद्देहपातादूर्ध्वमयते गम्यत इति व्युत्पत्त्या सम्परायः परलोकः । तत्साधनभूतकर्मविशेषः साम्परायः । स बालमविवेकिनं विशेषतो वित्तनिमित्तेन मोहेन मूढं छन्नदृष्टिमत एव प्रमाद्यन्तं प्रमादं विषयासक्तिं कुर्वन्तं प्रतिभाति । स च बालो न केवलमज्ञ एव, किं तु विपरीतदर्शी, यतोऽयमेव लोकोऽन्नप नादिरस्ति न पर इति मानशीलः । तस्मात्तदनुरूपं पापमाचरन्पुनः पुनर्जन्ममरणप्राप्त्या मे मम वशमापद्यत इति मृत्योर्नचिकेतसं प्रति वचनम् । जनानां परलोकं गतानां पापिनां सङ्गमनं सम्यग्गम्यं वैवस्वतं यमं राजानं हविषा प्रीणयतेत्यर्थः ॥

**स्मरन्ति च ॥ ३ । १ । १४ ॥**

मन्वादयः शिष्टाः पापिनां नरकभोगं स्मरन्ति । अतश्च धर्मिणामेव चन्द्रलोकगमनं नान्येषामित्यर्थः ॥

**अपि च सप्त ॥ ३ । १ । १५ ॥**

अपि च सप्त रौरवादयो नरकाः पापफलभूमित्वेन स्मर्यन्ते पौराणिकैः । तान्पापिनः प्राप्नुवन्तीति न चन्द्रप्राप्तिरिति भावः ।

ननु पापिनो यमसम्बन्धिनीर्यातना अनुभवन्तीति यदुक्तं तदसङ्गतं, रौरवादिषु चित्रगुप्तादीनामधिष्ठातृत्वस्मरणादित्यत आह ।

**तत्रापि च तद्व्यापारादविरोधः ॥ ३ । १ । १६ ॥**

तत्रापि रौरवादिषु तस्यैव यमस्याधिष्ठातृव्यापारादविरोधः, चित्रगुप्तादीनां यमप्रयुक्तत्वादिति भावः ॥

उपासकानामर्चिरादिमार्गः केवलकर्मिणां धूमादिमार्ग इति श्रुतिस्मृत्यादिषु व्यवस्था । तथा चैतन्मार्गद्वयभ्रष्टानां पापिनां तृतीयमार्गोक्तेरपि न तेषां चन्द्रप्राप्तिरित्याह ।

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३ । १ । १७ ॥**

पञ्चाग्निविद्यायां प्रवाहणाख्येन राज्ञा मृतैर्जनैर्बहुभिश्चन्द्रलोकः कथं न संपूर्यत तत्प्रकारं त्वं किं जानासीति श्वेतकेतुः पृष्टः । तस्य प्रश्नस्य श्वेतकेतुपितरं गौतमं प्रति राज्ञ एव प्रतिवचनं श्रूयते "अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यत" इति । अत्रैतयोरिति पदस्यार्थमाह सूत्रकारः "विद्याकर्मणोरिती"ति । अर्थ इति शेषः । कुतः । विद्याकर्मणोरेव देवयानपितृयाणात्मकमार्गद्वयसाधनत्वेन प्रकृतत्वात्प्रकृतवाचकत्वमेतच्छब्दस्य युक्तमित्यर्थः । एतदुक्तं भवति । एतयोर्विद्याकर्मणोः पथोः मार्गसाधनयोरन्यतरेण मार्गसाधनेन विद्यया कर्मणा वाऽन्यतरस्मिन्पथि नाधिकृताः पापिनः । तेषां क्षुद्रजन्तुलक्षणोऽसकृदावर्तिजन्ममरणबाहुल्ययुक्तस्तृतीयः पन्था इति न चन्द्रप्राप्तिरिति । श्रुतौ जायस्व म्रियस्वेत्यनेन जन्ममरणबाहुल्यमुक्तम् । स्थानशब्दो मार्गद्वयोपक्रमानुरोधात्तृतीयं मार्गं लक्षयति । सूत्रे तुशब्देन "चन्द्रमसमेव ते सर्वे गच्छन्ती"ति श्रुतिप्रयुक्तशङ्कानिरासः कृतः, सर्वशब्दस्य पुण्यपुरुषमात्रपरत्वादिति भावः ।

ननु पापिनामस्मिन्लोके देहप्राप्त्यर्थं चन्द्रलोकगमनमङ्गीकर्तव्यम्, "पञ्चम्यामाहुतावापः पुरुषवचसो भव-

न्ती"त्याहुतिसंख्यानियमेन देहप्राप्त्यभिधानात् । अन्यथा संख्यानियमाभावप्रसङ्ग इत्यत आह ।

न तृतीये तथोपलब्धेः ॥ ३ । १ । १८ ॥

तृतीयमार्गे प्रविष्टानां पापिनां देहप्राप्त्यर्थमाहुतिसंख्यानियमो नादर्तव्यः । कुतः । तथोपलब्धेः । संख्यानियमं विनैव "जायस्व म्रियस्वेत्येतत्तृतीयं स्थान"मिति श्रुतौ तृतीयमार्गे देहप्राप्तेरुपलब्धेरित्यर्थः । इष्टादिकारिणामेवायं संख्यानियम इति भावः । किं च "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति पञ्चम्यामाहुतावपां पुरुषवचस्त्वं प्रतिपाद्यते, नापञ्चम्यामाहुतौ पुरुषवचस्त्वं निषिध्यते, वाक्यभेदप्रसङ्गात् । तथा च ये चन्द्रंगतास्तेषां संख्यानियमः । इतरेषां तु विनैव संख्यानियमं भूतान्तरप्रविष्टाभिरद्भिर्देह आरभ्यत इत्यनियमः ॥

स्मर्यतेऽपि च लोके ॥ ३ । १ । १९ ॥

अपि च लोके भारतादौ द्रोणधृष्टद्युम्नादीनां सीताद्रौपद्यादीनां चायोनिजत्वं स्मर्यते । तत्र द्रोणादीनां योषिदाहुतिरेका नास्ति, धृष्टद्युम्नादीनां योषित्पुरुषविषये द्वे आहुती न स्तः, इत्याहुतिसंख्याया अनियमः । एवमन्यत्रापीति भावः ॥

दर्शनाच्च ॥ ३ । १ । २० ॥

किं च । लोके जरायुजाण्डजस्वेदजोद्भिज्जेषु चतुर्विधेषु देहेषु स्वेदजोद्भिज्जयोः स्त्रीपुंव्यक्तिसंयोगं विनैवोत्पत्तिदर्शनान्नाहुतिसंख्यानियम इत्यर्थः । जरायुजं मनुष्यादिशरीरम् । अण्डजं पक्ष्यादिकम् । स्वेदजं यूकादिकम् । उद्भिज्जं वृक्षादिकम् ॥

ननु तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति। "अण्डजं जीवजमुद्भिज्ज"मिति श्रुतौ शरीरत्रैविध्यं श्रूयते। अतः कथं चातुर्विध्यमत आह ।

**तृतीयशब्दावरोधः संशोकजस्य ॥ ३ । १ । २१ ॥**

श्रुता"वण्डजं जीवजमुद्भिज्ज"मित्यत्र तृतीयेनोद्भिज्जशब्देनावरोधः संग्रहः संशोकजस्य स्वेदजस्य । वृक्षादिकं हि पृथिवीमुद्भिद्य जायते, स्वेदजं तु जलमुद्भिद्येत्युभयोरवयवार्थत्वाविशेषादुद्भिज्जपदेन संग्रहः श्रुतौ कृतः । न ह्येतावता चातुर्विध्यहानिर्भवति, स्थावरजङ्गमात्मकत्वेनोभयोर्भेदस्य दुरपह्नवत्वादिति भावः । तस्मादनिष्टादिकारिणां न चन्द्रलोकप्राप्तिः, किं त्विष्टादिकारिणामेवेति सिद्धम् ॥

**तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ३ । १ । २२ ॥**

पूर्वमिष्टादिकारिणश्चन्द्रं गताः कर्मफलभोगानन्तरं सानुशया अवरोहन्तीत्युक्तम् । अत्र तेषामवरोहप्रकारश्चिन्त्यते । तत्रावरोहश्रुतिः पठ्यते "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षती"ति । अथ भोक्तव्यकर्मसमाप्त्यनन्तरमध्वानमेवाह "यथेत"मिति। यथागतमित्यर्थः। इदमुपलक्षणम् । अनेवमित्यपि द्रष्टव्यम् । याः खल्वापश्चन्द्रलोके देहमारब्धवत्यस्ताः कर्मक्षये द्रुता आकाशं गतास्तत्समा यथा भवन्ति तथा तदुपहिता अनुशयिनो जीवा अप्याकाशसमा भवन्तीत्याह "आकाश"मिति । एवं वाय्वादावपि योजनीयम् । वायुर्भूत्वा वायुसमो भूत्वा ।

एवमग्रेऽपीति सिद्धान्तार्थः । पूर्वाधिकरणे "जायस्व म्रियस्वेति तृतीयं स्थान"मित्यत्र स्थानशब्दस्य मार्गद्वयोपक्रमसामर्थ्यात्तृतीयमार्गलक्षकत्वमुक्तं तद्युक्तं, इमौ द्वौ ब्राह्मणावित्युपक्रम्यायं तृतीय इत्यादौ तृतीयस्योपक्रान्तसजातीयस्यैव दर्शनात् । इह तु "भवति"श्रुतेर्मुख्यार्थः, परित्यागे मानाभावादिति प्रत्युदाहरणसङ्गतिः । पूर्वपक्षे "भवति"श्रुतेर्मुख्यत्वसिद्धिः फलं, सिद्धान्ते गौणत्वसिद्धिरिति विवेकः । तत्र संशयः, किं स्वर्गादवरोहन्तो जीवा आकाशादिस्वरूपं प्रतिपद्यन्ते, उत तत्साम्यमिति । तत्र 'भवति'श्रुतेर्मुख्यत्वानुरोधादाकाशादिस्वरूपापत्तिरेव जीवानामिति प्राप्ते ब्रूमः । जीवानां तैराकाशादिभिः साभाव्यापत्तिः साम्यापत्तिरेव । कुतः । उपपत्तेः । लोके क्षीरस्य दधिभावो युक्तः, क्षीरकाले दध्यभावात् । इह तु पूर्वं विद्यमानाकाशादिभावो जीवस्य दुरुपपादः । किं च जीवस्याकाशस्वरूपापत्तौ वाय्वादिक्रमेणावरोहाभावप्रसङ्गः । इत्यादियुक्तिवशा'द्भवति'श्रुतेर्गौणत्वमङ्गीकर्तव्यमित्याकाशादिसम्बन्धमात्रमेव जीवानाम् । सम्बन्धश्च सादृश्यातिरिक्तो न संभवतीति सादृश्यमेवेति सिद्धम् ॥

एवमाकाशादिवर्षान्तेषु पूर्वपूर्वसादृश्यानन्तरमुत्तरोत्तरसादृश्यमित्युक्तम् । तदुपजीव्य विचार्यते । किं जीवश्चिरकालमेकसादृश्येनावस्थायापरसादृश्यं गच्छति, उताल्पकालमिति विशये, नियामकशास्त्राभावादनियम इति प्राप्ते सिद्धान्तयति ।

**नातिचिरेण विशेषात् ॥ ३ । १ । २३ ॥**

जीवो नातिचिरेणाल्पमल्पं कालमेवाकाशादिवर्षान्तैः सादृश्येनावस्थाय वर्षधाराद्वारा पृथिवीं प्रविशति ।

कुतः। विशेषात्। पृथिव्यनन्तरं व्रीह्यादौ प्रवेशमुक्त्वा व्रीह्यादिभ्यो जीवस्य निस्सरणसमये व्रीह्यादिषु चिरकालावस्थानरूपविशेषं दर्शयित्वा निस्सरणं दर्शयति श्रुतिः "अतो वै खलु दुर्निष्प्रपतर"मिति । एकस्तकारो लुप्तश्छान्दसप्रक्रियया। अतोऽस्माद्व्रीह्यादिभावाद्दुर्निष्प्रपततरं दुःखतरं जीवानां निस्सरणं भवतीत्यर्थः। व्रीह्यादिभ्यो जीवस्य दुःखं निस्सरणं भवतीत्युक्ते, आकाशादिभ्यः सुखं निस्सरणं जातमिति प्रतीयते। यथा लोके कश्चित्पण्डितोऽनेकराजसभासंचारं चरित्वा कस्यांचिद्राजसभायामान्दोलिकाप्रतिष्ठामविन्दतेत्युक्ते, इतरासु सभास्वान्दोलिकां न लब्धवानिति प्रतीयते, तद्वद्व्रीह्याकाशादिषु सुखदुःखे जीवस्य दीर्घकालावस्थानाल्पकालावस्थाने भवतः, तदानस्थूलशरीराभावेन मुख्यसुखदुःखयोरसम्भवात् । तस्माद्व्रीह्यादिप्रवेशात्पूर्वमल्पमेव कालं तत्तत्साहश्येनावस्थानमिति सिद्धम् ॥

**अन्याधिष्ठिते पूर्ववदभिलापात्** ॥ ३ । १ । २४ ॥

तस्मिन्नेवावरोहे जीवानां वर्षधाराद्वारा पृथिवीप्रवेशानन्तरं पठ्यते "त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्त" इति । तेऽनुशयिनो जीवा इत्यर्थः। तत्र संशयः, किं जीवानां व्रीह्यादिभावेन जन्मश्रुतिर्मुख्या, उत जीवान्तराधिष्ठिते व्रीह्यादौ तेषां संसर्गमात्रमिति। तत्र पूर्वं दुर्निष्प्रपततरशब्दस्य पूर्वोक्तयुक्तिबलाच्चिरकालावस्थानलक्षकत्वेऽपि प्रकृते क्षीरस्य दधिभावेनेवाबादिभूतसम्परिष्वक्तजीवानामबादिद्वारा व्रीह्यादिभावेन मुख्यस्यैव जन्मनः सम्भवाद्व्रीह्यादिस्थावरशरीरेषु सुखदुःखभाजोऽनुशयिनो जीवा इति प्रत्युदाहरणेन पूर्व-

॥ श्रीः ॥

ॐ नम परमात्मने ।

# पदार्थतत्त्वनिरूपणटीका ।

श्रीरामभद्रसार्वभौमविरचिता ।

श्रीनृसिंहगुरुशारदाशिवा[1]
नन्दिवाहनगणेशपादजे ।
वर्द्धतां मम सुभक्तिमालया
भूयसी रुचिरपास्तपापके[2] ॥ १ ॥
तातस्य तर्कसरसीरुहकाननेषु
चूडामणेर्दिनमणेश्वरणौ प्रणम्य ।
श्रीरामभद्रसुकृती कृतिनां हिताय
लीलावशात् किमपि कौतुकमातनोति ॥ २ ॥

(१ । ६)[3] तच्च तेषु पदार्थेषु मध्ये । न दिक्काला[वि]ति । पूर्वस्यां घट इति प्रतीतिविषयविभुत्वमिह दिक्त्वं कालत्वं चेदानीं घट इत्यादिप्रतीतिविषयविभुत्वम् अतो न सिद्धसिद्धि-व्याघातो न वा घटादावंशतो बाध । पक्षतावच्छेदकसामाना-धिकरण्येन साध्यसिद्धेरुद्देश्यतायामतिरिक्तदिगादेर्निराकरणा-नुपपत्ते· विभुत्वं च मूर्तेतरद्रव्यत्वं न तु परममहत्त्वम् ईश्वरे

१ सरस्वतीशिवा—इति १ पुस्तके ।

२ श्लोकोऽयं नास्ति २ । ३ पु० ।

३ (१ । ६) अनेन प्रथमपृष्ठे षष्ठपङ्क्त्या मुद्रितेन मूलेन योग· कार्य इति ज्ञेय मेवमग्रेऽपि ।

परिमाणस्य निराकरिष्यमाणत्वात् । तास्त्र प्रतीतय उदयगिरितपनसंयोगाद्यात्मकदिगुपाधेः सूर्यक्रियादिरूपकालोपाधेः स्वाश्रयसंयुक्तसंयोगादिरूपपरम्परासम्बन्धघटकतया दिक्कालावगाहन्त इति भाष्यादयः । तन्न सर्वदिक्कालोपाधिवैशिष्ट्यप्रतीत्यापत्तेः । विशेषणताविशेषस्यैव सम्बन्धत्वात् । स च सम्बन्धोऽतिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत् । उदयगिरितपनसंयोगादेश्च प्राच्यादित्वे तत्पश्चिमादिदिग्वर्तिन्यपि ततः प्राच्यामयमित्यादिप्रतीतेरापत्तिः किन्तु तदपेक्षया उदयगिरिसन्निध्यादिकस्यैव प्राच्यादित्वमिति । केचित्तु तदीयत्वनिरूपिततोदयगिरिसंयोगादिविशेषेण ततः प्राच्यादित्वव्यवहार इत्यपि वदन्ति । घटादेर्विशेषणतयैव[1] तास्तावदवगाहन्ते । तत्तद्दिगुपाधिविशिष्टस्यैकस्य वस्तुनस्तत्तत्कालोपाधिविशिष्टस्य चैकस्य वस्तुनो घटादिविशेषणत्वेन भानमन्तरेण पूर्वस्यां दिशि घटः प्रतीच्यां दिशि घटः तस्मिन् काले घट एतस्मिन् काले घट इत्याद्यनुगतकालाद्याकारस्य प्रत्ययस्यानुपपत्तेरिति लीलावतीकृतः । मानाभावादिति । ईश्वरातिरिक्तत्वे[2] मानाभावादित्यर्थः । अथोक्तानुगतप्रत्ययानुपपत्तिरेव तयोर्मानम् ईश्वरस्य तद्विषयत्वे प्राच्यां प्रतीच्यां दिशीदानीं तदानीमित्यादेश्च विलक्षणप्रत्ययस्यानुपपत्तेरित्यत आह । तत्तन्निमित्तेति । तत्तत्कालदिगुपाध्यवच्छिन्नादित्यर्थः । तत्तत्कार्यं विलक्षणप्राच्यादिप्रत्ययः । परेषामिति । अतिरिक्तदिगादिवादिनामपि तयोरेकैकत्वस्यैव स्वीकारेण तत्तन्निमित्तसमाधानवशादेव प्राच्यां

१ विशेषणविधयैव-पा० २ पु० ।
२ अतिरिक्तत्वेन-पा० १ पु० ।

प्रतीच्यामित्यादेरिदानीं तदानीमित्यादेश्च प्रत्ययस्य विलक्षणतया वक्तव्यत्वादिति भावः । यत्तु काले दिशीति प्रतीत्योर्विषयभेदाननुभवान्न तयोर्भेद इति लीलावतीरीतिः । तन्न विभिन्नोपाधिविषयकत्वेनैव तदुपपत्तेः उपाधिमतोर्भेदः प्रतीयत इति[1] वासनाविरहमात्रमेव शरणम् । अन्यथा प्राच्यां प्रतीच्यामित्यादिप्रतीतिष्वप्युपाधिमतां भेदोऽनुभूयत इति कथमात्रेण नानादिक्कालसिद्धेर्वादुरन्ततापत्तेरिति न किञ्चिदेतत् । अथेश्वरादेव तत्तत्कार्योत्पत्तिर्न तु जीवादित्यत्र को हेतुः । तेषामनन्तत्वमिति चेत् न प्रत्येकमादाय विनिगमकाभावात् । नैवम् जीवानां कालत्वदिक्त्वरूपविशेषणाविशेषवत्त्व ज्ञानादिसमवायवत् तस्य मनसा लौकिकप्रत्यक्षापत्ते । वस्तुतस्तु प्राच्यां दिशि घट एतस्मिन् काले पट इत्यादिप्रतीतयो विलक्षणविशेषणतावत्त्वरूपदिक्त्वकालत्वे उपाधी अवगाहन्ते । वैलक्षण्यं च विषयतात्वादिवदखण्डोपाधिः । अवगाहन्तां वा दिक्कालपदवाच्यत्वलक्षणमेव दिक्त्वं कालत्वं च केशवो हरि केशरी हरिरित्यादिप्रत्यया इव हरिपदवाच्यत्वरूपं हरित्वमिति तादृशप्रत्ययविषयस्य शब्दसमवायिविभुनः शशविषाणसमत्वात् कान्तभीत्वबहिर्भीत्वचिन्तेति शब्दसमवायिकारणत्वयाऽतिरिक्ताकाशसिद्धिः । न चेश्वर एव तथा अनन्तकोटिजीवे प्रत्येकं विनिगमकाभावेन सर्वत्र तथा कल्पने गौरवादिति ॥

(३ । ३) नैयायिकनयं निराकरोति । शब्देति । जन्यमात्रं प्रति क्लृप्तनिमित्तकारणतापूर्ववर्तिकत्वेन शब्दं प्रत्यपि भगवतः

(१) भेदोनभूयत इति–पा० २ पु० ।

कारणतायाः क्लृप्तत्वात् नच समवायिकारणतामात्रकल्पनयैव समवायिकारणता निर्वहति। जीवे शब्दकारणत्वं समवायित्वं च द्वय कल्प्यमतो गौरवमिति भाव । अथ शब्दजनकादृष्टवतो जीवस्य शब्दकारणतां साधयदनुमानं लाघवाच्छब्दसमवायिकारणतामेव साधयति। अन्यथा ईश्वरे निमित्तसमवायिकारणतयोर्जीवेषु निमित्तकारणतायाः कल्पने गौरवं स्यादिति जीव एव समवायी शब्दानामित्यत आह। शब्दस्तज्जन्य इति। अथ कार्यतावच्छेदकभेदेन प्रत्यासत्तिभेदेन च कारणताया भेदात् कार्यत्वावच्छिन्नं प्रति यन्निमित्तकारणत्वं ततोऽन्यदेव शब्दत्वावच्छिन्नं प्रति समवायिकारणत्वं नच प्रत्येकजीवमादाय विनिगमकरहितमिति नोक्तलाघवावतार इत्यत आह। अहमिति। अथ शब्दवानयमिति कमादायापाद्यते । लौकिकप्रत्यक्षं चेन्न शब्दात्मनोर्मनःश्रवणयोरयोग्यतया तदनुपपत्तेः । तदन्यज्ञानं चेदिष्यत एवैतत् ईश्वरः शब्दवानितिवद्युक्तेस्तुल्यत्वादिति चेन्न सत्यपि मनःसंयुक्तस्यात्मसमवाये शब्दस्यायोग्यतयाऽदृष्टादीनामिव मानसलौकिकप्रत्यक्षं प्रति तादात्म्येन प्रतिबन्धकतया निर्वाहेण गौरवापत्तेः। स्वतन्त्रास्तु लौकिकमानसप्रत्यक्षं प्रति विषयस्य विशिष्यैव हेतुत्वोपगमात् सामान्यसामग्र्याश्च विशेषसामग्रीसहिताया एव फलजनकत्वेन विशेषसामग्रीविरहादेव धर्मादेरप्रत्यक्षतोपपत्तौ न प्रतिबन्धकत्वं कल्प्यते। कल्प्यतां वा गुणलौकिकमानसत्वावच्छिन्नं प्रति जनकतावच्छेदकतया बुद्धित्वादिव्यापको विषयगतो जातिविशेषो लाघवात् । तथा च शब्दानामस्मदादिगुणत्वेपि मानसनिरासादयुक्तमेव तदिति प्राहुः । वस्तुतो मृदङ्गादीनामेव

गुणः शब्दः तादृशशब्दं प्रति मृदङ्गत्वादिना समवायिकारणता-
या एव लाघवेनोचितत्वात् । त्वयापि मृदङ्गत्वादिना निमित्तका-
रणतायाः स्वीकारात् युज्यते च रीतिरयं मृदङ्गेशब्द इत्यादि-
प्रतीतेरनुभवसिद्धत्वात् । न च तच्चावच्छेदकत्वं विषयो मानाभा-
वात् अन्यथा इच्छावच्छेदकतात्मकस्वरूपसम्बन्धस्य अन्यच
समवायस्य कल्पने गौरवात् मूले संयोग इत्यादौ दृच्चाद्य-
धिकरणस्येव प्रकृतेप्यधिकरणान्तरप्रतीत्यापत्तेश्च । न चैवं सति-
मुरजादौ मुरजीयशब्दनाशो न स्यात् मुरजादिविशेषगुणनाशं
प्रति मुरजादिनाशस्य हेतुत्वादिति वाच्यम् सति मुरजादौ पाके-
न तदीयरूपादिनाशवत विरोधिगुणादेव शब्दस्यापि नाशा-
पत्तेः । इत्थं च श्रोत्रमपि कर्ण एव कर्णेन शृणोमीति
प्रत्ययात् तस्य च समवाय एव प्रत्यासत्तिः वीचीतर-
ङ्गन्यायेन कर्ण एव शब्दोत्पत्ते । अवच्छेदकताख्यसम्बन्धविशेषे
वा स च मृदङ्गादिसमवेत एव क्वचित् शब्दे क्वचित्कर्णस्य
अत एव वीचीतरङ्गन्यायेनोत्पादकल्पने गौरवप्रसङ्गोपि निराकृ-
तो भवति भवन्ति च निराबाधाः प्रत्यभिज्ञादय इति दिक् ।
अथातिरिक्ताकाशानभ्युपगमे कथं कर्णविवरावच्छिन्नाकाशस्य
श्रोत्रत्वमुपपद्यतामत आह । श्रोत्रमपीति । तथाविधं कर्णविवरा-
वच्छिन्नम् । अत्र च श्रोत्रत्वं शब्दग्राहकबहिरिन्द्रियत्वं वस्तु-
तस्तु श्रोत्रपदवाच्यत्वमेव श्रोत्रत्वं श्रोत्रतत्सन्निकर्षयोः शब्द-
ग्रहहेतुत्वे मानाभावात् कर्णावच्छिन्नशब्दत्वेन विषयविधया-
हेतुत्वेनातिप्रसङ्गाभावस्य त्वयापि वाच्यत्वात् वस्तुत अवच्छे-
दकतासंसर्गेण विषयगतस्यैव कर्णस्य कर्णत्वेन हेतुत्वं लाघवात्

अत एव कर्णेन शृणोमीति हेतुत्वमवगाहमाना प्रतीतिः सङ्गच्छते। श्रोत्रपदवाच्यत्वमपि तस्यैव श्रोत्रेण शृणोमीति व्यवहारात् कारणान्तरकल्पने गौरवादिति समीचीनः पन्थाः ॥

(१०।३) मनोऽपि चासमवेतभूतमित्येव पाठः। मूर्तमिति पाठस्तु प्रामादिकः। अतिरिक्तमनोवादिनापि तथा स्वीकारात्। मनसः परमसूक्ष्मत्वेन श्रुतिषु प्रसिद्धत्वात् असमवेतभूतस्य त्रसरेणुरूपस्यानुधावनम्। मनस्त्वञ्चेहात्मग्राहकेन्द्रियत्वं मनःपदवाच्यत्वं वा नातः सिद्धसिद्धिव्याघातः। नन्वेवं युगपच्चाक्षुषरासनाद्युत्पत्तिः स्यादिन्द्रियमनोयोगहेतुत्वेन त्वया तस्या वारयितुमशक्यत्वात्। त्वन्मते चक्षुरादिभिरेकदा मनोयोगस्य सत्त्वादित्यत आह अदृष्टेति। अतिरिक्तमनोभ्युपगमे चक्षुराद्येकतरेण मनःसंयोगोत्पत्तिसमये नान्यतरेण तदुत्पत्तिरदृष्टविशेषोपग्रहादेव तथा च तत एव ज्ञानयोर्युगपदनुत्पत्तौ नातिरिक्तसिद्धिरिति भावः। अदृष्टविशेषोपग्रहः अदृष्टविशेषघटिततत्तदसाधारणकारणकलापस्य विरोधित्वम् अदृष्टेन फलस्यादर्शनेन विशेषस्योपग्रहः तत्तत्कारणकलापविरोधित्वावधारणं वा एवं च क्वचिद्बुद्धियौगपद्यानुभवेऽपि निराबाधपदमाद्यातीति दिक्। इदं च बोध्यम्। आत्मादिग्रहे मनसः तत्सन्निकर्षस्य च हेतुत्वे मानाभावः तद्व्यतिरेकेण कार्यव्यतिरेकाभावात्। प्रत्यक्षसामान्ये इन्द्रियतत्सन्निकर्षत्वादिना हेतुत्वस्यासम्भवदुक्तिकत्वात् जन्यज्ञानसामान्ये मनःसंयोगसमवायिकारणत्वेन मनोयोगस्यात्मग्रहे हेतुत्वमिति न युक्तम् एकत्वादेरिव ज्ञानादेरपि सासमवायिकारणकत्वे मानाभावात्। तस्मान्मनःपदवाच्यत्वमेव इह मनस्त्वमिति ॥

(११।२) परमाणुद्व्यणुकयोरिति। त्रसरेणोर्द्रव्यसमवेतसमवेतत्वद्रव्यसमवेतत्वयोर्मानाभाव इत्यर्थः। नन्वेवं त्रसरेणोरुत्पत्तिर्न स्यात् समवायिकारणाभावादित्यत आह। त्रुटाविति। विश्रामादिति। द्रव्यसमवायित्वस्येत्यादि। असमवेतत्वसामानाधिकरण्यं विश्रामः। तथा च तस्यासमवेतद्रव्यत्वात् सदातनत्वेनोत्पत्तिरेव नाप्नोति भावः। चाक्षुषद्रव्यत्वादिति। अत्रात्मघटाभावयोर्यथाक्रमं व्यभिचारवारणाय चाक्षुषपदं द्रव्यपदं च। तेनेति। त्रुटिसमवायिन इत्यर्थः। द्रव्यसमवायित्वं परमाणौ व्यभिचारीति चाक्षुषेति द्रव्यविशेषणं चाक्षुषस्य द्रव्यत्वस्य समवायित्वमात्मन्यपीति द्रव्येति चाक्षुषद्रव्यवत्वं संयोगेनात्मनोऽपीति समवायसंबन्धेन तादृशद्रव्यस्य हेतुतालाभाय समवेतत्वादिति। अन्यथेति। अप्रयोजकादप्यनुमानादस्तुसिद्धावित्यर्थः। तादृशेति। चाक्षुषद्रव्येत्यर्थः। अत्र त्रुटिसमवायिसमवायिप्रभृतेः पक्षत्वं समवेतत्वस्य च साध्यत्वमवधेयम्। नन्वणुव्यवहारोऽणुपरिमाणनिबन्धन इति तदाश्रयद्रव्यसिद्धिरावश्यकीत्यत आह। अणुव्यवहार इति। अपकृष्टपरिमाणेति। अपकृष्टमहत्त्वेत्यर्थः। नातोऽपकृष्टदीर्घत्वोत्कृष्टमहत्त्ववति तथा व्यवहारः एवं ह्रस्वव्यवहारोऽप्यपकृष्टदीर्घत्वनिबन्धनः। दीर्घेऽपि दीर्घतमो ह्रस्व इति व्यवहारादिति बोध्यम्।

(१५।४) नन्वीश्वरे द्रव्यत्वेन परिमाणवत्त्वमनुमेयमित्यत आह। द्रव्यत्वस्येति। यथा त्रुटित्वादेरन्यतमस्यासाधकं द्रव्यत्वं तथा परिमाणस्यापि अप्रयोजकत्वादिति भावः। ननु ईश्वरस्यापरिमितशक्तित्वादीश्वरस्य परिमाणवत्त्वं दुर्वारमत आह।

नस्य चेति। ईश्वरे महत्त्वव्यवहारस्य नित्यज्ञानादिरूपोत्कर्षनिबन्धन. जीवतोपि तच्च तथा व्यवहारादिति भाव । वस्तुत: पुनरीश्वरस्य द्रव्यत्वेऽपि मानाभाव: तच्च संयोगे विभागेऽपि च मानाभाव मानाभावाच्च क्रियाविशेषं प्रति प्रयत्नवदात्मसंयोगासमवायिकारणकत्वम् । नन्वेवमात्ममनोयोगादिजन्यताया ज्ञानादै। त्वयैव बहुशो निरासादस्मदादीनामपि संयोगविभागौ न स्यातामिति चेत् न स्यातामेव अत एव द्रव्यत्वमपि दूरपराहतम्। द्रव्यमहमिति प्रतीतिस्तु न लोकानाम्। तस्मान्मूर्तत्वमेव द्रव्यत्वमिति युक्तमुत्पश्याम: । अनुद्भूतरूपादिकं निराकरोति । रूपादीनामिति। वाय्वादाविति। आदिपदाज्जलतेज.प्रभापरिग्रह: । रूपादिकमित्यादिपदाद्गन्धरसस्पर्शपरिग्रह: । अन्यथेति । न च लाघवादभावत्वव्याप्येन भावाभावसाधारणेन वाखण्डोपाधिनाऽभावस्य वस्तुमात्रस्य वा योग्यत्वान्मूर्तसामान्याभावस्यायोग्यत्वेपि न तेषामयोग्यत्वमिति वाच्यम् तथापि प्रमाणाभावात्तादृशरूपादे: साधयितुमशक्यत्वात्। द्रव्यत्वस्येव पृथिवीत्वादेरपि गन्धाद्यसाधकत्वात्। अथ समवेतद्रव्यं प्रति स्पर्शवत्त्वेन समवायिकारणत्वात चक्षुराद्यवयवानामनुद्भूतस्पर्श आवश्यक इत्यत आह । अतीन्द्रियेति ॥

(२५।४) ननु मूर्तत्वमवच्छिन्नपरिमाणवत्त्वमित्यनन्तपरिमाणकल्पना तवाप्यावश्यकीति विनिगमकाभावात् तादृशस्पर्शसिद्धिरपि दुर्वारेत्यत आह । मूर्तत्वं त्विति। ननु मूर्तत्वं न जाति. भूतत्वेन साङ्कर्यादित्यत आह। भूतत्वमपीति। गगनमनसोरपास्तत्वादिति भाव । यद्वा ननु भूतत्वजात्या सह तुल्यव्य-

सूत्रधारः-(सावज्ञावहित्थ,) आर्ये न खलु सभावयामि तानद्य भरतमतपारदृश्वन । ( विमृश्य )

अथवा तादृशान्सभ्यान्मत्वा जगति दुर्लभान् ।
शंके शान्तिरसोल्लासमशक्यमभिमेनिरे ॥ १८ ॥

अपि च

असभ्यपरिपाटिकामधिकरोति शृङ्गारिता
परस्परतिरस्कृतिं परिचिनोति वीरायतम् ।
विरुद्धगतिरद्भुतस्तदलमल्पसारैः परै
• श्शमस्तु परिशिष्यते शमितचित्तखेदो रसः ॥ १९ ॥

नटी-*होदु णाम सणअ सणन्दणादि मुणिअण मद्गहीदो सावि तारिसो रसो तहविकह णिप्पन्द णिहिलकरण णिप्पादणिज्ज जोअप्पहाणो एसो सव्वजण पेक्खणिज्जेण णाडअ उत्तन्देण सपादइज्ज.

---

*भवतु नाम सनकसनन्दनादि मुनिजनसङ्गृहीतस्सोऽपि तादृशो रसः तथापि कथ निष्पन्दनिखिलकरणनिष्पादनीययोगप्रधान एष सर्वजनप्रेक्षणीयेन नाटकवृत्तान्तेन सपाद्यते

---

अत्र नाटके ये नास्तीति वदन्ति तेष्ववज्ञा अवमान अवहित्था आकारगुप्ति ताभ्या सहित यथाभवति तथा। तान् भरतमतपारदृश्वन भरतागमपारद्रष्टॄन् न सभावयामि न मन्ये।

पक्षान्तरमाह।

अथवेति-॥ शान्तिरसोल्लासं शान्तिरसाभिनयं ॥ १८ ॥

शान्तिरसमनभ्युपगच्छतामभिप्रायमुक्त्वा रसान्तराणा मन खेदवहत्वादरसत्वं शान्तिरसस्य तच्चान्तिकरत्वाद्रसत्वञ्चाह।

असभ्येति-॥ सभोगविप्रलम्भभेदात् द्विविधः शृङ्गारः। तद्वत्ता शृङ्गारिता। असभ्यानां सभानर्हाणां परिपाटीप्रकारः तामधिकरोति प्राप्नोति। वीरायतं वीररस. परस्परतिरस्कृति अन्योन्याभिभव परिचिनोति अभ्यस्यति वीरस्य पराभिभव स्वाभाव्यात। अद्भुत अद्भुतरस विरुद्धगतिः विरुद्धा अघटितघटकात्मकागति प्रवृत्तिर्यस्य स तथा। तत् शृङ्गारवीराद्भुतानामि भूतत्वात अल्पसारै मन्दै परै करुणादिभि रसै. अलं न किञ्चित्प्रयोजन शमिनः उपकृत चित्तखेदो मन क्लेशो येन स तथा। शमस्तु रसः शमितचित्तखेदतया भेऽवशिष्य परिशिष्यते ॥ १९ ॥

पुनरपि शङ्कते आर्येति। निष्पन्दानि निश्चलानि निखिलकरणानि सकलेन्द्रियाणि येषा ते तथोक्ता तैः जनै निष्पादनीयो उपायः नाटक वृत्तान्तेन व्यापारेण।

सूत्रधारः-आर्ये, मैव वादीः नहि वयमवधूतनिखिलधर्माणा-मलेपकाना मतमभिनेष्यामः येनैवमाशङ्कसे सन्तिखलु भगवता गीताचार्येण सहस्रशः प्रतिपादिता स्सात्विकेन त्यागेन परिकर्मिता निवृत्तिधर्मपद्धतिनियता विविधा व्यापाराः यदभिनयेन रङ्गोपजीविनामाजीवावकाशः ।

अपिचेह निशमयतु निशामयतु वा नाट्यवैभव भवति । श्रूयते हि ।

न तच्छास्त्रं न साविद्या न तच्छिल्पन्न ताः कलाः ।
नासौ योगो न तद्ज्ञानं नाटके यन्न दृश्यते ॥ २० ॥

---

अवधूता' अपास्ता' निखिला' धर्मा यैस्तेषा अलेपकाना बुद्धिपूर्वोत्तरागाश्लेष वदता मत अभिनेष्याम येन मतेनैवमाशङ्कसे ।

सबन्धज्ञानमात्रमेव प्रवृत्ति वर्णाश्रमोदितसकलधर्मपरित्याग कार्यं बुद्धिपूर्वाघपयन्तरागाननश्लिष्यन्ति । भगवानेव मोक्षं दास्यतीति किल तषा मत । सात्विकत्यागेन परिकर्मिता ।

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सगं त्यक्त्वा फलं चैव स त्यागस्सात्विको मतः ॥

इत्युक्तस्सात्विकत्याग । निवृत्तिधर्म अपवर्गकफल तस्य पद्धति' मार्ग तस्मिन्नियता रङ्गोपजीविना नटाना श्रीरङ्गनगरवासिना च आजीव जीवनहेतु. तस्यावकाश ।

एव तद्धर्मणामभिनेयत्वकथनेन शान्तिरसस्याप्यभिनेयत्वमुक्ता सर्वाभिनयसामर्थ्यं नटस्य स्तीत्याह ।

अपि चेति-॥ निशमयतु शृणोतु । निशामयतु । मयोपदिश्यमानमर्थं शृणु अवलोकयचेत्यर्थ. ।

नेति-॥ शास्त्र वेद' तस्यैव शासनरूपत्वाच्छास्त्रत्व । विद्या धर्मशास्त्रेतिहासपुराणानि तेषा तत्वज्ञानजननसामर्थ्याद्विद्यात्वं । कारणेकार्योपचार । शिल्प गोपुरविमानमण्टपप्राकाररथादिकरण । कला नदीतरणवृक्षारोहणादि । योग कर्मयोग विज्ञान भक्तियोग तस्यापि ज्ञानविशेषत्वात । श्रुतिस्मृतीतिहासपुराणानामभिनेयत्व तत्तदुदितधर्मद्वारात् ॥ २० ॥

नटी–*अई दुक्करमारद्ध तुम्हेहि अह उण इत्थिआसभावघोरन्तहिअआ मच्छरगह गहिआदो पडिपक्ख पीडअजणादो भअकंपि अम्हि

सूत्र–अल कातर्येण अद्य खल्वस्माकमभिमुख भागधेय । तथाहि ।

लक्षणसमृद्धिरनघा रसपरिपोषश्च सहृदयग्राह्यः ।
संपतति नाटकेऽस्मिन् स एष शैलूषसुकृतपरिपाकः ॥ २१ ॥

किंच ।

विद्यासंपन्निधिरवहितो वेङ्कटेशः कवीन्द्र
स्सिद्धारंभश्चिरमभिनये मामकः पात्रवर्गः ।
प्रख्यातेयं परिषदनघा पक्षपातानभिज्ञा
रामादीनां कुलधनमिदं रङ्गतां याति रङ्गम् ॥ २२ ॥

---

*अतिदुष्करमारब्ध युष्माभिः अह पुनस्त्रीस्वभावघूर्णमानहृदया मत्सरग्रहगृहीतात्प्रतिपक्षपीडतजनाद्भयकम्पितास्मि

---

पुनरपि शङ्कते अतिदुष्करमारब्धमिति । स्त्रीस्वभावेन घूर्णमानं भ्रमत् हृदय यस्यास्सा तथा । मत्सर एव ग्रह. पिशाच तेन गृहीतात्तत्परवशादित्यर्थ । प्रतिपक्षभूतात्पीडतजनात् अतिदुष्करमारब्धमिति प्रथमत उक्त ।

तत्रालमिति । कातर्येण भयेन कुत इत्यत आह ।

अद्य खल्विति–॥ भागधेय भाग्य ।

लक्षणेति–॥लक्षणाना नाटकलक्षणानां समृद्धि पौष्कल्य तानि च साङ्गानि मुखसङ्गप्रभृतीनि रसस्य स्थायिन. परिपोष' विभवादिभि पुष्टि । यथोक्तमनुभावविभावाभ्या सात्विकै. व्यभिचारिभि ग्रहीतमुक्तै. कर्तव्यमङ्गिन' परिपोषणमिति । सहृदया समानहृदया तै ग्राह्य सहृदया तदभिप्रायमवेत्य गृह्णन्ति अनघा लक्षणसमृद्धि सहृदय ग्राह्य रसपरिपोषश्चास्मिन्नाटके सम्पततीति यत् स एष शैलूषसुकृत परिपाक शैलूषाणा सुकृतस्य परिपाक ॥ २१ ॥

एव काव्यप्रशसा विधाय कविनटादीन् प्रशसति किं चेति–॥

विद्येति–॥ विद्याना सपत् समृद्धिस्तस्या निधि स्थान । विद्या एव सपत तासा निधिरिति वा । अवहित सावधान कवीन्द्र । आभ्या विशेषणाभ्यामस्य रूपकस्याखिलविद्यानुसारित्व लक्षणास्खालित्यञ्च व्यज्यते । मामक मामकीन' मदीय इत्यर्थ. पात्राणा वर्ग समूह चिर चिरायाभिनये सिद्धारम्भ सिद्धमङ्गल्य फलसिद्ध्य. विनाभूतारम्भ इति यावत । अनघा दोषदर्शित्वरूपपापरहिता इय परिषत पक्षपातानभिज्ञा प्रख्याता पक्षपातानभिज्ञतया प्रसिद्धा । राम दाशरथि आदि येषां तेषा

अन्यच्च भवत्या भावनीयम् ।

शमधननिधिं सत्वप्रायं प्रयोगमयोगिनः
स्वगुणवशतस्स्तोतुं यद्वावरीवृतुनिन्दितुं ।
किमिह बहुभिः किन्नश्चिन्नं न विश्वमनीश्वरं
तदुपनिहिता जाग्रत्येवञ्चतुर्दशसाक्षिणः ॥ २३ ॥

नूनमतर्कितोपनता अप्यचिरद्युतिवदारम्भनियतावसाना मनीषिणामीर्ष्यादयः । यद्वा

---

इक्ष्वाकुपर्यन्तानां राज्ञां कुलधनं कुलधनमिव सर्वस्वभूतमिदं रङ्गं रङ्गविमानोपलक्षितनगरं रङ्गविमानस्य रामादि कुलधनत्वं ।

लब्ध्वा कुलधनं राजा लंकां प्रायाद्विभीषणः ।

इत्युक्तेस्सिद्धं रङ्गतां नृत्तशालात्वं याति ॥ २२ ॥

अनेन प्रस्तावनाङ्गभूता प्ररोचना कृता । कविकाव्यनटादीनां प्रशंसा तु प्ररोचनेति लक्षणात् ।

मत्सरग्रहग्रहीतात् प्रतिपक्षपण्डितजनात् भयकम्पितास्मीत्युक्त-तत्रोत्तरं वक्तुमारभते अन्यच्चेति-॥

शमधनेति-॥ शमः चित्तप्रशान्तिरीर्ष्यावलेपादिराहित्यं स एव धनं येषां ते शमधनाः तेषां निधिं निक्षेपं सत्वप्रायं सत्वगुणप्रचुरमसुमितिशेषः प्रयोगं नाटकं अयोगिनः योगरहिताः । योगस्सन्नहनोपाय ध्यानसङ्गतियुक्तिष्विति निघण्टुः । एतदभिप्रायमजानन्त इत्यर्थः । स्वगुणवशतः स्वासाधारणरजस्तमोगुणपारवश्यात् स्तोतुं यद्वानिन्दितुं वरीवृतु वर्तन्तां । इहार्थे बहुभिर्वचनैः किं न किञ्चिदपीत्यर्थः । नः किं चित्र विश्वं सर्वं जगदनीश्वरं न ईश्वररहितं न ईश्वरस्सर्वत्रास्ति खिलेत्यर्थः । अस्माभिरीश्वरो न दृश्यत इत्यत्राह । तदुपनिहिताः तेनेश्वरेण उपसर्वेण समीपे निहिताः (अन्ये) चतुर्दशसाक्षिणः भूम्यादयः जाग्रति अनिद्रावर्त्तन्त इत्यर्थः । तदुक्तमेत्र मित्यपरोक्षनिर्देशः ॥ २३ ॥

विदुषां जाता अपि ईर्ष्यादयो न चिरन्तिष्ठन्तीति वक्तुमारभते अपि चेति-॥ अतर्किता उपस्थिताश्च आरम्भेण नियतमवसानं येषां ते तथोक्ताः ।

उक्तमेवार्थं दृढयति ।

मौनं बिभ्रतु मत्सरेण नमिता स्तूर्णन्त एवध्रुवं
काले च्छिद्रकदंबगोलवपुषः कम्पस्फुरन्मौलयः ।
किंचिद्व्रीडितकुञ्चिताक्षमवशादुत्तानदत्ताननाः
प्रस्तोष्यन्त्यवधिं प्रयोगपदवी सारस्यसारस्य नः २४

सन्तु वा निरन्तरनिर्यामितमत्सरनीरध्रहृदयाः निर्विकाराः तथापि सर्वथा तावत् ।

उपवेदमुदारधीस्स्वनाम्ना
भरतस्सूचितभावरागतालम् ।
यमुदाहरति स्म विश्वगुप्त्यै
तदभिज्ञैरबहिष्कृता वयं स्मः ॥ २५ ॥

नटी–*अय्य एव्व एद तहाव सुअगुरु एसु बहुसु विरूढेसु छिद्द गवेसन्तेसु कह अप्पमत्ते हि अम्हेहि पडिण्णाद णिव्वहणिज्ज

---

*आर्य एवमेतत् तथापि श्रुतगुरुकेषु बहुषु विरूढेषु छिद्रगवेषयत्सु कथमप्रमत्तैरस्माभिः प्रतिज्ञात निर्वहणीय

---

मौनमिति–॥ ईर्ष्यावन्तस्तावत्मत्सरेण निहिताननस्सन्ता मौन बिभ्रतु धारयन्तु एव तूर्णाम् । काले वर्षाकाले उच्छिद्र विकसित यत् कदबगोल कदबस्तबक तदिव वपुर्येषा ते तथा सपुलका इत्यर्थः श्लाघया कप तेन स्फुरन्ती मौलयो येषा ते तथा । कि चिदल्प व्रीलितेन लज्जया कुञ्चिते अवनते अक्षिणी यस्मिन् कर्मणि तद्यथा भवति तथा । अवशात् अबुद्ध्येत्यर्थं । उत्तान उन्नत यथा भवति तथा दत्तमानन यैस्ते न. अस्माक प्रयोगपदव्या. अभिनयमार्गस्य यत सारस्यसरसत्व तत्सारस्य मुख्याशस्यावधि सीमान प्रस्तोष्यन्ति ध्रुवं निश्चय । सर्वदा आरब्धकार्यस्य सुकारत्वात् प्रतिपक्षस्य सूर्यादीनामस्थिरत्वाच्चेत्यर्थं ॥ २४ ॥

उपवेदमिति–॥ उदारधी अशेषभोग्यभूतनाट्यशास्त्रप्रवर्त्तनादुदारधीत्व भरत भरतमुनि स्वनाम्ना भरताख्यया सूचितभावरागताल सूचिता भावरागताला यस्मिस्तत्तथोक्त ।

भकारेणोच्यते भावो रेफाद्राग उदीर्यते ।
तकारेणोच्यते तालस्त्रय भरतंमतम् ॥ इत्युक्ते ।

यं उपवेद गान्धर्वं । तस्योपवेदत्व–आयुर्वेदो धनुर्वेदो वेदो गान्धर्व एव चेत्युक्त । विश्वगुप्त्यै ( विश्वभोग्यमिति पाठान्तर ) यच्छास्त्रमुदाहरतिस्म प्रणीतवान् । तदभिज्ञैनैर्वयमबहिष्कृतास्म ( अन्तरङ्गतया स्वीकृतास्म इत्यर्थं ) ॥ २५ ॥

पुनरपि छिद्रान्वेषि बहुश्रुतजनभयात शङ्कते आर्येति–॥

सूत्रधारः—अयि परगुणसन्तोषिणि श्रुतबाहुल्ये तवकेयमास्था अथवा। अवधारित परमार्थानामप्यवगतसवादनार्थमुत्तरोत्तरं परिप्रश्ना प्रवर्तन्त भवतुनाम विशुद्धविद्यास्तावदभिमन्यस्व। दृश्यतेहि।

भूयसीरपि कलाः कलङ्किताः।
प्राप्य कश्चिदपचीयते शनैः।
एकयापिकलया विशुद्धया
योपि कोपि भजते गिरीशताम् ॥ २६ ॥

तदहमिदानीं पराशरपराशर्यादि बहुमतामबहुमतदुर्विनीतजन वृत्तिमनवरतपरिचितगान्धर्वविद्याविनोदनप्रसादितपरमपुरुषामेता परिषदमेकतानयामि। सप्रश्रयमञ्जलिं बध्वा।

---

परेषा गुणैस्सन्तोषिणी।

श्रुतस्य शास्त्रश्रवणस्य बाहुल्ये तव केयमास्थेत्यनेन तेषा श्रुतबाहुल्यमेव नास्ति अतो न शङ्कनीयमिति व्यज्यते। पक्षान्तरमाह।

अथवेति-॥ अवगताना ज्ञाताना अर्थाना संवादन समतया वचनं तदर्थं त्वया यदुक्त तेषा बहुश्रुतत्व तत् भवतु नाम बहुश्रुतत्वमेव न गुणा अपि तु विद्या विशुद्धि तद्दृश्यते हि।

भूयसीरिति—॥ कश्चित्पुरुष चन्द्रश्च कलङ्कितास्साविद्या' लाञ्छनवतीश्च कला' विद्या षोडशभागाश्च भूयसीरपि प्राप्य शनै अपचीयते क्षीयते। योपि कोपि य कश्चिदपि हरश्च विशुद्धया निर्मलया एकयापि कलया गिरिगोर्विषये ईश्वता स्वामित्व रुद्रता च भजते। गिरीशो गिरिशो मह्दृति निघण्टु ॥ २६ ॥

तत विशुद्धविद्याया एवोपादेयत्वात गान्धर्वविद्यया विनोद कालक्षेप तेन प्रसादितस्सञ्जातप्रसाद परमपुरुषो भगवान यया ता गान्धर्वविद्याविनोदश्च भगवत्प्रसादहेतु। स्मर्यते च याज्ञवल्क्येन। तालधृतूचाप्रयासेन मोक्षमार्गं निगच्छतीति। शम्यातालप्रयोगेन सन्निपातेन वा पुन. इति भगवता वराहरूपिणा च। एकमद्वितीय तान स्थान यस्यास्ता तथोक्ता ता करोमि एकाग्रा करोमीत्यर्थ।

सप्रश्रय सविनय यथा भवति तथा।

विवेकप्रारंभे विमतमतभंगप्रयतने
मुमुक्षासंसिद्धौ मुरमथनयोगे च सफले ।
मुखादीन्निध्यातुं निभृतमिह नाट्ये कृतमुखै
र्भवद्भिः स्थातव्यं भरतमतधौरेयमतिभिः ॥ २७ ॥

(नेपथ्ये) ।

समयनियतैः प्रयोगै
स्सत्पथसीमामनुज्झतो विदुषः ।
किरणैरिव दिवसकृतः
क्षिप्यन्ते तामसारंभाः ॥ २८ ॥

विवेकेति—॥ इहास्मिन्नाट्ये विवेकस्य प्रारम्भे पुरुषमोक्षणारम्भे विमतानां विरोधिनां महामोहादीनां मतस्याभिमतार्थस्य यो भङ्गः तस्मिन्प्रयतने मुमुक्षाया मोक्षेच्छायास्संसिद्धौ निष्पत्तौ मुरमथनस्य मुरारेः योगसंवहने मोक्षयिष्यामीति सङ्कल्पे तस्मिंश्च सफले मोक्षलाभरूपफलसहिते मुखादीन्मुखप्रभृतीन्सन्धीन् निध्यातुं सम्यक् धारयितुं भरतमतस्य धौरेया धूर्वहा मतिर्येषां तैः कृतमुखैः शिक्षितैः भवद्भिः निभृतं निश्चलं यथा भवति तथा सावधानैरिति यावत् स्थातव्यं भाव्यमित्यर्थः । मुखादीनित्यनेन मुखप्रतिमुखगर्भावमर्शोपसंहृति सञ्ज्ञाः पञ्चसन्धयस्साङ्गा विवक्षिताः । ते च

अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भयत्नप्राप्त्याशा नियताप्तिफलागमाः ।
बीजबिन्दुपताकाख्य प्रकरी कार्य लक्षणाः ।
अर्थप्रकृतयः पञ्च ता एताः परिकीर्तिताः ।
अर्थप्रकृतयः पञ्च पञ्चावस्था समन्विताः ।
यथा सङ्ख्येन जायन्ते मुखाद्याः पञ्चसन्धयः ।
मुखं प्रतिमुखं गर्भस्सावमर्शोपसंहृतिः । इत्युक्ताः ।

अर्थबीजरूपाया अर्थप्रकृतेरारम्भरूपाया कार्यावस्थायाश्च सन्धिर्मुखसंज्ञः । एवमेव बिन्दोर्यत्नस्य च सन्धिः प्रतिमुखाख्यः । पताकाया प्राप्त्याशायाश्च सन्धिर्गर्भाह्वयः । प्रकर्यानियताप्तेश्च सन्धिरवमर्शनामा । कार्यस्य फलागमस्य च सन्धिरुपसंहृतिः । इति ध्येयम् ।

एवमुक्तानां सन्धीनामङ्गान्यपि चतुष्षष्टिः । तत्र तत्र यथासम्भवमनुसन्धेयानि ।

इत्तमुद्युक्तस्यास्य मनस्युत्साहं वर्धयन्निभ यवनिकान्तस्थैर्गीयते ।

समयेति—॥ सत्पथस्य नक्षत्रमार्गभूतस्य नभसः सतः समीचीनस्य पथः मार्गस्य सीमां भूमिमनुज्झतः अत्यजतः विदुषः निपुणस्य दिवसकृतः किरणैरिव समयः नियतैः प्रयोगैः तामसाः तमस्सम्बन्धिनः आरम्भाः तामसानामारम्भाः तमोगुणाभिभूतानामारम्भाः उद्योगाः क्षिप्यन्ते निरस्यन्ते ॥ २८ ॥

सूत्रधार –( कर्णं दत्वा ) ( सानन्द ) ।

आर्ये सम्यगवधार्यता अस्मद्वृत्तिमापवर्गिकवृत्तिञ्च तन्वयन्तीय मौद्घातिकी गीतिः । ततश्च ।

**दुर्जनं प्रतिपक्षं च दूरदृष्टिरयं जनः ।**
**विवेकश्च महामोहं विजेतुं प्रभविष्यतः ॥ २६ ॥**

( नेपथ्ये ) ।

कः खल्वसौ कुशीलवकुलाङ्गारः करतलकलितकठोरमधुरधन्वनि सुरभिसुकुमारचित्रपुङ्खे वित्रासितनिखिलवैरिजने जीवति सकलसुरासुरमुनिमनुजचित्तवृत्तिसार्वभौमस्य दुर्मतिसहधर्मचारिणीरमणाङ्गमहानटस्य देवस्य महामोहस्य विवक्षानर्हं किमपि विपक्षसकाशादाशसते ।

सूत्रधार –( सभयसम्भ्रम परिवृत्य पश्यन् )

आर्ये कोऽयममर्षसप्लवादभ्यधिकलोहितान्तस्सहाय इतोऽभिवर्तते । आः कष्टमवधारित ।

---

अस्मद्वृत्तिमिति–॥ स्वोद्युक्तकार्यनिर्वहणा आपवर्गिकीं अपवर्गसम्बन्धिनीं विवेकादिचिकीर्षितमुक्तिप्रापणाञ्च तन्वयन्ती यौगपद्येन प्रतिपादयन्ती औद्घातकी उद्घातसबन्धिनी गीति गानमवधार्यता निश्चीयता । ततः हेतोः अस्माकं विवेकस्य च वृत्तिकथनात् ।

दुर्जनमिति–॥ दूरे दृष्टि दर्शनं यस्य स तथा अयं जनश्च अहमित्यर्थः विवेकश्च दुर्जनं प्रतिपक्ष च महामोहं च विजेतुं प्रभविष्यत समर्थौ भविष्यतः ॥ २६ ॥

एव विवेकान्महामोहस्य पराजयमाकर्ण्य समनन्तर प्रवेक्ष्यमाणः कामोऽसहमान आह ।

कः खल्विति–॥ कुशीलवस्य कुलस्याङ्गार अङ्गारवद्दाहक सुरभि परिमलवान् सुकुमार मृदु अत एव चित्र. आश्चर्यभूत पुंख बाणो यस्य तस्मिन् परिजने मयीतिशेष । सुरासुरादीनां याश्चित्तवृत्तय तासा सार्वभौम. सर्वभूमीश्वर तस्य दुर्मतेस्सहधर्मचारिणा. पत्यु. वक्तुमिच्छा विवक्षा तस्याप्यनर्हमयोग्य । किमपीत्यसम्भावितत्व द्योतयति ।

अमर्ष. कोप मद दर्प तयोस्सप्लवेन व्यतिरेकेण अभ्यधिकं लोहितेरक्ते अक्षिणी यस्य स तथा । आ कष्टमिति खेदे अवधारित ।

शनाश एवेति प्रागेवोपपादितम् । आभासा एवेति वा पाठः । तथा सति हेतव आभासाः । चकारात्

"पृथगात्मानं प्रेरितारं च मत्वा"

"ज्ञाज्ञौ द्वावजावीशनीशौ"[1]

"तयोरन्यः पिप्पलं स्वाद्वत्ती"त्यादिश्रुतिविरोधश्च । अविद्यापरिकल्पितोपाधिभेदे हि सर्वोपाधिभिरुपहितस्वरूपस्यैकत्वाभ्युपगमाद्भोगव्यतिकरस्तदवस्थ एव ।

पारमार्थिकोपाध्युपहितब्रह्मजीववादे उपाधिभेद[2]हेतुभूतानाद्यऽदृष्टवशाद्व्यवस्था[3] भविष्यतीत्याशङ्क्याह[4]—

अदृष्टानियमात् ॥ ५० ॥

उपाधिपरम्पराहेतुभूतस्यादृष्टस्यापि ब्रह्मस्वरूपाश्रयत्वेन नियमहेत्वभावादव्यवस्थैव,[5] उपाधिभिरदृष्टैश्च स्वसम्बन्धेन[6] ब्रह्मस्वरूपच्छेदासम्भवात् ।

अभिसन्ध्यादिष्वपि चैवम् ॥ ५१ ॥

अदृष्टहेतुभूताभिसन्ध्यादिष्वपि उक्तादेव[7] हेतोरनियम एव ।

प्रदेशभेदादिति[8] चेन्ना,न्तर्भावात् ॥ ५२ ॥

यद्यप्येकमेव ब्रह्मस्वरूपम्, तच्छेदानर्हं नानाविधो[9]पाधिभिः सम्बध्यते, तथाऽप्युपाधिसम्बन्धिब्रह्मप्रदेशभेदादुपपद्यत एव भोगव्यवस्थेति चेन्नच, उपाधीनां तत्रतत्र गमनात्सर्वप्रदेशानां सर्वोपाध्यन्तर्भावाद्व्यतिकरस्तदवस्थ एव । प्रदेशभेदेन सम्बन्धेऽपि सर्वस्य ब्रह्मप्रदेशत्वात्तत्[10]त्प्रदेशसम्बन्धिदुःखं ब्रह्मण एव स्यात् । पूर्वत्र 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा' 'उपलब्धिवदनियमः' इति द्वाभ्यां

१ ज्ञाज्ञौ द्वाविति लि॰ पु॰ । २ ०भेदे इति लि॰ पु॰ ।
३ ०वस्थाव्यवस्थेति लि॰ पु॰ । ४ आहेति नास्ति लि॰ पु॰ ।
५ ०भावादप्यव्यवस्थैवेति लि॰ पु॰ । ६ स्वरूपसम्बन्ध-इति लि॰ पु॰ ।
७ ०देवमिति लि॰ पु॰ । ८ प्रदेशादितीति लि पु ।
९ नानाविद्यो-इति लि पु । १० तदिति सकृदेव मु पु ।

सूत्राभ्या वेदबाह्यानां सर्वगतजीववादिना दोष उक्तः । अत्र त्वाभास एव चे[1]त्यादिभिः सूत्रैर्वेदावलम्बिनामात्मैकत्ववादिना दोष उच्यते ॥

अंशाधिकरण समाप्तम् ॥ ७ ॥

इति श्रीमद्भगवद्रामानुजाचार्य्यचरणकृतौ शारीरकमीमासाभाष्ये ऽविरोधाध्यायस्य द्वितीयस्य तृतीयः पाद. ॥ ३ ॥



१ चेति नास्ति लि पु ।

# अथ द्वितीयाध्याये चतुर्थः पादः ॥

अथ प्राणोत्पत्त्यधिकरणम् १। **तथा प्राणाः ॥ १ ॥**

ब्रह्मव्यतिरिक्तस्य वियदादेः कृत्स्नस्य कार्य्यत्वेनोत्पत्तावुक्तायां जीवस्य कार्य्यत्वे[1]ऽपि स्वरूपान्यथाभावलक्षणोत्पत्तिरपोदिता,[2] तत्प्रसङ्गेन जीवस्वरूपं विशोधितम्। सम्प्रति जीवोपकरणानामिन्द्रियाणां प्राणस्य चोत्पत्त्यादिप्रकारो विशोध्यते।

तत्र किमिन्द्रियाणां कार्य्यत्वं जीववत्,उत वियदादिवदिति चिन्त्यते। किं युक्तम्। जीववदेव–इत्याह पूर्वपक्षी 'तथा प्राणा' इति। प्राणा इन्द्रियाणि। यथा जीवो नोत्पद्यते, तथेन्द्रियाण्यपि नोत्पद्यन्ते। कुतः। श्रुतेः, यथा जीवस्यानुत्पत्तिः श्रुतेरवगम्यते, तथा प्राणानामप्यनुत्पत्तिः श्रुतेरेवावगम्यते। तथा प्राणा इति प्रमाणमप्यतिदिश्यते। का पुनरत्र श्रुतिः। "असद्वा इदमग्र आसीत् तदाहुः किं तदऽसदासीदित्यृषयो वाव तेऽग्रे ऽसदासीत् तदाहुः के ते ऋषय इति प्राणा वा ऋषय"[3]इति जगदुत्पत्तेः प्रागिन्द्रियाणां सद्भावः श्रूयते। 'प्राण'–शब्दे बहुवचनादिन्द्रियाण्येवेति निश्चीयते। न चेयं श्रुतिः "वायुश्चान्तरिक्षं चै[4]तदमृतं" "सैषाऽनस्तमिता देवता य[5]द्वायु"रितिवच्चिरकालावस्थायित्वेन परिणेतुं शक्या, "असद्वा इदमग्र आसी"दिति कृत्स्नप्रपञ्चप्रलयवेलायामप्यवस्थितत्वश्रवणात्। उत्पत्तिवादिन्यस्तु जीवोत्पत्तिवादिन्य इव नेतव्या इत्येवं प्राप्तेऽभिधीयते–

---

१ कार्यं इति लि पु। २ ०रप्युदितेति लि पु।

३ असद्वा इसमग्र आसीत तदाहु किं तदासीदिति ऋषयो वाव तेऽग्रे सदासी त्तदाहु· केते ऋषय इति प्राणा वाव ऋषय इति मु पु, लि· पु ऽपि–असद्वेद मग्र·· ·· तथाहुः केते इति विशेषः, अन्यत्तुल्यम।

४ च–इति लि० पु०। ५ देवताब्रदिति लि० पु०।

वियदादिवदेव प्राणाश्चोत्पद्यन्ते[१] । कुतः । "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवा[२]ग्र आसी"दित्यादिषु प्राक्सृष्टेरेकत्वावधारणात्, "एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च"तीन्द्रियाणामुत्पत्तिश्रवणाच्च प्रागवस्थानासम्भवात्[३] । न चात्मोत्पत्तिवादवदिन्द्रियोत्पत्तिवाद. परिणेतु शक्यः,[४] आत्मवदुत्पत्तिप्रतिषेधश्रुतीना नित्यत्वबोधक[५]श्रुतीना चादर्शनात् । "असद्वा इदमग्र आसी"दित्यादिवाक्येऽपि 'प्राण'–शब्देन परमात्मैव निर्द्दिश्यते, "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत" इति 'प्राण'–शब्दस्य परमात्मन्यपि प्रसिद्धेः । "प्राणा वा [६]ऋषय"इति 'ऋषि'–शब्दश्च सर्वज्ञे तस्मिन्नेव युज्यते, न त्वचेतनेष्विन्द्रियेषु[७] ।

ऋषयः प्राणा इति[८] बहुवचनश्रुतिः कथमुपपद्यत इति चे,त्तत्राह–

## गौण्य ऽसम्भवात्तत्प्राक्श्रुतेश्च[९] ॥ २ ॥

बहुवचनश्रुतिर्गौणी, बह्वर्थासम्भवात्,[१०]तस्यैव परमात्मनः सृष्टेः प्रागऽवस्थानश्रुतेरेव ।

## तत्पूर्वकत्वाद्वाचः ॥ ३ ॥

इतश्च 'प्राण'–शब्दः परमात्मवचनः । 'वाचः' परमात्मव्यतिरिक्तविषयस्य नामधेयस्य वाग्विषयभूतवियदादिसृष्टिपूर्वकत्वात् "तद्धेद तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्या व्याक्रियते"ति[११] नामरूपभाजामभावात् तदानीं वागादीन्द्रियकार्य्याभावाच्च तानि न सन्तीत्यर्थः ॥

प्राणोत्पत्त्यधिकरण समाप्तम् ॥ १ ॥

---

१ ०श्चोद्यन्ते इति लि० पु० । २ आत्मा इदमेवेति लि० पु० प्रमाद. ।
३ ०सभवाच्चेति लि० पु० । ४ ०वादा परिणेतु शक्या इति मु० पु० ।
५ बोधकेति नास्ति लि० पु० । ६ वाव–इति मु० पु० ।
७ नन्वचेतनेष्विन्द्रियेष्वित्युत्तरग्रन्थान्वयितयास्ति लि पु॰ । ८ चेति पु० द्वयेपि ।
९ गौण्यसभावात्तत्प्रागवस्थितेश्चेति लि० पु० सूत्रपाठ' ।
१० 'गौणयेवेति निश्चीयते जगत उत्पत्ति प्राक इन्द्रियाणामासदभावश्रूयते प्राण शब्देवचनादिन्द्रियाभावा'दिति लि० पु० अधिकमत्रास्ति ।
११ ०ते इति इति मु० पु० ।

अथ सप्तगत्यधिकरणम् २। **सप्त गतेर्विशेषितत्वाच्च ॥ ४ ॥**

तानीन्द्रियाणि किं सप्तैव स्युः, अथ वैकादशेति चिन्त्यते। श्रुतिविप्रतिपत्तेः संशयः। किं प्राप्तम्। सप्तेति। कुतः। 'गतेर्विशेषितत्वाच्च'। गतिस्तावज्जायमानेन म्रियमाणेन च जीवेन सह लोकेषु सञ्चरणरूपा सप्तानामेव श्रूयते—"सप्तेमे लोका येषु सञ्चरन्ति प्राणा गुहाशया निहिताः सप्तसप्ते"ति। वीप्सा पुरुषभेदाभिप्राया। विशेषिताश्च ते गतिमन्तः प्राणा† स्वरूपतः

"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टेत तामाहुः परमां गति"मिति।

शरीरान्तःसञ्चरणं विहाय मोक्षार्थगमनं परमा गतिः। एवं जीवेन सह जन्ममरणयोः सप्तानामेव गतिश्रवणात्, योगदशायां ज्ञानानीति विशेषितत्वाच्च जीवस्य करणानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणबुद्धिमनांसि सप्तैवेति गम्यते। यानि त्वितराणि विषयाणां ग्राहकत्वेन "अष्टौ ग्रहाः" "सप्त वै शीर्षण्याः प्राणा द्वावऽवाञ्चा"वित्यादिषु चतुर्दशपर्य्यन्तानि प्राणप्रतिपादकवाक्येषु वाक्पाणिपादपायूपस्थाहङ्कारचित्ताख्यानीन्द्रियाणि प्रतीयन्ते, तेषां जीवेन सह गतिश्रवणाभावाज्जीवस्याल्पाल्पोपकारकत्वमात्रेणौपचारिकः प्राणव्यपदेश इति प्राप्ते प्रचक्ष्महे—

**हस्तादयस्तु स्थितेऽतो नैवम् ॥ ५ ॥**

न सप्तैवेन्द्रियाण्य, ऽपि त्वेकादश, हस्तादीनामपि शरीरस्थिते जीवे तस्य भोगोपकरणत्वात्कार्य्यभेदाच्च। दृश्यते हि श्रोत्रादीनामिव हस्तादीनामपि कार्य्यभेद आदानादि। अतस्तेऽपि सन्त्येव। 'अतो नैवम्'—अतो हस्तादयो न सन्तीत्येव न मन्तव्यमित्यर्थः। अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इत्येकादशेन्द्रियाणि। अतो "दशेमे पुरुषे प्राणा आत्मैकादश"इत्या'त्म'-शब्देन मनोऽभिधीयते—

"इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः"।
"तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश।

† इत॰ प्रभृति लि॰ पु॰ एक १९९ सख्य पत्र खण्डितम।

एकादश मनश्चात्रे"त्यादिश्रुतिस्मृतिसिद्धेन्द्रियसङ्ख्या स्थिता । अधिकसङ्ख्यावादा मनोवृत्तिभेदाभिप्रायाः । न्यूनव्यपदेशास्तु तत्रतत्र विवक्षितगमनादिकार्यविशेषप्रयुक्ताः ॥

सप्तगत्यधिकरणं समाप्तम् ॥ २ ॥

अथ प्राणाणुत्वाधिकरणम् ३ । **अणवश्च ॥ ६ ॥**

"त एते सर्व एव समाः सर्वेऽनन्ता" इत्याऽऽनन्त्यश्रवणाद्विभुत्वं प्राणानामिति प्राप्तेऽभिधीयते—

"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"त्युत्क्रान्त्यादिश्रवणात्परिमितत्वे सिद्धे सत्युत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वा'दणवश्च प्राणाः, आनन्त्यश्रुतिस्त्व"थ यो हैताननन्तानुपास्त" इत्युपासनश्रवणादुपास्यप्राणविशेषणभूतकार्य्यबाहुल्याभिप्राया ।

**श्रेष्ठश्च ॥ ७ ॥**

प्राणसंवादे शरीरस्थितिहेतुत्वेन श्रेष्ठतया निर्णीतो मुख्यः प्राणः । "आनीदऽवातं स्वधया तदेक"मिति महाप्रलयसमये स्वकार्य्यभूतप्राणनसद्भावश्रवणा "देतस्माज्जायत"इति जन्मश्रवणस्य जीवजन्मश्रवणवदुपपत्तेर्नोत्पद्यत इत्याशङ्क्य—

प्राक्सृष्टेरेकत्वावधारणादविरोधा"देतस्माज्जायते प्राण" इति पृथिव्यादितुल्योत्पत्तिश्रवणादुत्पत्तिनिषेधाभावाच्च जायत एव 'श्रेष्ठश्च' प्राण इत्युच्यते । "आनीदऽवात"मिति तु न नैव श्रेष्ठं प्राणमभिप्रेत्योच्यते, अपि तु परस्य ब्रह्मण एकस्यैव विद्यमानत्वमुच्यते, 'अवात'मिति तत्रैव श्रवणात् । पूर्वेणैव तुल्यन्यायत्वेऽपि पृथग्योगकरणमुत्तरचिन्तार्थम् ॥

प्राणाणुत्वाधिकरणं समाप्तम् ॥ ३ ॥

अथ वायुक्रियाऽधिकरणम् ४ । **न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥**

सोऽयं श्रेष्ठः प्राणः किं महाभूतद्वितीयवायुमात्रम्, तस्य वा स्पन्दरूपा क्रिया, अथ वा वायुरेव कञ्चन विशेषमापन्न इति विशये वायुरेवेति प्राप्तम्, "यः प्राणः स वायु"रिति व्यपदेशात् । यद्वा, वायु-

मात्रे प्राणत्वप्रसिद्ध्यभावादुच्छ्वासनिश्वासादिवायुक्रियाया प्राणशब्दप्रसिद्धेश्च तत्क्रियैव–इति प्राप्ते–

न वायुमात्रम्, न च तत्क्रियेत्युच्यते । कुतः । 'पृथगुपदेशात्'–"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ख वायु"रिति । तत एव पृथगुपदेशाद्वायुक्रियाऽपि न भवति प्राणः । न हि तेजःप्रभृतीना क्रिया तै. सह पृथग्द्रव्यतयोपदिश्यते । "यः प्राण. स वायु"रिति तु वायुरेवावस्थान्तरमापन्नः प्राणो, न तेजःप्रभृतिवत्तत्त्वान्तरमितिज्ञापनार्थम् । उच्छ्वासनिश्वासादावपि प्राणः स्पन्दत इति क्रियावति द्रव्य एव प्राणशब्दप्रसिद्धिर्न क्रियामात्रे ।

किमय प्राणो वायोर्विकारः सन्नऽग्निवत्तत्त्वान्तरम् । नेत्याह–

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥

नाय भूतविशेषः अपि तु चक्षुरादिवज्जीवोपकरणविशेषः । तच्चोपकरणत्वमुपकरणविशेषभूतैरिन्द्रियैः सहशिष्ट्यादिभ्योऽवगम्यते, चक्षुरादिभिस्साहाय प्राणः शिष्यते प्राणसवादादिषु । तत्सजातीयत्वे हि[1] तैस्सह शासन युज्यते । 'प्राण'–शब्दपरिगृहीतेषु करणेष्वऽस्य विशिष्याभिधान'मादि'–शब्देन गृह्यते । "अथ ह [2]य एवाय मुख्यः प्राणः योऽयं मध्यमः प्राण" इत्यादिषु विशिष्याभिधानात् ।

चक्षुरादिवदऽस्यापि करणत्वे तद्वदऽस्यापि जीव प्रत्युपकारविशेषरूपक्रियया भवितव्यम्, सा तु न दृश्यते, अतो नाय चक्षुरादिवद्भवितुमर्हतीति चे, त्त्राह–

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥

'अकरणत्वात्,' करण क्रिया, अ क्रियत्वाद्ऽस्य प्राणस्य जीवं प्रत्युपकारविशेषरूपक्रियारहितत्वाच्च यो दोष उ[3]द्भाव्यते, स नास्ति, यतः, उपकारविशेषरूपा शरीरेन्द्रियधारणादिरूपा क्रिया दर्शयति

† इत प्रभृति पुनर्लिखितपुस्तक्सवाद ।
१ ०त्वेपीति लि पु । २ अथ ह वा–इति मु॰ पु॰ ।
३ दोषवदिति लि पु ।

श्रुतिः– 'यस्मिन्नुत्क्रान्त इद शरीर पापिष्ठतरमिव दृश्यते''स एव श्रेष्ठ इत्युक्त्वा वागाद्युत्क्रमणेऽपि शरीरस्येन्द्रियान्तराणा च स्थितिं दर्शयित्वा प्राणोत्क्रमणे शरीरेन्द्रियशैथिल्याभिधानात् । अतः प्राणापानव्यानोदानसमानाकारेण पञ्चधाऽवस्थितोऽय प्राणः शरीरेन्द्रियधारणादिना जीवस्योपकरोतीति चक्षुरादिवत्करणत्वम् ।

नन्वेव नामभेदात् कार्य्यभेदाच्च प्राणापानादयस्तत्त्वान्तराणि स्यु,स्तत्राह–

**पञ्चवृत्तिर्मनोवद्[1] व्यपदिश्यते ॥ ११ ॥**

यथा कामादिवृत्तिभेदे तत्कार्य्यभेदेऽपि न कामादिक मनसस्तत्त्वान्तरम्, ''कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा[2]धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे''ति वचनात, एवं ''प्राणोपानो व्यान उदानः समान[3]इत्येतत्सर्वं प्राण एवे''ति वचनादपानादयोऽपि प्राणस्यैव[4] वृत्तिविशेषा, न तत्त्वान्तरमित्यवगम्यते ॥

वायुक्रियाऽधिकरण समाप्तम् ॥ ४ ॥

---

**अणुश्च ॥ १२ ॥**

अणुश्चायम्, पूर्ववदुत्क्रान्त्यादिश्रवणात् ''तमुत्क्रामन्त प्राणोऽनूत्क्रामतीत्यादिषु । अधिका शङ्का तु 'सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण'' ''प्राणे[5] सर्वं प्रतिष्ठित'' ''सर्वं ह्येदं प्राणेनावृत''मित्यादिश्रवणान्महापरिमाण इति ।

परिहारस्तूत्क्रान्त्यादिश्रवणात्परिच्छिन्नत्वे निश्चिते सर्वस्य प्राणिजातस्य प्राणायत्तस्थितित्वेन वैभववादोपपत्तिरिति ॥

श्रेष्ठाणुत्वाधिकरण समाप्तम् ॥ ५ ॥

---

१ ०वृत्तिमनोवदिति लि पु । २ ऽश्रद्धेति लि० पु नास्ति ।
३ प्राणापानव्यानोदानसमाना–इति मु पु, प्राणोपानोव्यान उदान इति लि पु ।
४ ०दुपासादयोपि प्राणस्य–इति लि० पु० प्रमाद. ।
५ प्राणेनेति लि पु ।

अथ ज्योतिराद्यधिष्ठानाधिकरणम् ६ । **ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता[1] शब्दात् ॥ १३ ॥**

सश्रेष्ठाना प्राणाना ब्रह्मण उत्पत्तिरियत्ता परिमाणं चोक्तम् । तेषा प्राणानामग्न्यादिदेवताधिष्ठितत्व च पूर्वमेवा 'ऽभिमानिव्यपदेशस्तु विशेषानुगतिभ्या'मित्यनेन सूत्रेण प्रसङ्गादुपपादितम् । † जीवस्य च स्वभोगसाधनानामेषामधिष्ठातृत्व लोकसिद्धम्, "एवमेवैष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकाम परिवर्त्तत" इत्यादिश्रुतिसिद्ध च । तदिद †जीवस्याग्न्यादिदेवताना च प्राणविषयमऽधिष्ठानं किं स्वायत्तमुत परायत्त[2]मिति विशये नैरपेक्ष्यात्स्वायत्तमिति प्राप्त उच्यते–

'ज्योतिराद्यधिष्ठान'मिति, प्राणवता जीवेन सह ज्योतिरादीना मग्न्यादिदेवताना प्राणविषयमधिष्ठान 'तदामनना'त्तस्य परात्मन आमननाद्भवति । आमननमाभिमुख्येन मननम् । परमात्मन. सङ्कल्पादेव भवतीत्यर्थः । कुत एतत् । 'शब्दात्,' इन्द्रियाणा साभिमानिदेवताना जीवात्मनश्च स्वकार्येषु परमपुरुषामनना[3]यत्तत्वशास्त्रात् । यथाऽन्तर्य्यामिब्राह्मणादिषु "योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति स त आत्मान्तर्याम्यमृतः यो वायौ तिष्ठन् य आदित्ये तिष्ठन् य आत्मनि तिष्ठन् यश्चक्षुषि तिष्ठन्नि"त्यादि । यथा च

"भीषा[4]ऽस्माद्वातः पवते भीषोदेति सूर्य्यः ।

भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम" इति ।

तथा,[5] "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादि ।

**तस्य च नित्यत्वात् ॥ १४ ॥**

सर्वेषा परमात्माधिष्ठितत्वस्य नित्यत्वात्स्वरूपानुबन्धित्वेन नि-

---

१ प्राणवता–इति लि पु । †† एतच्चिह्नान्तर्गत लि पु॰ त्रुटित. ।
२ उत परमात्मायत्तम इति लि पु । ३ ०पुरुषमननेति मु पु ।
४ भिषेति लि पु इह सर्वत्र । ५ चकारोऽधिको मु॰ पु न तु युक्तः ।

अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ८। **संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ १७ ॥**

भूतेन्द्रियादीना समष्टिसृष्टि[1]र्जीवाना कर्तृत्व च परस्माद्ब्रह्मण इत्युक्त पुरस्तात्, जीवाना स्वेन्द्रियाधिष्ठान च परायत्तमिति चानन्तरं स्थिरीकरणाय[2]स्मारितम्। या[3] त्त्वय नामरूपव्याकरणात्मिका प्रपञ्च-व्यष्टिसृष्टि,स्सा कि समष्टिजीवरूप[4]स्य हिरण्यगर्भस्य[5] कर्म, उत तेजः प्रभृतिशरीरकस्य परस्याऽबादि[6]सृष्टिवद्धिरण्यगर्भशरीरकस्य परस्य ब्रह्मण इतीदानीं चिन्त्यते। कि युक्तम्। समष्टिजीवस्येति। कुत.। "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति जीवकर्तृकत्वश्रवणात्। न हि परा देवता स्वेन[7] रूपेण नामरूपे व्याकरवाणी'त्यैचत, अपि तु[8] स्वाशभूतेन जीवरूपेण, "अनेन जीवेनात्मने"ति वचनात्। नन्वेव चारेणानुप्रविश्य परबल सकलयानीतिवद् व्याकरणवाणीत्युत्तमपुरुषः कर्तृस्थ-क्रियश्च प्रविशतिर्लाक्षणिकः स्यात्। नैवम्, तत्र राजचारयोः स्वरूपभेदाल्लाक्षणिकत्वम्,[9] इह तु जीवस्यापि स्वाशत्वेन स्वरूपत्वात् तेन रूपेण[10] प्रवेशो व्याकरणं चात्मन एवेति न[11] लाक्षणिकत्वप्रसङ्गः। न च सहयोगलक्षणेय तृतीया, कारकविभक्तौ सम्भवन्त्यामुपपदविभक्तेरन्याय्य-त्वात्[12]। न च करणे तृतीया, ब्रह्मकर्तृकयोः प्रवेशव्याकरणयोर्जीवस्य साधकतमत्वाभावात्। न च जीवस्य कर्तृत्व प्रवेशमात्रे[13] पर्य्यवस्यति नामरूपव्याकरणन्तु ब्रह्मण एवेति शक्य वक्तुम्, क्त्वाप्रत्ययेन समानकर्तृ-कत्वप्रतीतेः। जीवस्य स्वाशत्वेन स्वरूपत्वेऽपि परस्व[14]रूपव्यावृत्त्यर्थो 'ऽनेन जीवेने'[15]ति पराक्त्वेन परामर्शः। अतो हिरण्यगर्भकर्तृकेय नामरू-

---

१ ०समष्टिरिति लि पु०। २ करणायत्त – इति लि पु प्रमाद।
३ तथा – इति लि० पु। ४ रूपेति नास्ति।
५ प्रवशब्दोऽधिको मु पु। ६ अबाधित – इति लि पु।
७ परा देवतात्वेनेति लि पु प्रमाद०। ८ तुशब्दो नास्ति लि० पु।
९ लाक्षिकत्वमिति मु पु।
१० चकारोऽत्राधिको लि० पु०। ११ एवेति स इति लि पु०।
१२ ०रन्याय्यादिति लि० पु०। १३ ०मात्रमिति लि पु।
१४ परस्येति लि पु। १५ ऽनेनेति लि पु०।

पर्याक्रिया। अत एव च[1] स्मृतिषु चतुर्मुखकर्तृके[2] सृष्टिकरणे नामरूपव्याकरणं सङ्कीर्त्यते–

"नाम रूपञ्च भूतानां कृत्यानां च प्रपञ्चनम्।
वेदशब्देभ्य एवादौ देवादीनां चकार स" इत्यादि।

एवं प्राप्तेऽभिधीयते–

'सञ्ज्ञामूर्तिक्लृप्तिस्त्वि'ति। 'तु'–शब्दः पक्षं व्यावर्तयति। 'सञ्ज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरणम्, तत्त्रिवृत्कुर्वतः परस्यैव[3] ब्रह्मणः, तस्यैव नामरूपव्याकरणोपदेशात्। त्रिवृत्करणं कुर्वत एव हि नामरूपव्याकरणमुपदिश्यते "सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतंत्रिवृतमेकैकां करवाणी"ति समानकर्तृकत्वप्रतीतेः। त्रिवृत्करणं[4] चतुर्मुखस्याण्डान्तर्वर्तिनो न सम्भवति, त्रिवृत्कृतैस्तेजोऽबन्नैर्ह्यण्डमुत्पद्यते। चतुर्मुखस्य चाण्डे सम्भवः स्मर्यते "तस्मिन्नण्डेऽभवद्ब्रह्मा सर्वलोकपितामह"इति। अतस्त्रिवृत्करणं[5] परस्यैव ब्रह्मणः,स्तत्समानकर्तृकं नामरूपव्याकरणं च तस्यैवेति विज्ञायते[6]। कथं तर्ह्य'नेन जीवेने'ति सङ्गच्छते। आत्मना जीवेनेति सामानाधिकरण्याज्जीवशरीरकं परं ब्रह्मैव 'जीव'–शब्देनाभिधीयते, यथा "तत्तेज ऐक्षत तदपोऽसृजत ता आप ऐक्षन्त ता अन्नमसृजन्ते"ति तेजःप्रभृतिशरीरकं परमेव ब्रह्माभिधीयते। अतो जीवसमष्टिभूतहिरण्यगर्भशरीरकस्य परस्यैव ब्रह्मणः कर्म नामरूपव्याकरणम्। एवं च "प्रविश्य नामरूपे व्याकरवाणी"[7]ति प्रविशतिरुत्तमपुरुषश्चाक्लिष्टौ[8] मुख्यार्थावेव भवतः, प्रवेशव्याकरणयोः समानकर्तृकत्वमप्युपपद्यते। चतुर्मुखशरीरकस्य परस्यैव ब्रह्मणः कर्म देवादिविचित्रसृष्टिरिति चतुर्मुखकर्तृके[9]

---

१ चेति नास्ति लि पु। २ समस्तपाठो मु पु।
३ एवशब्दोऽत्र नास्ति लि पु। ४ तुशब्दोऽधिको लि पु।
५ ०करणं – इति लि पु। ६ विज्ञास्यते इति लि पु।
७ व्याकरवाणीति मु पु प्रमादः। ८ ०क्लृप्ताविति लि पु।
९ कर्तृकेति नास्ति लि पु।

सृष्टिप्रकरणे[1] नामरूपव्याक्रियोपदेशश्चोपपद्यते । अतः "सेयं देवते"-त्यादिवाक्यस्यायमर्थः-इमास्तेजोऽबन्नरूपास्तिस्रो देवता अनेन जीवेन जीवसमष्टिविशिष्टेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि देवादिविचित्रसृष्टिन्तन्नामधेयानि च[2] करवाणीति,[3] तदर्थमन्योन्यसंसर्गमप्राप्तानामेषां तेजोऽबन्नानां विशेषसृष्ट्यऽसमर्थानां तत्सामर्थ्यायैकैकां त्रिवृतं त्रिवृतं[4] करवाणीति । अतः[5] परस्यैव ब्रह्मणः कर्मेदं नामरूपव्याकरणम् ।

अथ स्यात्-नामरूपव्याकरणस्य त्रिवृत्करणेनैककर्तृकत्वात्परमात्मकर्तृकत्वं[6]मिति न शक्यते वक्तुम्, त्रिवृत्करणस्यापि जीवकर्तृकत्वसम्भवात् । अण्डसृष्ट्युत्तरकाले हि चतुर्मुखसृष्टजीवेषु त्रिवृत्करणप्रकार उपदिश्यते "यथा खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति अन्नमशितं त्रेधा[7] विधीयते तस्य यः[8] स्थविष्ठो धातु[9]स्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः" इत्यादिना । तथा पूर्वस्मिन्नपि वाक्ये-"यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य"त्यादिना चतुर्मुखसृष्टाग्न्यादित्यचन्द्रविद्युत्सु त्रिवृत्करणं प्रदर्श्यते[10] । नामरूपव्याकरणोत्तरकाले च त्रिवृत्करणं श्रूयते-"सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतंत्रिवृतमेकैकामकरो"दिति, तत्राह-

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ १८ ॥

यदुक्तमण्डसृष्ट्युत्तरकाले चतुर्मुखसृष्टदेवतादिविषयोऽयं "तासां त्रिवृतंत्रिवृतमेकैकामकरो"दिति त्रिवृत्करणोपदेश इति, तन्नोपपद्यते, "अन्नमशितं त्रेधा विधीयत" इत्यत्र मांसमनसोः पुरीषादणुत्वेनाणीयस्त्वेन

१ प्रकारेणेति लि॰ पु॰ ।
२ चकारो नास्ति लि॰ पु॰ ।
३ इतिशब्दो नास्ति लि॰ पु॰ ।
४ त्रिवृतं चेदं करवामिति लि॰ पु॰ ।
५ अत इति नास्ति लि॰ पु॰ ।
६ कर्तृकमिति लि॰ पु॰ ।
७ त्रिधेति मु॰ पु॰ ।
८ य इति लि॰ पु॰ नास्ति ।
९ भाग इति पु॰ द्वयेपि ।
१० प्रदृश्यत इति लि॰ पु॰ ।

च व्यपदिष्टयोः कारणानुविधायित्वेनाऽप्यतैजसत्वप्रसङ्गात्, "आपः पीता" इत्यत्रापि मूत्रप्राणयोः स्थविष्ठाणीयसोः पार्थिवत्व[1]तैजसत्वप्रसङ्गाच्च। न चैवमिष्यते। मांसादेर्हि भौमत्वमिष्यते[2]। पुरीषवन्मांसमनसी अपि भौमे पार्थिवे इष्येते, "अन्नमशितं त्रेधे"ति प्रक्रमात्। 'यथाशब्दमितरयोश्च,' इतरयोरप्या"पः पीतास्तेजो ऽशित"मिति पर्याययोर्यथाशब्द विकारा इष्यन्ते, "आपः पीतास्त्रेधा विधीयन्त" इत्यपामेव त्रिधा परिणामः शब्दात्प्रतीयते, तथा[3] "तेजो ऽशितं त्रेधा विधीयत" इत्यपि तेजस एव त्रिधा परिणामः शब्दात्प्रतीयते। अतः पुरीषमांसमनांसि पृथिवीविकाराः, मूत्रलोहितप्राणा अब्विकाराः, अस्थिमज्जावाचस्तेजोविकारा इति प्रतिपत्तव्यम्। "अन्नमयं हि सोम्य[4] मन आपोमयः प्राणस्तेजोमयी वा"गिति वाक्यशेषाविरोधाच्च। अत"स्तासां त्रिवृतं[5] त्रिवृतमेकैकामऽकरो"दित्युक्तस्त्रिवृत्करणप्रकारोऽ'न्नमशित'मित्यादिना न[6]प्रदर्श्यते, तथा सति मनःप्राणवाचां त्रयाणा[7]मप्यणीयस्त्वेन तैजसत्वाद"ऽन्नमयं हि सोम्य मन" इत्यादिर्विरुध्येत। प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानामन्नमशितमित्यादिनैकैकस्य त्रेधा परिणाम उच्यते। अण्डसृष्टेः प्रागेव च[8] तेजोऽबन्नानां त्रिवृत्करणेन भवितव्यम्। अत्रिवृत्कृतानां तेषां कार्य्यारम्भासामर्थ्यात्। अन्योन्यसंयुक्तानामेव हि कार्य्यारम्भसामर्थ्यम्, तदेव च त्रिवृत्करणम्। तथा च[9] स्मर्य्यते–

"नानावीर्य्याः पृथग्भूता[10]स्ततस्ते संहतिं[11] विना।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः॥
समेत्याऽन्योन्यसंयोगं परस्परसमाश्रयाः।
महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति त" इति।

---

१ त्वेति नास्तीह लि पु। २ मांसादि हि भौममिष्यत इति लि पु।
३ यथेति पु द्वयेपि। ४ सोम्यमिति मु पु।
५ त्रिवृतमिति लि पु सकृदेवात्र। ६ न–इति नास्ति लि पु।
७ एवमेव सर्वपु पाठ, केवलमेकत्र पु मनःप्राणवागिन्द्रियाणामिति पाठ।
८ चो नास्ति लि पु। ९ यथा चेति मु पु।
१० पृथगुद्भूता इति लि पु। ११ संगतिमिति मु पु।

अत एव[1] "चानेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतत्रिवृतमेकैकामकरो"दिति पाठक्रमोऽर्थक्रमेण बाध्यते । अण्डान्तर्वर्तिष्वग्न्यादित्यादिषु[2] त्रिवृत्करणप्रदर्शने श्वेतकेतोः शुश्रूषोरण्डान्तर्वर्तित्वेन तस्य बहिष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात् त्रिवृत्कृतानां कार्य्येष्वग्न्यादित्यादिषु[2] क्रियते ।

स्यादेतत् । 'अन्नमशितमापः पीतास्तेजोऽशित'मिति त्रिवृत्कृतानामन्नादीनामेकैकस्य तेजोऽबन्नात्मकत्वेन त्रिरूपस्य कथमन्नमापस्तेज इत्येकैकरूपेण व्यपदेश उपपद्यत इति, तत्राह–

**वैशेष्यात्तु तद्वादस्तद्वादः ॥ १९ ॥**

वैशेष्य–विशेषभाव.[3] । त्रिवृत्करणेन त्रिरूपे[4]ऽप्येकैकस्मिन्नऽन्नाद्याधिक्यात् तत्रतत्रान्नादिवादः । द्विरुक्तिरध्यायपरि[5]समाप्तिं द्योतयति ॥

संज्ञामूर्त्तिक्लृप्त्यधिकरणं समाप्तम् ॥ ८ ॥

इति श्रीमद्भगवद्रामानुजाचार्य्यचरणकृतौ शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

**समाप्तश्चायमविरोधाध्यायो द्वितीयः ॥ २ ॥**



१ इति एवमिति लि पु ।
२ ०ग्न्यादिष्विति लि पु ।
३ ०प्रभाव इति लि पु ।
४ निरूपे इति मु० पु० प्रमाद ।
५ परीति लि पु नास्ति ।

नमो मीमांसाद्वयगुरवे भगवते श्रीमते रामानुजाचार्याय॥

अथ

# श्रीभाष्ये तृतीयो ऽध्यायः ॥

अथ तदन्तरप्रतिपत्त्यधिकरणम् १ । **तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

अतिक्रान्ताध्यायद्वयेन निखिलजगदेककारणं निरस्तनिखिलदोषगन्धमऽपरिमितोदारगुणसागर[1] सकलेतरविलक्षणं परं ब्रह्म मुमुक्षुभिरुपास्यतया वेदान्ताः प्रतिपादयन्तीत्ययमर्थः स्मृतिन्यायविरोधपरिहारपरपक्ष[2]प्रतिक्षेपवेदान्तवाक्यपरस्परविरोधपरिहाररूपकार्य्यस्वरूपसंशोधनैस्तद्दुर्धर्षणत्वहेतुभिः सह स्थापितः । अतोऽध्यायद्वयेन ब्रह्मस्वरूपं प्रतिपादितम् ।

उत्तरेणेदानीं तत्प्राप्त्युपायैः सह प्राप्तिप्रकारश्चिन्तयितुमिष्यते । तत्र तृतीयेऽध्याये, उपायभूतोपासनविषया चिन्ता वर्त्तते । उपासनारम्भाभ्यर्हितोपायश्च प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यं प्राप्यतृष्णा[3] चेति तत्सिद्ध्यर्थं[4] जीवस्य लोकान्तरेषु सचरतो जाग्रत स्वपतः सुषुप्तस्य मूर्च्छतश्च दोषाः, परस्य च ब्रह्मणस्तद्रहितता कल्याणगुणाकरता च प्रथमद्वितीययोः पादयोः [5]प्रतिपाद्यते ॥

तत्र देहाद्देहान्तरङ्गच्छन्नयं जीवो देहान्तरारम्भहेतुभिर्भूतसूक्ष्मैः संपरिष्वक्त एव गच्छत्युत नेति चिन्तायाम्—यत्रयत्र जीवो याति तत्र-

---

१ 'अपरिमितोदारगुणसागर इत्येव युक्तः पाठो यदि तु यथाश्रुतपाठसंरक्षणसंरम्भस्तर्हि आचाराद्यर्थप्रत्ययमवलम्ब्य सोऽपि शक्यते कथंचिन्निर्वोढुमिति युक्तं प्रतिपद्यामहे'—इति मुद्रितपुस्तकटिप्पणी, परन्तु 'प्रतिपादयन्ती'त्यानुपदिकक्रियानिरूपितकर्मार्थकद्वितीयान्तमिति सागरमित्येवाऽत्र युक्तम् ।

२ परक्षयेति लि पु॰ प्रमादः ।

३ ०व्यतिरेकवैतृष्ण्यमप्राप्यतृष्णेति लि पु शोधितं परं प्रमाद एव ।

४ ०र्थे—इति लि पु । ५ पादयोरिति लि पु नास्ति ।

तत्र भूतसूक्ष्माणां सुलभत्वादसपरिष्वक्तो यातीति प्राप्तम् । पश्चादपि पूर्वपक्षबीजान्युपन्यस्य निरसिष्यति । तत्र सिद्धान्तमाह–

'तदन्तरप्रतिपत्तौ रंहति सपरिष्वक्त' इति, । सप्तामूर्तिक्लृप्तिरिति[1] 'मूर्ति'-शब्देन देहः प्रस्तुत, स तच्छब्देन परामृश्यते । तदन्तरप्रतिपत्तौ'–देहान्तरगमने भूतसूक्ष्मै' सपरिष्वक्तो जीवो 'रंहति'–गच्छतीत्यर्थः । कुतः । 'प्रश्ननिरूपणाभ्याम्'–प्रश्नप्रतिवचनाभ्याम् । पञ्चाग्निविद्यायामेव प्रश्नप्रतिवचने आम्नायेते । श्वेतकेतुं किलारुणेयं पाञ्चालः प्रवाहणः[2] कर्मिणां गन्तव्यदेशम् पुनरावृत्तिप्रकारम् देवयानपितृयाणपथव्यावर्त्तने[3] अमुष्य लोकस्याप्राप्तार[4] च[5] 'वेत्थे'ति पृष्ठ्वेदमपि पप्रच्छ '[6]वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती''ति । तत इम पश्चिम प्रश्न प्रतिब्रुवंश्च द्युलोकमग्नित्वेन रूपयित्वा[7] "तस्मिन्नेतस्मिन्नग्नौ देवा' श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवती''त्यादिना देवाख्या जीवस्य[8] प्राणा अग्नित्वेन रूपिते[9] द्युलोके श्रद्धाख्य वस्तु प्र[10]क्षिपन्ति तावत्,[11] श्रद्धा सोमराजाख्यामृतमयदेहरूपेण परिणमते । त चामृतमय देह त एव प्राणाः पर्ज्जन्ये ऽग्नित्वेन रूपिते प्रक्षिपन्ति, स च देहस्तत्र[12] प्रक्षिप्तो वर्षं भवति । तच्च वर्षं त एव प्राणाः पृथिव्यामग्नित्वरूपितायां प्रक्षिपन्ति, तच्च तत्र प्रक्षिप्तमन्न भवति । तच्चान्न त एव पुरुषेऽग्नित्वरूपिते

---

१ ०मूर्त्तिक्लृप्तिरिति— इति लि पु नास्ति ।
२ प्रवाह इति लि पु ।
३ ०पितृयानपथपर्यावर्त्तने—इति लि पु शोधितम ।
४ अप्राप्तारमित्यस्य स्थाने लि पु प्राप्तारमिति शोधितम ।
५ ये—इति लि पु ऽत्राधिकम् । ६ त्वमिति लि· पु ऽत्राधिकम ।
७ निरूपयित्वेति लि पु ।
८ देवाख्यजीवस्येति लि· पु ।
९ निरूपिते—इति लि पु ऽत्रापि ।
१० प्रतीति लि पु प्रायः । ११ सा चेति मु पु ।
१२ तच्च देहस्तत्रेति लि पु· शोधितम ।

प्रक्षिपन्ति, तत्र तच्च रेतो भवति । तच्च त एव योषायामग्नित्वरूपि-तायां प्रक्षिपन्ति, तच्च तत्र प्रक्षिप्तं गर्भो भवतीत्युक्त्वाह–"इति तु[1] पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्येव पञ्चम्यामाहुतौ हुतायामापः पुरुषशब्दाभिलप्या[2] भवन्तीत्यर्थः । एवमुक्ते पूर्वास्वप्याहुति-ष्वनुवर्त्तमानानामेवाऽपां सूक्ष्मरूपाणामिदानीं पुरुषाकारत्वं भवतीत्युक्तं भवति । अत एव[3] प्रश्नप्रतिवचनाभ्यां देहहेतुभूतैर्भूतसूक्ष्मैः सह तत्रतत्र यातीति गम्यते ।

नन्वापः पुरुषवचस इत्युक्ते[4]ऽपां पुरुषाकारपरिणामप्रतीतेर्गच्छता जीवेन तासामेव[5] परिष्वङ्गः प्रतीयते, अतः कथं सर्वेषां भूतसूक्ष्माणां परिष्वङ्गः–इत्यत्राह–

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

'तु'–शब्दश्चोद्यं व्यावर्त्तयति । देहारम्भिकाणामपां केवलानां न देहारम्भकत्वसम्भवः[6], देहाद्यारम्भाय हि "तासां त्रिवृतंत्रिवृतमेकैका"मिति त्रिवृत्करणम् । केवलानामपां श्रवणं तु[7] तासां भूयस्त्वात् । देहे च लोहितादिभूयस्त्वेनारम्भकेष्वपां भूयस्त्वं गम्यते ।

## प्राणगतेश्च ॥ ३ ॥

इतश्च भूतसूक्ष्मपरिष्वक्तस्य गमनमिति गम्यते । उत्क्रामति जीवे प्राणानां तदनुगतिः श्रूयते–"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती"ति । स्मर्यते च–

"मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्"दिति ।

न च निराश्रयाणां गतिरुपपद्यत इति तदाश्रयभूतानां भूतसूक्ष्माणामपि गतिरभ्युपगन्तव्या ।

१ तुशब्दो नास्ति लि पु० ।
२ ०भिलभ्या इति लि पु० ।
३ एवेति लि पु ।
४ ०वचनं सह इत्युक्तेरिति लि० पु प्रमादः ।
५ ०मिवेति लि० पु० ।
६ ०रम्भसम्भव इति पु० द्वयेऽपि ।
७ तुशब्दो लि० पु० नास्ति ।

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

"यत्रास्य पुरुषस्य मृतस्याग्नि वागप्येति वात प्राणश्चक्षुरादित्य"मित्यादिना प्राणाना जीवमरणकाले ऽग्न्यादिष्वऽप्ययश्रवणान्न तेषां जीवेन सह गमनमिति गतिश्रुतिरन्यथा नेयेति चे,न्न, भाक्तत्वात् । अग्न्यादिष्वप्ययश्रवणस्य कथ भाक्तत्वम् । "ओषधीर्लोमानि वनस्पतीन्केशा" इत्यनपियद्भि[1]र्लोमादिभिः सहश्रवणात् । अतश्चक्षुराद्यऽप्ययश्रुतिरधिष्ठातृदेवतापक्रमण[2]परा ।

## प्रथमे [3]ऽश्रवणादिति चे,न्न, ता एव ह्युपपत्तेः ॥ ५ ॥

यदुक्तमद्भिः सूक्ष्माभिर्भूतान्तरसंसृष्टाभि. परिष्वक्तो जीवो गच्छतीति प्रश्नप्रतिवचनाभ्यामवगम्यत इति, तन्नोपपद्यते, द्युलोकाग्निविषये प्रथमे होमेऽपा होम्यत्वाश्रवणात् । "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धा जुह्वती"ति श्रद्धैव होम्यत्वेन श्रुता । श्रद्धा नाम जीवस्य मनोवृत्तिविशेषत्वेन प्रसिद्धा । अतो नापस्तत्र होम्या इति चे,न्न, यत,'स्ता' आप एव 'श्रद्धा'-शब्देन तत्राभिधीयन्ते । कुतः । प्रश्नप्रतिवचनोपपत्तेः । "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति प्रश्नस्य प्रतिवचनोपक्रमे हि श्रद्धा द्युलोकाग्नौ होम्यत्वेन श्रुता, तत्र यदि 'श्रद्धा'-शब्देनापो नोच्येरन्, ततो ऽन्यथा प्रश्नोऽन्यथा प्रतिवचन[5]मित्यसङ्गतं स्यात् । "इति तु पञ्चम्यामाहुतावापः पुरुषवचस" इति प्रतिवचननिगमनं च श्रद्धाया अप्त्वमेव सूचयति[4] । 'वेत्थ यथे'ति हि प्रश्नगतः प्रकारः 'इति तु पञ्चम्या'मिती'ति तु'-शब्देन परिहारे[5] निगम्यते । [6]सोमराजवर्षान्नरेतोगर्भरूपेणाऽपा परिणामक्रम[7]मुक्त्वा 'ह्येवमापः-पुरुषवचस' इति निगम्यते । 'श्रद्धा'-शब्दस्य चाप्सु वैदिकप्रयोगो दृश्यते "अपः प्रणयति श्रद्धा वा आप" इति । " श्रद्धा जुहुति तस्या आहुतेः

---

१ अनप्ययद्भिरिति लि· पु शोधितम् । २ ०प्रक्रमणेति लि पु ।

३ अकारच्छेदो नास्ति पु द्वयेपि । ४ साधयतीति मु पु· ।

५ परिहार·-इत्येव सर्वपुस्तकपाठ ।

६ श्रद्धेति मु पु ऽत्राधिकम । ७ ०क्रमेति नास्ति पु· द्वयेपि ।

सोमो राजा सम्भवती"ति सोमाकारेण परिणामश्चाऽपामेवोपपद्यते। अतो भूतान्तरसंसृष्टाभिरद्भिः सम्परिष्वक्तो जीवो रंहती[1]त्युपपन्नम्।

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां[2] प्रतीतेः ॥ ६ ॥

यत्पुनरुक्तमद्भिः सम्परिष्वक्तो जीवो यातीत्ययमर्थ एतस्माद्वाक्यादवगम्यत इति, तन्नोपपद्यते, एतस्मिन् वाक्ये जीवस्याश्रवणात्। अत्र हि श्रद्धादय एवाबऽवस्थाविशेषा होम्यत्वेन श्रुताः,[3] न तु जीवस्तत्परिष्वक्त इति चेत्तन्न, 'इष्टादिकारिणा[3] प्रतीतेः'। अस्मिन्[4]नेव वाक्ये ह्युत्तरत्र ब्रह्मज्ञानविधुरेष्टापूर्तदत्तकारिणो द्युलोकं प्राप्य सोमा राजानो भवन्ति पुण्यकर्मावसाने च पुनरागत्य गर्भं प्राप्नुवन्तीत्युच्यते–"अथ य इमे ग्राम इष्टापूर्ते दत्त[6]मित्युपासते ते धूममभिसम्भवन्ती'त्यारभ्य "पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा त[7]द्देवानामन्नं त[8] देवा भक्षयन्ति तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते.....योयो ह्यन्नमत्ति यो [9]रेतः सिञ्चति तद्भूय एव भवती"ति। अत्रापि द्युलोकाग्नौ श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवती'ति तदेकार्थत्वाच्छ्रद्धावस्थदेहविशिष्टः सोमरूपदेहविशिष्टो भवतीत्युक्त[10]मिति गम्यते। देहस्य जीवविशेषणतैकस्वरूपस्य वाचकः शब्दो विशेष्ये जीव एव पर्यवस्यति। अतः सम्परिष्वक्तो जीवो यातीत्युपपद्यते।

ननु च "तं देवा भक्षयन्ती"ति देवैर्भक्ष्यमाणत्व[11]वचनात् 'सोमो न जीव उच्यते, जीवस्याऽनदनीयत्वात्, तत्राह–

## भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥

१ जोवो रंहन्तीति मु पु। २ इष्टाधिकारिणामिति लि पु।

३ अम्ब्ववस्थाविशेषा होम्यत्वेन श्रुता–इति मु पु, अवस्था. .श्रुता–इति लि पु।

४ तस्मिन्निति लि पु। ५ सोमराजान इति पु० द्वयेपि।

६ ग्राम इष्टापूर्तदत्तमिति लि० पु०। ७ तदिति नास्ति लि० पु।

८ तमिति लि पु नास्ति। ९ यो यो योनौ रेतः सिञ्चतीति मु० पु।

१० उक्तमिति नास्ति लि पु।

११ त्वेति लि० पु० नास्ति।

'वा'-शब्दश्चोद्यं व्यावर्त्तयति । इष्टादिकारिणोऽनात्म[1]वित्त्वात्स देवानां भोगोपकरणत्वेनेहामुत्र च वर्तते । इहेष्टापूर्त्ता[2]दिना तदाराधनं कुर्वन्नुपकरोति, आराधनप्रीतैर्दैवैर्दत्तममुं लोकं प्राप्य तत्र तत्समानभोगस्तदुपकरणं भवति । "यथा पशुरेवं स देवानां"मित्यनात्मविदो[3] देवानामुपकरणत्वं दर्शयति श्रुतिः । स्मृतिरप्यात्मविदां ब्रह्मप्राप्तिमनात्मविदां च देवभोग्यत्वं दर्शयति—"देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपी"ति । अतो जीवस्य देवानां भोगोपकरणत्वाभिप्रायमन्नत्वेन भक्ष्यत्ववचनम्, अतस्तद्भाक्तम्[4] । तेन तृप्तिरेव च[5] देवानां भक्षणमिति श्रूयते "न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं[6] दृष्ट्वा तृप्यन्ती"ति । तस्माद्भूतसूक्ष्मैः सम्परिष्वक्तो जीवो रंहतीति सिद्धम् ॥

तदन्तरप्रतिपत्त्यधिकरणं समाप्तम् ॥ १ ॥

अथ कृतात्ययाधिकरणम् २ । **कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥**

केवलेष्टापूर्त्तदत्तकारिणां धूमादिना पितृयाणेन[7] पथा गमनं कर्मफलावसाने पुनरावर्त्तनं चाम्नातम्[8]—"यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तन्त" इति । तत्र प्रत्यवरोहन् जीवः किमनुशयवान्प्रत्यवरोहत्युत नेति संशय्यते । किं युक्तम् । कर्मणः कृत्स्नस्योपभुक्तत्वान्नानुशयवानिति प्राप्तम् । अनुशयो ह्युपभुक्त[9]शिष्टं कर्म । तच्च कृत्स्नफलोपभोगे[10] सति[11] नावशिष्यते, "यावत्संपातमुषित्वे"ति वचनात् कृत्स्नोपभोगश्च ज्ञायते । संपतन्त्यनेन स्वर्गलोकमिति संपातः[12] कर्मोच्यते । श्रुत्यन्तरं च—

१ ०धिकारिणा नात्मेति लि पु । २ पूर्त्तेति लि पु नास्ति ।
३ अनात्मविरोध इति लि· पु । ४ अतद्भोक्तमिति लि पु ।
५ चेति नास्ति लि· पु । ६ ०न्त्येवामतमिति लि पु ।
७ पितृयानेनेति लि पु । ८ ०म्नायतमिति लि पु ।
९ उपभुक्तेति लि पु ।
१० कृत्स्नफलभोग इति मु पु । ११ याते सति—इति लि पु ।
१२ संपतनेन स्वर्गं लोकमिति पात इति लि पु· ।

"प्राप्यान्त कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ।
तस्मा[1]ल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" ॥–

इत्येव प्राप्तेऽभिधीयते–

अनुशयवान्प्रत्यवरोहतीति । कुतः । 'दृष्टस्मृतिभ्याम्'–श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिस्तावत् "त[2]द्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीया योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्छ्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वे"ति प्रत्यवरूढान्प्रति श्रूयते । अमुष्माल्लोकात्प्रत्यवरूढेषु रमणीयकर्माणो रमणीया ब्राह्मणादियोनिं प्रतिपद्यन्ते,[3] कपूयचरणाः कुत्सितकर्माणः कुत्सिता श्वसूकरचण्डाला[4]दियोनिं प्रतिपद्यन्त इति प्रत्यवरूढानां पुण्यपापकर्मयोगं दर्शयति । स्मृतिरपि "वर्णाश्रमाश्च[5] स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय तच्छेषेण[6] विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तवृत्तसुखमेधसो[7] जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्ती"ति, तथा "ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते तच्चक्रव[8]दुभयोर्लोकयोः सुख एव वर्त्तन्ते[9]" इति । 'यावत्सम्पात'मिति फलदानप्रवृत्तकर्मविशेषविषयम्, 'यत्किञ्चेह करोत्यय'मितीदमपि तद्विषयमेव । अभुक्तफलानामकृतप्रायश्चित्तानां च कर्मणां कर्मान्तरफलानुभवान्नाशोऽप्यनुपपन्नः । अतोऽमुं लोकं गताः सानुशया एव 'यथेतमनेवं च' पुनर्निवर्त्तन्ते, आरोहणप्रकारेण प्रकारान्तरेण च पुनर्निवर्त्तन्त इत्यर्थः । आरोहणं हि धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण, अवरोहणन्तु चन्द्रमसः स्थानादाकाशवायु-

१ यस्मादिति लि० पु० । २ तदिति नास्ति लि० पु० ।
३ कपूयन्ते–इति लि० पु० ऽत्राधिकम् ।
४ श्वशूकरचाण्डालेति मु० पु० । ५ वर्णा आश्रमाश्चेति मु० पु० ।
६ ततः शेषेणेति मु० पु० । ७ ह्येति मु० पु० ऽत्राधिकम ।
८ तच्चक्रमवदिति लि० पु० । ९ वर्तंत इति पु द्वयेपि ।

धूमाभ्रमेघक्रमेण । तत्राकाशावरोहणाद् यथेतम्, वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्चाऽनेवम् ।

## चरणादिति चेन्न, तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

रमणीयचरणा, कपूयचरणा इति न 'चरण'-शब्देन पुण्यपापरूप कर्माभिधीयते, 'चरण'-शब्दस्य लोकवेदयोराचारे प्रसिद्धेः । लौकिकाः खलु चरणमाचारः शील वृत्तमिति पर्यायानभिमन्यन्ते । वेदे च "यान्यऽनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि[1] यान्यस्माक सुचरितानि तानि त्वयोपास्यानि नो इतराणी[1]"ति चरणकर्मणी भेदेनोपदिश्येते[2] । अतश्चरणाच्छीलाद् योनिविशेषप्राप्तिर्नानुशयादिति चे,त्तन्न, चरणश्रुतिः कर्मोपलक्षणार्थेति हि कार्ष्णाजिनिराचार्यो मन्यते, केवलादाचारात्सुखदुःखप्राप्त्यसम्भवात् । सुखदुःखे हि पुण्यपापरूप[3]कर्मफले ।

## आनर्थक्यमिति चेन्न, तदपेक्षत्वात् ॥ १० ॥

एव तर्ह्यफलत्वादाचारस्य[4] स्मृतिविहितस्यानर्थक्यमिति चे,त्तन्न, तदपेक्षत्वात् पुण्यस्य कर्मणः । आचारवत एव पुण्यकर्मस्वऽधिकारः । 'सन्ध्याहीनो ऽशुचिर्नित्यमऽनर्हः सर्वकर्मसु[5]" "आचारहीन न पुनन्ति वेदा" इत्यादिवचनेभ्यः । अतश्चरणश्रुति. कर्मोपलक्षणार्थेति कार्ष्णाजिनेरभिप्राय. ॥

## सुकृतदुष्कृते एवेति तु[6] बादरिः ॥ ११ ॥

पुण्य कर्माचरति पाप कर्माचरतीति कर्मणि चरतेः प्रयोगा,त्पृथङ्निर्देशस्य च प्रत्यक्षश्रुतिसिद्धाचारानुमितश्रुतिसिद्धविषयत्वेन गोबलीवर्दन्यायेनोपपत्तेः, मुख्ये सम्भवति न लक्षणा न्याय्येति सुकृतदुष्कृते एव चरणशब्दाभिधेये इति बादरिराचार्यो मन्यते । अत्र[7] बादरिमतमेव

---

१ नो इतराणीति लि० पु० नास्ति । २ चरणकर्मणि भेदेन व्यपदिश्यते-इति लि० पु० । ३ रूपेति नास्ति मु० पु० ।
४ आचार्यस्येति लि० पु० प्रमाद । ५ सर्वकर्मणीति मु० पु० ।
६ तुशब्दो नास्ति लि० पु० । ७ अत्र चेति मु० पु० ।

स्वमतम् । आचारानुमितश्रुतिविहितसन्ध्यावन्दनादेः कर्मान्तराधिकार-सपादन[1] फलमिति तु स्वीकृतम् । अतः सानुशया एव प्रत्यवरोहन्ति ॥

कृतात्ययाधिकरणं समाप्तम् ॥ २ ॥

अथाऽनिष्टादिकार्यधिकरणम ३ । **अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥**

केवलेष्टापूर्त्तदत्तकारिणश्चन्द्रमसङ्गत्वा सानुशया एव निवर्त्तन्त इत्युक्तम् । इदानीमनिष्टादिकारिणो[3]ऽपि चन्द्रमस गच्छन्ति नेति चिन्त्यते । ये विहित[4] न कुर्वन्ति ये च[5] निषिद्ध कुर्वन्ति त उभये[6]ऽपि पापकर्माणोऽनिष्टादिकारिणः[7] । कि युक्तम् । तेऽपि चन्द्रमस गच्छन्तीति । कुतः । तेषामपि हि तद्गमन श्रुतम्, "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"त्यविशेषेण सर्वेषामेव[8] गतिश्रवणात् ।

एव तर्हि सुकृतदुष्कृतकारिणोरुभयोरप्यविशिष्टैव गतिः स्यात्? नेत्याह-

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥**

'तु'-शब्दः शङ्का व्यावर्त्तयति । 'इतरेषा'मनिष्टादिकारिणा चन्द्रारोहावरोहौ 'सयमने' यमशासने तत्प्रयुक्तयातना 'अनुभूये'व, नान्यथा । कुतः । 'तद्गतिदर्शनात्' । दृश्यते हि पापकर्मणा यमवश्यतया तद्गमनम् "अय लोको नास्ति पर[8] इति मानी[9] पुनःपुनर्वशमापद्यते मे[10]" "वैवस्वतं सयमन[11] जनाना यम राजान"मित्यादिषु ।

**स्मरन्ति च ॥ १४ ॥**

स्मरन्ति च सर्वेषा यमवश्यतां पराशरादयः-"सर्वे चैते वशं यान्ति यमस्य भगवन् किले"त्यादिषु ।

१ कर्मान्तरापादनमिति लि० पु० । २ ०धिकारिणामिति लि० पु० ।
३ ०धिकारिण इति लि० पु० ऽत्रापि । ४ विधितो - इति लि० पु० ।
५ ये चेति लि० पु० नास्ति । ६ निषिद्ध च तदुभये - इति लि० पु० ।
७ एवेति नास्ति लि० पु० । ८ न पर इति मु० पु० ।
९ इतीमानि-इति लि० पु० ।
१० ०मापद्यन्ते यमे-इति लि० पु० । ११ सगमनमिति लि० पु० ।

## अपि सप्त ॥ १५ ॥

पापकर्मणा गन्तव्यत्वेन[1] रौरवादीन् सप्त नरकानपि स्मरन्ति । ननु सप्तसु लोकेषु गच्छता कथं यमसदनप्राप्तिः, तत आह—

## तत्रापि तद्व्यापारादविरोधः ॥ १६ ॥

तेष्वपि सप्तसु यमाज्ञयैव[2] गमनादविरोधः । अतोऽनिष्टादिकारिणामपि यमलोकं प्राप्य स्वकर्मानुरूपं यातनाश्चानुभूय पश्चात्तु[3] चन्द्रारोहावरोहौ स्तः । इति प्राप्त उच्यते—

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

'तु'-शब्दः पक्षव्यावृत्त्यर्थः । अनिष्टादिकारिणामपि चन्द्रप्राप्तिरस्तीत्येतन्नोपपद्यते । कुतः । 'विद्याकर्मणोरिति',[4] विद्याकर्मणोः फलभोगार्थत्वाद् देवयानपितृयाणयोः । एतदुक्तं भवति—अनिष्टादिकारिणा यथा विद्याविधुरत्वाद्देवयानेन पथा गमनं न सम्भवति,[5]तद्वदेवेष्टापूर्तदत्तविधुरत्वात्पितृयाणेन चन्द्रगमनमपि न सम्भवतीति । देवयानपितृयाणयोर्विद्याविषयत्वं पुण्यकर्मविषयत्वं च कथमवगम्यत इति चेत्, प्रकृतत्वात्तयोः । प्रकृता हि देवयाने विद्या, पितृयाणे च कर्म, "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्युक्त्वा "तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽह"रित्यादिना देवयानवचनात् । "अथ य इमे ग्राम इष्टापूर्ते दत्त[6]मित्युपासते इत्युक्त्वा "ते धूममभिसम्भवन्ती"[7]त्यादिना पितृयाणवचनाच्च[8] । "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"त्यपि वचनं य इष्टादिकारिणस्ते सर्वे इति परिणेयम् ।

ननु पापकर्मणा[9] चन्द्रगमनाभावे पञ्चमाहुत्यसम्भवाच्छरीरारम्भ एव नोपपद्यते । "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति हि[10]

---

१ गन्तव्यत्वे—इति लि० पु० ।　२ यमाज्ञयैवेति लि० पु० ।
३ तु शब्दो मु० पु० नास्ति । ४ विद्याकर्मणोरिति—इति नास्ति लि० पु० ।
५ सम्भवतीति नास्ति लि० पु० ।　६ ०पूर्ते दत्तमिति मु० पु० ।
७ ०सविशन्तीति लि० पु० ।　८ ०याणवच्चन्द्रमिति लि० पु० ।
९ कर्मिणामिति लि० पु० ।　१० हिशब्दो मु० पु० नास्ति ।

शरीरारम्भः श्रूयते । सा चाहुतिश्चन्द्रप्राप्तिपूर्विकेति दर्शितम् । अतः शरीरारम्भायैव तेषामपि चन्द्रारोहावरोहाववश्याभ्युपेत्यावित्यत आह—

## न तृतीये[1] तथोपलब्धेः ॥ १८ ॥

न तृतीयस्य स्थानस्य शरीरारम्भाय पञ्चमाहुत्यपेक्षा । कुतः । 'तथोपलब्धेः' । तृतीयस्थानशब्देन केवलपापकर्माण उच्यन्ते । तेषां देहारम्भे पञ्चमाहुत्यनपेक्षत्वमुपलभ्यते "वेत्थ यथाऽसौ लोको न सम्पूर्यत" इत्यस्य प्रश्नस्य प्रतिवचने "अथैतयोः पथोर्न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न स[2]म्पूर्यत" इति तृतीयस्थानस्य[3] द्युलोकारोहावरोहाभावेन द्युलोकासम्पूर्तिवचनादस्य तृतीयस्थानस्य शरीरारम्भाय न पञ्चमाहुत्यपेक्षा । 'पञ्चम्यामाहुता'विति चाऽपां पञ्चमाग्निसम्बन्धस्य पुरुषवचस्त्वहेतुत्वमात्रं प्रतिपादयति नान्यन्निवारयति, अवधारणाश्रवणात् ।

## स्मर्यतेऽपि च लोके ॥ १९ ॥

पुण्यकर्मणामपि केषांचित्पञ्चमाहुत्यनपेक्षया देहारम्भो लोके स्मर्यते द्रौपदीधृष्टद्युम्नप्रभृतीनाम् ।

## दर्शनाच्च ॥ २० ॥

चकारा[4]च्छ्रुतावपि दृश्यते केषांचित्पञ्चमाहुत्यनपेक्षया देहारम्भः "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्ज"मिति । तेषूद्भिज्जस्वेदजयोर्भूतयोः पञ्चमाहुतिमन्तरेणोत्पत्तिर्दृश्यते ।

ननु न स्वेदजानामत्र संकीर्तनमस्ति 'त्रीण्येव बीजानी'ति वचनात्, तत्राह—

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

'संशोकजस्य' स्वेदजस्याप्या'ऽऽण्डजं जीवजमुद्भिज्ज मित्यत्र तृती-

---

१ तृतीयमिति नकाररहित. सूत्रपाठो लि० पु० ।

२ समिति लि० पु० ऽत्र नास्ति । ३ तृतीयस्येति लि० पु० ।

४ चकारादिति नास्ति लि० पु० ।

येनो 'द्विज्ज'-शब्देनावरोध. सङ्ग्रहो विद्यत इत्यर्थः । अतः केवलपापकर्मणा चन्द्रप्राप्तिर्न सम्भवति ॥

अनिष्टादिकार्यधिकरणं समाप्तम् ॥ ३ ॥

---

अथ तत्साभाव्यापत्त्यधिकरणम् ४ ।

**तत्साभाव्या[1]पत्तिरुपपत्तेः ॥ २२ ॥**

इष्टादि[2]कारिणो भूतसूक्ष्म[3]परिष्वक्ताः सानुशयाश्चन्द्रमसो ऽव[4]रोहन्तीत्युक्तम् । अवरोहप्रकारश्च "अथैतमेवाध्वान पुनर्निवर्त्तन्ते यथेत[5]माकाशमाकाशाद्वायु वायु[6]र्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्र॰ भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षती"ति वचनाद् 'यथेत[5]मनेवं चेत्युक्तम् । तत्रास्याकाशादिप्रतिपत्तौ[7] देवमनुष्यादिभाववदाकाशादिभाव उत तत्सादृश्यापत्तिमात्रमिति विशये अद्भावस्यस्य सोमभाववदविशेषादाकाशादिभाव इति प्राप्ते-

तत्साभाव्यापत्तिरेवेत्युच्यते । 'तत्साभाव्यापत्तिः'-तत्सादृश्यापत्तिरित्यर्थः । कुत एतत् । 'उपपत्तेः',[8] सोमभावमनुष्यभावादौ हि सुखदुःखोपभोगाय[9] तद्भावः । अत्र त्वाकाशादौ सुखदुःखोपभोगाभावात् तद्भावानुपपत्तेस्तदापत्तिवचन नत्संसर्गकृततत्सादृश्यापत्त्यभिप्रायम् ॥

तत्साभाव्यापत्त्यधिकरण समाप्तम् ॥ ४ ॥

---

अथ नातिचिराधिकरणम् ५ ।

**नातिचिरेण विशेषात् ॥ २३ ॥**

आकाशप्राप्तिप्रभृति यावद् व्रीह्यादिप्राप्ति[10] किं तत्रतत्र नातिचिरं तिष्ठन्त्युताऽनियम इति विशये नियमहेत्वभावादनियम इति प्राप्त उच्यते-

नातिचिरेणेति । कुतः । 'विशेषात्' । उत्तरत्र-व्रीह्यादिप्राप्तौ

---

१ स्वाभाव्येति सर्वत्र पाठ ।
२ इष्टाधि० इति लि० पु० ।
३ समित्यधिक लि० पु० ।
४ चन्द्रमसमवेति मु० पु० ।
५ यथेतमिति लि० पु० ।
६ आकाशाद्वायुरिति लि० पु० ।
७ ०दिविप्रतिपत्ताविति लि० पु० ।
८ यद्यत प्राप्ते-इति अत्राधिक लि० पु० ।
९ ०दु खभोगायेति मु० पु० ।
१० यावद्व्रह्मादिप्राप्तौ-इति लि० पु० प्रमाद ।

"अतो वै खलु दुर्निष्प्रपतर"मिति विशिष्य कृच्छ्रनिष्क्रमणा*भिधानात् पूर्वत्र ह्या[1]काशादिप्राप्तावचिरं निष्क्रमणं गम्यते। 'दुर्निष्प्रपतर'मिति च्छान्दसस्[2] 'त'-शब्दलोपः, दुर्निष्प्रपततरं-दुःखनिष्क्रमणतरमित्यर्थः ॥

नातिचिराधिकरणं समाप्तम् ॥ ५ ॥

---

अथाऽन्याधिष्ठिताधिकरणम् ६।

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

अवरोहन्तो जीवा व्रीह्यादिभावेन जायन्त इति† श्रूयते-"मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्त"इति†। ते किमन्यैर्भोक्तृभिर्व्रीह्यादिशरीरैरधिष्ठिता व्रीह्यादीनाश्लिष्यन्त्युत ते भोक्तारो व्रीह्यादिशरीरा जायन्त इति विशये, 'जायन्त' इति वचनाद् देवो जायते मनुष्यो जायत इतिवद् व्रीह्यादिशरीरा एवेति[3] प्राप्त उच्यते-

'अन्याधिष्ठित' इति। जीवान्तरेणाधिष्ठिते व्रीह्यादिशरीरे तेषां संश्लेषमात्रमेव। कुतः। 'पूर्ववदभिलापात्,' आकाशादिमेघ[4]पर्यन्तवत् केवलतद्भावाभिलापात्। यत्र हि भोक्तृत्वमभिप्रेतम्, तत्र तत्साधनभूतं कर्माभिलप्यते 'रमणीयचरणा.' 'कपूयचरणा'[5] इति। इह चाकाशादिवन्नाभिलप्यते कर्म। फलप्रदाने प्रवृत्तस्य स्वर्गो[6]पभोग्यफलस्येष्टादेः कर्मणः स्वर्गभोगादेव समाप्तत्वात्, अनारब्धस्य च 'रमणीयचरणाः' 'कपूयचरणा' इति वक्ष्यमाणत्वात्, मध्ये कर्मान्तराभावाच्च। अत आकाशादिभाववचनवद् व्रीह्यादिभावेन जन्मवचनमौपचारिकम्।

## अशुद्धमिति चेन्न, शब्दात् ॥ २५ ॥

नैतदस्ति यदन्याधिष्ठिते व्रीह्यादिशरीरे संश्लेषमात्रम्, भोक्तृत्व-

---

* कृच्छ्रनिष्क्रमणात्वेति पु द्वयेपि, तत्र बहुव्रीह्युत्तर भावप्रत्ययः।

१ पूर्वत्राद्या० इति लि० पु०। २ छान्दसत्वादिति मु० पु।

†† एतच्चिह्नान्तर्गत पाठो लि० पु० त्रुटितः।

३ ०शरीरा एव चेति लि० पु०। ४ मेघस्थाने प्राप्नोति लि० पु०।

५ कपूयचरणा इति नास्ति लि० पु०।

६ फलदाने प्रवृत्तस्वर्गो०-इति लि० पु०।

हेत्वभावाच्च[1] व्रीह्यादिभावेन जन्मेति, भोक्तृत्वहेतुसद्भावात् । स्वर्गोपभोग्यफलमिष्टादि कर्मैवा'ऽशुद्ध' पापमिश्रम्, अग्नीषोमीयादिहिंसायुक्तत्वात् । हिंसा च "न हिंस्यात्सर्वा[2]भूतानी"ति निषिद्धत्वात् पापमेव । न चात्र पदाहवनीया[3]दिवदुत्सर्गापवादभावः[4] सम्भवति, भिन्नविषयत्वात् । अग्नीषोमीयहिंसाविधिर्हिंसायाः क्रतूपकारकत्वं बोधयति, 'न हिंस्या'दिति तु हिंसायाः प्रत्यवायफलत्वम् । अथोच्येत, अग्नीषोमीयादिषु विधितः प्रवृत्तेर्न तद्विषयं निषेधविधिरास्कन्दति, रागप्राप्तविषयत्वात्तस्येति । नैवम्, इहापि रागप्राप्तेरविशिष्टत्वा,"त्स्वर्गकामो यजेते"-त्येवमादौ हि कामिनः कर्त्तव्यतया यागाद्युपदेशात् । यागादेः स्वर्गादिसाधनत्वमवगम्य फलरागत एव यागादौ प्रवर्त्तते । अग्नीषोमीयादिष्वपि तेषां फलसाधनभूतस्य यागादेरुपकारकत्वं शास्त्रादवगम्य रागादेव प्रवर्त्तते । लौकिक्यामपि हिंसाया केनचित्प्रमाणेन हिंसायाः स्वसमीहित[5]साधनत्वमवगम्य रागात्प्रवर्त्तत इति न कश्चन विशेषः । तथा नित्येष्वपि कर्मसु, 'सर्ववर्णानां स्वधर्मानुष्ठाने परमऽपरिमितं सुख'मित्यादिवचनात् फलसाधनत्वमवगम्य रागादेव प्रवृत्तिरिति तेषामप्यशुद्धियुक्तत्वम् । अत इष्टादीनां पापमिश्रत्वेनाशुद्धियुक्तानां स्वर्गेऽनुभाव्यं फलं स्वर्गेऽनुभूय हिंसाऽशस्य फलं व्रीह्यादिस्थावरभावेनानुभूयते । स्थावरभावं च पापफलं स्मरन्ति–'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इति । अतो व्रीह्यादिभावेन भोगायानुशयिनो जायन्त इति चे,त्तन्न । कुतः । 'शब्दात्' । अग्नीषोमीयादेः सञ्ज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावात्[6] । पशोर्हि सञ्ज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति[7] हिरण्यशरीर ऊर्द्धः स्वर्गं लोकमेतीत्यादिकम् । अतिश-

---

१ हेतुभावादिति लि० पु० । २ सर्वा–इति लि० पु० नास्ति ।
३ न चात्राहवनीयेति लि० पु० । ४ पवाद –इति लि० पु० ।
५ हिंसाया स्वसमीहितेति लि० पु० । ६ हिंसात्वाभावशब्दादिति मु० पु० ।
७ यज्ञे हिंसित पशुर्दिव्यदेहो भूत्वा स्वर्गलोकं यातीति शब्दार्थं कुर्वन्ति–एतावदत्राधिकं मु० पु० ।

यिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा, प्रत्युत रक्षणमेव । तथा च मन्त्रवर्णः—

"न वा उ एतन् म्रियसे न रिष्यसि
देवाँ इदेषि[1] पथिभिः सुगेभिः ।
यत्र यन्ति[2] सुकृतो नापि दुष्कृत-
स्तत्र त्वा देवः सविता दधात्वि"ति ।

चिकित्सकं च तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति पूजयन्ति च तज्ज्ञाः ।

## रेतःसिग्योगोऽथ ॥ २६ ॥

इतश्चौपचारिकं व्रीह्यादिजन्मवचनम्, व्रीह्यादिभाववचनान्तरं "योयो ह्यन्नमत्ति यो[3] रेतः सिञ्चति तद्भूय एव भवती[4]"ति रेतःसिग्भावोऽनुशयिना श्रूयमाणो यथा तद्भाव[5]मात्रं प्रतिपादयति, तद्वद्व्रीह्यादिभावोऽपीत्यर्थः ।

## योनेः शरीरम् ॥ २७ ॥

योनिप्राप्तेः पश्चादेवानुशयिना शरीरप्राप्तिः । तत्रैव सुखदुःखोपभोगसद्भावात् । ततः प्रागाकाशादिप्राप्तिप्रभृति तद्योगमात्रमेवेत्यर्थः ॥

अन्याधिष्ठिताधिकरणं समाप्तम् ॥ ६ ॥

इति श्रीमद्भगवद्रामानुजाचार्यचरणकृतौ शारीरकमीमांसाभाष्ये तृतीयाऽध्यायस्य प्रथमः पादः ॥ १ ॥



१ इदेषि—इति लि० पु० नास्ति ।
२ यत्प्रयन्ति वेषयन्तीति लि० पु० ।
३ अत्र यो—इति सकृदेव मु० पु० ।
४ यद्भूय एतीति लि० पु० ।
५ तद्योगमात्रमिति लि० पु० ।

# अथ तृतीयाऽध्याये द्वितीयः पादः ॥

अथ सन्ध्याऽधिकरणम् १। सन्ध्ये सृष्टिराह हि ॥ १ ॥

एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं स्थापितम्[1]। इदानीमस्य स्वप्नावस्था परीक्ष्यते।

स्वप्नमधिकृत्य श्रूयते—"न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र वेशन्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशन्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्ते"ति। तत्र संशयः—किमियं रथादिसृष्टिर्जीवेनैव क्रियते आहोस्विदीश्वरेणेति। किं युक्तम्। सन्ध्ये सृष्टिर्जीवेनेति। कुतः। सन्ध्यं स्वप्न[2]स्थानमुच्यते "सन्ध्यं तृतीयं स्वप्नस्थान"मिति वचनात्। सा तु जीवेनैव क्रियते, 'सृजते स हि कर्त्ते'त्याह हि। स्वप्नदृग्जीव एव तत्र प्रतीयते।

## निर्म्मातारं चैके पुत्रादयश्च ॥ २ ॥

किं चैनं जीवं स्वप्ने कामानां निर्मातारमेके शाखिनोऽधीयते—"य एषु सुप्तेषु[3] जागर्त्ति कामंकामं[4] पुरुषो निर्म्मिमाण" इति। पुत्रादयश्च तत्र काम्यमानतया 'काम'-शब्देन निर्दिश्यन्ते, नेच्छामात्रम्। पूर्वत्र हि "सर्वान् कामांश्छन्दतः प्रार्थयस्व" "शतायुषः पुत्रपौत्रान् वृणीष्वे"ति पुत्रादय एव कामाः प्रकृताः। अतो रथादीञ्जीवः स्वप्ने सृजति। जीवस्य च सत्यसङ्कल्पत्वं प्रजापतिवाक्ये श्रुतम्। अत उपकरणाद्यभावेऽपि सृष्टिरुपपद्यत इति प्राप्तेऽभिधीयते—

---

१ स्थापितमिति लि० पु०। २ स्वप्न स्वप्नेति लि० पु०।
३ स्वप्नेष्विति लि० पु०। ४ काममिति सकृदेव लि० पु०।

## मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

'तु'-शब्दः पक्षं व्यावर्त्तयति । स्वप्ने रथपुष्करिण्याद्यर्थजातं 'मायामात्रम्'-परमपुरुषसृष्टमित्यर्थः । 'माया'-शब्दो ह्याश्चर्यवाची "जनकस्य कुले जाता देवमायेव निर्मिते"त्यादिषु तथा दर्शनात् । अत्रापि 'न तत्र रथा न रथयोगा न पन्थानः," सकलेतरपुरुषानुभाव्यतया न भवन्तीत्यर्थः । "अथ रथान् रथयोगान् पथः सृजते" स्वप्नदृगनुभाव्यतया तत्कालमात्रावसानान् 'सृजत' इत्याश्चर्यरूपत्वमेवाह । एवंविधाश्चर्यरूपा सृष्टिः सत्यसङ्कल्पस्य परमपुरुषस्यैवो[1]पपद्यते, न जीवस्य । तस्य सत्यसङ्कल्पत्वादियुक्तस्यापि संसारदशायां कार्त्स्न्येनाऽनभिव्यक्तस्वरूपत्वान्न जीवस्य तथाविधाश्चर्यसृष्टिरुपपद्यते । "कामंकामं पुरुषो निर्मिमाण" इति च परमपुरुषमेव निर्मातारमाह "य एषु सुप्तेषु जागर्ति"

"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन"॥-

इत्युपक्रमोपसंहारयोः परमपुरुषासाधारणस्वभावप्रतीतेः । "अथ वेशन्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्ते"ति च तया श्रुत्यैकार्थ्यात् परमपुरुषमेव कर्त्तारमाह ।

स्वाभाविकं चेज्जीवस्यापहतपाप्मत्वादिकम्, कुतस्तन्नाभिव्यज्यत इत्यत आह-

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ४ ॥

'तु'-शब्दः शङ्काव्यावृत्त्यर्थः । पराभिध्यानात्परमपुरुषसङ्कल्पादऽस्य जीवस्य स्वाभाविकं रूपन्तिरोहितम् । अनादिकर्मपरम्परया कृतापराधस्य ह्यस्य स्वाभाविकं[2] कल्याणरूपं परमपुरुषस्तिरोधापयति । ततस्तत्सङ्कल्पादेवास्य[3] जीवस्य बन्धमोक्षौ श्रुतौ-"यदा[4] ह्येवैष एतस्मि-

१ ०स्यैवो-इति लि० पु० । २ ह्यस्वाभाविकमिति लि० पु० प्रमादः ।
३ ०देव ह्यस्येति मु० पु० । ४ यथेति लि० पु० ।

इह केचित् ।

साध्यत्वात्कर्तुराख्यातैर्व्यापाराः सिद्धसाधनाः ।
प्राधान्येनाभिधीयन्ते फलेनापि प्रवर्त्तिताः ॥

क्रियाप्रधानमेकार्थं वाक्यमिति । क्रियैव हि भाव्यते स्वभावसिद्धं द्रव्यं गुणमिति वदन्तः फलस्याऽसमन्वयं वाक्ये मन्यन्ते । तथा च फलाऽभावादधिकाराऽभावः । न ह्यफलेषु कर्म्मसु कश्चिन्नियोज्यः स्वामी वा । कथं पुनरस-

स्वर्गकामादेरधिकारोऽवगम्यत इति कथं पुनस्तस्याभावः शङ्कितो येनाऽसौ विचारणीयः स्यात्, तत्राह—इह केचित् ।

साध्यत्वात् कर्तुराख्यातैर्व्यापाराः सिद्धसाधनाः ।
प्राधान्येनाऽभिधीयन्ते फलेनापि प्रवर्त्तिताः ॥

व्याचष्टे—सर्वमेव हि क्रियाप्रधानमेकार्थमेकप्रयोजनं वाक्यं शब्दप्रवृत्त्यनुसारात् । वस्तुतोऽपि क्रियैव हि स्वभावतः साध्यरूपा भाव्यते, स्वभावसिद्धं तु द्रव्यं भूतं भव्यायेति न्यायात् तां प्रति गुणभूतं स्वर्गादीति वदन्तः फलस्याऽसमन्वयं मन्यन्ते । फलत्वेन तु सम्बन्धे स्वर्गादेस्तत्प्राधान्यात् क्रियाया न प्राधान्यम्, उभयप्राधान्ये च एकार्थत्वं लोकाऽवगतमपहीयेतेति भावः । ननु मा भूत्फलं किं न श्छिन्न?मित्यत आह—तथा च फलाभावात् अधिकाराभावः । कस्मात्? न ह्यफलेषु कर्मसु कश्चिन्नियोज्यः स्वामी वा । तदेव च तस्य स्वं भवति यद्यस्योपकारे वर्त्तते । न चाऽफलं तथेति कथं स्वं भवति स्वामिनः? स्वामी चाऽधिकारीत्युच्यते । न चाऽफलं प्रयोगमपि प्रेक्षावान् प्रतिपद्यते न नियोज्योऽपीत्यर्थः ।

ननु भावनाप्रधानं वाक्यं, भावनायाश्च भाव्याकाङ्क्षायां भाव्यत्वेन फलं समन्वेष्यते इति चोदयति—कथं पुनरसमन्वयः फलस्य?

**मन्वयः फलस्य ? कर्म्मणः साध्यत्वप्रतीतेर्द्वयोः साध्ययोरसमवायात् । तथा हि । यदि यागादय एव क्रियास्त एव पूर्वाऽपरीभूताः प्रधानात्मना गम्यन्ते । अथापि तदतिरेकिणी क्रिया सा च सकर्म्मिका भाव्यप्रधाना । तथापि तएव । कुतः ? पौर्वापर्य्यनियमात् । प्रत्ययस्य प्रकृत्यर्थाऽभिसम्बन्धिस्वार्थाभिधायित्वात्साध्यत्वेन प्रतीतेः । अन्यथा द्रव्यगुणशब्दाऽविशेषात् अनभ्युपगमाच्च "येषामुत्पत्ता"विति । साक्षात्करणाभिसम्बन्धाच्च काष्ठैः**

समाधत्ते—कर्मणो धात्वर्थस्य साध्यत्वप्रतीते. । अथ फलकर्मणो कस्मान्न साध्ये कर्मणी ? इत्यत आह—उभयो. साध्ययोरसमवायात् । एकस्माद्वाक्याद्भावनासदसद्भावयोरपि कर्मैव साध्य युक्त, न पुन. फलमित्यत आह—तथा हि । यदि यागादय एव क्रिया तथापि तएव पूर्वाऽपरीभूता. प्रधानात्मना गम्यन्ते न तदा भाव्यान्तराऽपेक्षाऽस्ति । अथापि तदतिरेकिणी क्रिया सदा सकर्मिका, तस्या भाव्याऽपेक्षायां सत्यामपि भाव्यप्राधान्यात्तथापि तएव यागादयो न तु फलम् । ननूभयभाव्यसभवे को विशेष ? इत्याशयवान् पृच्छति—कुत: ? पौर्वापर्यनियमात् । प्रत्ययस्य प्रकृत्यर्थाऽभिसम्बन्धिस्वार्थाऽभिधायित्वात् धात्वर्थस्य च साध्यत्वेन प्रतीते: । सोऽय फलाद्विशेष इत्यर्थ । अन्यथा यदि धात्वर्थो न साध्य: स्यात्ततो द्रव्यगुणशब्दादविशेषात् । सिद्धार्थत्वेन हि द्रव्यगुणशब्दा आख्यातात्साध्याऽभिधायिनो भिद्यन्ते । आख्याताना महर्षिणा येषामुत्पत्तौ स्वे प्रयोगे रूप नोपलभ्यते तान्याख्यातानीत्यनेन सूत्रेण । न च तद्भावनाऽभिप्राय नामपदार्थस्य धात्वर्थसबन्धे दृष्टार्थतया ऽपेक्षितसबन्धप्रतिपादनार्थत्वात् । अतश्च साध्यत्व धात्वर्थस्य साक्षात्करणाऽभिसम्बन्धात् काष्ठै: पचतीति । न खल्वसाध्यस्य साधनसम्बन्ध

**पचतीति । ननु कर्म्मान्तराऽभिसम्बन्धान्नैवं स्यात् ? न । कर्म्मण्यपि कारकस्मृतेः कारकत्वेनैव क्रिया ऽन्वयात् । शब्देन भूततयोपादानात् । ईप्सिततमत्वं तु प्रमाणान्तरविषयः । तथा च दृष्टफलेष्वस्तु फलवत्ता, यागादिषु तु न फलं स्वर्गादि, स्तथा ऽसमन्वयान्मानान्तरस्य चाऽभावात् । एवं च तानि द्वैधमित्युक्तम् । अन्यथैकध्यमेव स्यात् ।**

उपपद्यते । न चाऽऽख्यातवाच्यायां भावनायां करणत्वं काष्ठानां संभवति, तस्यास्त्वन्मते समानपदोपात्तपाककरणाऽविरोधात् । न च पाकाऽऽश्रितया सबन्ध' । साक्षात्पाकसबन्धप्रतीतेः । न खलु मृदा घटः काष्ठैः पचतीति समः सबन्धाऽवगमः । तस्मात्काष्ठैरिति साक्षात्पाकादिसंबन्धात् ते एव स्वरूपेण साध्या इति साम्प्रतम् ।

ननु यत्र तर्हि काष्ठैरोदन पचतीति कर्मान्तर प्रतीयते तत्र न धात्वर्थस्य साध्यता स्यात्, न ह्येकस्मिन्वाक्ये साध्यद्वयमुपपद्यते, इति चोदयति—ननु कर्मान्तराऽभिसंबन्धान्नैव स्यात् । समाधत्ते—न, कर्मण्यपि कारकत्वस्मृतेः । कारकत्वेनैव क्रियाऽन्वयात् । अयमभिसंधिः । उभयमस्त्योदनादौ कारकत्वमीप्सिततमत्वं च । तत्र कारकत्वेनाऽन्वये न क्रियासाध्यत्वहानिरिति । न च शब्दादोदनादिः पाक इव पच्यते इत्यत्र पूर्वाऽपरीभूतो ऽवगम्यते, किं तु सिद्धतयेत्याह—स्वशब्देन भूततयोपादानात् । ननु यदि न शाब्दमीप्सितनमत्वं कुतस्तत्प्रतीति ? रित्यत आह—ईप्सिततमत्वं तु प्रमाणान्तरविषयः । तथा च दृष्टफलेषु ओदनपाकादिष्वस्तु फलवत्ता, यागादिषु पुनरशब्दार्थः फल स्वर्गादिः कुत ? तथा च फलत्वेनाऽसबन्धान्न चोदनादि तत्र भवितुमर्हति । मानान्तरस्य चाऽसम्भवात् । एवं च केषा चित्कर्मणा फलानां साध्यत्वेन प्रधानत्वं ज्योतिष्टोमप्रयाजादीना, केषा चिन्न मानान्तरसिद्धफलानामवघातादीना फल प्रति

एवं तावद् द्रव्याणां कर्म्मसम्बन्धे गुणत्वेनाऽभिसम्बन्धो न फलत्वेन इति युक्तम्। वस्तुतश्च न सम्बन्धत्वेन, पुरुषप्रयत्नस्य यागादिविषयत्वात्स्वर्गाद्यसम्बन्धाद्यागादेश्च व्यापारान्तराऽदर्शनात्करणत्वाऽनुपपत्तेः। भूतेरव्यापारत्वात्। शक्ये[1] च पुरुषनियोगात्स्वर्गं कुर्यादित्यनुप-

गुणत्वेन तानि द्वैध गुणप्रधानभूतानीत्युक्त महर्षिणा। अन्यथा तु सर्वेषा फलवत्त्वे ऽभ्युपगम्यमाने चैकरूपमेव स्यात्सर्वेषां, फलं प्रति गुणत्वादवघातादिवदिति।

प्रमेय परिशोध्य सूत्रमत्र योजयति—एव तावत् द्रव्याणा कर्मसयोगे गुणत्वेनाऽभिसबन्धो न फलत्वेन स्वर्गादीनां शब्दत इति युक्तम्। न केवलं शब्दतो वस्तुतश्च न सबन्धः फलत्वेन। कुत.? पुरुषप्रयत्नस्य भावनाया यागादिविषयत्वाद्धेतोः स्वर्गाद्यसंबन्धात्। न जातु पुरुष स्वर्गे व्याप्रियमाण उपलभ्यते, अपि तु यागे। ततश्च याग एवाऽस्य साध्यो न स्वर्ग'। अथ पुरुषप्रयत्नसाध्यो ऽपि याग' फलं प्रति करण भविष्यति, तत' सबन्ध उपपत्स्यतइत्यत आह—यागादेश्च व्यापारान्तराऽदर्शनात् करणत्वाऽनुपपत्ते'। करणत्व हि क्रियायोगेन व्याप्त, स चाऽदर्शनाद् यागादेर्निवृत्त करणत्वमपि निवर्तयतीत्यर्थ'। ननु भूतिरेव भाव्यानां यागादीना व्यापार', ततश्च कारकत्व करणत्व चेत्यत आह—भूतेरव्यापारत्वात्। व्यापारो हि व्यापारवत्समवायिकारणक, सिद्धं च समवायिकारणम्, असिद्धश्चेद्भाव्यो नाऽस्मिन् भूतिः समवेति। न खलु गगनकुसुमादयो व्यापारवन्त। सिद्धो ऽपि भविता न भवितुमर्हति। न जातु वियद्भवति। तस्मान्न भूतिर्व्यापार इति। अपि च भाव्यत्वे स्वर्गस्य तत्र पुरुषो नियोज्य। न च तेनाऽसौ शक्य इत्याह—शक्ये च पुरुषनियोगात् स्वर्गं कुर्यादित्यनुपपत्तेः। अपि च इच्छातन्त्रत्वे स्वर्गा-

१ अप्राप्ये–मू॰ पु॰।

पत्तेः। अवश्यकर्त्तव्यताप्रसङ्गाच्च। फलस्य चाऽविधेयत्वोपगमात्। यागादेश्च विधेयत्वाश्रयणात्। प्रवृत्तिविषये हि विधिर्न साक्षाद्यागे फले वा। प्रवृत्तिश्च भावना। यद्विषयायाश्च प्रवृत्तेर्हेतुः शब्दः स विधिरित्युच्यते। तत्राख्यातोपादाना भावना नास्त्येव, या विधीयेत। सत्यामपि भिन्नभावनायां न भावनाकर्मणोर्यागफलयोरसमवायः, न विधिसामर्थ्यात् अन्यदपि फलं, तस्याप्येवं समवायात्। वैरूप्यात्साधनभावस्य दुरवबोधत्वात्।

दीनाम् इच्छायाश्चाऽवश्यम्भावनियमाऽभावान्नाऽवश्यकर्त्तव्यताप्रसक्तिः। विधितन्त्रत्वे त्विच्छाया अतन्त्रत्वात्तस्य च नित्यविधायकत्वात् अवश्यकर्त्तव्यता स्यादित्याह—अवश्यकर्त्तव्यताप्रसङ्गाच्च। फलस्य चाऽविधेयत्वोपगमात्। तस्य लिप्सा ऽर्थलक्षणेति चेदैवासौ ममैतत्कर्त्तव्यमिति। यागादेश्च विधेयत्वाऽश्रवणात्। यथाह उपाय तु न वेद। अतस्तदाकाङ्क्षात इदमुपदिश्यते यागेनेति। युक्तं चैतदित्याह—प्रवृत्तिविषयो हि विधिः प्रवर्त्तनारूपत्वान्न साक्षाद् यागे फले वा। प्रवृत्तिश्च भावना। यद्विषयायाश्च प्रवृत्तेर्हेतुः शब्दः अन्यनिमित्तत्वादिच्छानिमित्तत्वात्फले प्रवृत्तेरिति। अपि च विषयरूपा प्रवृत्तिर्विधातव्या, न चाऽसावुपायविषयाया अन्या फलविषया ऽस्तीत्याह—द्वितीया च भावना नास्त्येव, या फलविषया विधीयेत। भवतु वा, तथापि प्रकृतं न सिध्यतीत्यत आह—सत्यामपि द्वितीयायां भावनाया न भावनाकर्मणोर्यागफलयोरसमवायः। अथ मा भूद् भिन्नभावनाकर्मणो भूतेन फलेन संबन्धो यागश्च विधिसामर्थ्यात्तु विश्वजिदादिवत्कल्पितेन फलान्तरेण संभन्त्स्यतइत्यत आह—न विधिसामर्थ्यादन्यदपि फलम्। कुतः? तस्याप्येवं श्रुतफलपदसमवायात्। कुतः? वैरूप्याद्धेतोः साधनभावस्य दुरवबोधत्वात्। न जातु सकृदेव-

**नाऽर्थापत्तितः । चोदनालक्षणत्वहानेः । तस्याः साध्यत्वपर्यवसानात् । अफलस्य कर्म्मणो लोके साध्यत्वाऽदृष्टेः । साधनत्वस्य च साध्यत्वपुरःसरत्वादर्थात्तदाक्षेपायोगात् । साध्यत्वस्य पुरोभाविनः साधनत्वाऽऽक्षेपा-**
श्रुतो याग साध्य साधन चेत्युपपद्यते, विरोधात् । तस्मात्साधनभावो दुरबोधः साध्यत्वेन श्रुतस्य यागस्येति ।

स्यादेतत् । चोदनातः साध्यत्वेन प्रतीतस्य यागादेरर्थापत्तितः फलं साधनत्व गम्यते, मा भूद्वैरूप्यम्, इत्यत आह—'नार्थापत्तितः । कुतः ? चोदनालक्षणत्वहानेः । फलसाधनता चेदर्थापत्तिगम्या चोदनालक्षणत्व न स्यात् । ततश्च चोदनैवेति प्रतिज्ञाव्याघातः । न चाऽर्थापत्तेश्चोदनामूलतया तद्विषयश्चोदनालक्षण इति साम्प्रतम् । चोदनाया यागादिसाध्यमात्रपर्यवसितायाः फलसाधनतामन्तरेणोपपत्तेरर्थापत्तिमूलत्वाऽभावादित्याह—साध्यत्वपर्यवसानात् । अथाऽफलस्य साध्यत्वं चोदनाप्रतीतमनुपपन्नमिति चोदनैव साध्यत्वप्रतिपादिका पर्यवस्यन्ती फलकल्पनाबीजमिति तत्राह—अफलस्य कर्मणो लोकसाध्यत्वेनाऽदृष्टेः । यत्किल धर्मशास्त्रकारो निषेधति 'न कुर्वीत वृथाचेष्टा'मिति । ननु यथा परेषां साधनत्वेन शब्दतः प्रतिपन्ना यागादयः साध्यतामाक्षिपन्त्यात्मनः तथाऽस्मन्मतेऽपि साध्यत्वेन प्रतीताः साधनतामात्मन आक्षेप्स्यन्तीत्यत आह—साधनत्वस्य यागादे. साध्यत्वपुर.सरत्वात् । अकृतस्य तत्त्वाऽनुपपत्तेः ।

अथाऽयमाक्षेपयोगः शाब्दसाधनत्ववादिनो मते । शाब्दसाध्यत्ववादिना तु मते साध्यत्वस्य पुरोभाविनः साधनताक्षेपाऽसामर्थ्यात् । सुगमम् । यदि मन्येत साध्यत्वमपि सिद्धिं प्रति कारकत्वमन्तरेण नोपपद्यतइति साधनत्वमाक्षेप्स्यतीति, तत्राह—आक्षे-

ऽसामर्थ्यात् । आक्षेपेपि सिद्ध्यर्थं कर्तृरूपस्य कारणत्वाऽभावात् । कथं तर्हीदानीं विधिः? किमत्र कथं? प्रवर्त्तनामात्रं विधिर्न पुरुषार्थानर्थौ स्पृशति । कुतः? प्रतीतेरव्यभिचाराच्च । तथा च लिङादिभ्यः प्रेरणाऽवगमः । यद्यपि चेष्टसाधनता प्रवृत्तिहेतुः, शब्दस्त्वनामृष्टतद्रूपः प्रवृत्तिहेतुमात्रमभिनिविशते । तदाकाराऽवबोधात्प्रैषादिषु च तदभावात् । प्रवर्त्तनामात्रस्य चाऽव्यभिचारात् । अने-

पेपि ºसिद्ध्यर्थे कर्तृरूपस्य सेद्धु. कारणत्वाऽभावात् । उपपादितमेतत् यथा न साध्यं कारकमिति ।

अभ्युपेत्योच्यते, भवतु कारकम्, अत एव चाऽऽक्षिपतु तस्य तथापि सिद्धिं प्रति कर्तृत्वात् तदेवाक्षिपेन्न करणत्वमित्यर्थः । यदि यागादीनां साध्यत्वमेव न चाऽभिमतसाधनत्वं कथं तर्हीदानीं विधिः? पूर्वपक्षी ब्रूते—किमत्र कथम्? प्रवर्त्तनामात्रं विधिः, नाऽभिमतसाधनत्वं, ततश्च न पुरुषार्थाऽनर्थौ संस्पृशति । कुतः? उत्तरम्—प्रतीतेः । नन्वभिमतसाधनतापि प्रतीयतइत्यत आह— अव्यभिचाराच्च प्रतीतेरिति । विवृणोति—तथा च लिङादिभ्यः प्रेरणाऽवगमः । नन्वस्तु, किं त्वसौ समीहितसाधतानिबन्धन इत्यत आह—यद्यपि चेष्टसाधनत्वं प्रवृत्तिहेतुः, शब्दस्त्वनामृष्टतद्रूपः प्रवृत्तिहेतुमात्रमभिनिविशते । कुतः? तदाकाराऽवबोधात् । अव्यभिचारादिति व्यतिरेकमुखेन विवृणोति—प्रैषादिषु च तदभावात् । अभिमतसाधनत्वाऽभावात् । प्रवर्तनामात्रस्य चाऽव्यभिचारात् । यद्युच्येत क्व चित्प्रेषणा क्व चिदध्येषणा क्व चिदभिमतफलसाधनता लिङर्थो भविष्यति, तत्र तत्र प्रतीतेरित्यत आह—अनेकार्थत्वदोषात् । न खलु प्रवर्त्तनामात्रत्वे सम्भवत्यनेकार्थता युक्ता । अनेकशक्तिगौरवादित्यर्थः । ननु

कार्थत्वदोषात् । न च तद्रूपबोधादेव तद्बोधः । मोहादेरपि संभवात् ।

नन्वेवमपि प्रवर्त्तनायाः प्रवर्त्त्यविशेषविषयत्वात्तस्यैव पूर्वमपेक्षणात् स्वर्गकामादिपदानां च तत्समर्प्पणसामर्थ्यात् स एव तैः समर्प्यते न साधनविशेषः । किमतः? कामिनो ऽधिकारः प्रतिपन्नो[1] भवतीति । एवं नाम, न तु प्रवृत्तिसिद्धिरसति फले । प्रवृत्त्यर्थश्चाऽधिकारः । नन्वानर्थक्यमुपदेशस्यैवं स्यात् । सत्यर्थे नाऽऽनर्थक्यमसति

नाऽभिमतसाधनता व्यभिचरति । अभिहितसाधनता सर्वत्र प्रैषादिषु साक्षात्पारम्पर्येण वा विद्यतइत्यत आह—न च तत्राऽवबोधादेव अभिमतसाधनता बोधहेतुरित्यर्थः ।

अत्रान्तरे मीमांसकैकदेशी प्राह—नन्वेवमपि प्रवर्तनायाः प्रवर्त्यविशेषविषयत्वात्तस्यैव पूर्वमपेक्षणात् करणाद्यपेक्षया पूर्वत्वम् । न च स्वर्गकामादिपदमपेक्षा पूरयितु न क्षममित्याह—स्वर्गकामादिपदानां च तत्समर्पणसामर्थ्यात् । स एव प्रवर्त्य एव तै समर्थ्यते न साधनाकर्मविशेषः । कर्मणः पश्चात्तु कर्तृतया सम्भन्त्स्यतइति भावः ।

पूर्वपक्षी वक्ष्यमाणाऽभिसन्धिः पृच्छति—किमतः? एकदेशिन उत्तरम्—कामिनो ऽधिकारः प्रतिपन्नो भवति । ततश्च यजेत स्वर्गकाम इत्युपपन्ना सगतिरित्यर्थः । पूर्वपक्षी दूषयति—न ह्यफले ऽधिकार इत्युक्तम्, अभ्युपगम्याऽप्युच्यते—एव नाम, न तु प्रवृत्तिसिद्धिरसति फले । ननु मा भूत्प्रवृत्ति, अधिकारस्तु सिध्यतीत्यत आह—प्रवृत्त्यर्थश्चाऽधिकार । प्रवृत्तिश्चेन्नास्ति व्यर्थो ऽधिकार इति । नन्वानर्थक्यमुपदेशस्यैवं स्यात् । उत्तरम्—सत्यर्थे नाऽऽनर्थक्यम् । असति तु किमन्यदानर्थक्य स्यात् । अथवैवमप्यानर्थक्य नास्तीत्याह—आत्मविज्ञानाधिकारसिद्धिप्रयोजनत्वाद्वा नाऽऽनर्थक्यम् ।

१ प्रतीत -मू पु पा ।

**तु किमन्यत् ? आत्मविज्ञानाधिकारसिद्धिप्रयोजनत्वाद्वा नाऽऽनर्थक्यम् । एष खलु पुरुषः स्वभावतो रागाद्याविष्टो दृष्टफलैरुपायैर्विषयोपार्जने प्रवर्त्तमानस्तदाक्षिप्तमनास्तत्पक्षपाती न विगलितविषयप्रपञ्चमात्मतत्त्वमुपदिष्टं प्रत्येतुं परिभावयितुं वा अलम् । कर्म्मोपदेशस्त्वनुशिष्टं कृतकामनिबर्हणः स्वाभाविक्याः प्रवृत्तेर्निवृत्तः शास्त्रीयायां कर्म्मप्रवृत्तौ व्यवस्थितो दान्तः कामैरबाधितमनाः शक्नोति तादृशमप्यात्मतत्त्वमुपदिष्टं प्रत्येतुं परिभावयितुं**

कथ पुनरेतत्प्रयोजना: सर्वे विधय? इत्यत आह—एष खलु पुरुषः क्षेत्रज्ञः स्वभावतो रागाद्याविष्टः । यथाह भगवानक्षपादः 'वीतरागजन्माऽदर्शना'दिति । अतो दृष्टफलैरुपायैः सेवादिभि. यद्विषयोपार्जनस्तस्मिंस्तु प्रवर्त्तमानस्तदाक्षिप्तमनास्तत्पक्षपाती सदैव तत्प्रयुक्तः । अतो न विगलितविषयप्रपञ्चमात्मतत्त्वम् उपदिष्टमपि प्रत्येतुं निश्चेतु परिभावयितु समनस्कानीन्द्रियाणि प्रत्याहृत्यात्मन्येव बुद्धिधारा[1] विधातुमलं, किमङ्ग पुनः साक्षात्कर्तुम् ।

भवत्वेवं, तथापि किं कर्मोपदेशैरित्यत आह—कर्मोपदेशैस्त्वनुशिष्टस्त्रैवर्णिको ऽष्टवर्षादिर्ब्राह्ममुहूर्त्तोपक्रमायां प्रदोषपर्यवसानाया प्रतिवासर कर्मपद्धतौ स्थितोपि स्तेयद्यूतस्त्र्यभिसरणमृगयाद्याहृतहृदय आत्मजयोनिजपरिजनचिन्तायास्तदनुशासनात् कृतकामनिबर्हणः ततः स्वाभाविक्याः प्रवृत्तेर्निवृत्त. परिजनचिन्तायामिव शास्त्रीयायाम् अहरहर्ब्राह्ममुहूर्त्तोपक्रमप्रदोषपर्यवसानायां कर्मपद्धतौ व्यवस्थितो दान्तः कामैरबाधितमना शक्नोति तादृशमपि विगलितविषयप्रपञ्चमपि आत्मतत्त्व प्रत्येतु परिभावयितु च । ननु साध्या क्रिया यथा स्वर्गादिना साध्येन न सम्बध्यते तथा ऽऽत्मज्ञानाऽधिकारसिद्ध्या ऽपि, कः खल्वनयोर्विशेष? इत्यत आह—एव दृष्टेनैव

[1] विरोधि मू॰ पु पा॰ ।

**च । दृष्टेनैव कर्म्मविधय आत्मज्ञानाधिकारप्रयोजनाः । एवं च शास्त्रत्वं नियोज्याऽनुयोजनाद्धितोपदेशाद्वा । कामे तु साध्ये रागाद्यभिव्याप्तायां स्वाभाविक्यां प्रवृत्तावुपायदर्शनेन स्वहस्तदानाच्छब्दः शास्त्रतामतिवर्त्तते । न हि तदा पुरुषो ऽनुशिष्टः स्यात् । स्वच्छन्दचेष्टायां त्वनुज्ञायेत । अथापि हितमुपदिशत् शास्त्रं तथापि प्रकृत्या दुःखाऽनुषक्तेषु काम्येषूपायदर्शनेन प्रवर्तयन्न हितोपदेशी शब्दः स्यात् ।**

कर्मविधय आत्मज्ञानाऽधिकारप्रयोजनाः । सत्य, न शाब्दः संबन्धः प्रमाणान्तरेण तूपनीयमानो न शब्देन प्रतिक्षिप्यते व्रीहीनवहन्तीतिवदिति भाव. । एव च शास्त्रत्व नियोज्याऽनुशासनात् प्रवृत्त्यन्तरोपदेशेन परिणामतापसंस्कारदुःखदूषिताभ्य प्रवृत्तिभ्यो ऽर्थान्निवर्तनमनुशासनं तस्मादित्यर्थः ।

प्रकारान्तरमाह—हितोपदेशाद्वा । नित्यानन्दमयात्मज्ञानाऽधिकारसिद्धिप्रयोजन कर्मज्ञान तस्योपदेशादित्यर्थः । इतरथा तु न शास्त्रत्वमाम्नायस्य भवेदित्याह—कामे तु काम्यतइति स्वर्गादिः कामः तस्मिन्साध्ये रागाद्याक्षिप्ताया स्वाभाविक्यां प्रवृत्तावुपायदर्शनेन स्वहस्तदानाच्छब्दः शास्त्रतामतिवर्तते । इच्छन्नपि कथ चिदुपायाऽपरिज्ञानान्न प्रवर्तेत, उपायज्ञानादेव प्रवृत्तेः । अतस्तादृशमपि चेच्छास्त्र किमन्यदशास्त्र भविष्यतीत्यर्थः । शास्त्रतां कस्मादतिवर्तेत? इत्यत आह—न हि तदा पुरुषो ऽनुशिष्टः स्यात् । स्वच्छन्दचेष्टाया त्वनुज्ञायेत । एव तावदहितनिवर्तनालक्षणं शास्त्रत्व न स्यादित्युक्तम् । अथापि हितमुपदिशच्छास्त्र तथापि प्रवृत्त्या दुःखानुषक्तेषु काम्येषु स्वर्गादिषूपायदर्शनेन प्रवर्तयन्न हितोपदेशी शब्द स्यात् ।

**नन्वेवं ज्ञानविधिरप्यनुशासनमात्रमेव स्यात् । न । ज्ञानस्य दृष्टार्थत्वात्स्वभावतश्च गुणभूतत्वात्संमार्गादिवत् । इममेव चार्थमभिप्रेत्य कर्त्तव्यश्च सुखवानकर्त्तव्यो दुःखवानित्याद्युक्तम् । एषो ऽर्थः । स्वर्गादेः क्षणिकत्वादिदुःखानुषङ्गात्तदुपायो यागो दुःखतया न कर्त्तव्य एव स्यात् । प्रलीनाऽशेषदुःखप्रपञ्चाऽवभासप्रयोजनस्तु सुखफलः कर्त्तव्यः ।**

**नन्वेवं वर्णयता ऽतिसृष्ट[1] एवाधिकारो भवति । सत्यम् । न्यायस्तु निरूप्यते, नाऽभ्युपगमः । न च यागं**

चोदयति—नन्वेवं ज्ञानविधिरप्यनुशासनमेव स्यात् । न हि तत्रापि स्वर्गादिवन्मोक्षः साध्यतया सबन्धुमर्हति । नापि मोक्षमाणो ऽधिकारीत्यर्थः । परिहरति—न, ज्ञानस्य दृष्टार्थत्वात् । तच्चोक्तं पुरस्तात्स्वभावतश्च गुणभूतत्वात्समार्गादिवत् । यथा समृज्यमानपदार्थतन्त्रः समार्गः तथा ज्ञेयतन्त्रं विज्ञानमित्येतदनुभवसिद्धमेतदित्यर्थः । इममेव चार्थमभिप्रेत्य कर्तव्यश्च सुखवान् अकर्त्तव्यश्च दुःखवान् इत्याद्युक्तमत्रभवता । ननु स्वर्गादिनरकादिफलत्वे ऽपि कर्तव्यताकर्तव्यतयोर्वचनमेतद् भाष्यकारीयमुपपद्यतएवेत्यत आह—एषोर्थं । स्वर्गादेः क्षणिकत्वादिदुःखानुषङ्गात्तदुपायो यागो दुःखतया न कर्तव्य एव स्यात् । प्रलीनाऽशेषदुःखप्रपञ्चाऽवभासप्रयोजनस्तु सुखफलः कर्तव्यः ।

चोदयति—नन्वेव पारम्पर्येण फलत्वात् कर्मणि नाऽधिकाराऽभाव ऐकान्तिक इत्याह—नन्वेव वर्णयता ऽतिसृष्ट एवाऽधिकारो भवति । परिहरति—सत्य, न्यायस्तु निरूप्यते नाऽभ्युपगम. । न वयमभ्युपगममात्रेणाऽधिकाराऽभाव ब्रूमः, अपि तु न्यायतः । स तु स्वतो निरधिकारत्वमापादयति कर्मविधीना, नाधिकारान्तराऽनुप्र-

१ वर्णयतामिष्ट' मू पु पा' ।

कुर्य्यादित्यर्थे यथा ऽधिकारस्तथोपरिष्टाद्वक्ष्यते ।

अत्रोच्यते—

विशेषा एव शब्दार्था दृष्टरूपान्वये ऽपि हि ।
न च प्रवर्त्तनाबोध इष्टशक्तेर्विना ऽर्थवान् ॥

न तावत्सामान्यं लिङाद्यर्थः । प्रेषणाऽध्येषणाऽभ्यनुज्ञोपदेशानां तु विशेषाणामेव लोके प्रतीतेः । मोहादिभेदान्तराऽवगतेश्च । न हि प्रवृत्तिहेतुमात्राऽवबोधः क्वेश वारयति, तेन तदनुसारिणां तद्दृष्ट एवाऽभ्युपगमो युज्यत इत्यर्थः ।

एवं पूर्वपक्षाऽऽभासमुपन्यस्य प्रथममेवाऽऽनर्थक्यं स्वाऽभिमतमाह—न च यागं कुर्यादित्यत्राऽऽर्थो यथा ऽधिकारस्तथोपरिष्टाद्वक्ष्यते । एवं पूर्वपक्षयित्वा सिद्धान्तमाह—उच्यते ।

विशेषा एव शब्दार्था दृष्टरूपान्वये ऽपि हि ।
न च प्रवर्त्तनाबोध इष्टशक्तेर्विना ऽर्थवान् ॥

प्रवर्त्तनामात्र शब्दार्थ इति हि मन्यमानेन स्वर्गादेः साध्यत्व निरासीति तदेव तावद्दूषयति—न तावत्सामान्य लिङाद्यर्थः । प्रेषणाऽध्येषणाऽभ्यनुज्ञोपदेशाना विशेषणामेव लोके प्रतीतेः । न खलु लिङ उपदेशादिविशेषरहितं प्रवर्त्तनामात्रमवगच्छन्ति । न च तथा न गौ पदा स्प्रष्टव्येति गोत्वमात्रमपि तु अश्वादिशब्दादिवाऽभिधेयेषु सदिहते । प्रतिपद्यमानास्तु तामुपदेशाऽनुरक्तामेव नाऽवगमयन्ति । न हि ज्वरितः पथ्यमश्नीयादित्युपदेशप्रवृत्ता प्रवर्त्तनामात्राऽवगतिः तत्पूर्वा चोपदेशे प्रतिपत्तिरिति । यदि च प्रवर्त्तनैव लिङर्थः तदा ऽऽक्षेपेण तद्विशेषाः प्रतीयेरन्, तत उपदेशादिभेदवत्, क्व चिन्मोहस्यापि चैत्यवन्दनादौ प्रवृत्तिहेतुत्वप्रसङ्ग इत्याह—मोहादिभेदान्तराऽवगतेश्च ।

ननु प्रतीयतां नाम विशेषाऽनुरक्ता प्रवर्त्तना, तथापि कस्मान्न

चिदस्ति । सामान्यशब्दाद्विशेषप्रमाणाऽभावे तन्मात्राऽवगतिः । अतो न तावन्मात्रं शब्दार्थः । विशेषाऽनुषक्तमेव तु तृन्नादीना[1]मिव कर्तृत्वं ताच्छील्याऽनुषक्तम्[2] । अन्यथा कर्तृप्रयोगप्रतीतिप्रसङ्गात् । नाप्युपाधयो न शब्दार्थाः । अप्रतीतानामभेदकत्वात् । अन्यस्य प्रत्ययहेतोरभावात् । तदन्तत्वात्तद्वाच्यः समानशब्दो ऽयम्

तन्मात्रमर्थ? इत्यत आह—न हि प्रवृत्तिहेतुमात्राऽवबोधः क्व चिदस्ति । सामान्यशब्दत्व हि विशेषप्रमाणाऽभावे गृहीतसम्बन्धस्य सामान्यमात्राऽवबोधकत्वेन व्याप्तं, तदिहोक्तेन क्रमेण सामान्यमात्राऽवबोधकत्व निवर्त्तमान स्वव्याप्य सामान्यशब्दतामपि लिङ्गो निवर्तयति । तदिदमाह—सामान्यशब्दाद्विशेषप्रमाणाऽभावे तन्मात्राऽवगति: । क्व चिच्च सामान्याऽवगतिपुर.सरैव कस्य चित् विशेषस्य बाधे सति विशेषाऽवगति: । सर्वथा तन्मात्राऽवगतिस्तावदस्ति । उपसहरति—अतो न तन्मात्र शब्दार्थ । विशेषानुषक्तमेव तु तृन्नादीनामिव कर्तृत्व ताच्छील्याऽनुषक्तम् । न चायमसिद्धो दृष्टान्त इत्यत आह—अन्यथा ताच्छील्यदयो भेदा यदि नोच्येरन् कर्तृत्वमेवोच्येत, तथासति तृजकादिवत् कर्तृमात्रे प्रयोगप्रसङ्गात् । यदपि कैश्चिदुच्यते प्रैषादयो न शब्दार्था उपाधयस्ते, प्रवर्त्तकत्वं तु शब्दार्थ: सर्वत्राऽपरित्यागादिति, तत्राह—नाप्युपाधयो न शब्दार्था उपदेशादय: । कुत: ? अप्रतीतानामभेदकत्वात् । उपाधित्वमेषामभ्युपगच्छद्भिरपि भेदकत्वमभ्युपगमनीय, तदभावे उपाधित्वाऽनुपपत्ते. । न चाऽगृहीत भेदक भवितुमर्हति । न ह्यगृहीतविशेषणा बुद्धिरुदीयते । ननूपहिताभिधानमुपाधिप्रतीतिमपेक्षते, न तु स्वप्रतिपाद्यतामप्यस्येत्यत आह—अन्यस्य प्रत्ययहेतोरभावात् । उपहितवाचितैवाऽर्थात्प्रतिपाद्यतइत्यर्थ: । न केवलमुपपत्ति: स्मरण-

1 शब्दादीनाम् मू॰ पु पा । 2 तच्छीलानुषक्तम्॰ मू॰ पा ।

**इति च स्मरणात् । गोत्वादीनामप्युपाधित्वात्[१] । सदि-त्येव शब्दार्थत्वप्रसङ्गात् ।**

मपि कातीयमत्रास्तीत्याह—तदन्तत्वात्तद्वाच्यः समानशब्दोयम् इति स्मरणात् । द्विविधोप्युपाधिरुपहितसमानाधिकरणस्तद्व्यधिक-करणश्च । तद्यथा । दृतिहरिः पशुः, गार्गिकया श्लाघते इति च । तत्र यः समानशब्दः स समानाधिकरणोपाधिः स तदन्त-वाच्यः प्रत्ययान्तवाच्यो दृतिहरिपश्वादिः । न त्वसमानशब्दो ऽस-मानाधिकरणो गार्गिकया श्लाघते इत्यादि । न हि गार्गिकयेति श्लाघाद्यधिकारविहिते वुनि तदन्तेनाऽसमानाधिकरण, गार्गिकया श्लाघा ऽभिधीयतइत्यर्थः ।

स्यादेतत् । अनन्यलभ्यः शब्दार्थ इति स्थितिः । उपा-धयश्चाऽन्यतो लभ्या न वाच्या भवितुमर्हन्ति । कुत ? प्रयोगादेव लौकिकात् । तथा हि । दृतिहरिशब्द पशावेव प्रयुञ्जते वृद्धाः नान्यत्र । तत्प्रयोगनियम एव कुत ? इति चेत् । न । अनादित्वेन लोकप्रयोगस्याऽपर्यनुयोज्यत्वात् । तस्मात्तटस्था एवोपाधयो न पुन-रभिधाविनिवेशिन इत्यत आह— गोत्वादीनामप्युपाधिकत्वात् । सदित्येव शब्दार्थत्वप्रसङ्गात् । यद्यपर्यनुयोज्यादेव लौकिकात्प्रयोग-नियमादवगतेरशब्दार्थत्व, हन्त गोत्वादीनामप्यशब्दार्थत्वं स्यात्, सत्तैव गवादिशब्दानामर्थः प्रसज्येत । सत्तामात्रप्रवर्त्तिनामपि तेषा प्रयोगनियमादेव गोत्वादिषूपाधिसिद्धेः । तथा चाऽन्याय्यमनेकार्थत्व तन्न भविष्यति । न वा सत्तामप्यभिदध्युः, प्रयोगनियमादेव सापि गंस्यते, ततश्च सर्वेषामेव शब्दानामवाचकत्वप्रसङ्गः । अनादिरपि वृद्धप्रयोगो ऽर्थप्रत्ययनार्थत्वात् तत्प्रयुक्तस्तदप्रत्यायने पर्यनुयोज्य । न हि प्रयोक्तव्यः शब्द इत्येव प्रयुञ्जते वृद्धाः, अपि त्वर्थं प्रत्याय-यितुम् । तद्गोत्वादिषु गवादिशब्दप्रयोगनियमस्तदभिधायकत्वादुप-

**उपेत्यापि तूच्यते । सामान्यचोदनाया विशेषपरत्वाद्विशेष एव प्रतिपाद्यः । स च यः कश्चित्सर्वो वा कश्चिदेव वा । सर्वथा तु विशेषप्रत्यस्तमयेन सामान्यबोधो ऽर्थवान् । तत्रेष्टतच्छक्त्यनपेक्षाणामभिप्रायमात्राऽनुविधायिनां तदपेक्षाणां च तदानुकूल्यमपेक्षमाणानां प्रवृत्तिहेतवः प्रेषणाऽध्येषणाऽभ्यनुज्ञा अपुरुषबुद्धिप्रभवाया न प्रतिपाद्याः । न मोहादयो, बोधविरोधात् । ते**

पन्नो नाऽन्यथेति । तर्हि समानमेतत् उपाधिषु सर्वेष्वन्यत्राऽभिनिवेशात् । न च लिङादिषु प्रयोगनियमो ऽप्यस्ति । एतेन पङ्कजादिषु योगरूढिरुपपादिता । न चाऽसमानाधिकरणेषूपाधिषु वाच्यत्वप्रसङ्गः । तत्र श्लाघादिवाचिना शब्दान्तरेण सदैव प्रयोगप्रसङ्गात् । न हि गार्गिकयेत्येतावन्मात्रं प्रयुञ्जते वृद्धा , तन्मात्राद्वा श्लाघां प्रतिपद्यन्ते । तस्मादुपदेशादयस्तच्छीलादयश्चोपाधयो वाच्या । अन्यथातिप्रसङ्गादित्यभ्युपेत्यापि प्रवर्तनामात्राऽभिधानमुच्यते । सामान्यचोदनाया विशेषपरत्वाद्विशेष एव प्रतिपाद्य. । स च य. कश्चिद्यथा स्थाल्यामोदनं पचेदिति का चित् स्थाली सर्वा वा, अविशेषात् । यथा ब्राह्मणो न हन्तव्य इति ब्राह्मणमात्रम् । कश्चिदेव यथा पुरुषमानय, सुरा वोढव्येति शूद्रप्रतिपत्ति । सर्वथा विशेषप्रत्यस्तमयेन सामान्यबोधो ऽर्थवान् । निर्विशेषस्य सामान्यस्या नुपपत्तेः । तदेवं प्रसक्ताऽऽज्ञादिव्युदासेन अन्यत्र च मोहादप्रसक्तेरुपदेशस्यैव शिष्यमाणस्य संप्रत्य इत्याह—तत्रेष्टतच्छक्त्यनपेक्षाणां प्रेषितुरध्येषितुर्वाऽभिप्रायमात्राऽनुविधायिनां प्रेष्याणाम् अध्येष्याणां वा ऽतदपेक्षाणां च तदानुकूल्यमपेक्षमाणानामनुज्ञात्रभिप्रायज्ञाना प्रवृत्तिहेतवः प्रेषणाध्येषणाऽभ्यनुज्ञा अपुरुषप्रभावायाश्चोदनाया न प्रतिपाद्याः । मोहादीनामप्रसक्तिमाह—न मोहादयः प्रवृत्तिहेतवः । कुतः ? बोधविरो-

हि प्रतिपाद्यमाना अप्रवृत्तिहेतव इति प्रवर्त्तनाऽवबोधो विहन्येत। विपर्य्यय एव स्यात्। नेष्टता कर्म्मणि, प्रत्यक्षविरोधात्। इष्टसाधनतामपि चेन्न गमयेदप्रतिपादकतैव स्यात्। सामान्यबोधस्य विशेषप्रत्ययस्तमये ऽनर्थकत्वान्मिथ्यात्वापातात्। तस्य च हेतुद्वयाभावे ऽयुक्तत्वात्। तदुक्तम्। 'असाधकं तु तादर्थ्या'दिति। भवेदसाधकं कर्म्म साधयितारं नाऽधिगच्छेदनधिकारी स्यादित्यर्थः। तादर्थ्यात्प्रवर्त्तनामात्रार्थत्वात्। शब्दस्य प्रीतिसाधनत्वाऽनवगमात्। प्रीत्यर्थत्वाच्च पुरुषप्रयत्नानाम्।

धात्। विरोधमाह—ते हि प्रतिपाद्यमाना अप्रवृत्तिहेतव इति प्रवर्तनाबोधो मोहप्रतिपादनाद्विहन्येत, विपर्यय एव स्यात्। निवृत्तिरेव प्रसज्येत, न जातु प्रामाणिकाश्चैत्यवन्दनादौ। मायामोहविनिर्माणे ऽवगते प्रवर्तन्ते प्रवृत्ता वा न निवर्तन्ते। अस्तु तर्हीष्टसाधनता प्रवृत्तिहेतुरित्यत आह—नेष्टसाधनता कर्मणि प्रवृत्तिहेतुः। कुतः? प्रत्यक्षविरोधात्। इष्टसाधनतामपि चेन्न गमयेदप्रतिपादकतैव स्यात्। प्रत्यक्षविशेषप्रत्ययस्तमये सामान्यस्याप्यभावादनर्थकत्वान्निर्विषयत्वान्मिथ्यात्वाऽऽपातात्। भवतु मिथ्यात्व, को विरोध? इत्यत आह—तस्य च हेतुद्वयाऽभावे कारणदोषबाधकप्रत्ययाभावे ऽयुक्तत्वात्। अत्र च पारमर्षं सूत्र योजयति—असाधक तु तादर्थ्यादिति। तद्व्याचष्टे—भवेदसाधक कर्म साधयितार नाधिगच्छेत्। अनधिकारि स्यात् इत्यर्थ। अत्रैव हेतुमाह—तादर्थ्यात्। विवृणोति—प्रवर्तनामात्रार्थत्वात् विधिशब्दस्य प्रीतिसाधनत्वाऽनवगमात्। भवत्वनवगमः, तथापि किमित्यसाधकं कर्म? त्यत आह—प्रीत्यर्थत्वाच्च पुरुषप्रयत्नानाम्। प्रीत्यभावादिच्छाभावः सुखाऽनुशायित्वादिच्छायास्तदभावे

तथा चानुमितौ व्याप्तिधीर्व्याप्यत्वमस्तीति नात्माश्रयग-न्धोऽपि । अथेदमनुमितिजनकं व्याप्तिमत्त्वादित्यत्र व्याप्तिमत्त्वं तावदनुमितिजनकतया स्वरूपयोग्यतारूपया व्याप्तं व्याप्तिमत्त्वं च व्याप्तिरेव तथा च व्याप्तिर्व्याप्तिमतीति स्यादात्माश्रय इति चेत् । न । भेदात् धूमानलादिव्याप्तिविरहलिङ्गं तस्यास्त्वनुमितिजनकता व्याप्तिस्तदङ्गं सा च ततो भिन्ना सम्बन्धिभेदेन तस्या अपि भेदात् । न चैवमननुगमः अन्योन्याभावगर्भाया एव व्याप्तेरनुमितिजनकत्वात् । अस्त्वेवं तथाप्यविनाभावादिषु बहुषु व्याप्तिप्रस्थानेषु कामचारेण प्रतीयमानेषु अनुमितिरुदेतीत्यविवादं तत्र कीदृशं व्याप्तेर्ज्ञानमनुमितेरङ्गं न तावत् सर्वाकारमननुगमात् नापि नियतैकाकारं तदन्वयेप्यन्याकारव्याप्तिज्ञानादनुमितिसम्भवादिति । मैवम् । कारणत्वव्याप्यत्वादीनां लघुगुरुविषयत्वसम्भवेन लघोरेवार्थे प्रमाणस्य कारणवाच्यत्वादिग्राहकत्वमिति तद्ग्राहकप्रमाणानां स्वभाव इति सर्वतन्त्रसिद्धान्तात् । तथा च यत्रात्यन्ताभावादिगर्भं व्याप्तिशरीरं गुरुतरमादौ स्फुरति तत्राप्यनुमितेः प्रागन्योन्याभावगर्भव्याप्तिशरीरस्फुरणं कल्प्यं प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपीति भट्टवचनात् । अत एव वीचीतरङ्गादिकल्पनापि युक्ता । का चेयं पक्षधर्मतापि पक्षनिष्ठतेति यदि तदा प्रमेयस्याद्यसंग्रहः । प्रमेयत्वं प्रमाविषयत्वं तच्च प्रमातो न भिन्नमपसिद्धान्तात् । किन्तु भिन्नं प्रकाशस्य सतस्तदीयतामात्रनिबन्धनः स्वभावविशेषो विषयविषयिभाव इत्याचार्यवचनात् । तच्च न घटादिनिष्ठमात्मवृत्तित्वादिति । मैवम् । घटादौ प्रमा मा वर्तिष्ट स्वरूपतो घटादिकं विशिषन्ती तन्निष्ठेत्यु-

च्यते अभाववत्। न चायमपि बाध्यः भूतले घटाभाव इत्यस्य सार्वलौकिकत्वेन बाधासम्भवात्। स्वरूपसम्बन्धेन धर्मधर्मिभावो न दृष्ट इति चेत्। तत्किं सम्बन्धान्तरेण दृष्टः नेति चेत्। नूनमन्धोऽसि यत्स्वमपि ब्राह्मणमुपवीतिनं च न पश्यसि। धर्मधर्मिभावो न सम्भवति भेदे चाभेदे च विरोधादिति चेत्। तर्हि प्रत्यक्षादिपरिकलितं जगदेवापह्नुषे ओमिति चेत्। तर्ह्यनेनैव प्रणवेन मध्यमागमानधीष्व तेन सर्वापह्नोतापि भ्राजसे। अस्ति वस्तुभूतं ब्रह्मास्माकमिति चेत्। तर्हि कुतोऽज्ञासीः। न तावदुपनिषत्तत्र प्रमाणं तत्र मूकत्वात् विश्वमेव निषेधन्ती ब्रह्मणि मूकीभवन्ती सा ब्रह्मानुजानातीति चेत्। न तर्हि तत्रोपनिषत् प्रमाणं किन्तु मूकीभावान्यथानुपपत्तिः तथा च ब्रह्मानुमेयं प्राप्तव्यवहारदशायां श्रुतिरेव तदवगमयति शेषे तु स्वप्रकाशं तत् सिध्यति इति चेत् तर्हि तत् सर्वथा प्रमेयतां नातिवर्तते मेयमातृमितिमानरूपेण तन्निर्वक्तुं न शक्यते सर्वत्र दोषग्रहादिति चेत् धिगज्ञ यच्चक्षुष्पथे मनःपथे च न प्रतिबिम्बते तन्मनुषे यत्तूभयत्र जागर्ति तदपह्नुषे किमत्र ब्रूमः। अस्तु तावदिदं तथापि का पक्षता सिषाधयिषाघटितेति चेत् कासौ सिषाधयिषा प्रतिपिपादयिषा वा प्रतिपित्सा वा नाद्यः स्वार्थानुमितौ तदभावात् नान्त्यः अनिष्टानुमितौ तद्विरहादिति। मैवम्। सिषाधयिषायोग्यता हि पक्षता सा च प्रपञ्चितानुमाननिर्णये॥

उपमानमपि सादृश्यमानं यथोक्तं गोसदृशो गवयः प्रायः कानने महति दृश्यते इति श्रुतवाक्यस्य काननपदाविदितसङ्केतेर्गवयपदविदितसङ्केतेश्च काननपदसङ्केतप्रति-

पत्तिः फलमित्यतिव्यापकत्वमिति । तदसत् । इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यत्र पुरोवर्त्तिप्रभिन्नकमलोदराधिकरणकमधुपानकर्तृकत्वस्येव गोसादृश्यविशिष्टगवयदर्शनविषयाधारत्वे सति सहत्वस्य वैधर्म्यस्योपमानीभावेनैव काननपदसङ्गतिबोधकत्वात् । न च पदान्तरसमभिव्याहारोत्थाया अन्यथानुपपत्तेरेवायं प्रभाव इति युक्तं कीदृग्गवय इति प्रश्ने यथा गौस्तथा गवय इति श्रुतोत्तरवाक्यस्य तादृशे पिण्डे दृष्टे अतिदेशवाक्यार्थानुपसन्धाने गोसदृशोयं पिण्ड इत्येवं रूपे ज्ञाते गवयशब्दवाच्योऽयं पिण्ड इति तावदनुभूतिरुदेति सा च न वाक्यमात्रात् अप्रत्यक्षीकृतपिण्डस्यापि प्रसङ्गात् नापि प्रत्यक्षमात्रात् अश्रुतवाक्यस्यापि प्रसङ्गात् नापि तयोः समाहारात् भिन्नकालयोस्तयोः स्वरूपसमाहारासम्भवात् । अथ वाक्यतदर्थयोः स्मृतिद्वारोपनये गवयपिण्डसम्बद्धेनेन्द्रियेणास्तु समयपरिच्छित्तिरित्यपि न तदापीन्द्रियेण सादृश्याग्रहे समयपरिच्छेदासिद्धेः। अथेन्द्रियगवयपिण्डसम्बन्धं तन्निष्ठं गोसादृश्यविषयं व्यापारीकृत्य समयं परिच्छिनत्त्विति चेत्। हन्तैवं तृतीयलिङ्गपरामर्शं व्यापारीकृत्य वह्निमपि परिच्छिनत्त्विति गतमनुमानमपि । अथ चक्षुषि निमीलितेपि तत्फलं तृतीयलिङ्गपरामर्शो व्याप्रियमाणो भिन्नं प्रमाणमिति यदि हन्त तदा निमीलितेपि चक्षुषि सादृश्यधीर्व्याप्रियमाणा भिन्नं किं न स्यात् एवं धिक्करभकमित्यादौ पश्वन्तरवैसादृश्यधीरपीति तथा च सादृश्यं तद्धीर्वा भिन्नं प्रमाणं गवयत्वेन निमित्तेन गवयपदवाच्योयमित्यनुभूतिर्भिन्नं फलं परिशेषात् प्रश्नस्य प्रवृत्ति-

निवृत्तिविषयतयोत्तरस्यापि तत्पर्यवसायित्वात्। इयं चानुभूतिस्तिसृषु प्रमितिषु चानिविशमाना चतुर्थी सेयमुपमितिरित्युच्यते एवमेतस्याः करणं चतुर्थं प्रमाणमुपमानमिति चोच्यते एवं धिक्करभकमित्यादावपि निन्दापरे वाक्ये स्वरूपाख्यानपरे च द्रष्टव्यं तत्रापि हि वैधर्म्येण समयपरिच्छित्तेः। न च तद्भिन्नमेव मानं। नियतधर्मसामानाधिकरण्येन प्रवृत्तिनिवृत्तितत्परिच्छित्तेरुभयोरप्युपमानत्वादिति। अत्र च सादृश्यादिविशिष्टे पिण्डे न शक्तिगौरवात्। अप्रतीतगूनामपि वनेचराणां गवयव्यवहारापत्तेश्च। किन्तु सादृश्यवैसादृश्योपलम्भितं गवयत्वं करभत्वं च प्रवृत्तिं निमित्तीकृत्य गवये करभे च गवयपदस्य करभपदस्य शक्तिरिति। किमर्थं तर्हि सादृश्यवैसादृश्ये कथयति उपलक्षणार्थं न हि तदा गवयत्वं करभत्वं चोपस्थापयितुं शक्यते तत्पदयोरगृहीतशक्तिकत्वेन मूकत्वात् तत्पिण्डयोश्चानुपस्थित्येन्द्रियेणापि तयोरनुपस्थितेः। अत एव तदा न शक्तिग्रहः। तदुक्तम्।

सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वेति॥

नन्वतिदेशवाक्यं तावत्समयपरिच्छेदं नाजीजनत् गोसादृश्यस्य प्रवृत्तिनिमित्ततोपलक्षणतयोः सन्देहात्। अथ पश्चात्पिण्डे दृष्टे लाघवाद्गवयत्वं निमित्तीकृत्य समयं परिच्छेत्स्यतीति चेत्। न। उक्तसंशयेपि यो गोसदृशः स गवयशब्दवाच्य इति समानाधिकरणान्वयबोधेन गन्धवती पृथिवीति मद्वाक्यस्य प्रागेव पर्यवसिततया निराकाङ्क्षत्वात् अयं तु विशेषो यद्गन्धवतीत्यादि तदैव शक्तिमग्राहयत् पृथिवीत्वस्य निमित्तस्य यदैवोपस्थितेः

इदं तु न तथेति जनितान्वयधियोऽपि वाक्यस्य पुनरनुसन्धाने गवयत्वेन निमित्तेन गवयपदवाच्यताग्राहकत्वे वाक्यभेदापत्तेः। न चातिदेशवाक्यं शक्तिग्रहतात्पर्यकमिति गोसदृशपदं गवयत्वलक्षकमिति वाच्यं । प्रवृत्तिनिमित्ततात्पर्याभावेऽपि स्वरूपाख्यानपरादप्यतिदेशवाक्यादुक्तरीत्या समयपरिच्छेदसिद्धौ मानान्तरसिद्धे चावश्यकत्वात् । अपि च धिक्करभकमित्यादेः करभनिन्दातात्पर्यकादपि वाक्यात् समयपरिच्छेदसिद्धौ मानान्तरसिद्धेरावश्यकत्वात् तस्मात् पिण्डे दृष्टे गवयत्व उपस्थिते सादृश्यं गुरु गवयत्वं च जातित्वाल्लघ्विति विमर्शे तथायं पिण्ड इत्यनुसन्धानमेव समयं गवयत्वेन निमित्तेन गवयपदवाच्योऽयं पिण्ड इत्येवं रूपं परिच्छिनत्तीति । सादृश्यं च समानबहुधर्मवत्त्वं वैसादृश्यं त्वसमानबहुधर्मवत्त्वं अत एव विसदृशयोरपि गोवराहयोरुक्तं सादृश्यमस्तीत्यतो वराहं गावोऽनुधावन्तीत्यत्र गोसादृश्यं वराहेप्युक्तं शक्तिनिर्णयाय काकापेक्षया शूकरस्यैव गोवृत्तिबहुधर्मवत्त्वात् । अत्र सादृश्यधीकरणिकैव समयपरिच्छित्तिरूपमितिरिति जरन्तो जयन्तादयः[१]। सादृश्यधीकरणिकापि करभादौ सोदेति तथाहि यथा गवयपदशक्तिग्राहकः सादृश्यविशेषो गवय एव न तु महिषादौ एवं करभपदशक्तिग्राहकोऽपि वैसादृश्यविशेषः करभ एव न तु पश्वन्तरे तेनेमे सादृश्यवैसादृश्ये गवयकरभनियत एव । इह सहकारतरावित्यादौ तु न तथा एतत्सहकाराधिकरण-

(१) तत्त्वचिन्तामणौ गङ्गेशोपाध्यायेनाप्युक्त जरन्नैयायिका जयन्तप्रभृतयः इति जयन्तश्च न्यायसूत्रवृत्तिकार न्यायसूत्रवृत्तिश्च न्यायमञ्जरीनामिका विजयनगरसंस्कृतसीरीज इति प्रसिद्धाया पुस्तकावल्या मुद्रितास्ति ।

कमधुरध्वनिकर्तृत्वस्य शुकादावपि सम्भवात्। तस्मान्नियतधर्मसामानाधिकरण्येन शब्दप्रवृत्तिनिमित्तपरिच्छित्तिरुपमितिस्तत्करणमुपमानं तेन सादृश्यवैसादृश्ये एवोपमानं इह सहकारेत्यादौ तु प्रसिद्धपदसामानाधिकरण्यान्यथानुपपत्त्या शक्तिग्रहसम्प्रदायः। एकदेशी तु इदमपि वैधर्म्योपमानान्तर्गतमेव एतत्प्रभिन्नकमलोदराधिकरणकमधुपानकर्तृत्वस्य तथैतत्सहकारवृत्त्वाधिकरणकमधुरध्वनिकर्तृत्वस्यान्यवैधर्म्यस्यैवात्र शक्तिग्राहकत्वात् सर्वसंग्राहकं तु लक्षणमनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानमिति। न चादौ सङ्गतिमवेत्य पश्चाद्दैवात्प्रस्मृत्य पश्चादुक्तसामग्र्या यत्र समयं परिच्छिनत्ति तत्रोपमितावव्याप्तिः सा हि संज्ञावगतसङ्गतिरेवेति चेत्। नाबोधात्। न हि यदा कदाचिदपि सङ्गतेरवगमनिषेधोऽत्रोच्यते। अन्यथानादौ संसारे प्राक् तदवगमस्य सम्भवेनासम्भवदोषः स्यात्। किं त्वनवगता अवगम्यमानेत्यर्थः। एतच्चावगतप्रस्मृतसङ्गतावप्यस्ति। एतच्चावगम्यमानत्वं प्रकृतफलकरणीभूतानुसन्धानवता न तु येन केनापि यस्यैव करणान्वयस्तस्यैवोपकरणान्वयोपीत्यस्यार्थस्य सकलजनसाक्षिकत्वान्नात्र विकल्पावसरः सादृश्यवैसादृश्ययोस्तु प्रवृत्तिनिमित्ततया तयोः प्रवृत्तिनिमित्ततानुभावकं समयपरिच्छेदकमेव न भवतीति तथा परिच्छेदके उपमानाभासे नोपमानलक्षणातिव्याप्तिः प्रवृत्तिनिमित्तं पुरस्कृत्य संज्ञासंज्ञिसम्बन्धं परिच्छिन्दत एव प्रमाणस्योपमानत्वात्। ननु गोसादृश्यं विहाय गवयत्वजातौ गवयशब्दार्थताप्रतीतिः कल्पनालाघवाख्यतर्कमपास्य न स्यादिति तदुपन्यासस्थितौ किमानुमानिक्येव तत्र

गवयत्वस्य गवयपदवाच्यताप्रमितिरियं नेष्यते सम्भवति च प्रयोगः विमतिपदं गवयत्वं गवयपदप्रवृत्तिनिमित्तं तथात्वे तर्केण विषयीक्रियमाणविपर्ययकत्वात् । न यदेवं न तदेवं यथा गोत्वं तथा चेदं ततस्तथेति न ह्यस्ति सम्भवो मूलशैथिल्यादिदोषराहितनिवेदितविपर्ययवांश्चार्थो न च तथेति । अथवा गवयपदमसम्भवत्प्रवृत्तिनिमित्तान्तरमनुपपद्यमाना सोक्तगोसादृश्यसामानाधिकरण्यमर्थाद्गवयत्वप्रवृत्तिनिमित्तकतामाक्षिपतीत्यर्थापत्तिरेवात्र प्रमाणमस्तु सा च त्वया व्यतिरेकीकृत्य परेण पृथगेवावश्यं प्रमाणनीयेति । मैवम् । न हि लाघवगौरवे तर्कौ नापि मूलशैथिल्यादिरहिते नापि विपर्ययपर्यवसायिनी नापि प्रमाणसहकारिणी किन्तु लघौ गुरौ चार्थे युगपदुपस्थिते प्रमाणं लघुमर्थं कारणत्वादिनालिङ्गति न तु गुरुमिति प्रमाणस्य स्वभाव इत्येव तत्त्वम् । अत एव लाघवगौरवोत्सर्गापविनिगमप्रतिबन्ध्यनौचित्यानि तु षडपि न तर्का इति न्यायविदां परिसंख्यानमपि । हन्त तथापि गोसादृश्यं तावन्न गवयपदप्रवृत्तिनिमित्तं अप्रतीतगूनामारण्यकानां गोसादृश्यापरिचयाद्गवयपदप्रयोगादिलक्षणव्यवहारानुपपत्तेः । एवं चानेन तर्केण विपर्ययपर्यवसिते गोसादृश्यस्य प्रवृत्तिनिमित्तत्वे निरस्ते ऽन्यस्य प्रवृत्तिनिमित्तत्वेऽसम्भविनि प्रवृत्तिनिमित्तवत्त्वे च पदत्वेनैव सिद्धे गवयपदं गवयत्वप्रवृत्तिनिमित्तकं इतराप्रवृत्तिनिमित्तकत्वे सति प्रवृत्तिनिमित्तवत्त्वादिति व्यतिरेकिणैव क्लृप्तेनोपमानं प्रमुपृष्विषयमिति चेत् । मैवम् । श्रुतातिदेशवाक्यस्य गवयपिण्डदर्शनोत्तरं गवयत्वगोसादृश्ययोरवगताविदं लघ्विदं गुर्व्विति तावद्धीरुदेति सा च प्रतिसन्धानसहकारितामापाद्योपमा-

पयतु अप्रतीतगूनामव्यवहारप्रसङ्गस्य तु तदानीमवतारे प्रमाणाभावः अस्तु वा तत्र प्रमाणं तथापि स हि प्रसङ्गो विपर्ययपर्यवसितीभूय सामान्यतो दृष्टावतारमपेक्ष्य यथोक्तं परिशेषनामकं व्यतिरेकिणमवतारयिष्यति स चावतीर्णः समयं परिच्छेत्स्यतीति क्लृप्तमप्यनुमानं चरमोपस्थितत्वेन लाघवसहितप्रतिसन्धानस्य[१] न मात्रजनुषः प्रथमोपस्थितस्य समयग्राहकतां न प्रत्यादिशति युगपदुपस्थित्यभावेन क्लृप्तकल्प्यविरोधे हीत्यस्यानवकाशात् । नन्वतिदेशवाक्यं समयग्रहतात्पर्यनिर्वाहकमुत्थाप्य समयनिष्पत्तिवह्निजिज्ञास्यं प्रति दृश्यते धूम इति वह्न्यनुमितिद्वारेति तावद्ब्रूषे तथा च तव स्ववचनविरोधः । धिक्करभमित्यादौ समयग्रहतात्पर्याभावे ऽपि उपमानेन समयपरिच्छेद इति त्वयैव बहुधोक्तत्वादिति । अथ तत्र मानान्तरं तदा चतुःप्रमाणीभङ्ग इति चेत् । भ्रान्तोसि तथेति प्रतिसन्धानं लाघवाद्गवयत्वकरभत्वपुरस्कारेण गवयपदकरभपदवाच्यतां तावत्परिच्छिनत्ति तत्र च का तात्पर्यापेक्षेति दिक् ॥

आप्तोपदेशः प्रमाणशब्दः आप्तिश्च वाक्यार्थयथार्थज्ञानं तादृशशब्दबुबोधयिषा यत्नश्च करणपाटवं च तद्वानाप्तः तस्योपदेशस्तद्वक्तृकं वाक्यं प्रमाजननं प्रति स्वरूपयोग्यं स चाकाङ्क्षादित्रिकधिया सहकारिण्योपहितः प्रमापयति चक्षुरिवोन्मीलनोपहितं कीरवालभ्रान्तप्रतारकस्थले तु भगवानीदृशो वक्तेति प्राञ्चः । नव्यास्त्वाप्त उपदेश आकाङ्क्षादित्रितयवानुपदेशः तत्त्रितयधीमात्रोपदेशः प्रमाणशब्दः एतज्जनिता च प्रमा बोद्धुरेवाकाङ्क्षादि-

(१) अत्रादर्शपुस्तकत्रयेपि कश्चिदंशो निपतितः ।

प्रमेया गुणेन जन्यते न तु वक्तुर्वाक्यार्थप्रमेया तथा च श्रोतुर्वेदार्थप्रमया न वेदवक्तुर्वाक्यार्थप्रमारूपो गुणोपेक्ष्यते अतो न वेदार्थप्रमाबलादीश्वरसिद्धिः । वक्तुस्तात्पर्यं च शाब्दप्रमायामतन्त्रमेवेति न तद्धेतुभूततात्पर्याधारतयापि तत्सिद्धिः । यद्समवधानावच्छिन्नं यस्यान्वयानुभवासम्बन्धित्वं तस्य तदेव तत्साकाङ्क्षत्वं तच्च यावन्तं कालं तावन्तमेवाकाङ्क्षा योग्यता च बाधकमानाभावः आसत्तिश्चोपस्थित्योर्नैरन्तर्यं वाक्यं चैकार्थावच्छिन्नः पदसमूहः पदत्वं च सङ्केतवद्वर्णत्वमिति तेन प्रकृतिप्रत्ययौ पदे न तु पदमिति ॥

नन्वन्यथानुपपत्तिरनवगता तावन्न बहिःसत्त्वकल्पिका ज्ञानान्वयव्यतिरेकित्वात् किं तु ज्ञाता तस्याश्च ज्ञानं कल्पनीयज्ञानाधीनं न हि तदज्ञाने तदन्येन वर्त्मना नेदमुपपद्यत इति ज्ञातुं शक्यते अभावस्य प्रतियोगिनिरूपणाधीननिरुपणत्वात् तथा च फलीभविष्यच्चैत्रबहिःसत्त्वादिसत्त्वादिज्ञाने किमर्थापत्त्या तत्फलस्य तां विनैव सिद्धेः । तदज्ञाने चान्यथानुपपत्तिरज्ञातैवेति कथं प्रभवतु तदुक्तं । यतोन्यत्वं तत्सिद्धेरग्रे तदसिद्धेरिति मैवम् । बहिःसत्त्वेन विना जीविनो गेहासत्त्वमनुपपन्नं वह्निना विना धूम इव एवं चेदमनुपपद्यमानं यत्रास्ति तत्र फलं प्रसभत इति चैत्रे बहिःसत्त्वं सिध्यति पक्षधर्मताबलात्पर्वतीयवह्निवत् न तु विशेषयोरेव व्याप्तिग्रहोऽत्राङ्ग येन चैत्रबहिःसत्त्वस्यापि प्रसिद्धिरादौ मृग्येत गौरवात् पक्षधर्मताज्ञानस्यानङ्गत्वापत्तेस्त्वदुक्तदोषाच्च । इयमेव दृष्टार्थापत्तिरिति गीयते एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्रापि रोगाद्यजन्यं पीनत्वं भोजनमात्रेण विनानुपपन्नं भोजन-

मात्रमेव यद्यपि व्याप्तिबलादानेतुमर्हति तथापि दिवा अभोजिनः पक्षत्वेन दिवाभोजनमादाय साध्योपसंहारस्य बाधेनासम्भवादबाधेन भोजनत्वेनैव रूपेण रात्रिभोजनमायाति पक्षताधर्मताबलात् वह्नित्वेन पर्वतीयवह्निवत् न हि रात्रिभोजनेन विना पीनत्वानुपपत्तेर्ज्ञानं कारणं किं तु भोजनेन विना पीनत्वस्य भोजनमात्रसाध्यत्वात्। अतो यतोन्यत्वमित्यादिकमज्ञप्रलपितम्। अथ तथापि जीवी देवदत्तो गृहे नेत्यत्र देवदत्ते पक्षे जीविगेहासत्त्वेन बहिःसत्त्वं प्रतीयते तत्र तावद्गेहासत्त्वे ऽस्य गेहवृत्तेर्बहिःसत्त्वेन चैत्रवृत्तिना समं न व्याप्तिः वैयधिकरण्यनियमात् वैयधिकरण्येपि व्याप्त्यभ्युपगमे पक्षधर्मता सर्वथा न सम्भवतीति नेहानुमानवार्तापीति चेत्। न गृहनिष्ठाभावप्रतियोगित्वस्यैव देवदत्तवृत्तेरिह लिङ्गत्वात्। तस्य चाव्यवहितस्मृतदेवदत्तविशेषणकस्य गृहे देवदत्ताभाव इति चाक्षुषं ज्ञानं अभावे देवदत्तस्य प्रतियोगित्वमवगाहमानं जनयता चक्षुषैव ग्रहणसम्भवात् अयं तु विशेषो यदन्यत्र व्याप्तिलिङ्गवत्त्वं पक्षे गृह्यते अत्र तु व्याप्तिपक्षधर्मते लिङ्ग एव प्राधान्येन गृह्यते तृतीयलिङ्गपरामर्शानुमित्योस्तु नैकविशेष्यकतानियम इति दिक्। ननु तथापि जीवी देवदत्तो गृहे नास्तीत्यत्र जीवित्वेन तावद्देवदत्तस्य क्वचित् सत्त्वमाक्षिप्तं जीवता क्वापि स्यातव्यमिति व्याप्तेः तच्च गृहबहिरुभयस्पर्शि तदानीं विनिगमकानुपस्थितेः अथ पश्चाद्गृहे नास्तीत्यनेन विशेषमुखप्रवृत्तेन प्रमाणेन गृहे देवदत्तस्याभावे ग्राहिते तत् क्वचित्सत्त्व बहिर्मात्रे व्यवस्थाप्यते तथा च विशेषमुखप्रवृत्तेन प्रमाणेन सामान्यमुखप्रवृत्तस्य प्रमाणस्य स्वालिङ्गितविशेषातिरिक्तविशेषविषयत्वव्यव-

स्थापनं प्रमाणयोरापाततः प्रतीताद्विरोधान्निर्वहतीति विरोध (१)केयमर्थापत्तिरित्युच्यते। मैवम्। न हि जीवी देवदत्त इत्येकं वाक्यं गृहे देवदत्तो नास्तीत्यपरं येन सामान्यविशेषन्यायछायापि स्यात्। किन्तु जीविनं देवदत्तं स्मरतो योग्यानुपलब्ध्या च गेहे तदभावं पश्यतः प्रत्यक्षमिदमभिलप्यते जीवी देवदत्तो गृहे नास्तीत्यतो न त्वदुक्तमनुस्पर्शि। अथ यदीदृशं वाक्यं स्यात्तदा किं स्यात् अनेन हि वाक्येन देवदत्तस्य जीवित्वगेहासत्त्वे प्रत्याख्येते योग्यतादिमत्त्वात् तथा च तेन बहिःसत्त्वमर्थाप्यतेनुमाप्यते वेति सर्वसमञ्जसम्। ननु पीनो देवदत्तो दिवा न भुङ्क्ते इति तावच्छ्रुतार्थापत्तेरुदाहरणमात्थ तच्च वाक्यार्थधियं विना न घटते सा च पीनत्वान्वयप्रयोजकं रात्रिभोजनं विना नेह तच्च रात्रौ भुङ्क्तेइति शब्दं विना न शाब्दी त्वाकाङ्क्षा शब्देनैव पूर्यत इति नियमात् तथा च रात्रौ भुङ्क्ते इति शब्द एवात्र कल्प्यत इति नात्रानुमानगन्धोपीति। मैवम्। यद्यपि श्रोत्रा रात्रिभोजनं प्रतीतमस्ति तथापि दिवेतिविशेषणमर्यादया तेन तावद् दिवाभोजनमपि सम्भावितमपि तत्संशयेन योग्यतासंशयात् शब्दार्थयोरध्याहारमन्तरेणैव वाक्यार्थधियः सम्भवे तन्मूलाया अर्थापत्तेरनुमितेर्वा सम्भवादिति। गुरवस्तु ज्योतिस्तन्त्रेण देवदत्तस्य शतवर्षजीवित्वे ज्ञाते पश्चाद्भूयसा प्रत्यक्षेण तस्य गृहसत्त्वनियमेवसिते शेषे योग्यानुपलब्ध्या तस्य गृहासत्त्वे निश्चिते ज्योतिःशास्त्रस्य नियममप्रत्यक्षेण समं योग्यानुपलब्धिघटितेन विरोधेनोभयोः प्रामाण्यसंशयात्

(१) अत्रादर्शपुस्तकत्रयेपि कश्चिदशो निपतित.।

जीवति न वेति संशये जाते तेन जीवनसंशयेन बहिःसत्त्वं कल्प्यते । एवं च जीवनसंशयः करणं तच्च नानुमानं अनुमितेः संशयकरणत्वसम्भवाद्व्याप्तिविरहाच्चेति पञ्चमं प्रमाणमर्थापत्तिः । अथ जीवनग्राहकगृहनियमग्राहकयोर्यदि तुल्यबलत्वं न तर्हि बहिःसत्त्वकल्पना विशेषादर्शनात् अतुल्यबलत्वे चैकेनापरस्य बाध एवेति जीवित्वसंशये न बहिःसत्त्वधीः किं तु जीवित्वनिश्चये सा चानुमानादेव न त्वर्थापत्तेरिति । उच्यते यथोक्तसंशयवान् खल्वेवं विमृशति यद्योग्यानुपलब्धिनिश्चितं गृहासत्त्वं तावत्सुदृढं तथा च गृहनियमग्राहकस्य प्रामाण्ये स नास्ति शास्त्रस्य तु प्रामाण्ये स बहिरस्ति तथा च स बहिरस्तीति कल्प्यते भावत्वेन लाघवात् न तु नास्तीति कल्प्यतेऽभावत्वेन गुरुत्वादिति । यत्त्वस्यां दशायामनयोर्विरुद्धार्थग्राहित्वेऽवगते जीवनग्राहकं गृहनियमग्राहकञ्च बाधितैकतरं परस्परविरुद्धत्वादिति सामान्यतो दृष्टेन लाघवाद्गृहनियमग्राहकस्यैव बाध्यता तु जीवनग्राहकस्य प्रमाणद्वयबाधालिङ्गने गौरवात् तद्बाधे हि शतवर्षावच्छिन्नजीवित्वतावत्कालीनगृहसत्त्वयोर्द्वयोरपि बाधा स्यात् विशेषणबाधे विशिष्टबाधस्यावश्यकत्वात् तथाहि शतवर्षावच्छिन्नजीवित्ववत्तयोपस्थिते देवदत्ते गृहनियमग्राहकेण प्रत्यक्षेण शतवर्षावच्छिन्नजीविगृहसत्त्वस्यैवालिङ्गनात् प्रत्यक्षापनीतपर्वतत्वविशिष्टे धर्मिणि लिङ्गेन पर्वतो वह्निमानितिवदिति मैवम् । विशेष्यवति विशिष्टबाधो हि विशेषणबाधमात्रं सविशेषणे हीति न्यायात् न तु विशेषणबाधाधीनस्तत्र सतो विशेष्यस्यापि बाधः क्षणभङ्गापत्तेः नियमप्रत्यक्षं च शतवर्षं जीवित्वं ज्योतिः-

शास्त्रोच्छिष्टमनुवदति न तु विधत्ते वह्न्यनुमानमिव पर्वतत्वं तेन तद्बाधे तद्विधायकस्यैव बाधो न तु तदनुवादकस्य देवदत्तगृहनियमे प्रत्यक्षं प्रमाणमन्यास्पृष्टत्वादिति किं च बाध्यत्वज्ञानाय विरोधित्वज्ञानमात्रमपेक्ष्यते न तु संशय एव कल्पके लाघवस्य सहकारिता कल्प्यत इति यदपि देवदत्तो जीवनमरणान्यतरधर्मा प्राणित्वादिति तदपि न जीवनमरणसन्देहेन तस्य तदा तदन्यतरधर्मवत्त्वं ज्ञातमेवास्ति ततस्तत्कथमनुमीयतां वैयर्थ्यादिति तस्मात्संशयेनैव लाघवसहकाराद्बहिःसत्त्वमर्थाप्यत इति । अत्रोच्यते सम्बन्धं विनार्थापनेतिप्रसङ्गात्स इह वाच्यः स च व्याप्तिलक्षणः स च नान्वयेन न वा व्यतिरेकेणेहास्तीति यत्किञ्चिदेतत् ॥

योग्यानुपलब्धिरभावग्राहिका सा च द्वेधा ज्ञाता च स्वरूपसती च तत्राद्यानुमानमेव अन्त्या तु प्रत्यक्षसहकारिणी। नन्वियं योग्यस्यानुपलब्धिर्योग्ये वानुपलब्धिः नाद्यः स्तम्भे पिशाचान्योन्याभावाप्रत्यक्षापत्तेः न हि पिशाचो योग्यः न द्वितीयः महति वायावुद्भूतरूपाभावस्य सत्यालोकेप्यचाक्षुषत्वापत्तेः न हि वायुश्चक्षुर्योग्यः नान्त्यः न्यायमते सर्वस्यैवानुपलम्भस्य योग्यत्वात् भट्टमते तु सर्वस्यैवायोग्यत्वादिति।अथ प्रतियोगिनो यावदुपलम्भकसाकल्ये सत्यनुपलब्धिर्योग्यानुपलब्धिरिति तन्नासम्भवात् । न हि प्रत्यक्षार्हस्य तत्र सतो यावदुपलम्भकसाकल्ये सत्यनुपलब्धिः सम्भवति सामग्र्याः कार्यनियमात् नाप्युपलम्भके प्रतियोगीतरेति विशेषणं असम्भवादेव न हि प्रतियोग्यसत्त्वे प्रतियोगीतरस्य प्रतियोगिग्राहकस्य सर्वस्य सत्त्वं भवति प्रतियोग्यसत्त्वे प्रतियोगिसन्नि-

कर्षस्याप्यसत्त्वनियमात् । अथ प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसाकल्ये सत्यनुपलब्धिर्योग्यानुपलब्धिरिति ब्रूम इति चेन्न एकाश्रयनाशजन्यस्य संयोगध्वंसस्य पारोक्ष्यापत्तेः । प्रतियोगितद्व्याप्यभिन्नो यः संयोगस्याश्रयो ध्वस्तः सोपि संयोगस्योपलम्भक एव संयोगस्य संयोगिद्वयव्यङ्ग्यत्वात् । तथा च तत्र प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसाकल्यं नास्ति नष्टाया आश्रयव्यक्तेरसत्त्वादिति । अथ प्रतियोगिसत्त्वविरोधिनी योग्यानुपलब्धिः न हि प्रतियोगिग्राहकसत्त्वे प्रतियोगिनि च योग्ये सत्यनुपलब्धिः सम्भवति न हि महत्यालोके महान् घटश्चक्षुष्मता चक्षुःसन्निकृष्टो व्यासङ्गाभावे सति न गृह्यत इति सम्भवति सामग्र्याः कार्यनियतत्वात् । एकाश्रयनाशे तु या संयोगानुपलब्धिः सा संयोगसत्त्वे न सम्भवति योग्यो हि संयोगो यदि तत्र स्यात्तदा गृह्येतैवेति । मैवम् । यदि घटे पटतादात्म्यं स्यात् तदोपलभ्येतैव न चोपलभ्यते तस्माद्घटे पटतादात्म्यं नास्तीत्यवगम्यते अयं तु घटे पटतादात्म्यस्य संसर्गाभावग्रहः न तु घटे पटान्योन्याभावग्रहः तत्र पटः प्रतियोगी तादात्म्यमवच्छेदकं तथा चायं तादात्म्यसंसर्गाभावो यथोक्तसामग्र्या गृह्यताम् अन्योन्याभावस्तु समानाधिकरणनिषेधरूपो घटादिधर्मिप्रतियोगिकः तादात्म्यावच्छिन्नप्रतियोगिताकः स कथमेवं ग्राह्यः । अथ य एव तादात्म्यसंसर्गाभावः स एव तादात्म्यान्योन्याभाव इति चेत् तर्हि तादात्म्यसंसर्गाभावे प्रविष्टस्यान्योन्याभावस्य लक्षितेष्वलक्षणलक्षितत्वादित्यत्र सूत्रे चतुर्थाभावत्वं व्यवस्थापयतोऽक्षपादस्य महामुनेः प्रमत्तत्वमापद्येत अस्त्वेवमिति चेत् धिङ्मूर्ख विरुद्धानां हि भेदव्यवस्थाप

नायान्योन्याभावमङ्गीकुरुषे विरुद्धयोरेव च समानाधिकरणव्यधिकरणनिषेधयोरन्योन्याभावतादात्म्यसंसर्गाभावयोर्भेदमपह्नुषे चेति विरुद्धयोरप्यभेदमातिष्ठमानो न्यायमतत्यागं वेदान्तमतप्रवेशं च न बुध्यस इति दूरमपसर। अत्राहुः प्रतियोगीत्यनेन निरूपकमुक्तं तच्च संसर्गाभावे प्रतियोगिरूपमेव अन्योन्याभावे तु तदवच्छेदकं तेन तादात्म्यवत्तयाधिकरणस्यानुपलब्धिः सैवान्योन्याभावग्राहिका न हि तद्भिन्ने तत्तादात्म्यवत्तयानुपलब्धिसम्भवति यदि हि स्तम्भः पिशाचतादात्म्यवान् स्यात् तदा तद्वत्तयोपलभ्येत स्तम्भः स च पिशाचतादात्म्यस्याधिकरणयोग्यतयैव योग्यत्वसम्भवात्। ननु घटः पटो नेत्यत्र नञा घटे पटान्योन्याभावः प्रत्याय्यते आरोप्यते तु घटपटतादात्म्यं कथमन्यथा घटः पट इत्यारोपशरीरं स्यात्। तथा च तादात्म्यमारोप्यते धर्मी निषिध्यत इति चित्रमिति चेत्। किं चित्रं तादात्म्यावच्छिन्नो धर्मी आरोप्यः किन्त्वारोपे तादात्म्यस्य प्राधान्यं निषेधबुद्धौ तु धर्मिणः प्राधान्यमिति विशेषः कथमेवं संविदं पृच्छ संविदेव हि भगवती वस्तूपगमे नः शरणमिति। ननु भेदोऽन्योन्याभावः स च धर्मिप्रतियोगिको अभेदस्तु तादात्म्यं तत्कथं भेदाभेदयोः परस्परविरहात्मत्वं न कथञ्चित् परस्परविरुद्धौ हि तौ। नन्वनुपलब्धिरनुयोगिनः प्रतियोगिमत्तयोपलम्भस्याभाव इति तावन्न सम्भवति आहार्यारोपरूपस्य तदुपलम्भस्य तत्रावश्यकत्वात् तत्प्रमाविरहस्तथेति चेत्। न। प्रमाणान्तरेण प्राचीत्ववत्त्वप्रमितावपि दोषात्तत्र तदभावभ्रमदर्शनात् अभावप्रमायां प्रतियोगिमत्त्वप्रमाविरहो हेतुरिति चेन्न। प्रतियोगिमत्त्वे प्रमीयमाण एव प्राङ्नासीदि

दमत्रेति प्रतीतेः यत्कालीनत्वेन तत्राभावः प्रतीयते तत्कालीनायाः प्रतियोगिसत्तायास्तत्रापि प्रमितिविरह एव न हि प्राङ्नास्तितास्थलेपि तत्कालीनप्रतियोगिसत्तया इदानीमपि प्रमितिः प्राङ्नास्तिताविरोधादिति चेत्। हन्तैवमभावकालीनप्रतियोगिसत्तायाः प्रतीतिः क्वापि न सिद्धेति कथं तदभावलक्षणानुपलब्धिः सिध्यतु प्रतियोग्यसिद्धेरिति मैवम्। अभावसमये अधिकरणे प्रतियोगिसत्त्वप्रकारकप्रमाविषयत्वाभावस्यानुपलब्धित्वात् प्रमा चेह यथार्थधीमात्रं अतः प्राङ्नास्तिताधीस्थले तादृशस्मरणाभावकत्वमनुपलब्धिरेव तादृशानुभवाभावस्मरणाभावयोर्द्वयोरपि प्रतियोगिसत्त्वविरोधित्वाविशेषात्। ननु यदि स्यादुपलभ्येत न चोपलभ्यते तस्मान्नास्तीति तावदनुपलब्धेः शरीरमेवं चानुभवाभावरूपैव सति सिध्यति तत्कथं प्राङ्नास्तितायां स्मरणाभावरूपां तामात्थेति चेत्। सत्यम्। वस्त्वभावव्याप्योनुभवाभावः तद्व्याप्यश्च स्मरणाभावोत्रेति व्याप्यव्याप्यस्य सुतरां व्याप्यतयानुमानस्य जघन्यतया साक्षादेव स्मरणाभावेन वस्त्वभावानुमितिरुक्ता। अस्त्वेव तथापि स्मरणाभावो नानुपलब्धिः सत्यं तत्स्थानाभिषिक्ततया सोप्यनुपलब्धिरुक्त इति एवं च खण्डनकृता द्विजिह्वेन प्रमाणानि विदश्य षोडशपदार्थी कदर्थिता सेयं मया गुरुचरणसेवाचरणेन जाङ्गलिकप्रवरेण जगदहङ्कारेण निरामयीकृतेति ॥

अथ प्रमाणखण्डनानन्तरं तदाभासखण्डनं प्रस्तौति कश्चायमसिद्धो नाम व्याप्तिपक्षधर्मताभ्यामप्रमितोऽसिद्ध इति चेन्न। हेत्वाभासान्तराणामप्येवमसिद्ध एव प्रवेशापत्तेः व्याप्तिं पक्षधर्मतां तत्प्रमितिं चाविरुद्धतां विना हेतुदो

पक्षे, सिद्धान्तः । अन्यैर्जीवैरधिष्ठिते व्रीह्यादौ संसर्गमात्रमनुशयिनां भवति । पूर्ववद्यथाऽऽकाशादौ संसर्गमात्रं तद्वत् । कुतः । पूर्ववदभिलापात् । यथाऽऽकाशादिषु वर्षान्तेषु कर्मपरामर्शमन्तरेणैव प्रवेश उक्तः, एवं व्रीह्यादिष्वपि कर्मपरामर्शं विनैव प्रवेशाभिलापादित्यर्थः । पूर्ववदिति पदं सूत्रेऽर्थद्वयाभिप्रायेण प्रयुक्तमिति पुनरुपादाय व्याख्यातम् । तस्मात्कर्मपरामर्शाभावान्न व्रीह्यादिष्वनुशयिनां सुखदुःखभाक्त्वम् । यत्र त्वनुशयिनां सुखदुःखभाक्त्वं तत्र कर्मपरामर्शो 'रमणीयचरणा'' इत्यादिना दृश्यत इति, "जायन्त"इति श्रुतिः संसर्गमात्राभिप्राया न मुख्येति बोध्यम् ॥

## अशुद्धमिति चेन्न शब्दात् ॥ ३ । १ । २५ ॥

ननु ज्योतिष्टोमादिकं कर्म पशुहिंसायोगादशुद्धम् । तत्कारिणामनुशयिनां व्रीह्यादिषु स्थावरेषु दुःखानुभवार्थेषु मुख्यमेव जन्मास्त्विति चेन्न । ज्योतिष्टोमादेः शब्दाद्विधिशास्त्राद्धर्मत्वेनावगतत्वान्न दुःखहेतुत्वमित्यर्थः ॥

किं च ।

## रेतस्सिग्योगोऽथ ॥ ३ । १ । २६ ॥

अथ व्रीह्यादिभावानन्तरमनुशयिनां रेतः सिञ्चतीति रेतस्सिक्तद्योगस्तद्भावः श्रुतावाम्नायते "यो रेतस्सिञ्चति तद्भूय एव भवती''ति । अनुशयो व्रीह्याद्यन्नद्वारा पुरुष प्रविष्टस्तद्भूयो भवति तद्भावं गच्छतीत्यर्थः । न ह्यत्रानुशयिनो रेतस्सिग्भावो मुख्यः सम्भवति, इदानीं पुरुषप्रविष्टत्वेनाप्राप्तयौवनत्वात् । अतस्तद्भावस्तत्संसर्गो वक्तव्यः । तथा च व्रीह्यादावपि संसर्ग एव, आकाशादावपि संसर्गस्यैवावगतत्वेन सन्दंशन्यायादिति भावः ॥

नन्वनुशयिनां सर्वत्र संसर्गस्यैवाङ्गीकारे मुख्यं जन्म क्वापि न स्यात् । तथा च "रमणीयां योनिमापद्येर" न्नित्यादिश्रुतेर्गौणत्वप्रसङ्ग इत्यत आह ।

योनेः शरीरम् ॥ ३ । १ । २७ ॥

योनौ रेतसि प्रविष्टे ततः शरीरमनुशयिनामनुशयाख्यकर्मभोगाय जायत इत्याह शास्त्रं "तद्य इह रमणीयचरणा" इत्यादि । तस्माद्ब्राह्मणादियोनावेवानुशयिनां मुख्यं जन्म, न व्रीह्यादाविति गत्यागतिविवेककृतवैराग्यं ज्ञानसाधनमित्यनवद्यम् ॥

इति तृतीयाध्यायस्य प्रथमः पादः ॥

एवं गत्यागतिनिरूपणेन कर्मफलेभ्यो विरक्तस्य महावाक्यार्थज्ञानाय तत्त्वंपदार्थौ शोधयितुं पादमारभमाणो गत्यागतिनिरूपणेनैव जाग्रदवस्था निरूपितेत्यभिसन्धाय, आत्मनः स्वयंप्रकाशत्वसिद्धये स्वप्नावस्थां वक्तुं पूर्वपक्षयति ।

सन्ध्ये सृष्टिराह हि ॥ ३ । २ । १ ॥

तथा चानयोः पादयोर्हेतुहेतुमद्भावः सङ्गतः, सिद्धे विरक्तेऽस्य पादस्य प्रवृत्तेः । तत्त्वंपदार्थयोर्मध्ये त्वंपदार्थस्योद्देश्यत्वा "न्न स्थानतोऽपी"त्यतः प्राक्स्वावस्थानिर्मुक्तत्वं प्रतिपाद्यते । ततश्चा पादसमाप्तेस्तत्पदार्थो विचार्यते । तत्र स्वप्नावस्थाया जाग्रदानन्तर्यात्स्वयंज्योतिष्ट्वसिद्धौ स्पष्टसाधनत्वाच्चादौ विचारः । जाग्रदवस्थायां सूर्यादिप्रकाशसत्त्वेनात्मनः स्वप्रकाशत्वं दुर्ग्रहम्, स्वप्ने तु सूर्याद्यभावेऽपि प्रत्यक्षतया दृश्यमानात्सुग्रहमिति स्वप्नस्य स्वयंज्योतिष्ट्वसिद्धौ स्पष्टसाधनत्वं मन्तव्यम् । एवं हि स्वप्नमधिकृत्य श्रूयते, "न तत्र रथा न रथ-

योगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते" इत्यादि । तत्र संशयः, किं स्वप्नसृष्टिर्व्यावहारिकी घटादिवत्, उत शुक्तिरजतवन्मायामात्रमिति । पूर्वपक्षे घटादिवत्सत्यस्वप्नावस्थातो जीवस्य पृथक्करणायोगाद्ब्रह्माभेदरूपवाक्यार्थान्वयासिद्धिः फलम्, सिद्धान्ते तत्सिद्धिरिति भेदः । तत्रेदं पूर्वपक्षसूत्रं "सन्ध्य"इति । सन्ध्ये जाग्रत्सुषुप्त्योः सन्धौ भवे स्वप्ने सृष्टिर्व्यावहारिक्येव । हि यतः श्रुतिरेवमाह "अथे"ति ॥

## निर्मातारं चैके पुत्रादयश्च ॥ ३ । २ । २ ।

किं चैके शाखिनोऽस्मिन्नेव स्वप्ने कामानां निर्मातारं तथा जीवमिव परमात्मानमामनन्ति "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण"इति । एषु चक्षुरादिकरणेषु सुप्तेषु निर्व्यापारेष्वित्यर्थः । ननु श्रुतौ कामानां बुद्धिवृत्तिविशेषाणां निर्माता परमात्मेति श्रूयते, नार्थनिर्मातेत्यत आह "पुत्रादयश्चे"ति । काम्यन्त इति व्युत्पत्त्या पुत्रादय एव कामा इत्यर्थः । तन्निर्मातृत्वं परमात्मान इत्यर्थः ॥

तथा च स्वप्नसृष्टिः सत्येति प्राप्ते प्रत्याह ।

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ । २ । ३ ।

तुः पूर्वपक्षनिरासार्थः । स्वप्नसृष्टिः मायामात्रं शुक्तिरजतवत् । कुतः । कार्त्स्न्येनोचितदेशकालादिसम्पत्त्या बाधाभावेन चानभिव्यक्तस्वरूपत्वात् । न हि रथादीनामुचितो देशः स्वप्ने सम्भवति, देहान्तर्नाडीप्रविष्टमनोऽवच्छिन्नसाक्षिनिष्ठत्वात् । नाप्युचितः कालोऽस्ति, घटि-

कामात्रवर्तिनि स्वप्ने बहुसंवत्सरसाध्यसंसरणस्य दर्शनात् । तस्मात्प्रातिभासिक एव स्वप्नप्रपञ्चः । यदुक्तं "अथ रथान्रथयोगान्पथः सृजत" इतीश्वरकर्तृकां सृष्टिं श्रुतिराहेति सृष्टेः सत्यत्वमिति, तच्छ्रुत्यैव "न तत्र रथा न रथयोगा न पन्थानो भवन्ती"त्यादिकया स्वप्ने रथाद्यभावबोधिकया परिहृतम् । अनुमाने चोचितदेशादिजन्यत्वमुपाधिः हेत्वसिद्धिश्च । श्रुत्यन्तरे "स हि कर्ते"ति "स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती"ति च स्वप्नसृष्टेर्जीवकर्तृकत्वश्रवणात् । स्वयं विहत्य पूर्वदेहं निश्चेष्टं कृत्वा स्वयं निर्मायापूर्वं स्वप्नदेहं सम्पाद्य स्वेन भासा स्वीयान्तःकरणवृत्त्या स्वेन ज्योतिषा स्वरूपचैतन्येन चेत्यर्थः । तथा च "कामं कामं पुरुषो निर्मिमाण" इत्यत्रापि जीव एव निर्माता ज्ञेयः ॥

ननु स्वप्नस्य मिथ्यात्वे सत्यशुभाशुभसूचकत्वं न स्यादित्यत आह ।

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३ । २ । ४ ॥**

स्वाप्नगजादिप्रकाशो सत्य एव वस्तुतः सत्यसूचकः सत्यस्य साध्वसाधुसूचनस्य हेतुः । तथा हि "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने" इत्यादि श्रुतेरवगम्यते । आचक्षते च स्वप्नाध्यायविदः शुभाशुभसूचकत्वं स्वप्नस्येत्यर्थः । यद्यपि प्रकाशस्यार्थोपरागेणैव सूचकत्वमिति वस्तुतः सत्यत्वमप्रयोजकम्, तथाऽपि रजतस्य सत्यहर्षादिजनकत्ववत्सत्यसूचकमविरुद्धमिति तात्पर्यम् ॥

ननु यथेश्वरः सङ्कल्पमात्रेण जगत्सृजति, एवं तदंशो जीवोऽपि सङ्कल्पमात्रेण निमिषेन स्वाप्नं जगत्सृजतु ।

तथा चोचितनिमित्ताभावान्मिथ्यास्वप्नसृष्टिरित्यसङ्गत-मित्यत आह ।

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ३ । २ । ५ ॥**

जीवेश्वरयोरभेदेऽपि मायथैश्वर्यस्य तिरोहितत्वान्न जीवस्य सङ्कल्पमात्रेण स्रष्टृत्वमिति परिहाराभिप्रायः । जीवस्य तिरोहितमीश्वरत्वं परस्यात्मनोऽभिध्यानादभेदाभ्यासरूपध्यानप्राप्तादीश्वरप्रसादादभिव्यक्तं भवति । कुतः । तत ईश्वरादज्ञाताद्बन्धः ज्ञाताद्विपर्ययो मोक्ष इति श्रुतिर्दर्शयति । तस्मादीश्वरप्रसादरहितानां नेश्वरत्वाभिव्यक्तिरित्यर्थः । श्रुतिस्तु पठ्यते "ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकाम" इति । देवं स्वप्रकाशमीश्वरमहंत्वेन साक्षात्कृत्य सर्वपाशानां मिथ्याज्ञानरागादीनां क्लेशानामपहानिः क्षयो भवति । एवं क्षीणैः क्लेशैस्तत्कार्यजन्ममरणक्षयो भवति । निर्गुणविद्याफलमुक्त्वा सगुणविद्याफलमाह "तस्ये"ति । तस्येश्वरस्याभिमुख्येन ध्यानादुक्तहानिद्वयापेक्षया तृतीयमणिमाद्यैश्वर्यं देहभेदे देहविशेषे सिद्धदेहे प्राप्तं भुक्त्वा निर्गुणविद्योदये केवलोऽद्वितीय आप्तकामो निरतिशयानन्दात्मनैवावतिष्ठत इति क्रममुक्तिवाक्यार्थः ॥

ननु जीवस्येश्वरत्वतिरोभावे को हेतुरित्याशङ्क्याह ।

**देहयोगाद्वा सोऽपि ॥ ३ । २ । ६ ॥**

सोऽपि जीवस्येश्वरत्वतिरोभावो देहेन्द्रियादियोगात् । यथा भस्मयोगाद्वह्नेः प्रकाशनसामर्थ्यतिरोभाव-

स्तद्वदित्यर्थः । ननु जीवस्येश्वरत्वाभाव एवास्त्विति शङ्कां 'वा' शब्देन निरस्यति । अभेदस्य श्रुतिसहस्रसिद्धत्वादिति भावः । तस्मादुचितसामग्र्यभावाज्जाग्रदवसरे बाधितत्वाच्च शुक्तिरूप्यवन्मायामात्रं स्वप्नदर्शनमिति तदवस्थाविनिर्मुक्तोऽयमात्मेति सिद्धम् ॥

एवं बाह्यकरणोपरमरूपं स्वप्नमात्मनः स्वप्रकाशस्वार्थं परीक्ष्यान्तःकरणोपरमरूपां सुषुप्तिं स्वप्नानन्तरभाविनीं तस्य ब्रह्मत्वाय निरूपयति ।

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३ । २ । ७ ॥**

सुषुप्तेः स्वप्ननाशरूपत्वात्तदानन्तर्याच्च हेतुहेतुमद्भाव आनन्तर्यं वा सङ्गतिः । तत्र सुषुप्तवाक्यानि विप्रतिपन्नानि दृश्यन्ते । "तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवती"ति । तत्रासु स्वप्नाद्यवस्थासु यत्रावस्थायामेतद्वाह्येन्द्रियोपरमणं यथा स्यात्तथा सुषुप्तः संहृतबाह्येन्द्रिय इति यावत् । समस्तोऽविशेषवृत्तिः । सम्प्रसन्नः संहृतान्तःकरणश्च । यदा स्वप्नं न विजानाति तदा नाडीषु सृप्त इत्यर्थः । क्वचिन्नाडीभिः सरणानन्तरं पुरीतति सुषुप्तिः श्रूयते "ताभिः प्रत्यवसृप्य पुरीतति शेत"इति । क्वचित्परमात्मनि सुषुप्तिः श्रूयते "य एषोऽन्तर्हृदय आकाशस्तस्मिन्शेत"इति "सता सोम्य तदा सम्पन्नो भवती"त्यादिभिः । तत्र संशयः, किं जीवस्य नाडीपुरीतत्परमात्मनां मध्ये यत्र कुत्र चित्सुषुप्तिः, उत नाडीपुरीतत्प्रवेशानन्तरं परमात्मन्येवेति । अत्र पूर्वपक्षे सुषुप्तिस्थानविकल्पाज्जीवस्य ब्रह्मैक्यानियमः सुषुप्तौ भ्रमनिवृत्तावपीषद्ब्रह्मैक्यप्राप्तेरनियमादिति फलम्, सिद्धान्ते तन्नियमः,

इति भेदः । तत्रैकयागनिष्पादकत्वेन श्रुतव्रीहियववदेकशयननिष्पादकनाड्यादीनां विकल्प इति प्राप्ते ब्रूमः । तदभावः स्वप्नाभावः सुषुप्तिर्नाडीष्वात्मनि चेति नाड्यादीनां समुच्चय एव, न विकल्प इत्यर्थः । समुच्चयश्च नाडीपुरीतत्प्रवेशं विना सत्सम्पत्तेरभावात्तयोर्नाडीपुरीततोर्गुणत्वेन परमात्मनः प्रधानत्वेन ज्ञेयः । कुतः । तच्छ्रुतेस्तस्य नाड्यादीनां सुषुप्तस्थानत्वस्य श्रुतत्वात् । उक्तसमुच्चयानङ्गीकारे श्रुतीनां सङ्ग्रहो न स्यादिति भावः । किं च विभोर्जीवस्य स्वप्नावस्थायां नाडीपुरीततोः सञ्चारोऽन्तःकरणाद्युपाधेः सत्त्वात्सम्भवति, उपाधिसञ्चारं विना स्वतस्तस्य सञ्चाराभावात् । सुषुप्तौ तूपाध्यभावान्नाडीपुरीततोः शयनं जीवस्य न सम्भवतीत्यपि द्रष्टव्यम् ॥

## अतः प्रबोधोऽस्मात् ॥ ३ । २ । ८ ॥

यतः परमात्मैव सुषुप्तिस्थानम्, अत एव हेतोरस्मात्परमात्मनो जीवस्य प्रबोध उपदिश्यते । प्रबोधकाले कस्माज्जीवात्मानः समुत्तिष्ठन्तीति प्रश्ने परमात्मनः सकाशादुत्तिष्ठन्तीति श्रवणात्, आत्मनोऽन्यस्य सुषुप्तिस्थानत्व इदं श्रवणं बाध्येत । अन्यत्र सुषुप्तस्यान्यस्मादुत्थानायोगादिति भावः । तस्मात्सुषुप्तौ मिथ्याज्ञानाभावमात्रेणैषद्ब्रह्मसम्पत्तेः सत्त्वान्मूलाज्ञाननिवृत्तौ साकल्येन ब्रह्मसम्पत्तिरविरुद्धेत्यस्ति जीवस्य ब्रह्मत्वनियम इति सिद्धम् ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३ । २ । ९ ॥

सुषुप्त्यन्ते परमात्मनः सकाशाज्जीव उत्तिष्ठतीति परमात्मैव सुषुप्तिस्थानमित्युक्तम् । तदयुक्तम्, सुप्तादन्यस्य प्रबोधसम्भवेन सुप्तस्य नाड्यादिस्थानत्वेऽप्यविरोधादित्याक्षेपात्सङ्गतिः । पूर्ववदेव फलम् । तत्र यः सुप्तो

जीवः स एवोत्तिष्ठति, उत स वाऽन्यो वेत्यनियमः, इति संशये, जलराशौ क्षिप्तबिन्दोरिवानियम इति प्राप्ते ब्रूमः । यः सुप्तो जीवः स एवोत्तिष्ठति, नान्यः । कुतः । "कर्मे"त्यादिपञ्चभ्यो हेतुभ्यः । दिनद्वयसाध्यकर्मणोऽर्धं कृत्वा सुप्तः पुनरुत्थायावशिष्टमर्धं कर्म करोति । 'अनु'शब्देन प्रत्यभिज्ञा "योऽहं पूर्वदिने काशीनाथमद्राक्षं सोऽहमिदानीं मणिकर्णिकायां स्थितोऽस्मी"त्याद्याकारा सूच्यते । पश्चात्सेतुं गतस्य स तादृशः काशीनाथ इत्यादिस्मरणं स्मृतिशब्देनोच्यते । "पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैवे"त्यादिश्रुतिजातं शब्दः । अयनं गमनमायः । प्रतिनियतगमनं प्रतिन्यायः । स यथा भवति तथा योनिं शरीरं प्रति सुप्तः पुनरागच्छति जागरायेत्यर्थः । कर्मविद्याविधयो विधिशब्देनोच्यन्ते । यदि सुप्तस्य पुनर्नोत्थानं तदोक्तहेतवो बाध्येरन्नित्यर्थः । तस्मात्सुप्त एवोत्तिष्ठतीति सिद्धम् ॥

एवमवस्थात्रयनिर्मुक्तत्वमात्मनस्तद्द्रष्टुरव्यभिचारिण उक्त्वा, मूर्च्छावस्था किं सुषुप्तावेवान्तर्भवति, उतातिरिक्ता वेति सन्देहे, अतिरेके प्रमाणाभावात्सुषुप्तिरेव मूर्च्छेत्युपजीव्योपजीवकभावेन पूर्वपक्षे, सिद्धान्तः ।

## मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ ३ । २ । १० ॥

पूर्वपक्षे मूर्च्छावस्थातो विवेकार्थं यत्नो न कार्य इति फलम्, सिद्धान्ते तु यत्नः कर्तव्य इति बोध्यम् । न तावत्स्वप्नजागरिते मूर्च्छावस्था, ज्ञानाभावात् । नापि मरणावस्था, प्राणोष्मणोः सत्त्वात् । नापि सुषुप्तिः, वैलक्षण्यात् । मुग्धस्य शरीरे कम्पः, भयंकरं वदनम्,

निश्चले उन्मीलिते नेत्रे, निश्चलश्च प्राणोऽवतिष्ठते । नैवं सुषुप्तौ भवति । तस्मात्परिशेषादर्धसम्पत्तिर्मुग्धावस्थाऽतिरिक्तैव । ननु मुग्धेऽपि बाह्यान्तःकरणाभावेन सत्सम्पत्तेः सुषुप्ताविवाविशेषात्कथमर्धसम्पत्तिरिति चेत्, सत्यम् । न हि ब्रह्मणाऽर्धसम्पत्तिं मुग्धस्य ब्रूमः । किं तु सुषुप्त्यवस्थायां ये धर्माः प्रसन्नवदनत्वनिमीलितनेत्रत्वप्राणोच्छ्वासविशेषविज्ञानराहित्यादयस्तत्र विशेषविज्ञानराहित्यादिनाऽर्धेन धर्मजातेन मूर्च्छावस्थायाः सम्पन्नत्वादर्धेन मरणावस्थाधर्मजातेन कम्पनादिना च युक्तत्वादर्धसम्पत्तिर्मूर्च्छेत्युच्यत इत्यनवद्यम् ॥

एवमुद्देश्यत्वेन प्रथमं जिज्ञास्यं त्वंपदार्थं स्वप्रकाशं सर्वावस्थानिर्मुक्तं निर्विशेषं संशोध्य, तज्जिज्ञासोपरमानन्तरं जिज्ञास्यं विधेयं तत्पदार्थमवसरसङ्गत्या शोधयितुं तस्य निर्विशेषत्वमाह ।

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ३ । २ । ११ ॥

"सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरस" इत्यादिना ब्रह्मणः सविशेषत्वं श्रूयते । "अस्थूलमनण्वि"त्यादिना निर्विशेषत्वम् । तत्र संशयः, किमुभयश्रुत्यनुसारादुभयरूपं ब्रह्म, उतैकरूपम्, एकरूपमित्यत्रापि सविशेषं निर्विशेषं वेति । पूर्वपक्षे द्विरूपं ब्रह्म ध्येयम्, सिद्धान्ते निर्विशेषं ज्ञेयमेवेति फलभेदः । तत्र यथा मूर्च्छावस्थाया विरुद्धसुषुप्तिमरणावस्थोभयधर्मवत्त्वम्, तथा ब्रह्मणोऽप्युभयरूपत्वं भवतु, श्रुतत्वाच्च, इति दृष्टान्तेन पूर्वपक्षे सिद्धान्तः । न तावत्स्वतः परस्य ब्रह्मण उभयलिङ्गमुभयरूपत्वं सम्भवति, सत्यस्य वस्तुनो द्वैरूप्यायोगात् । न ह्येकमेव वस्त्वे-

कदा तद्वत्तदभाववच्च दृष्टम् । एतेन मूर्च्छादृष्टान्तो निरस्तः, वैलक्षण्यात् । नापि स्थानत उपाधितः परस्योभयरूपत्वं तात्त्विकं युक्तम्, अग्निसंयोगमात्रेण जलस्योष्णस्वभावत्वदर्शनात् । तस्मादेकरूपं ब्रह्म । तदप्येकरूपत्वं निर्विशेषत्वमेव । हि यतः सर्वत्र वेदान्तेषु ब्रह्मपरेषु "अशब्दमस्पर्श"मित्यादिषु सविशेषत्वनिरासेन ब्रह्मोपदिश्यते । तस्मान्निर्विशेषमेवैकरूपं ब्रह्म ॥

**न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ ३ ।२।१२॥**

ननु न निर्विशेषमेव ब्रह्म । कुतः । भेदात् । प्रतिविद्यं ब्रह्मण आकारभेदेन भेदात् । कस्यांचिद्विद्यायां चतुष्पाद्ब्रह्मोपदिश्यते, कस्यांचित्षोडशकलम्, कस्यांचित्त्रैलोक्यशरीरं वैश्वानराख्यम् । तस्मात्सविशेषमपि श्रुतिसामर्थ्यादङ्गीकर्तव्यमिति चेन्न । प्रत्येकं प्रत्युपाधि, अतद्वचनाद्ब्रह्मणः परस्याभेदस्यैव श्रवणादित्यर्थः । "यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मे"त्यादिश्रुतौ ब्रह्मणः सर्वोपाधिषु पृथिव्यादिष्वभेदः श्रूयते । अस्यां पृथिव्यां तेजोमयः स्वप्रकाशो नाशरहितो यः पुरुषो, यश्चात्मानं देहमधिकृत्य वर्तमानः शारीरो जीवः, तावुभौ सर्वेषां भूतानामुपकारकौ सन्तौ मधु सः शरीरपृथिव्यवच्छिन्नपुरुषोऽयमेव योऽयमात्मा सर्वकारणभूत इति श्रुत्यर्थः ॥

**अपि चैवमेके ॥ ३ । २ । १३ ॥**

किं चैके शाखिन एवं भेदनिन्दापूर्वकमभेदमेव ब्रह्मणः समामनन्ति "मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती"ति ।

शास्त्राचार्यसंस्कृतमनसैवेदं ब्रह्म ज्ञातव्यम् । ज्ञाते त्विह ब्रह्मणि किञ्चिदपि भेदजातं नास्ति । यस्त्वविद्याकृतं नानारूपं सदिति पश्यति स मरणान्मरणं पुनः पुनः प्राप्नोतीत्यर्थः ॥

ननु सगुणनिर्गुणपरश्रुतिद्वये सति कथं निर्गुणे ब्रह्मणि पक्षपातः, तत्राह ।

**अरूपवदेव हि तत्प्रधानत्वात्** ॥ ३ । २ । १४ ॥

रूपादिहीनं निर्विशेषमेव ब्रह्मावधारयितव्यम्, न सविशेषम् । कुतः । "अस्थूल"मित्यादिनिषेधशास्त्रस्य निर्गुणब्रह्मप्रधानत्वादित्यर्थः । उपासनावाक्यानां सविशेषे तात्पर्याभावात्, तात्पर्याङ्गीकारे वाक्यभेदापत्तेः, इतरेषां सविशेषवाक्यानां प्रत्यक्षादिसिद्धप्रपञ्चानुवादकत्वेन निर्विशेषपरत्वात्तदनन्यत्वमित्यादिना प्रपञ्चमिथ्यात्वसाधनाच्च न सविशेषत्वं ब्रह्मणः प्रामाणिकमिति भावः ॥

ननु तर्हि सविशेषश्रुतीनां का गतिरत आह ।

**प्रकाशवच्चावैयर्थ्यात्** ॥ ३ । २ । १५ ॥

यथा सूर्यादिप्रकाशो वक्रवंशाद्युपाधिना वक्र इव दीर्घ इवर्जुरिव भवति, तद्वद्ब्रह्मापि पृथिव्याद्युपाधिवशात्तत्तदाकारमिव भवति । तादृशौपाधिकाकारः सविशेषश्रुतीनां गतिरिति तासामवैयर्थ्यान्निरर्थकत्वाभावान्न विरोध इत्यर्थः ॥

ननु कीदृशं निर्विशेषं ब्रह्मेत्यत आह ।

**आह च तन्मात्रम्** ॥ ३ । २ । १६ ॥

तन्मात्रं चैतन्यैकरसं निर्विशेषं श्रुतिराह "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे"ति । एकरसे दृष्टान्तः । यथा हि लोके सैन्धवघनो लवणमूर्तिविशेषोऽन्तर्बहिश्च विलक्षणरसशून्यः सर्वो लवणैकरसः, तथाऽयमात्माऽन्तर्बहिश्च भेदरहितः सर्वः स्वप्रकाशचिदेकतानस्तिष्ठतीति श्रुत्यर्थः ॥

किं च प्रपञ्चनिषेधमुखेन ब्रह्मण उपदेशात्, ब्रह्म निर्विशेषम्, सविशेषत्वे सविशेषवाक्यैरेव तत्सिद्धेर्निर्विशेषोपदेशानर्थक्यं स्यादित्याह ।

**दर्शयति चाथो अपि स्मर्यते ॥ ३ । २ । १७ ॥**

"अथात आदेशो नेति नेती"त्यादिश्रुतिर्निषेधमुखेनैव ब्रह्म दर्शयति । पञ्चभूतोक्त्यानन्तर्यमथशब्दार्थः । तस्याः परब्रह्मधीहेतुत्वमतःशब्दार्थः । इतिशब्दः पूर्वोक्तपञ्चभूतपरामर्शी । तन्निषेधावधिभूतः परमात्मेत्यादेश उपदेश इत्यर्थः । सूत्रगताथोशब्दस्तथाऽर्थः । तथा स्मर्यते च, निषेधमुखेन ब्रह्मेत्यर्थः । "ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते" ॥ इति भगवद्गीतायाम् । आदिमत्कार्यमस्य न विद्यत इत्यनादिमत्कार्यरहितमित्यर्थः । न सत् कारणं कस्य चित्, नासत् कार्यं स्वयं कस्य चिदित्यर्थः ॥

**अत एव चोपमा सूर्यकादिवत् ॥ ३ । २ । १८ ॥**

यत एव परप्रतिषेधोपदेश्यो निर्विशेषोऽयमात्मा, अत एवौपाधिकं सविशेषत्वमादाय जलसूर्यकादिवदित्युपमा गृह्यते । 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्'। उपाधिना क्रियते भेदरूपो देवः

क्षेत्रेष्वेवमजोऽयमात्मा ॥" इति । "एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥" इति । ज्योतिःस्वभावो विवस्वानेकोऽपि तत्तत्पात्रे गता भिन्ना अपोऽनुगच्छन् बहुधा क्रियते, एवमयमात्मा देवः स्वप्रकाशोऽजः कूटस्थो नित्य एकोऽपि भिन्नेषु क्षेत्रेष्वनुगच्छन्नुपाधिना भेदरूपः क्रियत इति योजना । तथा चैतद्दृष्टान्तबलादपि ब्रह्मणो निर्विशेषत्वमिति सूत्रकृत्तात्पर्यम् ॥

दृष्टान्तवैषम्यं शङ्कते ।

**अम्बुवदग्रहणात्तु न तथात्वम् ॥ ३ । २ । १९ ॥**

ननु यथाऽम्बु सूर्यादिभ्यो मूर्तेभ्यो भिन्नं दूरस्थं प्रतिबिम्बोपाधिभूतमुपलभ्यते, तद्वद्व्यापकादात्मनो दूरस्थोपाधेरग्रहणादात्मनो मूर्तत्वाभावाच्च विषमो दृष्टान्त इति न तथात्वं न सूर्यकादितुल्यत्वमिति शङ्कार्थः ॥

तत्रोत्तरमाह ।

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ ३ । २ । २० ॥**

यथा सूर्यप्रतिबिम्बस्य जलेऽन्तर्भूतस्य जलगतवृद्धिह्रासादिभाक्त्वं न वास्तवम्, एवमविकृतस्य परमात्मनो देहाद्युपाध्यन्तर्भावाद्देहगतवृद्धिह्रासादिभाक्त्वं न स्वाभाविकम्, इत्येतावदंशेनोभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्याद्भवति सूर्यादिदृष्टान्तः । न हि सर्वात्मना साम्यं दृष्टान्तदार्ष्टान्तिकयोः शक्यते वक्तुम्, दृष्टान्तत्वविरोधादिति भावः ॥

किं चागमसमधिगम्येऽर्थे न चोद्यमित्याह ।

**दर्शनाच्च ॥ ३ । २ । २१ ॥**

परस्यैव ब्रह्मणो देहान्तरानुप्रवेशस्य प्रतिबिम्बभावरूपस्य श्रुतौ दर्शनादित्यर्थः । "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षीभूत्वा पुरः पुरुष आविश"दिति श्रुतिः । पुरः शरीराणि द्विपादयुक्तानि चतुष्पादयुक्तानि च चक्रे । कृत्वा पुरश्चक्षुराद्यभिव्यक्तेः पूर्वं स पुरुष ईश्वरः पक्षी लिङ्गशरीरी भूत्वा पुरः शरीराणि सृष्टान्याविशदित्यर्थः । तस्मान्निर्विशेषमेव चैतन्यैकरसं ब्रह्मेति सिद्धम् ॥

ननु निषेधश्रुतिभिर्ब्रह्म निर्विशेषं सिध्यतीति यदुक्तं तदयुक्तम्, ताभिर्ब्रह्मणोऽपि निषिद्धत्वादित्याक्षेपसङ्गत्याऽधिकरणमारभ्यते ।

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ ३ । २ । २२ ॥**

तत्र पूर्वपक्षे ब्रह्मासिद्धिरिति फलम्, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चे"त्युपक्रम्य, पञ्चभूतात्मकं रूपद्वयं तेजोऽबन्नात्मकं भूतत्रयं मूर्तं स्थूलात्मकं प्रत्यक्षम् वाय्वाकाशात्मकं भूतद्वयं परोक्षममूर्तमिति द्वेधा विभज्य, तत्र मूर्तस्य सूर्यश्चक्षुर्गोलकं च कार्यं सारः, अमूर्तस्य तु सूर्यान्तर्वर्ती करणात्मको हिरण्यगर्भश्चक्षुर्गोलके दक्षिणे चक्षूरूपेण वर्तमानः सार इति चोक्त्वा, तस्य करणात्मकलिङ्गशरीररूपस्य हिरण्यगर्भस्य पुरुषशब्दवाच्यस्य वासनामयानि स्वाप्नरूपाणि मायामयानि दर्शयित्वा रूपद्वयवतो ब्रह्मणः चैवारूपं बोधयितुमिदमारभ्यते "अथात आदेशो नेति नेति

न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्य"मिति । उपक्रमे 'वाव'शब्द एवकारार्थः । सपरिकररूपद्वयोपन्यासानन्तर्यमथशब्दार्थः । रूपद्वयोपन्यासस्य ब्रह्मज्ञानहेतुत्वं ब्रह्मणो वक्तव्यत्वेन परिशेषो वाऽतश्शब्दार्थः । इतिशब्देन ब्रह्मणो रूपद्वयं सपरिकरं यदुपन्यस्तं तत्परामृश्यते । इतिशब्देन परामृष्टं सर्वं नञ्वीप्सया निषिध्यते । "नेति नेती"ति वीप्सया विषयजातस्य निषेधे ह्यविषयः प्रत्यगात्मा निषेधावधिभूत इति निर्विचिकित्सं ज्ञानं भवति । एवं "नेति नेती"ति ब्रह्मोपदेशं कृत्वा नेति नेतीत्युपदेशस्य कोऽर्थ इत्याकांक्षायां तमेवोपदेशं निर्वक्ति "न ह्येतस्मा"दिति । हि यस्मादेतस्मान्नेति नेतीत्यादिष्टाद्ब्रह्मणोऽन्यद्व्यतिरिक्तं नास्ति, ब्रह्मैव तु परमस्ति, तस्मान्नेति नेतीत्युच्यत इति निर्वचनवाक्यस्यार्थः । यद्वा, नेति नेतीति यः प्रपञ्चनिषेधरूप आदेशः कृतः, स 'एतस्मा' दित्यनेन परामृश्यते । एतस्मान्नेति नेतीति प्रपञ्चनिषेधरूपाद्ब्रह्मोपदेशनादन्यत्परमुपदेशनं न ह्यस्तीत्यर्थः । ब्रह्मणो नामधेयकथनव्याजेनापि स्वरूपमाह "अथे"ति । नेति नेतीति निषेधस्य ब्रह्मविषयत्वाभावसूचनार्थोऽथशब्दः । नामधेयमाह "सत्यस्य सत्य"मिति । तद्व्याचष्टे श्रुतिः "प्राणा"इति । प्राणशब्देन लिङ्गशरीरमुच्यते । तस्य सत्यत्वं स्थूलदेहापेक्षया स्थायित्वं द्रष्टव्यम् । एष परमात्मा सत्यस्यापि परं सत्यमिति वस्तुगतिः । तत्र नेति नेतीति निषेधस्य को वा विषय इति सन्दिह्यते, किं प्रपञ्चो ब्रह्म चेत्युभयमपि निषिध्यते, उतैकमिति । अत्रापि किं प्रपञ्चो निषिध्यते, उत ब्रह्मेति । तत्र नियामकाभा-

वादुभयमपि प्रतिषिध्यत इति प्राप्तम् । यद्वा निरधिष्ठाननिषेधायोगादेकं ब्रह्मैव निषिध्यते, प्रपञ्चस्य प्रत्यक्षसिद्धत्वेन निषेधायोगात् । इति प्राप्ते ब्रूमः । ब्रह्मणो यद्रूपद्वयं सर्वारिकरं प्रकृतं प्रधानमेतावत्त्वमियत्तापरिच्छिन्नं तत्प्रकृतैतावत्त्वं तदेव प्रनिषेधति नेति नेतीत्यादिश्रुतिः, 'इति' शब्दस्य प्रधानत्वेन प्रकृतपरामर्शित्वात् । ब्रह्म तु न प्रधानत्वेन प्रकृतं "द्वे वाव ब्रह्मणो रूपे" इति रूपद्वयात्मकजगदुपसर्जनत्वेनैवोक्तत्वात् । इतश्च ब्रह्मणो न निषेधः । हि यस्मात्ततः प्रपञ्चनिषेधादनन्तरं भूयो ब्रह्मास्तीति ब्रवीति "न ही"त्यादि "परमस्ती"त्यन्तं निर्वचनवाक्यं, तस्मादित्यर्थः । ब्रह्मणोऽपि निषेधे किमस्तीति ब्रूयादिति भावः । निर्वचनवाक्यस्य द्वितीयव्याख्यायां तु, ततः प्रपञ्चनिषेधस्य परस्ता"दथ नामधेय"मित्यादि वाक्यं ब्रह्म ब्रवीति । अतो नेतीत्यादिवाक्येन निषेधमात्रं न ज्ञेयम् । किं तु तेन निषेधेन भावरूपं ब्रह्म ज्ञातव्यमिति सूत्रभागस्यार्थः । न च प्रपञ्चनिषेधे प्रत्यक्षविरोधः, तस्य व्यावहारिकप्रामाण्यादित्यनवद्यम् ॥

ननु यदि ब्रह्मास्ति तर्ह्युपलभ्येत । तत्राह ।

**तदव्यक्तमाह हि ॥ ३ । २ । २३ ॥**

तद्ब्रह्माव्यक्तं श्रुत्यतिरिक्तमानागोचरम् । हि यतः श्रुतिराह "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते" इत्यादिना ब्रह्मणः प्रत्यक्षाद्यगोचरत्वम् । अन्यैर्देवैरिन्द्रियान्तरैरित्यर्थः । नेति नेतीति य आत्मा व्याख्यातः स एषोऽगृह्योऽग्राह्यः । हि यस्मान्न गृह्यते ग्रहणायोग्य इत्यर्थः ॥

यदूश्येऽनात्म्येऽनिरुक्ते ऽनिलयनेऽभय प्रतिष्ठा विन्दते अथ सोऽभय गतो भवति यदा[1] ह्येवैष एतस्मिन्नुदरमन्तर कुरुते अथ तस्य भयं भवति' "एष ह्येवानन्दयाति' भीषाऽस्माद्वात' पवत" इत्यादिषु ।

## देहयोगाद्वा सोऽपि ॥ ५ ॥

सोऽपि तिरोभावोऽपि[2] देहयोगद्वारेण वा भवति, सूक्ष्माचिच्छक्तियोगद्वारेण वा । सृष्टिकाले देहावस्थेनाचिद्वस्तुना योगा[3]द्भवति, प्रलयकाले नामरूपविभागानर्हातिसूक्ष्माचिद्वस्तुयोगात् । अतोऽनभिव्यक्तस्वरूपत्वात्स्वप्ने जीवो न रथादीन् सङ्कल्पमात्रेण स्रष्टुं शक्नोति । "तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चने"ति सर्वेषु सुप्तेषु[4] जागरणं सर्वलोकाश्रयत्वमित्यादयो हि परमपुरुषस्यैव[5] सम्भवन्ति । अतो जीवानामऽल्याल्पकर्मानुगुणफला[6]नुभवार्थं तावन्मात्रकालावसानांस्तदेकानुभाव्यानर्थानुत्पादयति ।

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ६ ॥

इतश्च स्वाप्नार्था न जीवसङ्कल्पपूर्वकाः, यतः, स्वप्नोऽभ्युदयानभ्युदययोः सूचकः श्रुतेरवगम्यते—

"यदा[1] कर्मसु काम्येषु स्त्रिय स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने[7]" इति ।

अथ स्वप्ने पुरुष कृष्ण कृष्णदन्त पश्यति स एन[8] हन्तीत्यादेश्च । स्वप्नाध्यायविदश्च स्वप्नं शुभाशुभयोः सूचकमाचक्षते । सूचकत्वं च स्वसङ्कल्पायत्तस्य नोपपद्यते । तथा चाशुभस्यानिष्टत्वाच्छुभस्य सूचकमेव स्रष्टा पश्येत् । अतः स्वप्ने सृष्टिरीश्वरेणैव कृता ॥

सन्ध्याधिकरणं समाप्तम् ॥ १ ॥

१ यथेति लि० पु० ।    २ अपिशब्द इह नास्ति लि० पु० ।
३ सयोगादिति मु० पु० ऽत्र ।    ४ स्वप्नेष्विति लि० पु० ।
५ ०स्यैवह्येति मु० पु० हि पुन ।    ६ फलाफलेति लि० पु० ।
७ तस्मिँश्चस्वप्नप्रदर्शन इति लि० पु० ।
८ पुरुष कृष्णदन्त पश्यति स एवमिति लि० पु० प्रमाद' ।

अथ तदभावाधिकरणम् २। **तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७॥**

इदानीं सुषुप्तिस्थानं परीक्ष्यते। इदमाम्नायते– "अथ यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः[1] स्वप्नं न[2] विजानात्यासु तदा नाडीषु सृप्तो[3] भवती"ति, तथा, "अथ यदा सुषुप्तो[4] भवति यदा न कस्यचन वेद हिता नाम नाड्यो[5] हि द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" इति, तथा, "यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य! तदा सम्पन्नो भवती"ति। एवं नाड्यः पुरीतद्ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयन्ते, किमेषां विकल्पः समुच्चयो वेति विशये निरपेक्षत्वप्रतीतेर्युगपदनेकस्थान[6]वृत्त्यसम्भवाच्च विकल्प इति प्राप्ते उच्यते–

'तदभाव' इति, तदभावः स्वप्नाभावः सुषुप्तिर्नाडीषु पुरितत्यात्मनि च भवति। एषां[7] स्थानानां समुच्चय इत्यर्थः। कुतः। 'तच्छ्रुतेः,' त्रयाणां स्थानत्वश्रुतेः। न च कार्यभेदेन समुच्चये सम्भवति पाक्षिकबाधगर्भो विकल्पो न्याय्यः। सम्भवति च[8] प्रासादखट्वापर्यङ्कत्रयाणामादीनां कार्यभेदः। तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ, ब्रह्म तु पर्यङ्कस्थानीयम्। अतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम्।

**अतः प्रबोधोऽस्मात् ॥ ८ ॥**

यतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम्, अतोऽस्माद्ब्रह्मण एव जीवानां प्रबोधः श्रूयमाण उपपद्यते– "सत आगम्य[9] न विदुः सत आगच्छामहे" इत्यादिषु।

तदभावाधिकरणं समाप्तम् ॥ २ ॥

अथ कर्मानुस्मृतिशब्दविध्यधिकरणम् ३। **स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥**

१ सम्पन्न इति मु० पु०, सम्पन्नमिति लि० पु०।
२ कश्चनेति मु० पु० ऽधिकम्। ३ सुप्त इति पु० द्वयेपि।
४ सुप्त इति लि० पु०। ५ सनाड्य इति लि० पु०।
६ एकस्स्थानेति लि० पु० प्रमाद। ७ तेषामिति मु० पु०।
८ चकारो नास्ति मु० पु०। ९ आगत्येति मु० पु०।

किं सुषुप्त एव प्रबोधसमये उत्तिष्ठत्युतान्य इति संशये अस्य सकलोपाधिविनिर्मुक्तस्य ब्रह्मणि सम्पन्नस्य मुक्तादविलक्षणत्वेन प्राचीनशरीरेन्द्रियादिसम्बन्धाभावादन्य इति प्राप्त उच्यते—

'स एव त्वि'ति । 'तु'-शब्दः पक्षं व्यावर्त्तयति । स एवोत्तिष्ठति । कुतः । 'कर्मानुस्मृतिशब्दविधिभ्यः' । कर्म तावत्सुषुप्तेन पूर्वं कृतं पुण्यपापरूपं तत्त्वज्ञानात्प्राक् तेनैव भोक्तव्यम् । अनुस्मृतिरपि य एवाहं सुप्तः स एव प्रतिबुद्धोऽस्मीति । शब्दोऽपि सुषुप्तप्रबुद्ध[1]स्य एवेति दर्शयति—"त इह व्याघ्रो वा सिंहो वा वृको वा[2] वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा[3] भवन्ती"ति । विधयश्च मोक्षार्थाः सुषुप्तस्य मुक्तत्वे ऽनर्थकाः स्युः । न चासौ सर्वोपाधिविनिर्मुक्त आविर्भूतस्वरूपः, 'तद्यत्रैतत्सुषुप्त' इति सुषुप्तं प्रकृत्य "नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मी[4]ति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामी"ति वचनात् । मुक्तस्य "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षत् क्रीडन् रममाणः" "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति सर्वज्ञत्वादि श्रूयते । अतः सुषुप्तः संसरन्नेवायास्त[5]सर्वकरणो ज्ञानभोगाद्यशक्तो विश्रम[6]स्थानं परमात्मानमुपसम्पद्याऽऽश्वस्तः पुनर्भोगायोत्तिष्ठति ॥

कर्मानुस्मृतिशब्दविध्यधिकरणं समाप्तम् ॥ ३ ॥

अथ मुग्धाधिकरणम् ४ ।

**मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥**

मुग्धमधिकृत्य चिन्त्यते । किमियं[7] मूर्च्छा सुषुप्त्यादिष्वन्यतमाऽवस्था उतावस्थान्तरमिति विशये सुषुप्त्यादीनामन्यतमावस्थायामेव मूर्च्छा-

१ ०प्रबुद्धमिति लि० पु० । २ वृको वेति नास्ति लि० पु० ।
३ तत्तथेति लि० पु०, तथेति मु० पु० ।
४ ०त्ययमस्मीति लि० पु० । ५ आयस्तेति लि० पु० ।
६ विश्रामेति पु० । ७ किमयमिति मु० पु० ।

प्रसिद्ध्युपपत्तेरवस्थान्तरकल्पने प्रमाणाभावादन्यतमावस्थेति प्राप्त उच्यते–

'मुग्धेऽर्द्धसम्पत्ति'रिति । मुग्धे पुरुषे या तस्यावस्था सा मरणार्द्धसम्पत्तिः[1] । कुतः । 'परिशेषात्' । न तावत्स्वप्नजागरौ, ज्ञानाभावाद् निमित्तवैरूप्यादाकारवैरूप्याच्च । न सुषुप्तिमरणे, निमित्तं हि मूर्च्छाया अभिघातादि । पारिशेष्येण मरणार्द्धसम्पत्तिर्मूर्च्छा । मरणं हि सर्वप्राणदेहसम्बन्धोपरतिः, सूक्ष्मप्राणदेहसम्बन्धावस्थितिर्मूर्च्छा ॥

मुग्धाधिकरणं समाप्तम् ॥ ४ ॥

अथोभयलिङ्गाधिकरणम् ५ ।

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

दोषदर्शनाद्वैराग्योदयाय जीवस्यावस्थाविशेषा निरूपिताः । इदानीं ब्रह्मप्राप्तितृष्णाजननाय प्राप्यस्य ब्रह्मणो निर्दोषत्वकल्याणगुणात्मकत्वप्रतिपादनायारभते ।

तत्र जागरस्वप्नसुषुप्तिमुग्ध्युत्क्रान्तिषु स्थानेषु तत्तत्स्थानप्रयुक्ता जीवस्य ये दोषा,स्ते तदन्तर्यामिणः परस्य ब्रह्मणोऽपि तत्रतत्रावस्थितस्य सन्ति नेति विचार्य्यते । किं युक्तम् । सन्तीति । कुतः । तत्तदवस्थशरीरेऽवस्थानात् । ननु 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' 'स्थित्यदनाभ्यां चे'त्यादिषु परस्याकर्मवश्यत्वेन दोषाभाव उक्त,स्तत्कथमऽकर्मवश्यस्य परस्य ब्रह्मणस्तत्तत्स्थानसम्बन्धाद्दोष उच्यते । इत्थमुच्यते, कर्माण्यपि देहसम्बन्धमापादयन्त्य ऽपुरुषार्थ[2]जननानि भवन्तीति 'देहयोगाद्वे'त्यत्रोक्तम् । तच्च देहसम्बन्धस्यापुरुषार्थत्वेन भवति, इतरथा कर्माण्येव दुःख जनयिष्यन्ति, किं देहसम्बन्धेन । अतोऽकर्मवश्यत्वे सत्यऽपि नानाविधाशुचिदेहसम्बन्धोऽपुरुषार्थ एव[3] । अतस्त[4]न्नियमनार्थं स्वेच्छया

१ मरणायाऽर्द्धसम्पत्तिरिति मु० पु० ।
२ ०यन्ति पुरुषार्थेति लि० पु० ।
३ अपुरुषार्थस्यैवेति लि० पु० ।
४ तत्तदिति लि० पु० ।

म्यमृत'' इत्यन्तर्यामिणोऽमृतत्ववचनात्[1] तत्रतत्र स्वेच्छया नियमनं कुर्वंतस्तत्तत्सम्बन्धप्रयुक्तापुरुषार्थप्रतिषेधात् । जीवस्य तु तत् स्वरूपन्तिरोहितमिति 'पराभिध्यानात्तु तिरोहित'मित्यत्रोक्तम् । ननु स्वेच्छया कुर्वतोऽपि तत्तद्वस्तुस्वभावायत्ताऽपुरुषार्थसम्बन्धोऽवर्ज्जनीय इत्युक्तम् । नैतद्युक्तम् । न ह्यचिद्वस्त्वपि स्वभावतोऽपुरुषार्थस्वरूपम्, कर्मवश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुषसङ्कल्पादेकमेव वस्तु कालभेदेन पुरुषभेदेन च सुखाय दुःखाय च भवति । वस्तुस्वरूपप्रयुक्ते तु तादूप्ये सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव[2] वा स्यात्, न चैव दृश्यते । तथा चोक्तम्—

''नरकस्वर्गसञ्ज्ञे वै पापपुण्ये द्विजोत्तम ।
वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ॥
कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः ।
तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ॥
तदेव कोपाय यतः प्रसादाय च जायते ।
तस्माद् दुःखात्मकं नास्ति न च किञ्चित्सुखात्मक''मिति ।

अतो जीवस्य कर्मवश्यत्वात्तत्तत्कर्मानुगुण्येन तत्तद्वस्तुसम्बन्ध एवापुरुषार्थः स्यात्, परस्य तु ब्रह्मणः स्वाधीनस्य स एव सम्बन्धस्तत्तद्विचित्रनियमनरूप[3]लीलारसायैव स्यात् ।

## अपि चैव[4]मेके ॥ १३ ॥

अपि चैके शाखिन एकस्मिन्नेव देहसंयोगे जीवस्यापुरुषार्थं परस्य तु तदभावं नियमनरूपैश्वर्याऽऽयत्तदीप्तियोगं च स्वशब्देनाधीयते—

''द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिष्वजाते ।
तयोरन्यः पिप्पलं स्वाद्व-
त्त्यनश्नन्नन्योऽभिचाकशीती''ति ।

---

१ ०वचनेनेति लि० पु० । २ दुःखायैवेति लि० पु० नास्ति ।
३ ०नियमरूपेति मु० पु० । ४ चैनमिति लि० पु० ।

अथ स्यात्—"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति ब्रह्मात्मकजीवानुप्रवेशपूर्वकं नामरूपव्याकरणमिति ब्रह्मणोऽपि तदात्मभूतस्य देवमनुष्यादिरूपत्वं तन्नामभाक्त्वं चास्ति। ततश्च ब्राह्मणो यजेतेत्यादिविधिनिषेधशास्त्रगोचरत्वेन कर्मवश्यत्वमवर्जनीयमिति, तत्राह—

**अरूपवदेव हि तत् प्रधानत्वात् ॥ १४ ॥**

देवादिशरीरानुप्रवेशे तेनतेन रूपेण युक्तमप्य'रूपवदेव त,'द्ब्रह्म रूपरहिततुल्यमेव, जीववच्छरीरित्वनिबन्धनं कर्मवश्यत्व[1]मस्य न विद्यत इत्यर्थः। कुतः। निर्वाहकत्वेन 'प्रधानत्वात्'। "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्मे"ति सर्वानुप्रवेशेऽपि नामरूपकार्यास्पर्शेन नामरूपयोर्निर्वोढृत्वमेव ब्रह्मणः प्रतिपादयति। ननु तच्छरीरकत्वेन तदन्तर्यामित्वे कथ'मरूपव'[2]दिति रूपसम्बन्धरहिततुल्यत्वमुच्यते। इत्थम्, यथा जीवस्य तज्जन्यसुखदुःखभाक्त्वेन तत्तद्रूपसम्बन्ध,स्तथा[3] तदभावात् परस्य ब्रह्मणोऽरूपत्वम्[4]। विधिनिषेधशास्त्राण्यपि कर्मवश्या[5]नेवाधिकुर्वन्ति। तस्मादरूपतुल्यमेव परं ब्रह्म। ततश्चान्तर्यामिरूपेणावस्थितमपि ब्रह्म निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गमेव।

ननु च "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिभिर्निर्विशेषप्रकाशैकस्वरूपं ब्रह्मावगम्यते, अन्यत्तु सर्वज्ञत्वसत्यसङ्कल्पत्वजगत्कारणत्वसर्वान्तरात्मत्वसत्यकामत्वादिकं नेति नेतीत्यादिभिः प्रतिषिध्यमानत्वेन मिथ्याभूतमित्यवगन्तव्यम्। तत्कथं कल्याणगुणाकरत्वनिरस्तनिखिलदोषत्वरूपोभयलिङ्गत्वं ब्रह्मण इति, तत्राह—

**प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥**

---

१ जीवशरीरित्वं निर्बन्धनकर्मवश्यत्वमिति लि० पु०।
२ तत्तदिति मु० पु०।
३ तथातथेति लि० पु०।
४ अरूपवत्त्वमिति मु० पु०।
५ ०वश्यमिति लि० पु०।

यथा च "सत्य ज्ञानमनन्त ब्रह्म"त्यादिवाक्यावैयर्थ्यात् प्रकाशस्वरूपस्य ब्रह्मणोऽभ्युपगम्यते, तथा सत्यसङ्कल्पत्वसर्वज्ञत्वसर्वजगत्कारणत्वसर्वात्मकत्वनिरस्तनिखिलाविद्यादिदोषत्वाद्यभिधायिवाक्यार्थावैयर्थ्यादुभयलिङ्गमेव ब्रह्म[1]।

## आह च तन्मात्रम् ॥ १६ ॥

किञ्च "सत्यं ज्ञानमनन्त'मित्यादि वाक्य ब्रह्मणः प्रकाशस्वरूपतामात्र प्रतिपादयति, नान्यत् सत्यसकल्पत्वादिक[2] वाक्यान्तरावगतं निषेधति*। 'नेति नेती'ति निषेधस्य च विषयो[3]ऽनन्तरमेव वक्ष्यते।

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

दर्शयति च वेदान्तगण[4] कल्याणगुणाकरत्वं निरस्तनिखिलदोषत्व च–

"तमीश्वराणा परमं महेश्वर-
न्त दैवताना[5] परम च दैवतम्"।
"स कारण करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः॥
न तस्य कार्यं करण च[6] विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते।
पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च"॥
"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयन्तपः"
"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः"।
"स एको ब्रह्मण आनन्दः"
"यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।

---

१ ०वाक्यानि स्ववैयर्थ्यादुभयलिङ्गमेव ब्रह्मेति लि० पु०।
२ सत्यसंकल्पस्वरूपत्वादिकमिति लि० पु०। * निषेधयतीति मु० पु०।
३ च निषेधस्य विषय इति मु० पु०, च निषेधस्य च विषय इति लि० पु०।
४ वेदान्तवाक्यगण इति मु० पु०।
५ तं दैवतानामिति मु० पु०, तद्दैवतानामिति लि० पु०।
६ न तस्य कार्यं चेति लि० पु०।

आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" ॥

"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जन"मित्यादिः ।

स्मर्यते च–

"यो मामजमनादिं च वेत्ति लोकमहेश्वरम्" ।

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" ॥

"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्त्तते" ॥

"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" ॥

"सर्वज्ञः[1] सर्वकृत्सर्वशक्तिर्ज्ञानबलर्द्धिमान् ।
अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोऽनादिमान् वशी ॥
क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः ।
निरवद्यः परः प्राप्तेर्निरधिष्ठो[2]ऽक्षरः क्रमः" इत्यादि ।

अतः[3] सर्वत्रा[4]वस्थितस्यापि ब्रह्मण उभयलिङ्गत्वाद् न तत्त[5]त्स्थानप्रयुक्ताः दोषाः परं ब्रह्म स्पृशन्ति ।

## अत एव चोपमा सूर्य्यकादिवत् ॥ १८ ॥

यतो नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मण उभयलिङ्गत्वाद् न तत्प्रयुक्त[6]दोषभाक्त्वम्, अत एव जलदर्पणादिप्रतिबिम्बितसूर्य्यादिवत् परमात्मा तत्रतत्रा[7]वस्थितोऽपि निर्दोष इति शास्त्रेषूपमा क्रियते–

'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥
एक एव हि भूतात्मा भूतेभूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रव"दित्यादिषु ।

१ सर्वज्ञ इति नास्ति मु० पु० । २ परप्राप्तिनिरधिष्ठ इति लि० पु० ।
३ अत इति नास्ति लि० पु० । ४ सर्वावस्था–इति मु० पु० ।
५ लिङ्गत्वात् तत्तत्दिति मु० पु०, प्रमाद. ।
६ न तत्तस्थानप्रयुक्तेति मु० पु० । ७ तत्रेति सकृत् लि० पु० ।

अत्र[1] चोदयति—

**अम्बुवदऽग्रहणात्तु[2] न तथात्वम् ॥ १९ ॥**

'तु'—शब्दश्चोद्यं द्योतयति । अम्बुवदिति सप्तम्यन्ताद्वतिः । अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते, न तथा पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते । अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते,[3] न परमार्थतस्तत्रस्थाः । इह तु "यः पृथिव्यां तिष्ठन्' योऽप्सु तिष्ठन्' य आत्मनि तिष्ठ"न्नित्येवमादिना परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते । अत सूर्यादे[4]रम्बुदर्पणादिप्रयुक्तदोषाऽननुषङ्गस्तत्रतत्रस्थित्यभावादेव । अतो 'न तथात्वम्,' दार्ष्टान्तिकस्य न दृष्टान्ततुल्यत्वमित्यर्थः ।

परिहरति—

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्ज-**
**स्यादेवं दर्शनाच्च ॥ २० ॥**

पृथिव्यादिस्थानान्तर्भावात् स्थानिनः परस्य ब्रह्मणः स्वरूपतो गुणतश्च पृथिव्यादिस्थानगतवृद्धिह्रासादिदोष[5]भाक्त्वमात्र सूर्यादिदृष्टान्तेन निवर्त्यते । कथमिदमवगम्यते । 'उभयसामञ्जस्यादेवम्,' उभयदृष्टान्तसामञ्जस्यादेवमिति निश्चीयते । "आकाशमेकं हि यथा घटादिषु पृथग्भवेत्," "जलाधारेष्विवांशुमा"निति दोषवत्स्वऽनेकेषु वस्तुषु[6] वस्तुतोऽवस्थितस्याकाशस्य वस्तुतोऽनवस्थितस्यां[7]शुमतश्चोभयस्य दृष्टान्तस्योपादानं हि परमात्मनः पृथिव्यादिगतदोषभाक्त्वनिवर्त्तनमात्रे प्रतिपाद्ये समञ्जसं भवति[8] । घटशरावादिषु[9] यथा वृद्धिह्रासभाक्तु पृथक्पृथक्संयुज्यमानमप्याकाशं[10] वृद्धिह्रासादिदोषैर्न स्पृश्यते, यथा च जलाधारेषु

१ उत्तरमिति लि० पु० । २ अग्रहणोक्तमिति लि० पु० प्रमादः ।
३ तत्रस्था इति गृह्यन्ते इति क्वचित । ४ सूर्यादिरिति लि० पु० प्रमादः ।
५ ०ह्रासादिस्थानेति लि० पु० प्रमाद । ६ वस्तुष्विति नास्ति लि० पु० ।
७ अनवस्थितो—इति लि० पु० तु प्रमाद. । ८ सम भवतीति लि० पु० ।
९ घटकरकादिष्विति लि० पु० ।
१० ०भात्त्वपृथक्पृथक्तयुज्यमानमस्याकाशमिति लि० पु० ।

विषमेषु[1] दृश्यमानो ऽशुमास्तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते, तथाऽय परमात्मा पृथिव्यादिषु नानाऽऽकारेष्वचेतनेषु चेतनेषु च स्थितस्तत्तद्ग[2]तवृद्धिह्रासादिदोषैरसस्पृष्टः सर्वत्र[3] वर्त्तमानोऽप्येक एवास्पृष्टदोषगन्धः कल्याणगुणाकर एव। एतदुक्त भवति–यथा जलादिषु वस्तुतोऽनवस्थितस्याशुमतो हेत्वभावाज्जलादिदोषानभिष्वङ्गः, तथा पृथिव्यादिष्ववस्थितस्यापि परमात्मनो दोषप्रत्यनीकाकारतया दोषहेत्वभावान्न दोषसम्बन्ध इति[4]। 'दर्शनाच्च'–दृश्यते चैव सर्वात्मना साधर्म्याभावेऽपि विवक्षितांशसाधर्म्याद् दृष्टान्तोपादान सिंह इव माणवक इत्यादौ। अतः स्वभावतो निरस्तनिखिलाज्ञानादिदोषगन्धस्य समस्तकल्याणगुणाकरस्य पृथिव्यादिस्थानतोऽपि[5] न दोषसम्भवः।

अथ स्यात्–"द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्तमेव[6] चे"ति प्रकृत्य समस्तस्थूलसूक्ष्मरूप प्रपञ्च[7] ब्रह्मणो रूपत्वेन परामृश्य "तस्य ह वा एतस्य पुरुषस्य रूपं यथा माहारजन[8] वास" इत्यादिना ऽऽकारविशेष चा[9]भिधाय "अथात आदेशो नेति नेति[10] न ह्येतस्मादिति नेत्यन्यत्परमस्ती"ति सर्वं प्रकृत ब्रह्मणः प्रकार'मिति'–शब्देन परामृश्य तत्सर्वं प्रतिषिध्य सर्वविशेषाधिष्ठान सन्मात्रमेव ब्रह्म, विशेषास्त्वेवविध स्वस्वरूपमजानता ब्रह्मणा कल्पिता इति दर्शयति, अतः कथमुभयलिङ्गत्व ब्रह्मणः–इत्यत्राह–

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः॥ २१॥**

---

१ विषयेष्विति लि० पु०। २ तदिति सकृत् लि० पु०।
३ सर्वत्रेति लि० पु०। ४ दोषसर्वथा इति–इति लि० पु०।
५ अपिर्नास्ति लि० पु०। ६ एवेति लि० पु० नास्ति।
७ ०रूपचेति लि० पु०।
८ महारजनमिति मु० पु० महारजतमिति लि० पु०।
९ चाकारविशेष चेति मु० पु०। १० नेति नेतीति–इति मु० पु०।

नैतदुपपद्यते य,द्ब्रह्मणः प्रकृतविशेषवत्त्व 'नेति नेती'ति प्रतिषिध्यत इति, तथा सति भ्रान्तजल्पितायमानत्वात् । न हि ब्रह्मणो विशेषणतया प्रमाणान्तराप्रज्ञात सर्वं तद्विशेषणत्वेनोपदिश्य पुनस्तदेवानुन्मत्तः प्रतिषेधति । यद्यपि निर्दिश्यमानेषु केचन पदार्थाः प्रमाणान्तरप्रसिद्धा,स्तथाऽपि तेषा ब्रह्मणः प्रकारत्वमप्रज्ञातमेव । इतरेषां तु स्वरूपं ब्रह्मणः प्रकारत्व चाप्रज्ञातम् । अतस्तेषामनुवादा[1]सम्भवादत्रैवोपदिश्यन्ते । अतस्तन्निषेधो नोपपद्यते । यस्मादेव तस्मात् प्रकृतैतावत्त्व ब्रह्मणः प्रतिषेधतीद वाक्यम् । ये[2] ब्रह्मणो विशेषाः प्रकृतास्तद्विशिष्टतया ब्रह्मणः प्रतीयमानेयत्ता नेति नेतीति[3] प्रतिषिध्यते-'नेतिनेति'नैवनैवम्, उक्तप्रकारमात्रविशिष्ट न भवति ब्रह्म । उक्तप्रकारविशिष्टतया या ब्रह्मण इयत्ता[4] प्रकृता सा ऽऽ'इति'[5]-शब्देन परामृश्यत इत्यर्थः । यतश्च निषेधानन्तरं ब्रह्मणो भूयो गुणजात ब्रवीति, अतश्च प्रकृतविशेषणयोगितामात्रं[6] ब्रह्मणः प्रतिषेधति । ब्रवीति हि भूयो गुणजात-"न ह्येतस्मादिति नेत्यन्यत् परमस्ति अथ नामधेय सत्यस्य सत्यमिति प्राणा वै सत्य तेषामेष सत्य"मिति । अयमर्थ -'इति नेति ने'ति यद्ब्रह्म[7] प्रतिपादितम्, तस्मादेतस्मादन्यद्वस्तु परं न ह्यस्ति, ब्रह्मणो ऽन्यत्स्वरूपतो गुणतश्चोत्कृष्ट नास्तीत्यर्थः । तस्य च ब्रह्मणः सत्यस्य सत्यमिति नामधेयम् । तस्य च निर्वचन "प्राणा वै सत्यं तेषामेष सत्य"मिति । 'प्राण'-शब्देन प्राणसाहचर्याज्जीवाः परामृश्यन्ते । ते तावत् सत्यम्, वियदादिवत्स्वरूपान्यथाभावरूपपरिणामाभावात्, 'तेषामेष सत्यं,' तेभ्योऽप्येष परमपुरुषः सत्यम् । जीवानां कर्मानुगुण्येन ज्ञानसङ्कोचविकासौ विद्येते, परमपुरुषस्य त्वऽपहतपाप्मनस्तौ न विद्येते, अतस्तेभ्योऽप्येष सत्यम् । ततश्चैवं

---

१ अनुपादान-इति लि० पु० । २ ये तु-इति मु० पु० ।
३ नेतिनेति-इति पु० द्वयेऽपि । ४ ०विशिष्टतया ब्रह्मणस्तत्रेयत्तेति लि० पु० ।
५ सानेति-इति लि० पु० । ६ ०विशेषयोगित्वमात्रतामिति लि० पु० ।
७ इति नेति यद्ब्रह्मेति लि० पु० ।

वाक्यशेषोदितगुणव्रातयोगा[1]च्चेति नेतीति ब्रह्मणः सविशेषत्वं न प्रतिषिध्यते, अपि तु पूर्वप्रकृतेयत्तामात्रम् । अत उभयलिङ्गमेव परं ब्रह्म ।

[2] ब्रह्मणः प्रमाणान्तरागोचरत्वेन तत्सम्बन्धितया मूर्त्तामूर्त्तादिरूपानुवादेन तन्निषेधासम्भवात् प्रकृतेयत्ताप्रतिषेध उक्तः । तदेव प्रमाणान्तरागोचरत्वं द्रढयति—

## तदव्यक्तमाह हि ॥ २२ ॥

तद्ब्रह्म प्रमाणान्तरेण नैव व्यज्यते, आह हि शास्त्रम्—

"न सदृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चनैनम्"
"न चक्षुषा गृह्यते नापि वाचे"त्यादि ।

हेत्वन्तरं चाह—

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २३ ॥

अपि च संराधने सम्यक्प्रीणने भक्तिरूपापन्ने निदिध्यासन एवास्य साक्षात्कारो नान्यत्रेति श्रुतिस्मृतिभ्यामवगम्यते ।

"नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूं स्वाम्" ॥
"ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते[3] निष्कलं ध्यायमान" इति श्रुतिः ।

स्मृतिरपि—

"नाहं वेदैर्न तपसा न दानेन न चेज्यया" ।
"भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे"ति ।

---

१ गुणजातयोगादिति लि० पु० ।
२ 'तथा चे'ति मु० पु० ऽत्राधिकम । ३ पश्यतीति मु० पु० ।

भक्तिरूपापन्न[1]मेवोपासन मराधनं तस्य प्रीणनमिति पूर्वमेवोक्तम् । अतो निदिध्यासनाय ब्रह्मस्वरूपमुपदिशद्[2] "द्वे वाव ब्रह्मणा[3]" इत्यादिशास्त्र ब्रह्मणो मूर्त्तामूर्त्तरूपद्वयादिविशिष्टता[4] प्रागसिद्धां नानुवदितुमम् ।

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २४ ॥**

इतश्च प्रकृतैतावत्त्वं प्रतिषेधति, न मूर्त्तामूर्त्तादिविशिष्टत्वम् यतः, साक्षात्कृतपरब्रह्मस्वरूपाणा वामदेवादीना दर्शने[5] प्रकाशादिवज्ज्ञानानन्दादिस्वरूपवन्मूर्त्तामूर्त्तादिप्रपञ्चविशिष्टताया अपि ब्रह्मगुणत्वावैशेष्य प्रतीयते—"तद्धैत[6]त्पश्यन्नृषिर्वामदेवः प्रतिपेदे अह मनुरभव सूर्यश्चे"त्यादि । ब्रह्मस्वरूपभूतप्रकाशानन्दादिश्च तेषा वामदेवादीना सराधनात्मके कर्मण्यऽभ्यासादुपलभ्यते, तद्वच्चाभ्यस्तसराधनाना तेषा मूर्त्तामूर्त्तादिविशिष्टत्वमप्यविशेषेण प्रतीयत इत्यर्थः ।

उक्तं ब्रह्मण उभयलिङ्गत्वमुपसहरति—

**अतोऽनन्तेन तथा हि लिङ्गम् ॥ २५ ॥**

'अत' उक्तैर्हेतुभिर्ब्रह्मणो'ऽनन्तेन' कल्याणगुणगणेन विशिष्टत्व सिद्धम्, तथा हि सत्युभयलिङ्ग ब्रह्मोपपन्न भवति ॥

उभयलिङ्गाधिकरण समाप्तम् ॥ ५ ॥

---

अथाऽहिकुण्डलाधिकरणम् ६ ।

**उभयव्यपदेशात्त्वऽहिकुण्डलवत् ॥ २६ ॥**

मूर्त्तामूर्त्तात्मकस्याचित्प्रपञ्चस्य ब्रह्मणो रूपत्व "द्वे वाव ब्रह्मणो रूपे" इत्यादिनोपदिश्यते, 'अथात आदेशो नेति नेती"ति[7] मूर्त्तामूर्त्ता-

---

१ भक्तिरूपोपपन्नमिति लि० पु० । २ उपादिशदिति मु० पु० ।

३ ब्रह्मस्वरूपेणेति लि० पु० प्रमादः ।

४ मूर्त्तामूर्त्तारूपस्य सवर्सविशिष्टामिति लि० पु० ।

५ दर्शनेनेति लि० पु० । ६ तथैतदिति लि० पु० ।

७ नेति नेति—इति लि पु ।

चिद्वस्तुरूपतया ब्रह्मण इयत्ता[1] प्रतिषिध्यते, "न ह्येतस्मादिति नेत्य-न्यत्परमस्ती'ति ब्रह्मणोऽन्यदुत्कृष्टं नास्ती[2]ति प्रतिपादितम् । तदुपपा-दनाया "ऽथ नामधेय सत्यस्य सत्यमिति प्राणा वै सत्य तेषामेष सत्य"-मिति, 'प्राण'–शब्दनिर्दिष्टेभ्यश्चेतनेभ्योऽप्येष सत्यमिति कदाचिदपि ज्ञानादिसङ्कोचाभावादुक्तम् । तथा, "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "पतिं विश्वस्यात्मेश्वर" "नित्यो नित्याना चेतनश्चेतनाना"मित्यादिश्रुतेश्चा-यमर्थोऽवगम्यते । तस्याचिद्वस्तुनो ब्रह्मरूपत्वप्रकार इदानीं चिन्त्यते ब्रह्मणो निर्दोषत्व[3]सिद्ध्यर्थम् ।

किमस्याचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेन उत प्रभाप्र-भावतोरिवैकजातियोगेन उत जीवस्येव विशेषणविशेष्यतयाऽशांशिभा-वेनेति । इह स्याप्यमान विशेषणविशेष्यभावमङ्गीकृत्य 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्र सूक्ष्म-चिदचिद्वस्तुविशिष्टाद्ब्रह्मण स्थूलचिदचिद्विशिष्टस्योत्पत्तिरनन्यत्व चो-क्तम् । किं युक्तम्[4] । 'अहिकुण्डलव'दिति । कुत' । 'उभयव्यपदे-शात्' । "ब्रह्मैवेद सर्वम्" "आत्मैवेद सर्व[5]"मिति तादात्म्यव्यपदे-शात्,[6] "हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य-नामरूपे व्याकरवाणी"ति[7] भेदव्यपदेशाच्चाऽहेः कुण्डलभाववत्[8]भावव-त्तस्यैव ब्रह्मणः सस्थानविशेषा एवाचिद्वस्तू'नि ।

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २७ ॥

'वा'–शब्दः पक्ष[9]व्यावृत्त्यर्थं । ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयो ब्रह्मणोऽपरिणामित्ववादिन्योऽपि बाधिता भवेयुः । अतो

---

१ ब्रह्मणोऽपीयत्तेति लि॰ पु । २ न ह्यस्तीति लि पु ।
३ निर्विशेषत्वेति लि पु । ४ नियुक्तमिति तु लि पु प्रमाद ।
५ आत्मैवेद सर्वम–इति लि पु नास्ति । ६ ०देशाच्चेति लि पु ।
७ अनुप्रविश्येत्यादि–इति लि पु ।
८ ०देशाच्चाहे. कुण्डलभावद्रज्जु–इति मु पु , ०देशात अहिकुण्डलभावरज्जु–इति लि॰ पु । ९ पक्षद्वयेति पु द्वयेऽपि ।

यथा तेजस्त्वेन प्रभातदाश्रययोर्भिन्नयोरपि तादात्म्यम्, एवमचित्प्रपञ्च-स्य[1] ब्रह्मणो रूपत्वमित्यर्थः ।

## पूर्ववद्वा ॥ २८ ॥

'वा'-शब्दः पक्षद्वयव्यावृत्त्यर्थः । एकस्यैव द्रव्यस्यावस्थाविशेषयोगेऽपि ब्रह्मस्वरूपस्यैवाचिद्द्रव्यरूपत्वादुक्तदोषादनिर्मोक्षप्रसङ्गः[2] । अथ प्रभातदाश्रययोरिवाचिद्ब्रह्मणोर्ब्रह्मत्वजातियोगमात्रं विवक्षितम् । एवं तर्ह्य[3]श्वत्वगोत्ववद्ब्रह्मापीश्वरे चिदचिद्वस्तुनोश्चानुवर्त्तमानं सामान्य-मिति सकलश्रुतिस्मृतिव्यवहारविरोधः पूर्ववदेव । 'अंशो नानाव्यपदेशात्' 'प्रकाशादिवत्तु नैवं परः' इति जीववत्पृथक्सिद्ध्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वं विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः, विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारोऽपि[4] मुख्यः, ब्रह्मणो निर्दोषत्वं च[5] रक्षितम् । तदेवं प्रकाशजातिगुणशरीराणां मणिव्यक्तिगुण्यात्मनः प्रत्यपृथक्सिद्धिलक्षणविशेषणतया[6] यथाऽंशत्वम्, तथेह[7] जीवस्याचिद्वस्तुनश्च ब्रह्म प्रत्यंशत्वम् ।

## प्रतिषेधाच्च ॥ २९ ॥

"स वा एष महानज आत्माऽजरोऽमरः "नास्य जरयैतज्जीर्यति[8]" इत्यादिभिर्ब्रह्मणोऽचिद्धर्मप्रतिषेधाच्च विशेषणविशेष्यत्वेनैवांशांशिभाव इत्यर्थः । अतः सूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म, स्थूलचिदचिद्विशिष्टं कार्यभूतं ब्रह्मेति कारणात्कार्यस्यानन्यत्वम्, कारणभूतब्रह्मविज्ञानेन कार्यस्य ज्ञाततेत्यादि सर्वमुपपन्नम्, ब्रह्मणो निर्दोषत्वं च रक्षितम् । ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेन चोभयलिङ्गत्वमपि सिद्धम् ॥

अहिकुण्डलाधिकरणं समाप्तम् ॥ ६ ॥

---

१ अचिद्वस्त्वचरस्येति लि पु ।
२ प्रसङ्ग इति लि पु नास्ति ।
३ एवं च तर्हीति लि पु ।
४ अपिर्नास्ति लि० पु० ।
५ चेति नास्ति मु पु० ।
६ ०विशेषणतयेति लि पु ।
७ तदेवमिति लि पु० ।
८ जीर्यतीति लि पु ।

अविशेषे तु प्रीतिसाधनत्वे सिद्धो ऽधिकारः । सर्वविशेषप्रत्यस्तसमये चाऽसाधकं वाक्यं स्यात् अबोधकम् । अविशेषार्थत्वात्सामान्यचोदनायाः ।

ननूक्तं 'प्रज्ञायते लिङादीनां व्यञ्जनीया प्रवर्त्तना प्रयोक्तृधर्म्म' इति । सत्यम् । आज्ञादिको नोपदेशः । ननूपदेशो ऽप्यनुग्रहाऽभिप्रायात्मक इति न प्रयोक्तृधर्म्मतामतिवर्त्तते ।

नैतत्सारम् । उपदेशे प्रैषादिष्विव प्रवृत्तिहेतुत्वाभावादभिप्रायस्य । तथा हि—

आज्ञादौ कर्म्मशक्तेर्हि नाऽभिप्रायानुरोधिता ।
उपदेशे कर्म्मशक्तिमवबुध्य प्रवर्त्तते ॥

प्रयत्नाऽभावः, वह्न्यभावइव धूमाभाव इति सामान्यवचनम् । अविशेषे तु प्रीतिसाधनत्वे सिद्धो ऽधिकार, सर्वविशेषप्रत्यस्तमये ऽसाधक वाक्य स्यादबोधकम्, अनवबोधकम् । कुतः? अविशेषार्थत्वात् सामान्यचोदनाया निर्विशेषस्य च सामान्यस्याऽयोगान्निर्विषयत्वाऽऽपत्तेः । अत्रान्तरे पूर्वोक्तमाक्षेप स्मारयति—ननूक्तमिति । प्रज्ञायते लिङादीनां व्यञ्जनीया प्रवर्त्तना । प्रयोक्तृधर्मो न णिचो यथानियतकर्तृकेति । प्रयोक्तुश्चोदनायामसंभवान्नास्ति प्रवर्त्तनेत्यर्थः । तत्राशे सिद्धसाधनतामाह— सत्य,माज्ञादिकः प्रयोक्तृधर्मो वेदे नास्त्येव, न तूपदेशः । चोदयति—ननूपदेशो ऽप्यनुग्रहा ऽभिप्रायात्मक इति न प्रयोक्तृधर्मतामतिवर्तते । तथा हि । महर्षय. स्वार्थमनपेक्षमाणाः परेषां हिताऽहितप्राप्तिपरिहारलक्षणाऽनुग्रहाभिप्राया उपदेशं प्रणयन्तीत्युपदेशो ऽपि प्रयोक्तृधर्म एवेत्यर्थः । परिहरति—नैतत्सारम् । कुत.? उपदेशे प्रैषादिष्विव प्रवृत्तिहेतुत्वाऽभावात् अभिप्रायस्य । तथा हि ।

आज्ञादौ कर्मशक्तेर्हि नाऽभिप्रायाऽनुरोधिता ।
उपदेशे कर्मशक्तिमवबुध्य प्रवर्त्तते ॥

आज्ञाभ्यर्थनयोर्हि कर्म स्वसमीहितसिद्धिं प्रति सामर्थ्यमनपे-

आज्ञाऽभ्यर्थनयोर्हि कर्म्मणः सामर्थ्यमनपेक्षमाणस्तद्विशेषमनाद्रियमाणस्तदभिप्रायाऽनुरोधादेव किंचित्समीहमानो ऽभिप्रायानुरोधी प्रवर्त्तते। अनुज्ञाने तु यद्यपि क्रियाफलात्प्रवृत्तिस्तथाप्यभिप्रायाऽऽनुकूल्यमपेक्षते। उपदेशे तु सत्यप्यनुग्रहाऽभिप्राये कर्म्मणः समीहितशक्त्यभावे न प्रवर्त्तते। कर्म्मशक्तिं त्ववबुद्ध्याऽप्रतारकत्वमात्रेण विप्रलम्भकनिमित्ताऽभावेन सत्यार्थवचनादसत्यनुग्रहाऽभिप्राये वक्तुः प्रवर्त्तते। तस्मादुपदेशे तु सत्यप्यनुग्रहाऽभिप्रायः शब्दार्थो ऽनुमतसाधनता तु कर्म्मणः। तत्प्रतिपादनं नाऽनुग्रहाऽभिप्रायमन्तरेणेति चेत्। न। मध्यस्थस्यापि प्रश्नादिदर्शनात्। न चैवं तावता शब्दार्थ-

क्षमाणो ऽत एव तद्विशेषं तस्य कर्मणः प्रयोजनविषयं विशेषमनाद्रियमाणः तदभिप्रायाऽनुरोधादेव कि चित्समीहमानस्तुष्टो ऽयमाज्ञापयिता कि चिदभिमत मे करिष्यतीति समीहमानो ऽभिप्रायानुरोधी प्रवर्तते। अनुज्ञाने ऽपि यद्यपि क्रियाफलात् प्रवृत्तिः तथाप्यभिप्रायाऽऽनुकूल्यमपेक्षते। उपदेशस्याज्ञादिभ्यो ऽभिप्रायाननुरोध विशेषमाह--उपपदेशे तु सत्यप्यनुग्रहाऽभिप्राये कर्मणः समीहितशक्त्याद्यभावे न प्रवर्त्तते। कर्मशक्ति त्ववबुध्योपदेष्टुरप्रतारकत्वमात्रेण विप्रलम्भनिमित्ताऽभावमात्रेण हेतुना सत्यार्थाद्वचनादसत्यप्यनुग्रहाऽभिप्राये वक्तु प्रवर्त्तते। तस्मादुपदेशप्रवृत्तेः प्रवृत्तिविषयसमीहितसाधनत्वभावाऽभावानुविधानादभिप्रायाऽननुविधानाच्च नाऽनुग्रहाऽभिप्राय शब्दार्थो ऽभिमतसाधनता तु कर्मणः शब्दार्थ इति साम्प्रतम्।

शङ्कते—तत्प्रतिपादनमभिमतसाधनताप्रतिपादन नाऽनुग्रहाऽभिप्रायमन्तरेण, तस्मादभिप्रायः शब्दार्थ इति चेत्। निराकरोति—न, मध्यस्थस्यापि प्रश्नादिदर्शनात्। प्रायेण खलु वरिवसितो

त्वम् । सर्वशब्दानां ज्ञातार्थत्वप्रसङ्गात् ।

नन्वेवं प्रमेयैव स्याच्चोदना, प्रमाणं चेष्यते, चोदनालक्षणोऽर्थो धर्म इत्यभिधानात् । तस्माच्छब्देन प्रमाणात्मना ऽभिधेयः प्रवृत्तिप्रतिपत्तिकार्योन्नेयः क्रियाविषयः प्रतिपत्तृस्थः स्वसंवेद्यः प्रवृत्तिहेतुरर्थश्चोदना ।

वार्त्तमेतत् । प्रवृत्तिहेतोर्वाक्यस्य चोदनात्वाभिधा-

पसन्नो जिज्ञासुः पृच्छन्ननुग्रहाऽभिप्रायेणाऽऽचार्येणोपदिश्यते । मध्यस्थेन तु जिज्ञासुना पृष्टस्य मध्यस्थस्योपदेष्टुरुपदेशदर्शनाद्व्यभिचार इत्युपदेशो नाऽनुग्रहाऽभिप्रायः इति । मा भूद्व्यभिचारः, तथापि नाऽभिप्रायार्थता । न हि यं यं विनोपदेशो न भवति स सर्व उपदेशार्थो, ऽपि त्वनन्यलभ्यः । अन्यथा सर्वेषामेव शब्दानामर्थज्ञानाऽधीननिष्पत्तित्वात् ज्ञानार्थता स्यादित्याह—न चैवतावता शब्दार्थत्वप्रसङ्गः ।

अत्र चोदयति—नन्वेवं सति समीहितसाधनतायाः प्रवर्त्तनात्वे प्रवर्त्तनैव चोदनेति तस्याः शब्दार्थत्वात्प्रमेयैव स्याच्चोदना, प्रमाणं चेष्यते, चोदनालक्षणो ऽर्थो धर्म इत्यभिधानात् । उपसंहारव्याजेन पूर्वपक्षी स्वपक्षमाह—तस्माच्छब्देन प्रमाणात्मना ऽभिधेयः प्रवृत्तिप्रतिपत्तिकार्योन्नेयः क्रियाविषयः प्रतिपत्तृस्थः स्वसंवेद्यः प्रवृत्तिहेतुरर्थश्चोदना प्रमाणात्मनेति न मम पक्षे प्रतिज्ञाव्याघातः । प्रमाणात्मनैव शब्देनाऽभिधानाच्चोदनायाः प्रवृत्तौ या प्रतिपत्तिः सैव कार्यं तदुन्नेय इति संबन्धग्रहणसंभवः क्रियाविषय इति क्रियायामस्य प्रवर्त्तकत्वमुपपन्नम् । प्रतिपत्तृस्थ इति । प्रतिपत्तुस्तन्निमित्तगोचरप्रवृत्तिप्रत्ययाधारत्वात् । स्वसंवेद्य इति । शब्दप्रभवायास्तदालम्बनायाः प्रतिपत्तेः स्वसंवेद्यत्वात्सा ऽपि तथेत्यर्थः । दूषयति—वार्त्तमेतत् । कुतः? प्रवृत्तिहेतोर्वाक्यस्य चोदनात्वाऽभिधानात् । चोदनेति क्रि-

नाचोदनेति क्रियायाः प्रवर्त्तकं वचनमिति । यत्र चाऽस्य प्रामाण्यं शब्दस्यैव तत्रास्तु किमनेनान्तर्गडुना ? न हि तत्र शब्दस्य कश्चिद्विरोधः । पदार्थान्तरवत् प्रामाण्यमस्तु, व्यर्थं विशेषणाऽभिधानम् । क्व चाऽस्य प्रामाण्यम् ? विषये चेत् । न, प्रमाणान्तरसिद्धेः । अपूर्वस्यापि च संसर्गस्य लोकवत्तदभावे ऽपि प्रतिपत्तेः । अदृष्टसाधनत्वे चेत् । शब्द-

यायाः प्रवर्त्तकं वचनमिति वचनाऽभिधेया चोदना वचनस्य चोदनात्वाभिधान भाष्यकरीय विरुध्यतइत्यर्थः । अपि च यत्र चास्य प्रामाण्यमभिधेयस्येष्यते शब्दस्यैव तत्रास्तु, किमन्तर्गडुना प्रमाणरहितेनाऽनेन ? शब्दस्यैव प्रमायां शक्तत्वात्[1] । तस्य तु स्वरूपेणाप्यप्रतीयमानत्वात् । न हि तत्र शब्दस्य कश्चिद्विरोधः । यद्युच्येत प्रामाण्येन शब्दाऽभिहितस्य स्वाकाङ्क्षावशान्नियोज्या साधनेति कर्त्तव्यता संसर्गावऽगतिर्नाऽन्यथेति प्रमाणात्मना सा त्वभिधेय एषितव्येत्यत आह—पदार्थान्तरवत् प्रामाण्यमस्तु, व्यर्थं विशेषाऽभिधानम् । यथैव हि क्रिया स्वपदेन प्रमाणत्वेनाऽनभिहिता ऽप्याकाङ्क्षावशात्कारकेण योग्येन संनिहितेनाऽऽत्मन संबन्धमवगमयति एवं कारकमपि क्रियायाः स्थाल्यामोदनं पचति चैत्र इत्यादौ, तथा ऽयमपि गमयिष्यतीति व्यर्थं प्रमाणत्वविशेषाऽभिधानमित्यर्थः ।

एवं तावदविचारितसिद्धं विषयं कृत्वोक्तं, सम्प्रति विषयं विचारयति—क्व चास्य प्रामाण्यम् ? शङ्कते—विषये यागादौ चेत् । निराकरोति—न प्रमाणान्तरसिद्धेः । अथ पदार्थसंसर्गे प्रमाणान्तरादृष्टे, तत्राह—अपूर्वस्यापि संसर्गस्य तदभावे लोकवत्प्रतीतेः । लोके स्थाल्यामोदनं पचतीति क्रियाकारकसंसर्गस्य तदभावे ऽपि भवदभिमतचोदनार्थाभावे ऽपि प्रतिपत्तेः । अदृष्टसाधनत्वे[3] यागादीनां श्रेयःसाधनत्वे चेत् । निराकरोति—शब्दस्यैवास्तु । अपि चाऽर्थभेदः शब्देन

१ प्रतिपत्तृशक्तित्वात् २ पु· पा· । २ नियोगसाधन· २ पु· पा· ।
३ अदृष्टत्वे २ पु· पा· ।

**स्यैवास्तु। शब्दकार्य्यत्वे चाऽव्युत्पन्नशब्दप्रवृत्तिः। शब्दज्ञाप्यत्वमन्य हेतुकस्याऽयुक्तमित्युक्तम्। अनुमानं च न स्वार्थप्रतिपत्त्या। तस्या अलिङ्गत्वात्। लिङ्गफलत्वात्। अनवस्थानात्। न च विषयप्रतिपत्त्या, विषयशब्देभ्यस्तत्सिद्धेः। प्रवृत्त्या ऽपि नात्मीयया। तदभावादितरेतराश्रयात्।**

क्रियते ज्ञाप्यते वा। शब्दकार्यत्वे अव्युत्पन्नशब्दप्रवृत्ति.। शब्दज्ञाप्यत्वमन्यहेतुकस्याऽन्यप्रमाणकस्याप्ययुक्तमित्युक्तम्। अदृष्टवत्त्वे यागादीनां संबन्धसंवेदनाऽसम्भवात्। यद्युच्येत अनुमानचोदनाख्यमर्थभेदं गृहीत्वा तत्र शब्दस्य संबन्धो ग्रहीष्यतइति। तत्राह—अनुमानं च न स्वाऽर्थप्रतिपत्त्या गृहीतसंबन्धम्। लिङ्गदर्शनजं खल्वनुमानं भवति, ततश्च न प्रतीतिर्भवितुमर्हति। तस्या अलिङ्गत्वात्। प्रमाणफलयोश्चैकत्वाऽनुपपत्तेः। अथ स्वप्रतिपत्त्यैकया लिङ्गभूतया प्रतिपद्य प्रतिपत्त्यन्तरं चोदनाविषय जनयिष्यति, ततो भेदाश्रये प्रमाणफलत्वे उपपत्स्येते इत्यत आह—अनवस्थानात्। लिङ्गभूतायाः प्रतिपत्तेरपि कारणान्तराऽभावात् स्वात्मप्रतिपत्त्यन्तरमेव कारणं वाच्यम्। एवं च तस्या अप्यात्मप्रतिपत्त्यन्तरमित्यनवस्थेत्यर्थः।

यद्युच्येत भावार्थविषया प्रतिपत्तिर्लिङ्गमस्य भविष्यतीति, तत्राह—न विषयप्रतिपत्त्या चोदनानुमानम्। कुत.? विषयशब्देभ्यस्तत्सिद्धेः। भावार्थरूपविषयप्रतिपत्तिसिद्धेः। अयमभिसंधिः। न तावद्दृष्टस्वलक्षणमेतदनुमानम्। न हि विषयप्रतिपत्त्या क्व चिदपि चोदना दृष्टचरी। कस्मात्? सामान्यतोदृष्टमनुमानमिन्द्रियादिवद्रूपाद्युपलब्धिलिङ्गकमेषितव्य भवतु, तच्चाऽनुपपन्नम्। विषयशब्देभ्य एव विषयप्रतिपत्तिलक्षणस्य कार्यस्योपपत्तेरिति। प्रवृत्तेरिति चेत्, साऽप्यात्मीया परकीया वा स्यात्, तत्र प्रथमं कल्पमपाकरोति—प्रवृत्त्या नात्मीयया लिङ्गेन चोदनाऽनुमानम्। कुतः? निमित्ताऽभावेन तद-

**प्रवृत्तिमेये शब्दवैयर्थ्यम् । शब्दमेये वृथा ऽनुमानम् । परप्रवृत्त्या ऽनुमिताद्विदितशब्दसङ्गतेः स्वयंशब्दादवबुध्य प्रवर्त्ततइति नोभयवैयर्थ्यमिति चेत् । न । परप्रवृत्त्या प्रवृत्तिहेतुमात्राऽवगमाद्विशेषाऽनिर्धारणात्तदभिधानप्रतीतेः । तन्मात्रप्रतिपत्त्या प्रवृत्त्ययोगात् । न हि सर्वः सर्वस्य प्रवृत्तिहेतुः । अनन्यहेतुकस्वभावत्वाच्च । शब्दपूर्वयैव प्रवृत्त्या**

भावात् । चोदनाऽवगमनिमित्तत्वे वा इतरेतराश्रयात् । अथ प्रवृत्त्यनिमित्तान्तरजन्मनैव सो ऽर्थो ऽनुमीयते, तथा च नेतरेतराश्रयं, तत्राह—प्रवृत्तिमेये शब्दवैयर्थ्यं, शब्दमेये वृथा ऽनुमानम् । परप्रवृत्त्या ऽनुमिताद्विदितशब्दसङ्गते. स्वयंशब्दादवबुध्य प्रवर्त्ततइति नोभयवैयर्थ्यमिति चेत् । शब्दस्य च प्रवृत्तिलिङ्गस्य चाऽनुमानस्य च न वैयर्थ्यमिति चेत् । निराकरोति—न, परप्रवृत्त्या कार्येण प्रवृत्तिहेतुमात्राऽवगमात् विशेषाऽनिर्धारणात् तन्मात्राभिधानप्रतीतेः । भवतु तन्मात्रप्रतीतिः, किं नश्छिन्न?मित्यत आह—तन्मात्रप्रतीत्या प्रवृत्त्ययोगात् । यदि हि स्वात्मनि प्रवृत्तिहेतुविशेषः कश्चित्प्रतीतः स्यात् स एव प्रवृत्तिदर्शनात्परत्राप्यनुमीयेत । न च विदितसङ्गते, शब्दानमवगम्य प्रवृत्तिरुपपद्येत, परप्रवृत्तिमात्रलिङ्गके तस्मिंस्तद्धेतुत्वमात्रेणाऽनुमानात् । स्वरूपाऽनवगतेर्न प्रवृत्तिहेतुता शब्दाऽवगतस्यापि भवितुमर्हतीत्यर्थः । अथ सामान्यमात्रेणाऽवगतः प्रवृत्तिहेतुः कस्मान्न भवती?त्यत आह—न हि सर्वस्य सर्वः प्रवृत्तिहेतुः । न खल्वाम्रादयो विशेषाः सर्वं सर्वं प्रवर्त्तयन्ति, अपि तु कश्चिदेव तद्विशेषावसाय एव प्रवृत्तिहेतुर्न सामान्यमात्रम् । तस्य सर्वत्राऽविशेषेण सर्वेषामाम्रादीना सर्वान्प्रति प्रवर्त्तकत्वप्रसङ्गादित्यर्थः । अपि च संबन्धसंवेदनाऽधीनप्रवृत्तित्वाच्छब्दस्य मानान्तरेण च सम्बन्धग्रहणमन्तरेण तदनुपपत्तेः । अनन्यहेतुकस्वभावत्वाच्च ।

ऽनुमानहेतुकमिति चेत् । अनुमानपूर्वकमेव शब्दात्प्रतीतेः किं नाऽनुमानप्रमाणक एव ? ।

अपि च नाऽदृष्टाऽतिरिक्तः प्रवृत्तिहेतुरनुमीयते । तस्य पूर्वसिद्ध्यपेक्षत्वात् प्रवृत्तेः दृष्टैरपि हेतुभिस्तदुपपत्तेः । प्रतिपत्त्राश्रितैश्च यैः प्रत्ययविशेष आश्रितः तैरालम्बनं वा-

शङ्कते—शब्दपूर्वयैव प्रवृत्त्या ऽनुमानात् शब्दहेतुक इति चेत् । निराकरोति—अनुमानपूर्वमेव शब्दात् प्रतीते. कि नानुमान-प्रमाणक एव । अयमभिसंधि । यथार्थे येन प्रतिपत्त्रा गृहीतसङ्गतिः शब्दस्तमेव प्रतिपत्तार तमर्थमवगमयति । स च सम्बन्धाऽवधा-रणसमयप्रवृत्त तदर्थविषयमात्मनः प्रमाण पुरोधाय प्रतिपत्ता शब्दा-दर्थमवगच्छतीति स्मारक मन्यते परम् । तदिह यद्यनुमानात् गृही-त्वा प्रवृत्तिहेतुं सबन्धिनं तत्र सबन्ध गृहीतवान् नूनमस्या अप्यर्थो ऽनुमानमेव पुरोधाय प्रतिपत्तव्यः स्यात् । तथा च तदनुवादता लिङः । न च लिङर्थोऽवगतिनिमित्तप्रवृत्तिहेतुकमनु-मान निमित्तमवगम पुरोधाय वर्त्ततइति साम्प्रतम् । प्रतिपत्त्रन्तरस्थं हि तत् । न च प्रवृत्त्यन्तरस्थबोध तद्विषयमपि प्रतिपत्त्रन्तरप्रतिपत्ति पुनरुक्तयति, अतिप्रसङ्गात् । अत एवाह । अनुमानप्रमाणक एवेति । नाचाऽऽगमाऽवगमगन्धो ऽप्यस्तीत्येवकारार्थः । प्रवृत्तिहेतुः प्रमाणा-न्तरदृष्टएव स्वात्मनि परत्राऽनुमातव्यो न पुनः शब्दैकसमधिगम्यो ऽप्रतीतचर इत्याह—अपि च न शब्दाददृष्टाऽतिरिक्तः प्रवृत्तिहेतुरनु-मीयते । तस्य तस्य पूर्वसिद्ध्यपेक्षितत्वात्प्रवृत्तेः । तस्य शब्दनिब-न्धनप्रवृत्तिलिङ्गकस्याऽनुमानस्य प्रवृत्तेरित्यर्थः । मा भूदनुमान शब्दा-न्तरप्रवृत्त्यन्यथानुपपत्त्या तु प्रवृत्तिहेतुरदृष्टपूर्वः कल्पयिष्यतइति चेत्, तत्राह—दृष्टैरपि हेतुभिस्तदुपपत्ते. । यच्चोक्त, प्रतिपत्तृस्थ इति । किमयं प्रत्ययो ऽभिमतो ऽर्थान्तर वा तत् । य आहुः प्रत्यय इति,

च्यम् । अन्यप्रमाणकत्वं च समर्थनीयम् । अर्थान्तरोपगमे ऽपि नित्यत्वे सर्वः सर्वदा सर्वत्राऽधिकृतः स्यात् अप्रमाणकं च तत्, शब्दात्कस्य चित् क चिन्नियोगप्रतीतेः । अनित्यत्वेपि न शब्दः कार्य्यं उक्तदोषत्वात् । निमित्तात्कामाद्वोत्पत्तौ कृतप्रयोगस्यापि प्रसङ्गः । यावन्निमित्तमनुवृत्तौ कृतप्रयोगस्यापि प्रागुपभोगात् प्रवृत्तिः स्यात् । तान् प्रत्याह—प्रतिपत्त्राश्रितश्च यैः प्रत्ययविशेषैः आश्रितः तैरालम्बनं वाच्यम् । निरालम्बनत्वाऽनुपपत्तेः । न च तदन्यद्दोहितोपायताया इति सिद्धं नः समीहितमिति ।

अनन्यप्रमाणकत्वं च समर्थनीयं, न च शक्य स्वसवेदनसिद्धत्वादनुमेयत्वाद्वा । कल्पान्तरं विकल्प्य दूषयति—अर्थान्तरोपगमे ऽपि नित्यत्वे तस्याविशेषेण सकलपुरुषाधारतया समर्थतया तद्विषयसाधारणतया सदातनतया च सर्वः सर्वदा सर्वत्राऽधिकृतः स्यात् । समर्थहेतुसद्भावे कार्यक्षेपाऽनुपपत्तेः । अप्रमाणकं च तत् । प्रमाणाऽभिमताच्छब्दादेव कस्य चित् क्व चिन्नियोगप्रतीतेः । अनित्यत्वे ऽपि तन्नान्तरीयकत्वात्कार्यत्वस्य शब्दकार्यो वा नियोगो भवेत्, कामनिमित्तकार्यो वा । तच्च न शब्दकार्यं, उक्तदोषत्वात् प्रमाणत्वादित्यादिना । निमित्तात्कामाद्वोत्पत्तौ निमित्तकारकाऽविनाशे ऽपि कार्याऽविनाशात् । कृतप्रयोगस्यापि तदस्तीति प्रसङ्गः ।

अथ न कामो निमित्तकारणम्, अपि तु कार्यैकार्थसमवायिकारणं, तद्विनाशाच्च कार्यं विनश्यति । तन्तुव्यतिषङ्गनाशादिव पटः, तत्राह—यावन्निमित्तमनुवृत्तौ कृतप्रयोगस्यापि प्रागुपभोगात् प्रवृत्तिः स्यात् । इदमत्राकूतम् । आत्मविशेषगुणत्वादयं नियोग आत्मनः संयोगाऽसमवायिकारणको बुद्ध्यादिवत् । न तु कामाऽसमवयिकारणः । निमित्तं त्वस्य कामः । तथा हितसाधनतैव वि-

तस्मात्पूर्व एव विधिः । तत्र

**यागाऽनुरक्तो व्यापारो दृष्टहेतुर्न युज्यते ।**
**तत्परत्वेन शब्देन यदा स प्रतिपादितः ॥**

यदि खलु यागाऽनुरक्ते व्यापारे यागः साध्यात्मना भावाऽनुरञ्जकत्वेन गृह्यते तदा सन्निकृष्टस्तत्परः शब्देनोक्त इति इष्टहेतुतात्मा न तत्र विध्यर्थः समवेयात् । तस्याऽनिष्टत्वात् । तत्राऽविवक्षिते विधौ सफघिः । तथाप्यस्ति किं चिन्निमित्तकारण यद्विनाशः कार्यविनाशहेतु, अपेक्षाबुद्धिविनाश इव द्वित्वादिविनाशस्य । तत्रेदमुच्यते—यावन्निमित्तमनुवृत्तौ कृतप्रयोगस्यापि प्रागुपभोगात्प्रवृत्ति. स्यात् इति । प्रकृतमुपसंहरति—तस्मात्पूर्व एव कर्तृसमीहितसाधनतैव विधि. । तच्च स्थिते तदनुगुणो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येवमादीनां वाक्यार्थो वर्णनीय । परमते तु तद्विपरीत स्यादित्याह—

यागाऽनुरक्तो व्यापारो दृष्टहेतुर्न युज्यते ।
तत्परत्वेन शब्देन यदा स प्रतिपादितः ॥

यदि हि व्यापारयोगपरतया प्रतिपाद्येत शब्देन कार्यादिरिति यथा प्रथमः पक्षः, तदेष्टसाधनताव्यापारस्य विधिप्रत्ययगम्यस्य व्याहन्येत । तदेतत्प्रपञ्चयति—यदि खलु यागाऽनुरक्ते व्यापारे यागः साध्यात्मना भावाऽनुरञ्जकत्वेन यागं कुर्यादित्यनेन रूपेण गृह्येत तत. स व्यापारस्तन्निष्ठः तत्परव्याख्येयाऽनुभाषणा शब्देन लिङोक्त इति हेतोरिष्टहेतुतात्मा न[1] तत्र व्यापारो विध्यर्थे समवेयात् । अथ यागे ऽपि साध्यात्मके को व्यापारस्येष्टहेतुताविरोधो? ऽत आह—तस्य यागादेरनिष्टत्वात् दुःख कर्मे[2]त्यनुभवो लोकस्य । नन्वसत्यामप्युपदेशविवक्षायामाक्षादो यथा पुरुषप्रवृत्तिर्लोके तथा वेदे ऽपि विना ऽप्युपदेशविवक्षाया भविष्यतीत्यत आह—तत्राऽविवक्षिते

१ नेति नास्ति २ पु॰ । २ अनिष्टत्वविमुख कर्म २ पु पा॰ ।

लस्य निष्फलस्य वा लोके कथं चित्प्रवृत्तिः स्यात् । तदुक्त-'मसाधकं तु तादर्थ्या'दिति । प्रीत्यर्थत्वात्पुरुषप्रयत्नानाम् । प्रीतिहेतुता तु [1]'विध्यर्थाऽसमवाये साधकं नाऽधिगच्छेदिति । अथैवं विधिसामर्थ्यादिष्टनिष्ठस्तथा सति धात्वर्थः करणं, तन्नान्तरीयकताप्तितः । यदि तु विध्यविवक्षाहेत्वभावान्नार्थव्यापारस्तदा यागस्यानिष्टत्वात् तदन्यपरे प्रधानात्मनोनवकाशो यागः । प्रकारान्तरेणापि

विधौ सफलस्य निष्फलस्य वा लोके कथं चिदनुविधेयपुरुषाऽऽशयवशात्प्रवृत्तिः स्यात् । अपौरुषये तु वेदे पुरुषाऽऽशयाऽभावात् । तस्याऽप्रवर्त्तकत्वे ऽपि विध्यविवक्षाया न प्रवृत्तिः स्यादिति मन्तव्यम् । विशेषविधेर्विशेषान्तरनिषेधहेतुत्वात् । यथा वामेनाऽक्ष्णा पश्यतीति दक्षिणाऽक्षिदर्शनप्रतिषेधो गम्यते । तत्रापि पारमर्षं सूत्रं योजयति-तदुक्तम् 'असाधकं तु तादर्थ्या'दिति । तद्विवृणोति—प्रीत्यर्थत्वात्पुरुषप्रयत्नानां प्रीतिहेतुता तु विध्यर्थाऽसमवाये साधयितारं नाऽधिगच्छेदिति । सुगमम् । यजेतेति समीहितसाधनतामात्रे विधिरवगम्यते । तथा यागस्य साध्यत्वम् । तद्यदि विधिर्विवक्ष्येत साध्यत्वं यागस्य हीयेत । न च साध्यत्वपरित्यागेन न विधिर्विवक्षितव्य इति विनिगमनायां हेतुरस्ति । द्वयोः श्रुतत्वेनाऽविशेषादित्यत आह—अथैव विधिसामर्थ्यादिष्टाऽनिष्टस्तथा सति धात्वर्थः करणं तत्र नान्तरीयकताप्तितः । विधिविवक्षायामपि यागस्य साध्यत्वप्रतिपत्तिरुपपद्यते । तस्य प्रागसिद्धेः साधितस्यैव साधनत्वेन साध्यत्वाक्षेपात्तद्भावस्य तन्नान्तरीयकत्वात् ।

कारिकां व्याचष्टे—यदि तु विध्यविवक्षाहेत्वभावात् साधकाऽभावेनाऽर्थव्यापारः इष्टाऽनिष्टः तदा यागस्याऽनिष्टत्वात् यागादन्यदिष्टं तत्परे व्यापारे प्रधानात्मना यागो ऽनवकाशो न भवति ।

[1] प्रवृत्तिहेतुता । मू पु पा० ।

सावकाशतया विधेश्चानवकाशतया सामर्थ्यान्नान्तरीयकतया प्रतिपाद्यमानो विषयत्वं करणात्मना ऽन्वेति ।

न हीष्टपरो व्यापारस्तत्परो यागपरो वा इष्टपरः । एवं तावद्यजेतेति विधिवशात् फलाऽभिसंबन्धः । यतश्च–

**भावनाकर्मता पूर्वमिच्छारूपा ऽवगम्यते ।**
**स्वर्गः सिद्धोपि तद्योगादतो ऽन्वेति फलात्मना॥**

नन्वनवकाशत्वादेव समीहितपरता[1]मपोद्य यागः प्रधानतयैव[2] समत्यते ऽन्यथा साध्यत्वाऽनुपपत्तेरित्यत आह–प्रकारान्तरेणापि यागस्य साध्यतायाः सावकाशतया विधेश्चाऽनवकाशतयेष्टपरतैव व्यापारस्य युक्तेत्यर्थः । ननूभयथा ऽप्यनवकाशे विनिगमनायां को हेतु ? रित्यत आह–सामर्थ्यात् । अनवकाशविधिप्रतीतिसामर्थ्यात् नान्तरीयकता वृत्त्या प्रतिपाद्यमानो विषयत्वं यागः करणात्मनाऽन्वेति । यद्यपि पुरुषप्रयत्नः समीहितोद्देशेन प्रवृत्तः तथापि यागादिकमगोचरयन्न समीहिताय कल्पतइति नान्तरीयकतया समीहितार्थप्रवृत्तप्रयत्नव्याप्यतालक्षणं साध्यत्वमतत्परे व्यापारे यागादेः सिद्धमित्यर्थः । ननु समीहितपरे ऽपि व्यापारे यागपरत्वं कस्मान्न[3] भवती ? त्याह–न हीष्टपरो व्यापारः तत्परो यागपरः । यागपरो वा इष्टपरः । सकृच्छ्रुतस्योभयपरत्वाऽदर्शनाल्लोके तन्मूलत्वाच्छब्दार्थसबन्धप्रतीतेरिति उपसंहरति–एव तावद्यजेतेति विधिवशात्फलाऽभिसबन्धः । न केवल विधिवशात्कमिसबन्धादपि स्वर्गादेर्भाव्यतेत्याह–यतश्च ।

भावनाकर्मता पूर्वमिच्छारूपा ऽवगम्यते ।
स्वर्गः सिद्धो ऽपि तद्योगादतो ऽन्वेति फलात्मना ॥

१ समीहितसाधनताम २ पु पा ।
२ प्रधानपरतयैव २ पु॰ पा॰ ।
३ नेति नास्ति २ पु ।

योहि यदिच्छति स तत् करोतीति भावनायाः प्रारम्भ इच्छा। तथा च तद्भावनासाध्यमिति सिद्धोऽपि स्वर्गादिस्तत्कर्म्मतया कर्मिसंबन्धादिवौदनादिस्तत्साध्यात्मनैव भावनायामन्वेति नान्यथा। तदुक्तम्। प्रत्यर्थं चाभिसंबन्धा[1]दिति। अर्थ्यमानं प्रति पुरुषव्यापार आभिमुख्येन संबध्यते। अतोऽर्थनायोगात्स्वर्गादेस्तत्कर्म्मतयाऽभिसंबन्धः। अन्यथाऽनन्वयात्। अतः केवलं यजेतेति फलापेक्षत्वात्स्वर्गादेरन्यथासमवायात्। तथा च संबन्धात्कर्म स्वर्गं प्रति साधनत्वेन गम्यते। कथं पुनः स्वर्गस्याऽन्यविशेषणस्य भावनाऽभिसंबन्धः, तत्संबन्धे वाऽन्यविशेषणत्वं कथं समासो वा? न हि तदभिसंबन्ध-

भावनाकर्मतायाः पूर्वरूपत्वमिच्छाया दर्शयति—यो यदिच्छति स तत्करोतीति भावनायाः प्रारम्भ इच्छा, तया भावनाप्रयत्न आरभ्यते, इच्छापूर्वकत्वात्प्रयत्नस्य तत्कर्म इच्छाकर्म भावनासाध्यमिति सिद्धोऽपि स्वर्गादिस्तत्कर्मतया इच्छाकर्मतया कर्मिसबन्धाद्द्वितीयासबन्धादिव ओदनादिस्तत्साध्यात्मनेव भावनायामन्वेति नाऽन्यथाऽधिकृतविशेषणतया। अत्रैवपारमर्षं सूत्रं योजयति—तदुक्तं 'प्रत्यर्थं चाऽभिसंबन्धा'दिति। तद्विवृणोति—अर्थ्यमानं प्रति पुरुषव्यापार आभिमुख्येन संबध्यते, ऽतोऽर्थनायोगात्स्वर्गादेस्तत्कर्मतयैवाऽभिसबन्धः। अन्यथासिद्धत्वे ऽनन्वयात्। उपसंहरति—अतो न केवलं यजेतेति फलाऽपेक्षत्वाद्विध्युपहिताया भावनाया अपि तु स्वर्गादेः कर्मियोगापादितसाध्यभावस्याऽन्यथासमवायात्। उपसंहरति—तथा च साध्यत्वेन संबन्धात्कर्मव्यापारः। स्वर्गकाम इति हि विशेषणशब्दात्स्वर्गोऽवगम्यते, स कथं भावनायां प्राधान्येन सबध्येत? तत्सबन्धे वा भावनाया अन्यविशेषणत्वं कथं समासो वा?। सापेक्षत्वेनाऽसामर्थ्यात्। असामर्थ्यमेवाह—न हि तत्संबन्धरहितस्य

१ क्षयोगात् मू॰ पु॰ पा॰।

रहितस्याऽन्यसंबन्धसव्यपेक्षस्य वा भावनासंबन्धः । गुणभूतस्य न हि समासो युज्यते ।

नैष दोषः ।

**अर्थाद्विशेषणपरं संबन्धं याति दण्डवत् ।**
**तद्योगाच्चाऽन्यसंबन्धे न समासः प्रदुष्यति ॥**

न खलु स्वर्गकामाऽन्वयनिरपेक्षः स्वर्गो भावनाऽभिसंबन्धी, किन्तु स एव विशेषणप्रधानः संबन्धमुपाश्नुते । यथा दण्डी प्रैषानन्वाहेति दण्ड प्रधानो दण्डी । पुरुषसंबन्धरहितस्याऽन्यसंबन्धसव्यपेक्षस्य वा भावनासंबन्धः । प्रधानस्य त्वन्यसंबन्धसापेक्षस्यापि समासो दृष्ट एव, यथा राजपुरुषः शोभन इत्यत आह—गुणभूतस्य न हि समासो युज्यते । परिहरति—नैष दोषः ।

अर्थाद्विशेषणपरः संबन्धं याति दण्डवत् ।
तद्योगाद्वा ऽन्यसंबन्धे न समासः प्रदुष्यति ॥

यदि हि पुरुषसंबन्धनिरपेक्ष एव स्वर्गो भावनया संबध्येत ततः शाब्दी पुरुषान्वयप्रतीतिर्विरुध्येत । यदि वा पुरुषपरमेव स्वर्गकामपदं स्यात् ततो भावनया न स्वर्गः संबध्येत । न च तदुभयमस्तीत्याह—न खलु स्वर्गकामाऽन्वयनिरपेक्षः स्वर्गो भावनासंबन्धी, येन शाब्दी पुरुषविशेषणप्रतीतिर्व्याहन्येत । किन्तु स एव विशेषणप्रधानः संबन्धमुपाश्नुते भावनायाम् । विशेष्यप्रधाने हि स्वर्गकामपदे स्वर्गः पुरुषवशेन भावनायां संबध्यते, विशेषणपरे त्वस्मिन्नाऽयं दोषः । क्व विशेषणपरत्वं दृष्ट? मित्यत आह—यथा दण्डी प्रैषानन्वाहेति दण्डप्रधानो दण्डी । यथा मैत्रावरुणः प्रैषानन्वाहेति प्रैषाऽनुवचने मैत्रावरुणस्य प्राप्ते दण्डी प्रैषानन्वा-

तदभिसंबन्धीतु तत्परस्वात्माना अविवक्षित एव। एवं च समासो ऽप्युपन्नः। स्वतन्त्रस्य ह्यन्यसंबन्धे तदसंभवात् सापेक्षत्वात्समासो न स्यात्। तदभिसंबन्धेन तु तद्द्वारा अन्यसंबन्धे नैकार्थ्यभावोपरोध इति युक्तः समासः। अन्यथा सर्वमेव विशेषणमसमासं स्यात्। तस्य कार्यम-

हेति मैत्रावरुणलक्षणविशेष्यविधानाऽनुपपत्तेर्विशेषणस्य दण्डस्य चाऽप्राप्तेर्विधेयत्वात् तत्परो दण्डिशब्द, तथेह यजेतेति भावनाक्षेपादेव भावयितुः प्राप्तेरविधेयत्वात् भाव्यविशेषापेक्षत्वाच्च भावनायाः स्वर्गस्य च पुरुषविशेषणस्याऽप्राप्तरूपतया कर्मिकर्मतया च भाव्यत्वार्हत्वादन्यतश्चाऽप्राप्तेस्तत्परा स्वर्गकामश्रुतिरिति रमणीयम्।

ननु यदि विशेषणपरा स्वर्गकामश्रुति. ततो विशेष्यसबन्धः स्वर्गस्य शब्दतो न प्रथेत चेत् नाऽस्य भावनासंबन्ध', तत्परत्वादित्यत आह—तदभिसबन्धी तु तत्परो भावनासबन्धपरः, स्वात्मना विवक्षित एव, स्वपरतया विवक्षित एव। सबन्धो ह्यसबन्धविरोधी न पुनरन्यपरताविरोधीत्यर्थः। असमासप्रसङ्गं परिहरति—एवं च समासो ऽप्युपपन्न.। एव चेति। तदेव व्यतिरेकाऽन्वयाभ्या विवृणोति—स्वतन्त्रस्य हि पुरुषसंबन्धनिरपेक्षस्याऽन्यसंबन्धे तदसंभवात् पुरुषसबन्धाऽसंभवात् समासो न स्यात्। समाससमये वाऽन्यसबन्धरहितो ऽपि भावनासबन्धसापेक्षः स्वर्ग तथापि साऽपेक्षत्वात्समासो न स्यात्। न त्वेतदुभयमस्तीति। अन्वयमाह—तदभिसबन्धेन तु पुरुषसबन्धेन तद्द्वारा ऽन्यसबन्धे सति नैकार्थीभावोपरोधो न विग्रहवाक्यार्थाऽभिधानसामर्थ्योपरोध इति। तस्माद्युक्तः समासः। यदि तु विशेष्याऽभिसंबन्धद्वारेणापि क्रियामनुप्रविशद्विशेषणं सापेक्षमसमर्थमिति न समस्येत तत्सर्वमेव विशेषणं नाऽस्मिन्समासे सभवेदित्याह—अन्यथा सर्वमेव विशेषणमसमासं

संस्पृशतो वैयर्थ्यात् । संस्पर्शे वा साऽपेक्षत्वात्समासो भवेत् ।

यत्त्वाख्यातार्थे साध्ये साध्यान्तराऽसमवाय इति । भावनायां तावद्रूपादेव तत्समवायः । तस्य भाव्यप्रधानरूपत्वात् । धात्वर्थेऽपि यदि तात्पर्य्येण भावनायाः साध्यत्वं तद्विधिना ऽपास्तम् । अथ भावनाविषयत्वमात्रं

स्यात् । ननु किमित्यसमास ? भविष्यति हि किंचिद्विशेषणं यद्विशेष्यमात्रपर, तद्यथा नीलोत्पलमानयेत्यत आह—तस्य विशेषणस्य नीलादेः कार्यमानयनादिकमसंस्पृशतो वैयर्थ्यात् । एवं हि यावदुक्तं भवति उत्पलमानयेति तथा चाऽविशेषकरत्वात् कार्यवैयर्थ्यं विशेषणपरस्येति उत्पलस्य प्रसज्येतेत्यर्थः । कार्यसंस्पर्शे वा विशेषणस्य सापेक्षत्वात्समासो भवन्मते भवेदिति ।

यच्च परिचोदितम्, आख्यातार्थे साध्ये साध्यान्तरस्य स्वर्गादेरसमवाय इति । तत्रेदं विकल्पनीयं, किं भावनाया साध्यायां साध्यान्तरस्याऽसमवाय उच्यते, आहो स्वित् धात्वर्थे साध्ये यागादौ ? तत्र भावनायां तावद्रूपादेव तत्समवायः साध्यसंबन्धः । कुतः ? तस्या भाव्यप्रधानरूपत्वात् । भावना हि साध्यरूपापि भवितारं भाव्यमन्तरेणाऽनुपपत्तेः स्वभावादेव भाव्याऽपेक्षा । न ह्यस्ति संभवो यदुत्पादना च न चाऽन्यदुत्पाद्यमस्तीति । तस्मात्साध्याऽपेक्षायां न साध्यसंबन्धो घटते । अथ धात्वर्थे साध्ये न साध्यान्तरसमवायः तस्यापि साध्यत्वं भावनायां तत्परत्वाद्वा फलार्थप्रवृत्तभावनाविषयत्वाद्वा । न तावद्भावना तात्पर्यरूपेण विधिबोधविरोधादित्याह—धात्वर्थे यदि तात्पर्येण भावनाया धात्वर्थस्य साध्यत्वं तद्विधिना ऽपास्तम् । अथाऽन्यार्थप्रवृत्तभावनाविषयत्वमात्रं तत्कारणान्तरेष्वपि परश्वादिषु समानम् । भवन्ति हि तेऽपि द्वैधीभावोद्देशप्रवृत्तोद्यमननिपातनलक्षणव्यापारविषयाः । ते च

**तत्कारणान्तरेष्वपि समानम् । उक्तं हि 'करणं खलु सर्वत्र कर्तृव्यापारगोचर'मिति । द्रव्यगुणशब्दार्थस्वरूपतो ऽपि निष्पाद्यस्य साधनत्वात् । सिद्धस्योपादाना-ऽभावात् । श्रुत्यैव भावनामनुरञ्जयतो यागादेस्तद्विशेषणस्य प्रतीतेः । द्विविधत्वं त्वपूर्वभावाऽभावकृतम् । पुरु-**

करणम् । एव यागादयो ऽन्यार्थप्रवृत्तभावनाविषयतया साध्या अपि करणतया साध्यान्तरैः सम्भन्त्स्यन्ते व्रश्चनादय इव द्विधाभवद्भिः काष्ठादिभिः । एतच्च न साधितमिहाऽन्यच्च सिद्धत्वादित्याह—करणं खलु सर्वत्र कर्तृव्यापारगोचर इति भावनाविवेके ।

यच्च परिचोदयाबभूवुः, आख्यातस्य करणार्थत्वे द्रव्यगुणशब्दाभ्यामविशेषः, सिद्धार्थत्वादिति, तत्राह-द्रव्यगुणशब्दार्थविशेषस्तु धात्वर्थस्य रूपतो ऽपि निष्पाद्यस्य साधनत्वात्प्रागसिद्धेः सिद्धस्योपादानाऽभावात् गोदोहनादीनां त्वन्यतः सिद्धार्थाना सतामुपादानादिति । न केवलं वस्तुतः शब्दतो ऽप्यस्य साध्यत्वेना-ऽवगतिः प्रकृत्यर्थतया नियतपूर्वप्रतीतत्वेन स्वरूपविनिवेशेन साध्यरूपभावनानुरञ्जकतया तद्विशेषणत्वात्, शाबलेयादय इव गोत्वविशेषणत्वेन गाव इत्याह-श्रुत्यैव भावना साध्यरूपामनुरञ्जयतो यागादेस्तद्विशेषणस्य भावनाया विशेषणस्य प्रतीतेः साध्यत्वाऽवगमः । न त्वेवं द्रव्यादौ भिन्नपदोपादाने तद्विशेषणत्व तद्विनिवेशेन तदवच्छेदकतया न पुनर्भावनात्वसामान्याश्रयेणेति मन्तव्यम् । एवं च व्यापारावेशात् साध्यरूपप्रतीतेः साक्षात्पच्यर्थे करणभावः काष्ठादेरुपपन्नः काष्ठैः पचतीत्यादाविति सूचितं भवति ।

यदपि चोदितं, सर्वाऽभिमतसाधनत्वेन कर्मणो गुणभावाद्गुणप्रधानभावेन द्वैविध्यं हीयेतेति, तत्परिहरति-द्विविधत्वं त्वपूर्व-

अथ पराधिकरणम् ७ । **परमऽतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३० ॥**

इदानीमस्मात्परस्माज्जगन्निमित्तोपादानरूपपरमकारणात्परब्रह्मणः परमपि किञ्चित्तत्त्वमस्तीति कैश्चिद्धेत्वाभासैराशङ्क्य निराक्रियते ऽस्योपास्यस्य निर्दोषत्वानवधिकातिशयासङ्ख्येयकल्याणगुणाकरत्वस्थेम्ने । तत्रेयमाऽऽशङ्का—यदिद परं ब्रह्मोभयलिङ्गम्, ए[1]तस्मान्निखिलजगत्कारणात्परमपि किञ्चित्तत्त्वमस्ति । कथम् । "अथ य आत्मा स सेतुर्विधृति"रिति अस्य परस्य सेतुत्वव्यपदेशात् । 'सेतु'—शब्दस्य च लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेरितोऽन्यदऽनेन प्राप्यमस्तीति गम्यते । तथा, "एत सेतु तीर्त्वाऽन्धः सन्नऽनन्धो[2] भवती"ति तरितव्यता चास्याभिधीयते । अतश्चान्यत्प्राप्यमस्ति—उन्मानव्यदेशाच्च । उन्मित परिमित[3] परं ब्रह्म, 'चतुष्पाद्ब्रह्म षोडशकल"मित्युन्मान व्यपदेशात् । स चायमुन्मानव्यपदेश,स्तेन सेतुना प्राप्यस्यानुन्मितस्यास्तित्व द्योतयति । तथा, सम्बन्धव्यपदेशश्च सेतुसेतुमतोः प्रापक[4]त्वप्राप्यत्वलक्षणो दृश्यते,[5] "अमृतस्य पर सेतु दग्धेन्धनमिवानलम्" "अमृतस्यैष सेतु"रिति । अतश्च परात्परमस्ति । भेदेन च परात्पर व्यपदिश्यते, "परात्परं पुरुषमुपैति दिव्यम्" "परात्पर यन्महतो महान्त"मिति च । तथा, "तेनेद पूर्णं पुरुषेण सर्वं" "ततो यदुत्तरतर[6] तदरूपमनामय"मिति । अत एभ्यो हेतुभ्यः परस्माद्ब्रह्मणः परमपि किञ्चिदस्तीति गम्यते—इत्येवं प्राप्तेऽभिधीयते—

**सामान्यात्तु ॥ ३१ ॥**

'तु'—शब्दः पक्ष व्यावर्त्तयति । यत्तावदुक्त सेतुव्यपदेशात् परात्परमस्तीति, तन्नोपपद्यते । न ह्यऽयमत्र[7] किञ्चित्प्राप्यं प्रति सेतुरुच्यते, 'एषां लोकानामसम्भेदाये'ति सेतुसामान्येन सर्वलोकासङ्करकरत्वश्रुतेः । सिनो-

---

१ लिङ्गमेवेति लि पु ।

२ तीर्त्वाऽन्ध सन्नन्ध इति मु० पु० । ३ इदमित्यधिकं मु० पु० ।

४० अत्र सेतुमतो प्रापकेति लि० पु० । ५ दृश्येते—इति लि० पु० ।

६ यदुत्तरमिति लि० पु० । ७ न ह्यमुत्रेति मु० पु० ।

ति[1] बध्नाति स्वस्मिन्सर्वं चिदचिद्वस्तुजातमसङ्कीर्णं[2]मिति सेतुरुच्यते । एव सेतु तीर्त्वेति तरतिश्च प्राप्तिवचनः, यथा वेदान्त तरतीति ।

## बुद्ध्यर्थः पादवत् ॥ ३२ ॥

यो ऽय "चतुष्पाद् ब्रह्म षोडशकल" "पादोऽस्य विश्वा भूतानी"-त्युन्मानव्यपदेश,स्स 'बुद्ध्यर्थः' परस्योपासनार्थः, "सत्य ज्ञानमनन्त ब्रह्मे"-त्यादिभिर्ज्जगत्कारणस्य परस्य ब्रह्मणोऽपरिच्छिन्नत्वावगमात् स्वत उन्मितत्वासम्भवात् । जगत्कारणत्व हि[3] तस्यैव श्रूयते "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "सोऽकामयत बहु स्या प्रजायेयेती"ति । अतो यथा "वाक् पादः प्राणः पादश्चक्षु पादः श्रोत्र पाद[4]" इत्यादिन ब्रह्मणो वागादिपादव्यपदेश उपासनार्थः, एवमयमपि[5] ।

स्वयमनुन्मितस्य[6] कथमुपासनार्थतयाऽप्युन्मानसभव,स्तत्राह—

## स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥

प्रतिपन्नवागादिस्थानविशेषरूपोपाधिभेदात्तत्सम्बन्धितयोन्मितत्वानुसन्धानं सम्भवति, यथा प्रकाशादेर्विततस्य वातायनघटादिस्थानभेदै परिच्छिन्नत्वा ऽनुसन्धानसम्भव इत्यर्थः ।

## उपपत्तेश्च ॥ ३४ ॥

यदुक्त"ममृतस्यैष सेतु"रिति प्राप्यप्रापकसम्बन्धव्यपदेशात् प्रापकात्पर प्राप्यमन्यदस्तीति, तन्न, प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः ।

"नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूं स्वाम्"—

इत्यनन्योपायत्वश्रवणात् ।

---

१ सिनोतीति नास्ति लि० पु० । २ असङ्कीर्णमिति लि० पु० ।
३ हीति नास्ति लि० पु० । ४ चतुष्पादो मनः पादइति मु० पु० ।
५ एवमपि—इति लि० पु० । ६ अनुमितस्येति लि० पु० प्रमाद ।

## तथाऽन्यप्रतिषेधात् ॥ ३६ ॥

यत्पुनरुक्तम् "ततो यदुत्तरतरं" "परात्परं पुरुषम्" "अक्षरात्परतः पर"इत्यादिभेदव्यदेशात्परात्परमस्तीति, तन्नोपपद्यते, तत्रैव ततोऽन्यस्य परस्य प्रतिषेधात्,

"यस्मात्परं नापरमस्ति किञ्चिद्

यस्मान्नाणीयो न ज्यायो[1]ऽस्ति कश्चि"दिति ।

'यस्मादपरं परं नास्ति किञ्चित्,' न केनापि प्रकारेण परमस्तीत्यर्थः । तथाऽन्यत्रापि, "न ह्येतस्मादिति नेत्यन्यत्परमस्ती"ति । नेति निर्दिष्टादेतस्माद्ब्रह्मणोऽन्यत्परं न ह्यस्तीत्यर्थः । तथा, "न तस्येशे[2] कश्चन तस्य नाम महद्यश"इति । तद्धि जगदुपादानकारणतयाऽनन्तरमुक्तं "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि · स आपः प्रदुघे उभे इमे" इत्यादिना । "अद्भ्यः सम्भूतो हिरण्यगर्भं इत्यष्टा"विति च जगत्कारणं पुरुषमेन प्रत्यभिज्ञापयति च । 'ततो यदुत्तरतर'मिति किमुच्यत इति चेत् । पूर्वत्र

"वेदाहमेतं पुरुषं महान्त-

मादित्यवर्णं तमसः परस्तात् ।

तमेव विद्वानमृत इह भवति

नान्यः पन्था विद्यते ऽयनाये"ति–

परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधनं नान्योऽमृतत्वस्य पन्था इत्युपदिश्य तदुपपादनाय

"यस्मात्परं नापरमस्ति किञ्चि-

द्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।

वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-

स्तेनेदं पूर्णं पुरुषेण सर्वम्"–

इति पुरुषस्य परत्वं[3] तद्व्यतिरिक्तस्य परत्वासम्भवं च प्रतिपाद्य

---

१ नाणीयोमतिमज्यायो–इति लि० पु० प्रमाद· ।

२ तस्येशमिति लि० पु२ । ३ परतरत्वमिति लि० पु० ।

"ततो यदुत्तरतरं तदरूपमनामयम् ।
य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति"–

इति पूर्वोक्तमर्थं हेतुतो निगमयति–यदुत्तरतरं[1] पुरुषतत्त्वं तदेवा रूपमनामयं यत,स्ततो ये तत्पुरुषतत्त्वं विदुस्त एवामृता भवन्त्य,ऽथेत दुःखमेवापियन्तीति । अन्यथोपक्रमविरोधोऽनन्तरोक्त[2]विरोधश्च । "परात्परं पुरुषमुपैति दिव्य"मित्यपि पूर्वत्राक्षरात्परतः पर इत्यक्षरादव्याकृताद्यः परः समष्टिपुरुष,स्तस्मात्परो योऽदृश्यत्वादिगुणकः सर्वज्ञः परमपुरुषः, स एवेहापि परात्परमिति[3] समष्टिपुरुषात्परत्वेनोच्यते ।

**अनेन सर्वगतत्वमाऽऽयामशब्दादिभ्यः ॥ ३६ ॥**

'अनेन' ब्रह्मणा[4] 'सर्वगतत्वं' सर्वस्य जगतो व्याप्यत्वं'मायामशब्दादिभ्यः' सर्वव्याप्तिवाचिशब्देभ्योऽवगम्यमानमऽस्मा[5]त्परं नास्तीत्यवगमयति । आयामशब्दस्तावत्–

"तेनेदं पूर्णं पुरुषेण सर्वम्"

"यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" ॥

"नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः" ।

'आदि'–शब्दा"द्ब्रह्मैवेदं सर्वम्" "आत्मैवेदं सर्व"मित्यादयो गृह्यन्ते । अत इदं परं ब्रह्मैव सर्वस्मात्परम् ॥

पराधिकरणं समाप्तम् ॥ ७ ॥

---

अथ फलाधिकरणम् ८ । **फलमत उपपत्तेः ॥ ३७ ॥**

उक्तमुपासिसिषोपजनना[6]र्थं जीवस्य सर्वावस्थासु सदोषत्वं प्राप्यस्य च परमपुरुषस्य निर्दोषत्वं कल्याणगुणाकरत्वं सर्वस्मात्परत्वं च । अतः परमुपासनं विवक्षन्नुपासीनानां परस्मादेवाऽस्मात्पुरुषात्तत्प्राप्तिरूपमपव-

---

१ यदुत्तरमिति लि० पु० । २ अनन्तरोक्ति–इति मु० पु० ।
३ परइति–इति मु० पु० ।
४ अनेन ब्रह्मणि–इति लि० पु० । ५य स्मादिति लि० पु० ।
६ ०षो प्रजननेति लि० पु० प्रमादः ।

गांख्य फलमिति सम्प्रति ब्रूते । तुल्यन्यायतया शास्त्रीयमैहिकामुष्मिकमपि फलमत एव परस्मात्पुरुषाद्भवतीति सामान्येन 'फलमत' इत्युच्यते । कुत एतत् । 'उपपत्तेः' । स एव हि सर्वज्ञः सर्वशक्तिर्महोदारो यागदानहोमादिभिरुपासनेन चाऽऽराधित ऐहिकामुष्मिकभोगजात स्वस्वरूपप्राप्तिरूपमपवर्गं च दातुमीष्टे । न ह्यचेतन कर्म्म तथाध्वंसि कालान्तरभाविफलसाधन भवितुमर्हति ।

श्रुतत्वाच्च ॥ ३८ ॥

"स वा एष महानज आत्माऽन्नादो वसुदानः" "एष ह्येवानन्दयाती"ति भोगापवर्गरूप फलमयमेव ददातीति हि श्रूयते ।

सम्प्रति पूर्वपक्षमाह—

धर्मं जैमिनिरऽत एव ॥ ३९ ॥

'अत एवो'पपत्तेः शास्त्राच्च यागदानहोमोपासनरूपधर्ममेव फलप्रदं जैमिनिराचार्यो मन्यते । लोके हि कृष्यादिकं कर्म दानादिकं च कर्म साक्षाद्वा[1] परम्परया वा स्वयमेव फलसाधन दृष्टम्, एव वेदेऽपि यागदानहोमादीना साक्षात्फलसाधनत्वाभावेऽपि परम्परया ऽपूर्वद्वारेण फलसाधनत्वमुपपद्यते । तथा यजेत स्वर्गकाम इत्यादि शास्त्रमपि सिषाधयिषितस्वर्गस्य कर्त्तव्यतया यागाद्यभिदधदऽन्यथानुपपत्त्या ऽपूर्वद्वारेण फलसाधनत्वमेवावगमयति ।

पूर्वन्तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥

'तु'—शब्दः पक्षव्यावृत्त्यर्थः । पूर्वोक्त परमपुरुषस्यैव फलप्रदत्व भगवान् बादरायणो मन्यते । कुतः । 'हेतुव्यपदेशात्,' यज देवपूजायामिति देवताराधनभूतयागाद्याराध्यभूताग्निवाय्वादिदेवतानामेव तत्तत्फलहेतुतया[2] तस्मिंस्तस्मिन्नपि वाक्ये व्यपदेशात् । "वायव्य श्वेतमालभेत भूतिकामः वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती"त्यादिषु कामिनः सिषाधयिषितफलसाधनत्वप्र-

१ लोके हि कृष्यादिकं मर्दनादिकं च कर्म साक्षाद्वेति लि॰ पु॰ ।
२ ०हेतुत्वरूपमिति लि॰ पु॰ ।

कारोपदेशोऽपि विध्यपेक्षित एवेति[1] नाऽतत्परत्वशङ्का युक्ता। एवमपेक्षितेऽपि फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागमऽश्रुतापूर्वादिपरिकल्पनं च[2] प्रामाणिका न सहन्ते। लिङादयोऽपि[3] देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमतामभिदधति, नान्यदलौकिकमिति प्रागेवोक्तम्। तदेव "वायुर्वै क्षेपिष्ठा देवते"त्यादिशब्दाद्वाय्वादीनां फलप्रदत्वमवगम्यते। वाय्वाद्यात्मना च परमपुरुष एवाराध्यतया फलप्रदायित्वेन चावतिष्ठत इति श्रूयते—

"इष्टापूर्त्तं बहुधा जातं जायमानं
विश्वं बिभर्ति भुवनस्य नाभिः
तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा" इति।

अन्तर्यामिब्राह्मणे च "यो वायौ तिष्ठन् यस्य वायुः शरीरं' योऽग्नौ तिष्ठन्' य आदित्ये तिष्ठ"न्नित्यादि श्रूयते। स्मर्यते च—

"यो यो यां यां तनुं भक्तः श्रद्धयाऽर्च्चितुमिच्छति।
तस्यतस्याचलां श्रद्धान्तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते"।
"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चे"ति।

प्रभुरिति फलप्रदायीत्यर्थः।

"देवान् देवयजो यान्ति मद्भक्ता यान्ति[4] मामपि"।
"यान्ति मद्याजिनोऽपि मा"मिति च।

लोके च क्षुध्यादिभिर्विचित्ररूपान् द्रव्यविशेषान् सपाद्य ते राजानं भृत्यद्वारेण साक्षाद्वाऽर्चयन्ति, अर्च्चितश्च राजा तत्तदाराधनानुगुणं फलं च प्रयच्छन् दृश्यते। वेदान्तास्त्वतिपतितसकलेतरप्रमाणसम्भावनाभूमिं निरस्तसमस्ताऽविद्यादिदोषगन्धं स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरं पुरुषोत्तमं प्रतिपाद्य तदाराधनरूपाणि च यागदानहो-

१ ०पेक्षितत्वादेवेति—इति लि० पु०।
२ चेति नास्ति लि० पु०। ३ विजातीयोपि—इति लि० पु।
४ मामिकामित्यधिकमत्र लि पु०।

मात्मकानि स्तुतिनमस्कारकीर्त्तनार्चनध्यानानि च तदाराधनानि[1] तदाराधितात्परस्मात्पुरुषाद्भोगापवर्गरूपं फलं च वदन्तीति सर्वं समञ्जसम् ॥

फलाधिकरणं समाप्तम् ॥ ८ ॥

इति श्रीमद्भगवद्रामानुजाचार्यचरणकृतौ शारीरकमीमांसाभाष्ये साधनाध्यायस्य तृतीयस्य द्वितीयः पादः ॥ २ ॥

---

१ च तदाराधनानि चेति म पु ।

# अथ तृतीयाध्याये तृतीयः पादः॥

अथ सर्ववेदान्तप्रत्ययाधिकरणम् १। **सर्ववेदान्तप्रत्ययं चोदनाऽद्यविशेषात्॥ १॥**

उक्त ब्रह्मोपासिसिषोपजननाय वक्तव्य ब्रह्मणः फलदायितापर्यन्तम्।

इदानीं ब्रह्मोपासनाना गुणोपसहारविकल्पनिर्णयाय विद्याभेदाभेदचिन्ता प्रस्तूयते।

प्रथम तावदेकस्या[1]वैश्वानरविद्याया[2] अनेकशाखासु श्रूयमाणाया किमेकविद्यात्वम्, उत विद्याभेद इति चिन्त्यते। अविशेषपुनःश्रवणस्य प्रकरणान्तरस्य च भेदकत्वाच्छाखान्तरे चोभयोर ऽवर्ज्जनीयत्वाद्विद्याभेद इति प्राप्तम्। अत एव

"तेषामेवैता ब्रह्मविद्या वदेत
शिरोव्रत विधिवद्यैस्तु चीर्ण"[3]मिति–

शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियम उपपद्यते। विद्यैक्ये हि विद्याङ्गस्य शिरोव्रतस्यान्येषामपि शाखिना प्राप्तेर्नियमो नोपपद्यते। एव प्राप्त उच्यते–

'सर्ववेदान्तप्रत्यय'मेकमुपासनमिति। कुतः। 'चोदनाद्यविशेषात्'। चोदना तावदुपासीत विद्यादित्येवजातीयको धात्वर्थविशेष-

---

१ एकाग्रस्या–इति लि० पु०। २ वैश्वानरविद्यादिकाया इति मु० पु०।
३ चीर्णमिति लि० पु० उपकल्पितम।

विधिः । 'आदि'—शब्देन "एकं वा संयोगरूपचोदनाख्याऽविशेषा"दिति कर्मकाण्डे शाखान्तराधिकरणसूत्रोक्ताः संयोगरूपाख्या गृह्यन्ते । एषां चोदनादीनामऽविशेषात् सैवेयं विद्येति शाखान्तरे प्रत्यभिज्ञायते । तथा हि छान्दोग्यवाजसनेयकयो"र्वैश्वानरमुपास्त"इति चोदना ताव-देकरूपा । वेद्यैक[1]निरूपणीयस्वरूपस्य विदिपर्यायस्योपासेर्वेद्यभूत[2]वै-श्वानरैक्याद्रूपमप्यविशिष्टम् । आख्या च वैश्वानरविद्येत्यविशिष्टा । फलसंयोगोऽप्युभयत्रापि ब्रह्मप्राप्ति[3]रूपोऽविशिष्टः । अत एभिः प्रत्य-भिज्ञानाच्छाखान्तरेऽपि विद्यैक्यम् ।

यत्तूक्तमविशेषपुनःश्रवणात्प्रकरणान्तराच्च विधेयभेदप्रतीतेर्न वि-द्यैक्यमिति तदनुभाष्य परिहरति—

**भेदान्नेति चेदेकस्यामपि ॥ २ ॥**

अविशेषपुनःश्रुत्या प्रकरणान्तराच्च विधेयभेदाच[4] विद्यैक्यमिति चेत्, एकस्यामपि विद्यायां प्रतिपत्तृभेदा[5]त्पुनःश्रुतिः प्रकरणान्तरं चोप-पद्यते । यत्र ह्येकस्मिन् प्रतिपत्तरि पुनःश्रुतिः प्रकरणान्तरं च विद्यते, तत्राऽन्यथानुपपत्त्या विधेयभेदाद्विद्याभेदः । प्रतिपत्तृ[6]भेदे तत्प्रतिप-त्त्यर्थतया पुनःश्रुत्याद्युपपत्तेस्तत्र न विधेयान्तरसम्भवः ।

यच्चोक्तं शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियमदर्शना-द्विद्याभेदः प्रतीयत इति, अत्राह—

**स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥**

नैतदस्ति—शिरोव्रतोपदेशनियमदर्शनं विद्या[7]भेदं द्योतयतीति शिरोव्रतस्य विद्याङ्गत्वाभावात् । 'स्वाध्यायस्य तथात्वे हि तन्नियमः,[8] स्वाध्यायस्य तथात्वसिद्ध्यर्थं तज्जन्यसंस्कारभाक्त्वसिद्ध्यर्थं हि शिरोव्र-

१ चोदनावदेकरूपा विद्यैकेति लि० पु० ।
२ विधिपर्यायस्योपास्त्यैक्यभूतेति लि० पु० ।
३ उभयप्राप्तिब्रह्मप्राप्तीति लि० पु० । ४ नेति—इति लि० पु० ।
५ प्रतिपत्त्यभेदादिति लि० पु० । ६ प्रतिपत्तीति—इत्युपकल्पितं लि० पु० ।
७ दर्शनाद्विद्येति लि० पु० । ८ स्वाध्यायस्येति प्रतीकग्रहणं नास्ति लि० पु० ।

तोपदेशनियमः, न विद्यायाः । कुत एतत् । "नैतदचीर्णव्रतोऽधीत" इति तस्याध्ययनसंयोगात् । 'समाचारेऽधिकाराच्च,' समाचाराख्ये ग्रन्थे "इदमपि वेदव्रतेन[1] व्याख्यात"मित्यतिदेशात्, 'तेषामेवैता ब्रह्मविद्यां वदेत'—वेदविद्यामित्यर्थः । 'सववच्च तन्नियमः,' यथा हि सवहोमाः सप्तसूर्यादयः[2] शतौदनपर्यन्ता आथर्वणिकैकाग्निसम्बन्धिनस्तत्रैव भवन्ति, न त्रेताग्निषु ।

## दर्शयति च ॥ ४ ॥

दर्शयति च[3] श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम् । तथा हि छान्दोग्ये "तस्मिन् यदन्त[4]स्तदन्वेष्टव्य"मित्युक्त्वा 'किं तदत्र विद्यते यदन्वेष्टव्य"मितिप्रश्नपूर्वकमपहतपाप्मत्वादिगुणाष्टकविशिष्टः परमात्मा तस्मिन्नुपास्य इत्युक्तम् । तैत्तिरीयके तु छान्दोग्यस्य प्रतिनिर्देशमुपजीव्य "तत्रापि दह्रं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्य"मिति गुणाष्टकविशिष्टस्य परमात्मन उपासनमुच्यते । तदुभयत्र विद्यैकत्वेन गुणोपसंहारादेवोपपद्यते ॥

तदेव शाखान्तराधिकरणन्यायसिद्धं विद्यैक्यं स्थिरीकृत्य तत्प्रयोजनमाह—

## उपसंहारोऽर्थाभेदाद्विधि[5]शेषवत्समाने च ॥ ५ ॥

एवं सर्ववेदान्तेषु समाने सत्युपासने वेदान्तान्तराम्नातानां गुणानां[6] वेदान्तान्तर उपसंहारः कर्तव्यः । कुतः । 'विधिशेषवदर्थाभेदात्' । यथैकस्मिन्वेदान्ते श्रुतो वैश्वानरदहरादिविधिशेषो गुणस्तद्विद्यासम्बन्धात्तदुपकाररूपप्रयोजनसिद्ध्यर्थमनुष्ठीयते, तथा वेदान्तान्तरोदितोऽपि[7]

१ इदमपि वेदव्रतत्वेनेति पु० तुर्येषु ।

२ सवा होमाः सप्तव्याहृतयः—इति लि० पु० ।

३ दर्शयति चेति भाष्ये नास्ति लि० पु० । ४ छान्दोग्येतत—इति लि० पु० ।

५ ०भेदाविति विधि—इति लि० पु० उपकल्पितम् ।

६ वेदान्तान्तराम्नातानां वेदान्तान्तरगुणानामिति लि० पु० ।

७ वेदान्तन्तरात्ततोपीति लि० पु० ।

फलसाधनत्वश्रवणाद्वेदनविषयो विधिः कल्प्यते । उद्गीथविद्याया[1] क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलत्वेऽप्यार्थवादिकमपि फलं तदविरुद्धं ग्राह्यमेवेति देवताधिकरणे प्रतिपादितम् । तत्र संशय्यते-किमत्र विद्यैक्यमुत नेति । किं युक्तम् । विद्यैक्यमिति । कुतः । उभयत्रोद्गीथस्यैवाऽध्यस्तप्राणभावस्योपास्यत्वश्रवणाच्चोदनाद्यविशेषात् । फलसंयोगस्तावच्छत्रुपरिभवरूपो न विशिष्यते,[2] रूपमप्यध्यस्तप्राणभावोद्गीथाख्योपास्यैक्या[3]दविशिष्टम्, चोदना च विदि[4]धात्वर्थगता ऽविशिष्टा, आख्या चोद्गीथविद्येत्यविशिष्टा ।

अत्र राद्धान्तच्छायया परिचोद्य परिहरति[5]—

अन्यथात्वं शब्दादिति चेन्नाविशेषा'दिति ।

यदुक्तं विद्यैक्यमिति, तन्नोपपद्यते, रूपभेदात् । रूपान्यथात्वं हि शब्दादेव प्रतीयते । वाजसनेयके हि "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगाय"दित्युद्गानस्य कर्त्तरि प्राणदृष्ट्या ऽसुरपराभवमुक्त्वा 'य एवं वेदे'ति कर्त्तर्येव प्राणदृष्टि'रेव'—शब्दादवगम्यते[6] । छान्दोग्ये "अथ ह[7] य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिर" इत्युद्गानस्य कर्मण्युद्गीथे प्राणदृष्ट्याऽसुरपराभवमुक्त्वा "य एवंविदि पापं कामयत" इत्ये'व'शब्दात् कर्मण्येवोद्गीथे प्राणदृष्टिर्विहिता । अत एकत्र कर्त्तरि प्राणदृष्टिशब्दादन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च रूपान्यथात्वं स्पष्टम् । रूपान्यथात्वे च विधेयभेदे सति केवलचोदनाद्यऽविशेषोऽकिञ्चित्कर इति विद्याभेद इति चेत्तन्न,[8] अविशेषात् । अविशेषेण ह्युभयत्रोद्गीथसाधनकः परपरिभव उपक्रमे प्रतीयते । वाजसनेयके "ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामे"त्युपक्रमे श्रूयते, छान्दोग्येऽपि 'तद्ध देवा उद्गीथमाजह्रुरनेनैना-

१ ॰विद्या –इति लि॰ पु॰ ।
२ ॰रूपो विशेष्यत इति लि॰ पु॰ । ३ ॰द्गीथादयोपास्यैक्यादिति लि॰ पु॰ ।
४ विधीति लि॰ पु॰ । ५ राद्धान्तच्छायया परिहरतीति लि॰ पु॰ ।
६ रेवशब्दादेव गम्यत इति लि॰ पु॰ । ७ अथ ह–इति लि॰ पु॰ ।
८ तत्रेति लि॰ पु॰ ।

नभिहनिष्याम" इति ? अत उपक्रमाविरोधाय 'तेभ्य एष प्राण उदगाय'-दित्यध्यस्तप्राणभाव उद्गीथ उद्गानकर्मभूत एव पाकादिष्वोदनादिवत्सौकर्यातिशय[1]विवक्षया कर्तृत्वेनोच्यते। अन्यथोपक्रमगत 'उद्गीथ'-शब्दः कर्त्तरि लाक्षणिकः स्यात् । अतो विद्यैक्यमिति प्राप्ते प्रचक्ष्महे—

न वा प्रकरणभेदात्परोवरीयस्त्वा[2]दिवत् ॥ ७ ॥

'न वे'ति पक्ष व्यावर्तयति । न चै[3]तदस्ति—यद्विद्यैक्यमिति । कुतः । 'प्रकरणभेदात्' । "ओमित्येतदक्षरमुद्गीथमुपासीते"ति प्रकृतमुद्गीथावयव प्रणव[4] प्रस्तुत्य 'एतस्य वा अक्षरस्योपव्याख्यान भवति देवासुरा ह वै यत्र संयेतिरे" इत्यारभ्य "अथ ह य एवाय मुख्यः प्राणस्तमुदगीथमुपासाञ्चक्रिरे" इत्युद्गीथावयवभूतप्रणवविषयमुपासनं छन्दोगा अधीयते, वाजिनस्तु—तादृशप्राचीनप्रकरणाभावात् "हन्ता ऽसुरान् यज्ञ उद्गीथेनात्ययामे"ति कृत्स्नमुद्गीथ प्रस्तुत्या "ऽथ हेममासन्य प्राणमूचुस्त्व न उद्गाये"त्यादिकृत्स्नोद्गीथ[5]विषयमधीयते । अतः प्रकरणभेदेन विधेयभेदः, विधेयभेदे च रूपभेद इति न विद्यैक्यम् । किञ्च, "अथ ह एवाय मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे"इति पूर्वप्रकृतोद्गीथावयवभूतः प्रणव एवाध्यस्तप्राणभावश्छन्दोगानामुपास्यः, वाजिनान्तु कृत्स्नस्योद्गीथस्य कर्त्तोद्गाता प्राणदृष्ट्योपास्य इति "अथ हेममासन्य प्राणमूचुस्त्व न उद्गायेति तथेति तेभ्य एष प्राण उदगाय"दित्युद्गातरि प्राणाध्यासं निर्दिश्य "य एव वेदे"त्युद्गातैवाध्यस्तप्राणभाव उपास्यो विधीयते । अतश्च रूपभेदः । न चोद्गातर्युपास्ये विहिते 'उद्गीथेनात्ययामे'त्याख्यायिकोपक्रमविरोध.[6] शङ्कनीयः, उद्गातुरुपासने उद्गीथस्योद्गानकर्मभूतस्यावश्यापेक्ष्यत्वा[7]त्तस्यापि परपरिभवाख्य फल

---

१ इत्यध्यस्ते प्राणभाव उद्गानं कर्मभूत एव ··सौकर्याविषयेति लि० पु० प्रमादः ।　　२ परोवर्यस्त्वेति लि० पु० ।

३ न वै-इति लि० पु० ।　४ ०वयव प्रभूतं प्रणवमिति मु० पु० ।

५ ०द्गीथमिति लि० पु० ।　६ आख्याविरोधोपक्रमे विरोधइति लि० पु० ।

७ अवश्यापेक्षितत्वादिति पु० द्वयेपि पाठ ।

प्रति हेतुत्वात् । अतो रूपभेदाद्विद्याभेद इति चोदनाद्यविशेषे[1]ऽपि न विद्यैक्यम् । 'परोवरीयस्त्वादिवत्,' यथैकस्यामपि शाखायामुद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरभूतम् ।

**सञ्ज्ञातश्चे[2]त्तदुक्तमस्ति तु तदपि ॥ ८ ॥**

उद्गीथविद्येतिसञ्ज्ञैक्यात्तद्विद्यैक्यमुक्तं चे, त्तत् सञ्ज्ञैक्य विधेयभेदेऽप्यस्त्येव । यथाऽग्निहोत्रसञ्ज्ञा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च, यथा चोद्गीथविद्येति च्छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासु ।

**व्याप्तेश्च समञ्जसम् ॥ ९ ॥**

छान्दोग्ये प्रथमप्रपाठक उत्तरास्वपि विद्यासूद्गीथावयवस्य प्रणवस्य[3] प्रथमप्रस्तुतस्योपास्यत्वेन व्याप्तेश्च तन्मध्यगतस्य "तद्ध देवा उद्गीथमाजह्रु"रित्यु'द्गीथ'-शब्दस्य प्रणवविषयत्वमेव समञ्जसम् । अवयवे च समुदायशब्दः पटो दग्ध इत्यादिषु दृश्यते, अतश्चोद्गीथावयवभूतः प्रणव एवो'द्गीथ'शब्दनिर्दिष्ट इति स एव प्राणदृष्ट्योपास्यश्छान्दोग्ये प्रतिपत्तव्यः । वाजसनेयके तु[4] कृत्स्नोद्गीथविषय'उद्गीथ'-शब्द इति कृत्स्नोद्गीथस्य कर्त्तोद्गाता प्राणदृष्ट्योपास्य इति विद्यानानात्वं सिद्धम् ॥

अन्यथात्वाधिकरणं समाप्तम् ॥ २ ॥

---

अथ सर्वाभेदाधिकरणम् ३ ।

**सर्वाभेदादन्यत्रेमे ॥ १० ॥**

छान्दोग्यवाजसनेयकयोः प्राणविद्याऽऽम्नायते, "यो ह वै ज्येष्ठं श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति[5] प्राणो वा[6] ज्येष्ठश्च श्रेष्ठश्चे"त्यादि । तत्र ज्येष्ठ्यश्रैष्ठ्यगुणकं प्राणमुपास्यं प्रतिपाद्य वाक्चक्षुःश्रोत्रमनस्सु वसिष्ठत्वप्रतिष्ठात्वसम्पत्ता[7]यतनत्वाख्यान् गुणान् प्रतिपाद्य वा

---

१ चोदनाविशेष इति लि० पु० । २ संज्ञातश्च-इति लि० पु० ।
३ प्रणवस्येति नास्ति लि० पु० । ४ तुशब्दो नास्ति लि० पु० ।
५ ज्येष्ठश्च भवतीति लि० पु० । ६ प्राणो ह वावेति मु० पु० ।
७ सपत्त्या-इति मु० पु० ।

गादीना देहस्य च[1] प्राणायत्तस्थितित्वेन तदायत्त[2]त्कार्य्यत्वेन च प्राणस्य श्रैष्ठ्य प्रतिपाद्य वागादिसम्बन्धितया श्रुतान् वसिष्ठत्वादीन् गुणाश्च प्राणसम्बन्धितया प्रतिपादयति । एव छान्दोग्यवाजसनेयकयोर्ज्यैष्ठ्य श्रैष्ठ्यगुणको वसिष्ठत्वादिगुणकश्च प्राण उपास्यः प्रतिपाद्यते । कौषीतकिना[3] तु प्राणविद्यायाया तथैव श्रैष्ठ्यज्यैष्ठ्यगुणकः प्राण उपास्यः प्रतिपादितो, न पुनर्वसिष्ठत्वादयो वागादिसम्बन्धिनो गुणा. प्राणसम्बन्धितया प्रतिपादिताः । तत्र सशय.—किमत्र विद्या भिद्यत उत नेति । किं युक्तम् । भिद्यत इति । कुतः । रूपभेदात् । यद्यप्युभयत्र प्राण एव ज्यैष्ठ्यश्रैष्ठ्यगुणक उपास्यः प्रतीयते, तथाऽप्येकत्र वसिष्ठत्वादिभिरपि[4] गुणैर्युक्तः प्राण उपास्यः प्रतीयते, इतरत्र तु[5] तद्विधुर इत्युपास्यरूपभेदाद्विद्याभेद इति प्राप्ते ब्रूमः—

'सर्वाभेदादन्यत्रेमे' ।

नात्र विद्याभेदः । अन्यत्र कौषीतकिना[6] प्राणविद्यायामपि इमे वसिष्ठत्वादयो गुणा उपास्याः सन्ति । कुतः । 'सर्वाभेदात्,' प्रतिज्ञातप्राणज्यैष्ठ्योश्रैष्ठ्योपपादनप्रकारस्य सर्वस्य तत्राप्यभेदात् । तथा हि छन्दोगवाजसनेयिना प्राणविद्यायाम्—"एता ह वै देवता अहंश्रेयसे व्यूदिरे" "अहश्रेयसे विवदमाना" इति चोपक्रम्य वागाद्येकैकापक्रमणे[7] अन्येषां सप्राणानामिन्द्रियाणा[8] शरीरस्य च स्थितिं तत्तत्कार्ये चाविकलं प्रतिपाद्य प्राणोत्क्रमणे सर्वेषा विशरणमकार्यकरत्व चाभिधाय सर्वेषा प्राणाधीनस्थितित्वतदधीनकार्यत्वाभ्या प्राणस्य ज्यैष्ठ्यमुपपादितम् । एवमुपपादितं वागादिकार्यस्य प्राणाधीनत्वम् "अथ हैनं वागुवाच यदहं वसिष्ठाऽस्मि त्व तद्वसिष्ठोऽसी"त्यादिना वागादिभिरनूद्यते[9] । कौषीतकिनां

१ चेति नास्ति लि॰ पु ।
२ ०तत्तदिति मु पु॰ । ३ कौषीतकीनामिति पु द्वयेपि ।
४ अपिशब्दो नास्ति लि॰ पु॰ । ५ तुशब्दो नास्ति लि पु ।
६ कौषीतकीनामिति पुनःपुनः पु॰ द्वये ।
७ वागादेकैकाश्रयणा इति लि॰ पु॰ ।
८ चकारोऽधिकोऽत्र लि॰ पु॰ । ९ ०रनूद्य—इति लि॰ पु ।

प्राणविद्यायामपि प्राणज्यैष्ठ्यश्रैष्ठ्यप्रतिपादनाय वागादिषु वसिष्ठत्वादयः प्रतिपादिताः—"अथ हेमा देवताः[1] प्रजापतिं पितरमेत्याब्रुवन् को वै नः श्रेष्ठ" इत्यादिना वागादिगता गुणा वागादयश्च देहश्च प्राणाधीन इति प्राणस्य ज्यैष्ठ्यमुपपादितम्, वागादिभिः स्वस्वगुणाना वसिष्ठत्वादीना प्राणाधीनत्वानुवादमात्र तु न कृतम्। नैतावता रूपभेदः, वागादीना वसिष्ठत्वादिगुणान्वितानां प्राणाधीनकार्यत्वोपपादनेनैव प्राणस्य वागादिवसिष्ठत्वादिगुणहेतुत्वस्य सिद्धत्वात्। तदेव हि प्राणस्य वसिष्ठत्वादिगुणयोगित्वम्, यद्वागादिवसिष्ठत्वादिहेतुत्वम्। अतोऽत्रापि वसिष्ठत्वादिगुणयोगात् प्राणो ज्येष्ठः प्रतिपन्न इति नास्ति विद्याभेदः॥

सर्वाभेदाधिकरणं समाप्तम्॥ ३॥

प्राणविद्याङ्गविषयमन्यदपि निरूपणमनन्तरमेव करिष्यते। यथा प्राणस्य वसिष्ठत्वाद्यनुसन्धानेन विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीना कौषीतकिप्राणविद्याया प्राप्ति,स्तथा ब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते, ते[2] ब्रह्मविद्यासु सर्वास्वनुसन्धेया इत्ययमर्थः प्रतिपाद्यते—

अथ ऽऽनन्दाधिकरणम् ४। **आनन्दादयः प्रधानस्य॥ ११॥**

अत्र ब्रह्मस्वरूपगुणाना सर्वासु परविद्यासूपसंहारोऽस्ति नेति विचार्यते। अप्रकरणाधीतानामुपसंहारे प्रमाणाभावात् प्रकरणश्रुतानामेवोपसंहार इत्येवं प्राप्ते ब्रूमः—

'आनन्दादयः प्रधानस्य'।

अभेदादिति वर्त्तते। प्रधानस्य गुणिनो ब्रह्मणः सर्वेषूपासनेष्वभेदाद् गुण्यऽपृथग्भावाद्गुणाना सर्वत्रानन्दादयस्तद्गुणा उपसंहर्त्तव्याः।

एवं तर्हि गुण्यपृथग्भावादेवानन्दादिवत् प्रियशिरस्त्वादयोऽपि

१ अथ हेमा देवता इति लि॰ पु नास्ति।
२ ते—इति नास्ति लि॰ पु॰।

'तस्य प्रियमेव शिर' इत्यादौ ब्रह्मगुणत्वेन श्रुताः सर्वत्र प्रसज्येरन्, नेत्याह—

**प्रियशिरस्त्वाद्यऽप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥**

ब्रह्मस्वरूपगुणाना प्राप्तावुच्यमानाया प्रियशिरस्त्वादीनामप्राप्तिः, तेषामब्रह्मगुणत्वात् । ब्रह्मणः पुरुषविधत्वरूपण[1]मात्रान्तर्गतत्वात् प्रियशिरस्त्वादीनाम् । अन्यथा शिर.पक्षपुच्छाद्यवयवभेदे सति ब्रह्मणोऽप्युपचयपचयौ प्रसज्येयाताम् । तथा च[2] सति 'सत्य ज्ञानमनन्त ब्रह्मे'त्यादि विरुध्यते ।

नन्वेवमेव ब्रह्मसम्बन्धिनामेवैश्वर्यगाम्भीर्यौदार्यकारुण्यादीनां गुणानामनन्ताना गुण्यऽपृथक्स्थितत्वमात्रेण तत्राश्रुतानामप्युपसहारे सति[3] सर्वे सर्वत्र प्रसज्येरन्, आनन्त्यादुपसहाराशक्तिश्च,[4] तत्राह—

**इतरे त्वर्थसामान्यात् ॥ १३ ॥**

'तु'-शब्दश्चोद्य व्यावर्त्तयति । इतरे त्वानन्दादयो ऽर्थसामान्यात्सर्वत्रानुवर्त्तन्ते † । ये ऽत्वर्थसमाना अर्थस्वरूपनिरूपणधर्मत्वेनार्थप्रतीत्यनुबन्धिन,स्तेऽर्थस्वरूपवत्सर्वत्रानुवर्त्तन्ते † । ते च गुणाः सत्यज्ञानानन्दामलत्वानन्तत्वादि[5] । "यतो वा इमानी"त्यादिना जगत्कारणतयोपलक्षित ब्रह्म "सत्य ज्ञानमनन्त ब्रह्म" "आनन्दो ब्रह्मे"त्यानन्दादिभिर्हि स्व[6]रूपतो निरूप्यते । अत उपास्यब्रह्मस्वरूपावगमाय सर्वासु विद्यास्वानन्दादयोऽनुवर्त्तन्ते । ये तु निरूपितस्वरूपस्य ब्रह्मणः कारुण्यादयो गुणाः प्रतिपन्ना,स्तेषा गुण्यऽपृथक्स्थितित्वेऽपि प्रतीत्य[7]नुबन्धित्वाभावाद् ये यत्र श्रुतास्ते तत्रैवोपसहार्या[8] इति निरवद्यम् ।

---

१ ०रूपणेति लि पु ।
२ चेति नास्ति लि पु॰ । ३ संहार—इति लि॰ पु ।
४ ०ऽशक्तिश्चेति लि पु॰ ।
†† एतच्चिह्नान्तर्गतः पाठो लि॰ पु नास्ति ।
५ सत्यज्ञानानन्दामलत्वादय इति मु पु॰ ।
६ स्वस्वेति लि॰ पु॰ । ७ गुणपृथक्स्थितत्वेपि प्रीत्य—इति लि॰ पु॰ ।
८ तत्रोपसहार्या इति मु॰ पु॰ ।

यद्युपचयापचयप्रसङ्गात् प्रियशिरस्त्वादयो ब्रह्मणः पुरुषविधत्व-निरूपणमात्रार्थाः, न तु ब्रह्मगुणा,स्तर्ह्यऽतथारूपस्य ब्रह्मणस्तथात्वेन रूपणं किमर्थं क्रियते। अतथाभूतस्य हि तथात्वरूपणे केनचित्प्रयोजनेन भवितव्यम्, यथाऽऽत्मान रथिन विद्धी"त्यादिनोपासकस्य तदुपकरणाना च रथि[1]रथादित्वरूपणमुपासनोपकरणभूतशरीरेन्द्रियादिवशीकरणार्थं क्रियत इत्युक्तम्। न चेह तथाविध किञ्चित्प्रयोजन दृश्यत इति बलाद्ब्रह्म-गुणत्व प्रियशिरस्त्वादीनामभ्युपेत्यम्, तत्राह–

## आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

प्रयोजनान्तराभावादाऽऽध्यानायाऽय रूपणोपदेशः क्रियते। आ-ध्यानमनुचिन्तनमुपासनमुच्यते। "ब्रह्मविदाप्नोति पर"मित्यत्रोपदिष्टा-ध्यानरूपवेदनसिद्धये ह्यानन्दमयब्रह्मप्रतिपत्त्यर्थमाऽऽनन्दमय ब्रह्म प्रिय-मोदादिरूपेण विभज्य शिरःपक्षादित्वेन रूपयित्वोपदिश्यते, यथा अन्न मयः पुरुषोऽय देहः शिरःपक्षपुच्छादिभि[2]"स्तस्येदमेव शिर" इत्यादिना बुद्धावारोप्यते, यथा च प्राणमयमनोमयविज्ञानमया"स्तस्य प्राण एव शिर" इत्यादिना प्राणाद्यवयवैर्बुद्धावारोप्यन्ते। एवमेवै[3]भ्योऽर्थान्तरभू-तस्तदन्तरात्माऽऽनन्दमयोऽपि प्रिय[4]मोदादिभिरेकदेशैः शिरःप्रभृतित्वेन रूपितैराध्यानाय बुद्धावारोप्यते। एवमानन्दमयोपलक्षणत्वात् प्रियशिर-स्त्वादीनां न सर्वदाऽऽनन्दमयप्रतीतावनुवर्त्तन्ते[5] ॥

## आत्मशब्दाच्च ॥ १५ ॥

'अन्योऽन्तर आत्मानन्दमय' इत्यात्मशब्देन निर्देशादात्मनश्च शिरःपक्षपुच्छासम्भवात्[6] प्रियशिरस्त्वादयस्तस्य सुखप्रतिपत्त्यर्थं रूपणमात्र-मिति गम्यते।

---

१ रथीति लि॰ पु नास्ति। २ देहशिर.पक्षादिभिरिति लि॰ पु॰।
३ एवकारो नास्ति लि पु। ४ प्रिय शिर–इति लि॰ पु॰।
५ ०टीका च सर्वदा·· · वर्त्तत इति लि॰ पु॰।
६ ०पुच्छसभवादिति लि॰ पु प्रमाद।

नन्व"ऽन्योऽन्तर आत्मा प्राणमयः' अन्योऽन्तर आत्मा मनोमय" इत्या'त्म'-शब्दस्याऽनात्मस्वऽपि पूर्वं प्रयुक्तत्वा"दन्योऽन्तर आत्माऽऽनन्दमय" इत्या'त्म'-शब्दस्यात्मविषयत्व कथ निश्चीयते, तत्राह-

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

"अन्योऽन्तर आत्माऽऽनन्दमय" इत्यत्रा'त्म'-शब्देन परमात्मन एव ग्रहणम् । 'इतरवत्', यथा इतरत्र "आत्मा वा इदमेक एवाग्र आसीत् स ऐक्षत लोकान्नु[1]सृजा" इत्यादिष्वा'त्म'-शब्देन परमात्मन एव ग्रहणम्, तद्वत् । कुत एतत् । 'उत्तरात्,' "सोऽकामयत बहु स्यां प्रजायेये"त्यानन्दमयविषयादुत्तराद्वाक्यात् ।

अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

पूर्वत्र प्राणमयादिष्वनात्मस्वात्मशब्दान्वयदर्शनान्नोत्तरान्निश्चेतुं शक्यमिति[2] चेत्, 'स्यादवधारणात्' । स्यादेव निश्चयः । कुतः । अवधारणात् । पूर्वत्रापि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इति परमात्मन एव बुद्ध्याऽवधारितत्वादन्नमयादनन्तरे[3] प्राणमये प्रथमं परमात्मबुद्धिरवतीर्णा, तदनन्तर च प्राणमयादनन्तरे[3] मनोमये, ततो विज्ञानमये, तत आनन्दमये प्रक्रान्ता परमात्मबुद्धिस्तदन्तराभावादुत्तराच्च 'सोऽकामयते'ति वाक्यात् प्रतिष्ठितेत्युपक्रमे ऽप्यपरमात्मनि परमात्मबुद्ध्या'ऽऽत्म'-शब्दान्वय इति निरवद्यम् ॥

आनन्दाद्यधिकरण समाप्तम् ॥ ३ ॥

---

अथ कार्याख्यानाधिकरणम् ४ ।

कार्याख्यानादपूर्वम् ॥ १८ ॥

पूर्वप्रस्तुतप्राणविद्याशेषभूतमिदानीं चिन्त्यते । छान्दोग्यवाजसनेययोर्ज्येष्ठ श्रेष्ठ च प्राणमुपास्यमुक्त्वा प्राणस्य वासस्त्वेनापोऽभिधीयन्ते । छान्दोग्ये तावत् "स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको[4] ह

१ स ईक्षत लोकाच-इति लि पु । २ शक्य इति-इति मु· पु । ३ ०दन्तरे-इति मु· पु· । ४ अम्बक इति लि· पु, न तु युक्तम् ।

वासो भवत्यनग्नो ह भवती"ति, वाजसनेयके "किं मे वास" इति प्राणेन पृष्टा[1] वागादय ऊचुः "आपो वास इति ‥तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यऽशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते" "तस्मादेवंविदऽशिष्यन्नाचामेदशित्वा चाचामेदेतमेव[2] तदन[3]मनग्नं कुरुत" इति। तत्र संशयः–किमत्रा[4]चमनं विधीयत उताऽपां प्राणवासस्त्वानुसन्धानमिति। 'अशिष्यन्नाचामेदशित्वा चाचामे'दित्याऽऽचमने विधिप्रत्ययश्रवणात् 'एतमेव तदनमनग्नं कुरुत' इति वेदने विधिप्रत्ययाभावादनग्नतासंकीर्त्तनस्य स्तुत्यर्थतयाऽन्वयोपपत्तेश्च भोजनाङ्गस्याचमनस्य स्मृत्याचारप्राप्तत्वेन विधिप्रत्ययबलात्प्राणविद्याङ्गमाचमनान्तर[5] विधीयत इति प्राप्ते ब्रूमः–

आचमनीयानामपां प्राणस्य वासस्त्वानुसन्धानमेवेहापूर्वमप्राप्तं विधीयते, 'कार्य्याख्यानात्,' अप्राप्ताख्यानात्, अप्राप्ताख्याने शास्त्रस्या[6]र्थवत्त्वादित्यर्थः। एतदुक्तं भवति–"किं मे वासः आपो वासः अद्भिः परिदधति एतदेव तदऽनमनग्नं कुरुत" इत्युपक्रमोपसंहारयोर्वाक्यस्यापां प्राणवासोदृष्टिपरत्वप्रतीतेराचमनस्य स्मृत्याचारप्राप्तत्वादाचमनमनूद्याचमनीयास्वऽप्सु प्राणवासस्त्वानुसन्धानं विधीयत इति। अत एव छान्दोग्ये "तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधती"त्यद्भिः परिधानमेवोक्तं, नाचमनम् ॥

कार्याख्यानाधिकरणं समाप्तम् ॥ ४ ॥

---

अथ समानाधिकरणम्। **समान एवं चाभेदात्[7] ॥ १६ ॥**

वाजसनेयके ऽग्निरहस्ये शाण्डिल्यविद्याऽऽम्नाता–"सत्यं ब्रह्मेत्युपासीताथ खलु क्रतुमयोऽयं पुरुष" इत्यारभ्य "स आत्मानमुपासीत

१ दृष्टा इति मु॰ पु॰।
२ एतदेवेति मु॰ पु॰ ऽत्र।
३ तदर्चमिति लि॰ पु॰ सर्वत्रपाठ.।
४ किमत्रेति लि॰ पु॰।
५ आचमानन्तरमिति मु॰ पु॰।
६ कार्याख्यानात प्राप्ताख्याने शब्दस्य–इति लि॰ पु॰।
७ समान एवाभेदादिति लि० पु०।

मनोमय प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मान"मिति । तथा तस्मिन्नेव बृहदारण्यके पुनरपि शाण्डिल्यविद्याऽऽम्नायते[1] "मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंचे"ति । तत्र संशयः– किमत्र विद्या भिद्यत उत नेति[2] । संयोग[3]चोदनाख्याना-मविशेषेऽपि वशित्वाद्युपास्यगुणभेदेन रूपभेदाद् विद्याभेद इति प्राप्त उच्यते–

'समान एव'मिति । यथाऽग्निरहस्ये मनोमयप्राणशरीरभारूप-सत्यसङ्कल्पत्वादिगुणगणः श्रुत,[4] एवं बृहदारण्यकेऽपि मनोमयत्वादिके समाने सत्यऽधिकस्य वशित्वादेश्च सत्यसङ्कल्पत्वगुणाभेदाच्च रूपभेदः । अतो विद्यैक्यम् ॥

समानाधिकरणं समाप्तम् ॥ ५ ॥

---

अथ संबन्धाधिकरणम ६ । **सम्बन्धादेवमन्यत्रापि[5] ॥ २० ॥**

बृहदारण्यके श्रूयते–"सत्यं ब्रह्मे"त्युपक्रम्य "तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्[6]मण्डले पुरुषो यश्चायं दक्षिणेऽक्ष[7]"न्नित्युप-क्रम्य आदित्यमण्डलेऽक्षणि[8] च सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनोपा-स्यत्वमुक्त्वा "तस्योपनिषदहरित्यधिदैवत" "तस्योपनिषदहमित्यध्यात्म"-मिति द्वे उपनिषदौ रहस्यनामनी उपासनशेषतयाऽऽम्नायेते, ते[9] किं यथाश्रुतस्थानविशेषनियतत्वेन व्यवस्थिते उतोभयत्रोभे अनियमेनेति

---

१ ऽम्नाता–इति लि० पु० ।
२ संशयः इति पुनरत्र लि० पु० । ३ संयोगेति नास्ति लि० पु० ।
४ मनोमय. प्राणशरीर' भारूप सत्यसंकल्पत्वादिगुणगणः श्रुत इति मु० पु०, मनोमयशरीरप्राणभारूपसत्यसंकल्पत्वगुणश्रुतेरिति लि० पु० ।
५ ०मन्त्रापीति लि० पु० । ६ एषतस्मिन्निति लि० पु० ।
७ ऽक्षिन्निति पु० द्वयेपि ।
८ अक्षिणि–इति मु० पु० अक्षिणी–इति लि० पु० ।
९ ते–इति नास्ति लि० पु० ।

संशये सत्यस्य व्याहृतिशरीरस्यैवोपास्यस्य ब्रह्मणो द्वयोः स्थानयोः सम्बन्धादुपास्यैक्येन रूपाभेदात् संयोगाद्यभेदाच्च विद्यैक्यादनियमेनेति[1] प्राप्तम्, तदिदमुच्यते– 'सम्बन्धादेवमन्यत्रापी'ति । यथा मनोमयत्वादिगुणविशिष्टस्यैक्यादुपास्यैक्येन रूपाभेदाद्विद्यैक्याद् गुणोपसंहारः, एवमन्यत्राप्यक्ष्यादित्यसम्बन्धिनो ब्रह्मणः सत्यस्यैकत्वेन विद्यैक्यादुभयोरुभयत्रोपसंहारः । इत्येवं प्राप्ते प्रचक्ष्महे–

## न वा विशेषात् ॥ २१ ॥

न वै[2]तदस्ति यद्विद्यैक्यादुपसंहार इति । कुतः । 'विशेषात्'– उपास्यरूपविशेषात्, ब्रह्मण एकत्वेऽप्येकत्रादित्यमण्डलस्यतयोपास्यत्वमितरत्राक्ष्याधारतयोपास्यत्वमिति स्थानसम्बन्धित्वभेदेन रूपभेदाद्विद्याभेदः । नैवं शाण्डिल्यविद्याया उपास्यस्थानं भिद्यते, उभयत्र हृदयाधारत्वेनोपास्यत्वात् । अतो व्यवस्थिते इति ।

## दर्शयति च ॥ २२ ॥

दर्शयति चाक्ष्याधारादित्याधार[3]योर्गुणानुपसंहारम्, "तस्यैतस्य तदेव रूपं यदमुष्य रूपं"मित्यादिना रूपाद्यतिदेशेन[4] । स्वतो ह्यप्राप्ताव ऽतिदेशेन प्राप्त्यपेक्षा ॥

सम्बन्धाधिकरणं समाप्तम् ॥ ६ ॥

---

अथ संभृत्यधिकरणम् ७ । **संभृति[5]द्युव्याप्त्यपि चातः ॥ २३ ॥**

तैत्तिरीयके राणायनीयानां[6] खिलेषु च

ब्रह्म ज्येष्ठा वीर्या संभृतानि[7]

---

१ अनियते नेति लि० पु० ।

२ न वै–इति मु० पु० ।

३ अक्ष्याधारादित्याक्ष्याधारेति लि० पु० उपकल्पितम् ।

४ रूपाद्यतिरेकेनेति लि० पु० । ५ संप्रतीति लि० पु० प्रमादः ।

६ 'नाराणायनीयाना'मित्यत्र 'नारायणीयानामिति युक्तः पाठ'इति मु० पु० । शोधनम्, 'काराणायनियाना'मिति लि० पु० । ७ ज्येष्ठवीर्यासमता –इति लि० पु० ।

ब्रह्माग्रे ज्येष्ठं दिवमाततान।
ब्रह्म भूतानां प्रथमोत जज्ञे*
तेनार्हति ब्रह्मणा स्पर्द्धितुं क"इति।

ब्रह्मणि ज्येष्ठाना वीर्याणां संभृतिः द्युव्याप्तिश्चेत्यादिगुणजातमाम्नातम्। तेषामुपासनविशेषमनारभ्याधीतानां गुणानां सर्वासु विद्यासूपसंहारे प्राप्त उच्यते—

"सम्भृतिद्युव्याप्त्यपि चाति। संभृतिद्युव्याप्तीति समाहारद्वन्द्वत्वादेकवद्भावः। सम्भृत्यादिकमनारभ्याधीतमपि अत एव स्थानभेदाद्व्यवस्थाप्यम्, न सर्वत्रोपसंहर्त्तव्यम्। कथमनारभ्याधीतानां स्थानविशेषनियतत्वम्। स्वसामर्थ्या[1]दिति ब्रूमः। द्युव्याप्तिस्तावद्धृदयाद्यल्पस्थानगोचरासु विद्यासु नोपसंहर्त्तुं शक्या, संभृत्यादयोऽपि तत्सहचारिणस्तत्तुल्यदेशा इत्यल्पस्थानविषयासु विद्यास्वऽनुपसंहार्याः। शाण्डिल्यदहरादिविद्यास्वऽल्पस्थानविषयासु "ज्यायान् पृथिव्याः" "यावान् वा अय[2]माकाशस्तावानेषोऽन्तर्हृदय आकाश" इत्यादयस्तत्र तत्राशक्योपसंहारा मनोमयत्वापहतपाप्मत्वादिविशिष्टस्योपास्यस्य माहात्म्यप्रतिपादनपराः॥

संभृत्यधिकरणं समाप्तम्॥ ७॥

---

अथ पुरुषविद्याधिकरणम् ८।

**पुरुषविद्यायामपि चेतरेषामनाम्नानात्॥ २४॥**

तैत्तिरीयके पुरुषविद्याऽऽम्नायते—"तस्यैव विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हि"रित्यादिका। छान्दोग्येऽपि पुरुषविद्याऽऽम्नायते—"पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणी"त्यादिका[3]। तत्र संशयः—किमत्र विद्या भिद्यत उत नेति। पुरुषविद्येति नामैक्यात्पुरुषावयवेषु यज्ञावयवकल्पनसाम्येन रूपैक्यात्तैत्तिरीयके फलसंयोगाश्रवणात् "प्र ह[4] षोडशं वर्षशत[5] जीव-

---

* ऋतस्य ब्रह्म प्रथमोत जज्ञे—इति तैत्तिरीयब्राह्मणपाठ.।

१ स्वसामर्थ्यादिति लि० पु०। २ वायमिति पु० द्वयेपि। ३ इत्यादिनेति लि०पु०। ४ प्राहेति लि० पु०। ५ षोडशवर्ष. शतमिति पु० द्वयेपि।

ती''ति च्छान्दोग्ये श्रुतस्यैव पुरुषविद्याफलत्वेन फलसंयोगस्याप्यविशेषाद् विद्यैक्यमिति प्राप्त उच्यते—

उभयत्राम्नातयोर्विद्ययोः पुरुषविद्यात्वेऽपि विद्याभेदोऽस्त्येव। कुतः। 'इतरेषामनाम्नानात्'—एकस्यां शाखायामाम्नातानां गुणानामन्यत्राऽनाम्नानात्[1]। तथा हि, "यत्साय प्रातर्मध्यन्दिनं च तानि सवनानी''त्यादयस्तैत्तिरीयक आम्नाताः, छान्दोग्ये सवनत्वेन नाम्नायन्ते[2], त्रेधा विभक्तं पुरुषायुषं छान्दोग्ये सवनत्वेन कल्प्यते, छान्दोग्ये श्रुतानामशिशिषा[3]दीनां दीक्षादित्वकल्पनं तैत्तिरीयके न कृतम्, यजमानपत्न्यादिपरिकल्पनं चान्यथा। अतो रूपमुभयत्र भिद्यते। तथा फलसंयोगोऽपि भिद्यते। तैत्तिरीयके हि पूर्वानुवाके "ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीते''ति ब्रह्मविद्यामभिधाय तत्फलत्वेन "ब्रह्मणो महिमानमाप्नोती''त्युक्त्वा "तस्यैव विदुष" इत्यादिनाऽऽम्नाता पुरुषविद्या तस्यै[4]व ब्रह्मविदुषो यज्ञत्व[5]कल्पनमिति गम्यते। अतो ब्रह्मविद्याङ्गत्वाद् ब्रह्मप्राप्तिरेवात्र फलम्, 'फलवत्सन्निधावफलं तदङ्ग'मिति च[6] न्यायात्तैत्तिरीयकाम्नाता पुरुषविद्या ब्रह्मविद्याङ्गमिति गम्यते। छान्दोग्ये त्वायुःप्राप्तिफला पुरुषविद्येत्युक्तम्। अतो रूपफल[7]संयोगयोर्भेदाद्विद्याभेद इत्येकत्राम्नातानां गुणानामितरत्रा[8]नुपसंहारः॥

पुरुषविद्याऽधिकरणं समाप्तम्॥ ८॥

---

अथ वेधाद्यधिकरणम् ६। **वेधाद्यर्थभेदात्॥ २५॥**

आथर्वणिका उपनिषदारम्भे "शुक्रं प्रविध्य हृदयं प्रविध्ये''त्यादीन्मन्त्रानधीयते, सामगाश्च रहस्यब्राह्मणारम्भे "देव सवितः प्रसुव

---

१ अनाम्नातानां गुणानामन्यत्राम्नानादिति लि० पु०।
२ सवनत्वेनाम्नायन्त इति लि० पु०।
३ ०माशिशिषेति मु० पु०।
४ अस्येति मु० पु०।
५ त्वेति लि० पु० नास्ति।
६ ०मित्येवेति लि० पु०।
७ फलेति नास्ति लि० पु०।
८ गुणानामेकत्रेति मु० पु०।

यत्र प्रसुवे''त्याद्यामनन्ति, काठकास्तैत्तिरीयकाश्च "शन्नो मित्रः शं वरुण''इत्यादिकम्, शाट्यायनिनश्च "श्वेतोऽश्वो हरिनीलोऽसी[1]''त्यादिकम्, ऐतरेयिणस्तु महाव्रतब्राह्मणमधीयते "इन्द्रो ह वै[2] वृत्रं हत्वा महानभव''दित्यादि, कौषीतकिनोऽपि महाव्रतब्राह्मणमेव "प्रजापतिर्वै संवत्सरस्तस्यैष आत्मा यन्महाव्रत''मिति, वाजसनेयिनस्तु प्रवर्ग्यब्राह्मणम् "देवा ह वै सत्रं निषेदु''रित्यादि । तत्र संशयः—किमुपनिषदारम्भेष्वधीताः शुक्रं प्रविध्य शन्नो मित्र इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्याङ्गमुत नेति । किं युक्तम् । विद्याङ्गमिति । कुतः । सन्निधिसमाम्नानाद् विद्याङ्गत्व[3]प्रतीतेः । यद्यपि "शुक्रं प्रविध्य''त्यादीनां मन्त्राणां प्रवर्ग्यादेश्च कर्मणः श्रुतिलिङ्गवाक्यैर्बलवद्भिर्यथायथं कर्मसु विनियोगोऽवगम्यते, तथाऽपि "शन्नो मित्रः, सह नाववत्वि''त्यादेर्मन्त्रस्यान्यत्र विनियोगाभावाद्विद्याधिकाराच्च विद्याङ्गत्वमवर्जनीयमिति सर्वासु विद्यासु इमे[4] मन्त्रा उपसंहर्त्तव्या इति प्राप्ते प्रचक्ष्महे—

'वेधाद्यर्थभेदात्' ।

"शुक्रं प्रविध्य हृदयं प्रविध्य" "ऋतं वदिष्यामि सत्यं वदिष्यामि ऋतमवादिषं सत्यमवादिषं" "तेजस्वि नाऽवधीतमस्तु मा विद्विषावहै" इत्यादिभिर्लिङ्गैरभिचाराध्ययनादिष्वेषां विनियोगावगमान्न विद्याऽङ्गत्वम् । एतदुक्तं भवति—यथा [5]हृदयं प्रविध्येत्यादिमन्त्रसामर्थ्याच्छुक्रं प्रविध्येत्यादीनामभिचारादिशेषत्वमवगम्यते, एवमेव'तं वदिष्यामि तेजस्विनाऽवधीतमस्त्वि'त्यादिमन्त्रसामर्थ्यादेव स्वाध्यायशेषत्वं 'शन्नो मित्र'इत्यादिमन्त्राणामवगम्यते । अतो न तेषां विद्याङ्गत्वमिति । 'शुक्रं प्रवि-

---

१ श्वेताश्वो हरनिलोसीति लि० पु० ।
२ इन्द्रो वै—इति लि० पु० ।
३ विध्यङ्गत्वेनोपकल्पित लि पु० ।
४ ते—इति मु० पु ।
५ वै—इत्यधिकं मु पु० ।

ध्ये'त्यादीनां प्रवर्ग्यादिब्राह्मणानां चेह पाठो द्विधाकीर्त्यत्वारण्ये ऽनुवाक्यत्वकृतः ।

वेधाद्यधिकरणं समाप्तम् ॥ ९ ॥

---

अथ हान्यधिकरणम् १० । हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

छन्दोगा आमनन्ति—"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामी"[1]ति, तथा[2] आथर्वणिकाश्च "तदा विद्वान्[3] पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती"ति । शाट्यायनिनस्तु "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या"मित्यादि, कौषीतकिनस्तु "तत्सुकृतदुष्कृते वि[4]धूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृत"मिति । एवं क्वचित्पुण्यपापयोर्हानिः, क्वचित्प्रियाप्रियेषु तत्प्राप्तिः, क्वचिदुभयं च श्रुतम् । [5]तदुभयमेकैकविद्यायां श्रुतमपि सर्वविद्याङ्गमास्थेयम्, सर्वब्रह्मविद्यानिष्ठस्यापि ब्रह्म प्राप्नुवतः पुण्यपापप्रहाणस्यावश्यभावित्वात् । प्रहीणविषयत्वाच्चोपायनस्य । तच्चिन्तनं च विधीयमानं सर्वविद्याङ्गं भवितुमर्हति । तत्रेदं विचार्यते—हानिचिन्तनमुपायनचिन्तनमुभयचिन्तनं च विकल्प्येरन्, उपसंह्रियेरन् वा । किं युक्तम् । विकल्प्येर[6]न्निति । कुतः । पृथगाम्नानसामर्थ्यात् । समुच्चये हि सर्वत्रो[7]भयानुसन्धानं स्यात्, तच्च कौषीतकिवाक्येनैव सिद्धमित्यन्यत्राम्नानमनर्थकमेव स्यात् । अतोऽनेकत्राम्नानस्य वि[8]कल्प एव प्रयोजनम् । न चाध्येतृभेदेन परिहर्तुं शक्यम्, अनेकत्राम्नानमविशेष पुनःश्रवणं ह्यध्येतृभेदपरिहार्यम् । अत्र तु हानिरेव

---

१ अभिसंभवानीति मु पु ।

२ तथेति मु पु ऽत्र नास्ति । ३ तथा विद्वानिति पु द्वयेऽपि ।

४ वीति नास्ति लि॰ पु॰ ।

५ ०दुभयत्र च श्रुते—इति लि पु॰ उपकल्पितम् ।

६ विकल्प्येरन्निति पु द्वयेऽपि । ७ सर्वदेति लि॰ पु॰ ।

८ ०मपि विशेषेति लि पु ।

द्वयोः शाखयो,रुपायनमेव चैकस्याम्। न च [1]विद्याभेदेन व्यवस्थापयितु शक्यम्, सर्वशेषभूतमिदमनुसन्धानमित्युक्तत्वात्। अत्रेदमुच्यते–

'हानौ तूपायनशब्दशेषत्वा'दिति। 'तु'–शब्दः पक्ष व्यावर्त्तयति। हानाविति प्रदर्शनार्थम्। केवलाया हानौ केवले चोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोऽवश्यभावी। कुतः। 'उपायनशब्दशेषत्वात्,' 'उपायन'–शब्दस्य हानिवाक्यशेषत्वात्। उपायनवाक्यस्य हि हानिवाक्यशेषत्वमेवोचितम्। विदुषा त्यक्तयोः पुण्यपापयोः प्रवेशस्यानवाचत्वादुपायनवाक्यस्य। प्रदेशान्तराम्नातस्य वाक्यस्य प्रदेशान्तराम्नातवाक्यशेषत्वे दृष्टान्ता उपन्यस्यन्ते–'कुशाच्छन्दःस्तुत्युपगानव'दिति। कलापिनः[2] 'कुशा वानस्पत्या' इत्यामनन्ति, शाट्यायनिना 'त्वौदुम्बर्य्यः कुशा' इति वाक्य सामान्येन वानस्पत्यत्वेनावगताः कुशा औदुम्बर्य्य इति विशिष[3]त्तद्वाक्यशेषतामापद्यते। तथा, "देवासुराणा छन्दोभि"रित्यादिना[4]ऽविशेषेण देवासुराणा छन्दसां प्रसङ्गे "देवच्छन्दासि पूर्व"मिति वचनं क्रमविशेष प्रतिपादयत्तद्वाक्यशेषता गच्छति। तथा, "हिरण्येन षोडशिनः स्तोत्रमुपाकरोती"त्यविशेषेण प्राप्ते "समयाध्युषिते[5] सूर्ये षोडशिनः स्तोत्रमुपाकरोती"ति विशेषविषय वाक्य तद्वाक्यशेषभाव[6] भजते। तथा, 'ऋत्विज उपगायन्ती"त्यविशेषप्राप्तस्य "नाध्वर्युरुपगाये"दिति † वाक्यमनध्वर्युविषयतामवगमयत्तद्वाक्यशेषत्वमृच्छति। एवं, सामान्येनावगमर्थं विशेषेण व्यवस्थापयितु समस्य † वाक्यस्य तच्छेषत्वमनभ्युपगच्छद्भिस्तयोरर्थयोर्विकल्पः समाश्रयितव्यः, स च सम्भवन्त्या गतौ न युज्यते। तदुक्त पूर्वस्मिन्काण्डे' अपि तु वाक्यशेष. स्या[7]दन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः[8] स्या"दिति। तदेव केवलहानोपायनवाक्ययोरेकवाक्यत्वात्

१ चैकस्यामं चेत्युपकल्पितं लि पु॰। २ कौषीतकिन इति सु पु॰।
३ विशेषादिति लि॰ पु॰ उपकल्पितम्। ४ ०त्याद्योनामिति लि॰ पु०।
५ समयाविषित इति सु पु॰। ६ ०शेषत्वमिति सु पु।
†† एतच्चिह्नान्तर्गत पाठो लि॰ पु॰ त्रुटितः।
७ ०शेषत्वादिति पु॰ द्वयेपि। ८ ०मेकादेश–इति लि॰ पु।

केवलस्य हानस्य केवलस्य चोपायनस्याभावाद्विकल्पो नोपपद्यते। कौषीतकिनामुभयाम्नानमविशेषपुनःश्रवणत्वेन प्रतिपत्तृभेदादविरुद्धम् ॥

हान्यधिकरणं समाप्तम् ॥ १० ॥

अथ साम्परायाधिकरणम् ११।

साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये ॥२७॥

सुकृत[1]दुष्कृतयोर्हानमुपायनं च सर्वासु[2] विद्यासु चिन्तनीयमित्युक्तम्। तद्धानं किं देहवियोगकाले देहादुत्क्रान्तस्याध्वनि च उत देह[3]वियोगकाल एवेति विशये उभयत्रेति युक्तम्, उभयथा श्रुतत्वात्। एवं हि कौषीतकिनः समामनन्ति—'स एतं देवयानं पन्थानमासाद्या*ग्निलोकमा†गच्छती"त्युपक्रम्य "स आगच्छति विरजां नदीं तां मनसैवा॒ऽ‡त्येति तत्सुकृतदुष्कृते धूनुते"इति। अत्र वाक्ये ऽध्वनि सुकृतदुष्कृतहानिः प्रतीयते। ताण्डिन[4]स्तु "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी[5]"ति। अत्र तु देहवियोगकाल इति[6] प्रतीयते। शाट्यायनकेऽपि "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यां"मिति पुत्रेषु दायसङ्क्रान्तिसमकालं सुकृतदुष्कृतसङ्क्रमणं श्रूयमाणं देहवियोगकाल इति[7] गम्यते। अतः सुकृतदुष्कृतयोरेकदेशो देहवियोगकाले हीयते, शेषस्त्वध्वनीति प्राप्ते उच्यते—

'सांपराय'इति। 'सांपराये' देहोत्क्रमणकाल एव विदुषः सुकृतदुष्कृते निरवशेषं हीयेते। कुतः। 'तर्तव्या[8]भावात्,' विदुषो देहवियोगात्पश्चात्सुकृतदुष्कृताभ्यां तरितव्यभोगाभावात्। विद्याफलभूतब्रह्म-

* ०माप्नोति प्राय० पाठः। † आङ् नास्ति पु० द्वयेपि।
‡ एवशब्दो नास्ति पु० द्वयेपि। १ युक्तं सुकृतेति लि० पु०।
२ सर्वास्विति नास्ति लि० पु०। ३ उत हेयेति लि० पु०।
४ कौण्डिन इति लि० पु०। ५ ०मभिसभवानीति मु० पु०।
६ ०काल एवेति—इति मु० पु०। ७ ०कालमिति—इति मु० पु०।
८ कर्तव्येति लि० पु०।

प्राप्तिव्यतिरेकेण हि 'सुकृतदुष्कृताभ्यां भोक्तव्ये सुखदुःखे न विद्येते। तथा ह्यन्ये देहवियोगादूर्द्ध्वं ब्रह्मप्राप्तिव्यतिरिक्तसुखदुःखोपभोगाभावमधीयते[1] "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति[2] ।

## छन्दत उभयाविरोधात्[3] ॥ २८ ॥

एवमर्थस्वाभाव्यात्सुकृतदुष्कृतहानिकालेऽवधृते सत्युभयाविरोधेन श्रुतेरर्थस्वभावस्य चाविरोधेन छन्दतो यथेष्टं पदानामन्वयो वर्णनीयः। कौषीतकिवाक्ये 'तत्सुकृतदुष्कृते धूनुत' इति चरमश्रुतो वाक्यावयव 'एतं देवयानं पन्थानमासाद्ये'ति प्रथमश्रुतावयवात्प्रागनुगमयितव्य इत्यर्थः।

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

सुकृतदुष्कृतयोरेकदेशस्य देहवियोगकाले हानिः, शेषस्य पश्चादित्युभयथा कर्मक्षये सत्येव गतेरर्थवत्त्वम्—देवयानगतिश्रुतेरर्थवत्त्वमित्यर्थः। 'अन्यथा हि विरोधः,' देहवियोगकाल एव हि सर्वकर्मक्षये सूक्ष्मशरीरस्यापि नाशः स्यात्, तथा सति केवलस्यात्मनो गमनं नोपपद्यते। अत उत्क्रान्तिसमये विदुषो निःशेष[4]कर्मक्षयोऽनुपपन्नः।

अत्रोत्तरम्—

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

'उपपन्न' एवोत्क्रान्तिकाले सर्वकर्मक्षयः। कथम्। 'तल्लक्षणार्थोपलब्धेः,' क्षीणकर्मणोऽप्याविर्भूतस्वरूपस्य देहसम्बन्धलक्षणार्थोपलब्धेः, 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" "स तत्र पर्येति जक्षत् क्रीडन् रममाणः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति स

१ अभिधीयत इति मु॰ पु॰ । २ इति चेति मु॰ पु॰ ।
३ उभयोविरोधादिति लि॰ पु॰ । ४ विशेषेति लि॰ पु॰ ।

एकधा भवति त्रिधा भवती''त्यादिषु देहसम्बन्धाख्योऽर्थो ह्युपलभ्यते। अतः क्षीणकर्मणोऽपि सूक्ष्मशरीरयुक्तस्य देवयानेन गमनमुपपद्यते। कथं सूक्ष्मशरीरमप्यारम्भककर्मविनाशेऽवतिष्ठत इति चेत्, विद्यामाहात्म्यादिति ब्रूमः। विद्या हि स्वयं सूक्ष्मशरीरस्याऽनारम्भिकाऽपि प्राकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च[1] निरवशेषक्षयेऽपि स्वफलभूतब्रह्मप्राप्तिप्रदानाय[2] देवयानेन पथेन गमयितुं सूक्ष्मशरीरं स्थापयति। 'लोकवत्'[3]-यथा लोके सस्यादिसमृद्ध्यर्थमारब्धे तटाकादिके तद्धेतुषु तदिच्छादिषु विनष्टेष्वपि तदेव तटाका[4]दिकमशिथिलं कुर्वन्तस्तत्र पानीयपानादिकं कुर्वन्ति, तद्वत्।

अथ स्यात्-ज्ञानिनां साक्षात्कृतपरतत्त्वानां देहपातसमये कर्मणो निरवशेषक्षयाद्देहपातादूर्ध्वं सूक्ष्मशरीरमात्रं गत्यर्थमनुवर्तते, सुखदुःखानुभवो न विद्यत इति यदुक्तम्, तन्नोपपद्यते, वसिष्ठापान्तरतमः[5]प्रभृतीनां साक्षात्कृतपरतत्त्वानां देहपातादूर्ध्वं देहान्तरसङ्क्रमः पुत्रजन्मविपत्त्यादिनिमित्तसुखदुःखानुभवश्च दृश्यत इति। अत उत्तरं पठति—

## यावदधिकारमवस्थिति[6]राधिकारिकाणाम् ॥ ३१ ॥

नास्माभिः सर्वेषां ज्ञानिनां देहपातसमये सुकृतदुष्कृतयोर्विनाश उक्तः, अपि तु येषां ज्ञानिनां देहपातानन्तरमर्चिरादिगतिः प्राप्ता, तेषां ज्ञानिनां देहपातसमये सुकृतदुष्कृतहानिरुक्ता। वसिष्ठादीनां त्वाधिकारिकाणां न देहपातादनन्तरम् ऽर्चिरादिगतिप्राप्तिः। प्रारब्धस्याधिकारस्याऽसमाप्तत्वात्। तेषां कर्मविशेषेणाधिकारविशेषं प्राप्तानां यावदधिकारसमाप्ति तदारम्भकं कर्म न क्षीयते। प्रारब्धस्य हि कर्मणो भोगादेव क्षयः। अत आधिकारिकाणां तदारम्भकं कर्म यावदधिकारमव-

१ चेति नास्ति लि पु।
२ प्रधानायेति लि॰ पु॰ ३ लोकवदिति प्रतीकग्रहणं लि॰ पु॰ नास्ति।
४ तडागेति मु॰ पु॰।
५ वसिष्ठावान्तरतपः-इति मु पु पाठः।
६ ०मास्थितिरिति लि॰ पु।

तिष्ठते । अतस्तेषां न देहपातादनन्तरमर्च्चिरादिगतिप्राप्तिः ॥

साम्परायाधिकरणं समाप्तम् ॥ ११ ॥

अथाऽनियमाधिकरणम् १२ । **अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥**

उपकोसलादिषु येषूपासनेष्वर्च्चिरादिगतिः श्रूयते, किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिरुत सर्वेषां ब्रह्मोपासननिष्ठानामिति संशये, इतरेष्वनाम्नानात् "ये चेमेऽरण्ये श्रद्धा[1] तप इत्युपासते" "श्रद्धा सत्यमुपासत" इती[2]तरसकलब्रह्मविद्योपस्थापकत्वे प्रमाणाभावाच्च तन्निष्ठानामेवेति प्राप्तेऽभिधीयते—

'अनियम' इति । सर्वेषां सर्वोपासननिष्ठानां तयैव गन्तव्यत्वात् तन्निष्ठानामेवेति नियमो नास्ति । सर्वेषां तयैव गमने हि सति 'शब्दानुमानाभ्यां' श्रुतिस्मृतिभ्यामविरोधः, अन्यथा विरोध एवेत्यर्थः । श्रुतिस्तावच्छान्दोग्यवाजसनेयकयोः पञ्चाग्निविद्यायामर्च्चिरादिमार्गेण सर्वोपासन[3]निष्ठानां गमनमाह । "य एवमेतद्विदुर्ये चामी अरण्ये[4] श्रद्धां सत्यमुपासते तेऽर्च्चिरभि[5]सम्भवन्ती"ति वाजसनेयके, "तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ती"ति छान्दोग्ये । 'य इत्थं विदु'रिति पञ्चाग्निविद्यानिष्ठान् 'ये चेमेऽरण्य' इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनांश्चोद्दिश्यार्च्चिरादिका गतिरुपदिश्यते । "सत्यं ज्ञानमनन्तं ब्रह्म" "सत्यं त्वेव विजिज्ञासितव्य"मिति 'सत्य'-शब्दस्य ब्रह्मणि प्रसिद्धेः, 'तपः'-शब्दस्यापि तेनैकार्थ्यात् 'सत्यतपः'-शब्दाभ्यां ब्रह्मैवाभिधीयते । श्रद्धापूर्वकं ब्रह्मोपासनं चान्यत्र श्रुतम्, 'सत्यं त्वेव विजिज्ञासितव्य'मित्युपक्रम्य 'श्रद्धा त्वेव विजिज्ञासितव्ये'ति । स्मृतिरपि—

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।

तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" इति—

१ श्रद्धामिति लि० पु० ।
२ इतिशब्दो नास्ति लि० पु० ।
३ सर्वेषां ब्रह्मोपासनेति लि० पे० ।
४ चेमेऽरण्ये—इति पु० द्वयेपि ।
५ ऽर्च्चिषमभि—इति पु० द्वयेपि ।

सर्वेषां ब्रह्मविदामनेनैव मार्गेण गमनमित्याह । एवंजातीयिकाः[1] श्रुतिस्मृतयो बह्व्यः सन्ति । एवं सर्वविद्यासाधारणीयं गतिः प्राप्तैवोपकोसलविद्यादावनूद्यते ॥

अनियमाधिकरणं समाप्तम् ॥ १२ ॥

अथाऽक्षरध्यधिकरणम् १३ ।

अक्षरधियां त्ववरोधः[2] सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

बृहदारण्यके श्रूयते—"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्य[3]ऽस्थूलमऽनण्वऽह्रस्वमऽदीर्घमऽलोहितमऽस्नेह[4]मऽच्छायमऽतमोऽवाय्वऽनाकाशमऽसङ्गमऽरसमऽगन्धमऽचक्षुष्कमऽश्रोत्रमऽवागऽमनोऽतेजस्कमऽप्राणमऽसुखमऽमात्रमऽनन्तरमऽबाह्यं न तदश्नाति किञ्चन एतस्य वा अक्षरस्य[5] प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति, तथाऽऽथर्वणे—"अथ परा यया तदक्षरमधिगम्यते यत्तदऽद्रेश्यमऽग्राह्यमऽगोत्रमऽवर्णमऽचक्षुःश्रोत्रं तदऽपाणिपाद"मिति । तत्र संशयः, किमिमेऽक्षरशब्दनिर्दिष्टब्रह्मसम्बन्धितया श्रुता अस्थूलत्वादयः प्रपञ्चप्रत्यनीकताकाराः सर्वासु ब्रह्मविद्यास्वनुसन्धेया उत यत्र श्रूयन्ते तत्रैवेति । किं युक्तम् । यत्र श्रुतास्तत्रैवेति । कुतः । विद्यान्तरस्य रूपभूतानां गुणानां विद्यान्तरस्य रूपत्वे प्रमाणाभावात्, प्रतिषेधरूपाणामेषां गुणानामानन्दादिवत् स्वरूपावगमोपायत्वाभावाच्च । आनन्दादिभिरवगतस्वरूपे हि ब्रह्मणि स्थूलत्वादयः प्रपञ्चधर्माः प्रतिषिध्यन्ते, निरालम्बनप्रतिषेधायोगात् । एवं प्राप्ते प्रचक्ष्महे—

'अक्षरधियां त्ववरोध' इति । अक्षरब्रह्मसम्बन्धिनीनामस्थूलत्वादिधियां सर्वब्रह्मविद्यास्ववरोधः संग्रहणमित्यर्थः । कुतः । सामान्य-

१ ०जातीयका इति मु॰ पु॰ ।
२ त्वविरोध इति लि पु । ३ अभिवदन्तीति मु पु ।
४ अस्नेहमित्यस्य स्थाने अपित्तमिति लि पु ।
५ वाक्षरस्येति पु द्वयेपि ।

षत्वासम्भवात् । अथ व्याप्तिपक्षधर्मतया प्रमाविरहो नासिद्धो येन सर्वत्रासिद्धसङ्करः स्यात् किञ्च तादृशधीविरहो न हेत्वाभासो ऽज्ञायमानत्वात् आत्ममनःसंयोगाद्यभाववत् किन्तु व्याप्तिपक्षधर्मतावैशिष्ट्यविरह एव ज्ञायमानदोषत्वात् ज्ञायमानकरणे उत्सर्गतो ज्ञायमानस्यैव विरोधिनो ऽसाधारणदोषत्वात् तथा च यत्र व्यभिचारविरोधावद्वारीकृत्य व्याप्त्यभावः प्रतीयते तत्रैव व्याप्यत्वासिद्धिः यथा नीलधूमशरीराजन्यत्वयोः यत्र तु पक्षासिद्धिस्तत्राश्रयासिद्धिः यत्र च सत्यपि पक्षे हेतोस्तद्धर्मताविरहस्तत्र स्वरूपासिद्धिः एते च दोषा असिद्धमध्यमध्यासते यत्र तु व्यभिचारेण विरुद्धतया वा व्याप्तिभङ्गावगमस्तत्र यथायथं सव्यभिचारविरुद्धौ दोषानुपजीव्यत्वात् ताभ्यामेव प्रथमावगताभ्यामनुमानस्यासाधकीकरणात् न हि साध्यव्यभिचारी साध्याभावाव्यभिचारी वा साध्यसाधक इति सम्भवतीति सत्प्रतिपक्षे तु नासिद्धिगन्धोपि किन्तु परस्परप्रतिबन्धेनानुमित्यजनकत्वं बाधेपि न सामान्यसम्बन्धस्य प्रथमगृहीतस्य बाधेन भङ्गः समानविषयत्वाभावात् किन्तु पक्षे बाधेन तद्व्यतिरिक्तविषयता प्रथमगृहीतसम्बन्धस्य व्यवस्थाप्यते तद्व्यवस्थापनाय च मध्ये पक्षेतरत्वमुपाधिः कल्प्यते अत एवाह बाधेन परोपाधिमुन्नीयतामन्यथा वेति न कश्चिद्विशेष इति । यद्वा सत्प्रतिपक्षबाधौ साक्षात्प्रतिबन्धकतयैव दोषाविति तथा च यत्र व्याप्तिपक्षधर्मताप्रमितेर्विरहस्य विरोधिधियं विना धीस्तत्रासिद्धो हेत्वाभासः यत्र तु व्याप्तिविरहस्य व्यभिचारादिधिया धीस्तत्र यथाकथं सव्यभिचारविरुद्धौ यत्र तु प्रतिपक्षस्य धीस्तत्र बाधप्रतिरोधौ । नन्वेवमपि व्याप्तिपक्षधर्मताधीसाध्यानुमितिरिति तद्विरह एको दोषोस्तु तथा बाधप्रतिरोधावपि

साक्षाद्दोषौ प्रतिबन्धकत्वादिति सन्तु त्रयोमी हेत्वाभासाः व्यभिचारविरोधौ तु कथं तौ हि व्याप्तिविरहं गमयन्तावुपाधिवद्भवितुमर्हत इति नैतद्व्याप्तिविरहोन्नायकावपि तौ प्रथमोपस्थितत्वे सति स्वतो दूषणाक्षमत्वात् पृथगिति खण्डने न्यायमतसङ्क्षेपः ॥

अत्र खण्डनं इदमसिद्धलक्षणं सव्यभिचारादावस्ति न वा आद्ये सोप्यसिद्धभेद इति पञ्चसंख्याविरोधः। अथैतल्लक्षणसत्त्वेपि न तेऽसिद्धभेदास्तदा लक्षणमतिव्यापकं अन्त्ये विरुद्धादीनां व्याप्तिपक्षधर्मताभ्यां प्रमितत्वं स्यात् व्याप्तिपक्षधर्मताप्रमितत्वतदभावौ विहाय तृतीयकोटेरसम्भवादिति। अत्रोच्यते। असिद्धत्वादिनां हेत्वाभासत्वसाक्षाद्व्याप्यानां उपाधीनां विभजनान्न विभागभङ्गः ते ह्यसङ्कीर्णा एव न वा धर्मिसङ्करो दोषः तेषामविभजनात्। नन्वस्त्वेवं तथाप्यसिद्धिः कथमेको दोषोऽसिद्ध एव च कथमेको हेत्वाभासः तथा हि व्याप्तिविरहे व्याप्तिधीविरहे च व्याप्यत्वासिद्धिः पक्षविरहे तद्धीविरहे तद्विशेषणसिषाधयिषाविरहे चाश्रयासिद्धिः पक्षधर्मताविरहे तद्धीविरहे च स्वरूपासिद्धिरिति बह्व्योऽसिद्धयः व्याप्यत्वासिद्धोयमाश्रयासिद्धोयं स्वरूपासिद्धोयमित्येवमवगता तद्भावितास्च स्वपरानुमितिप्रतिबन्धकाश्च त्रयो भवन्ति। अथासिद्धोयमितिज्ञानादनुमितिप्रतिबन्धस्य दर्शनादसिद्धेरेकदोषत्वं तर्हि व्याप्यत्वासिद्धोयमाश्रयासिद्धोयं स्वरूपासिद्धोयमित्यादिबुद्धौ प्रत्येकमनुमितिप्रतिबन्धदर्शनादसिद्धिश्च तद्विशेषाश्च सन्तु चत्वारो दोषाः। अथासिद्धिः सामग्रीविरहरूपो दोषः व्याप्त्या पक्षधर्मतया च प्रमितेरनुमितिसामग्रीत्वादिति विशिष्टधीविरह एवायं दोषो न तु प्रत्येकधीविरहः तस्य विशिष्टधीविरहत्वाभावात् किन्तु प्रत्ये-

कधीविरहविशिष्टधीविरहमुत्थापयन्त उपाधिवदन्यथा-
सिद्धा इति हन्तैवं सव्यभिचारविरुद्धावपि व्याप्यत्वा-
सिद्धिमुत्थापयन्तौ स्तामन्यथासिद्धाविति पञ्चहेत्वा-
भासी पुनर्व्याकुप्येत अथ सव्यभिचारविरुद्धयोस्तदुत्थाप-
कत्वेऽपि स्वतोऽदूषकत्वात् पृथगेवाभासत्वमस्तु अथैवम-
पि व्याप्यत्वासिद्ध्यादयस्तिस्रोऽसिद्धिश्चैकेति चत्वारो दो-
षाः चतसृणामपि ज्ञानस्य प्रत्येकमनुमितिप्रतिबन्धकत्वद-
र्शनादिति। मैवम्। एवं हि विशेषवत्सामान्यस्यापि दोषत्वे
हेत्वाभासविशेषवत्तत्सामान्यस्यापि दोषतायां हेत्वाभा-
सनामा षष्ठोपि हेत्वाभासस्तवापि स्यात् अथ न निर्विशेषं
सामान्यं भवेच्छशविषाणवदिति न्यायाद्धेत्वाभासोयमि-
तिधीर्थं कञ्चन हेत्वाभासविशेषमालम्बते स एव तत्र दोषः
तर्ह्यसिद्धोयमित्यत्रापि तथात्वे व्याप्यत्वासिद्ध्यादिरूपो
विशेष एव दोषोस्तु अथ व्याप्यत्वासिद्धोयमित्यादिधीर्यत्र
तत्र विशेषो दोषः यत्र त्वसिद्धोयमितिधीस्तत्र सामान्यं
दोषः अत एवासिद्धत्वविरुद्धत्वादिधियां पञ्चानां दोषत्वे
पञ्च हेत्वाभासामात्थेति। मैवम्। सव्यभिचारत्वधीर्विरुद्ध-
त्वधीर्वा न व्याप्यत्वासिद्धिमालम्बते तेन तौ भिन्नावेव
असिद्धत्वधीस्तु व्याप्यत्वासिद्धिमाश्रयासिद्धिं स्वरूपासि-
द्धिं वावश्यमेवावलम्बते सामान्यधियो विशेषविषयकत्व-
नियमात् अत इमास्तिस्रः तथापि सामान्यप्रकारकं ज्ञानं
विशेषप्रकारकज्ञानतो भिन्नमिति पुनश्चतस्रस्ता इति चेत्।
किमतः विशेषविषयकमित्येतावतैव विशेषस्य दोषत्वं
ब्रूमो न तु विशेषप्रकारकत्वेन। ननु व्याप्यत्वासिद्ध्यादिज्ञा-
नमसिद्धिज्ञानत्वेन वा दोषोस्तु असिद्धिज्ञानं वा व्याप्य-
त्वासिद्ध्यादिज्ञानत्वेनेति किं विनिगमकम्। उच्यते। सामा-
न्यज्ञानस्य विशेषविषयतानियमवत् विशेषज्ञानस्य सामा-

न्यविषयतानियमो नास्तीति विशेषज्ञानीत्प्रतिबन्धदर्शना-त्तस्य दोषत्वे क्लृप्ते सामान्यज्ञानस्थलेपि विशेषालम्बनतयैव तज्ज्ञानस्य दोषत्वमिति तस्मात्तिस्रोऽसिद्धयस्त्रयोऽसिद्धा इति कथं पञ्च हेत्वाभासी अनेनैवाशयेन खण्डनकारोपि प्रथमे तावदसिद्धभेदमध्यमध्यासते इत्यसिद्धानां बहुत्वमेव व्याजहारेति विभागभङ्ग इति। अत्राहुः। आश्रयासिद्धिः स्वरूपासिद्धिर्व्याप्यत्वासिद्धिश्च पृथगेव दोष इति सत्यं किन्तु तिसृणां यथान्यस्तमेकं रूपं पुरस्कृत्य विभागकरणान्न विभागभङ्गः न च मुनिरेव पर्यनुयोज्यः स्वतन्त्राभिप्रायत्वात् अत एव हानौ हेत्वादिहानिं प्रतिज्ञाहानित्वेन संगृह्णतः प्रतिज्ञान्तरात्तु हेत्वन्तरं विभज्य निर्दिशतो मुनेः पर्यनुयोगो निरस्तः यच्च न्यायतन्त्रमत्रन्यस्यता खण्डनकृता व्याप्यत्वासिद्धिरुपाधिरिति लपितं तत् प्रलपितं उपाधिव्याप्त्योरन्येन विरहत्वासम्भवात् न हि प्रकृतोपाध्यभावो व्याप्तिः प्रतियोग्यप्रसिद्धेः नापि यत्किञ्चिदुपाध्यभावः सा व्याप्यत्वासिद्धेपि सत्त्वात् नाप्युपाधिसामान्याभावः सामान्याभावस्य भावत्वासम्भवात् न हि सर्वव्यक्तिप्रतियोगिक उपाधित्वावच्छिन्नप्रतियोगिताक एकः तदभावश्च सर्व एवोपाधय इति व्याप्तेरेकस्या एव विरहः सर्वे उपाधयः स्युः किन्तु व्याप्तिमनौपाधिकसम्बन्धरूपामपि वदन्तो यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यरूपामाहुः स च नोपाध्यभावः। वस्तुतस्तु अव्यभिचरितःसम्बन्धो व्याप्तिरनौपाधिकत्वं तु तल्लक्षणमतो यत्किञ्चिदेतत् व्यभिचारविरोधिनः सामानाधिकरण्यस्य तादृशसम्बन्धमात्रस्य वा व्याप्तित्वात् न चैवं लाघवादावश्यकत्वाच्च व्यभिचाराभाव एवास्तु व्याप्तिः तथापि व्यभिचारोप्यसिद्धिरस्त्विति-

वाच्यं व्यभिचारो हि साध्यवदन्यवृत्तित्वं तदभावश्च नाव्यभिचारोऽवृत्तिसाधारण्यात् वृत्तिमत्त्वे सति सोऽव्यभिचार इति चेत् । न । केवलान्वयिन्यसम्भवात् तत्र हि साध्यवदन्याप्रसिद्धिः किञ्च प्रकृतहेतोः प्रकृतसाध्येन समं व्यभिचारस्याभावो न व्याप्तिः प्रतियोग्यप्रसिद्धेः नापि यत्किञ्चित्प्रतियोगिकव्यभिचाराभावः सा अतिप्रसङ्गात् किन्तु यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः द्रव्यत्वसमानाधिकरणान्योन्याभावप्रतियोगिता संयोगेन नावच्छिद्यते द्रव्यं संयोगि नेत्यप्रतीतेः वह्निसमानाधिकरणान्योन्याभावप्रतियोगिता तु धूमेनावच्छिद्यते वह्निमान्धूमवान्नेति प्रतीतेः अतो द्रव्यत्वं संयोगव्याप्यं वह्निस्तु न धूमव्याप्य इति स्थितम् । यद्यपि सर्वत्र वह्निमति धूमवदन्योन्याभावो नास्ति महानसादौ धूमवदभेदस्यापि सम्भवात तथापि क्वचिदस्ति धूमवति तु क्वापि न वह्निमद्भेदः किन्तु सर्वत्रैव तदभेदः यद्यपि सर्वेषु हेत्वाभासेषु सिद्धिप्लवस्तेन सैव दोषो भवितुमर्हति तथापि त्रयाणामप्यनैकान्तिकानां संशायकत्वेनासाधकतेति त एव त्रयो दोषाः प्राथम्यात् न तु तेषु सत्स्वपि व्याप्यत्वासिद्धिः चरमोपस्थितत्वात् तथाहि सा साधारणेन्वयेनासाधारणे व्यतिरेकेणोभयसहचारादनुपसंहारिणि तु पत्त एवोभयान्वयात्साध्यसंशयार्जनादसाधकता अथ तेषु व्याप्तिधीरेव नोदेति त्वन्निर्दिष्टोभयसहचारादिति व्याप्यत्वासिद्धिरेवास्तु क्लृप्तत्वादसाधकताबीजमिति सैवामीषु त्रिषु दोष इति चेत् । तर्हि मास्तु संशयद्वारतापि किन्तु साधारणे विपक्षगामितयाऽसाधारणे सपक्षागामितयानुपसंहारिणि पक्षमात्रगामितयैव प्रथमप्रतीतया

तेषामसाधकत्वानुमितिसम्भवात् किन्तु ते त्रयोऽप्य-सिद्धात् पृथक् एवञ्च दूषकताया प्रस्थानभेदात्तेषां त्रित्व-स्यादिति न च वाच्यं इष्टत्वात् विरुद्धे तु विरुद्धत्वज्ञाना देवासाधकता सत्प्रतिपक्षे तु लिङ्गयोर्व्याप्तिपक्षधर्मताविशिष्टधीसत्त्वेपि परस्परप्रतिबन्धादेवासाधकता बाधे तु बलवता साध्याभावज्ञानेन प्रतिबन्धादेवासाधकतेति बाधे च तृतीयलिङ्गपरामर्शोदयं वक्ष्यामः तस्मात्साधारणानुपसंहारिविरुद्धा व्याप्यत्वासिद्ध्युन्नयनक्षमतया तदुपजीव्याः प्रथमोपजातेन साधारणत्वादिज्ञानेनासाधकतां हेतोः साधयन्तो भवन्त्यसिद्धात् पृथक् हेत्वाभासाः सिद्धसाधनस्थले साध्यसिद्धिः सोपाधावुपाधिराश्रयासिद्धिर्व्याप्यत्वासिद्ध्योरुपजीव्यावप्येतौ न पृथक् हेत्वाभासौ स्वतो दूषकत्वाभावात् किन्तु सिद्धिः सिषाधयिषां विघटयन्ती धर्मिविशेषणविघटनेनाश्रयासिद्धिं निर्मिमाणा एवमुपाधिरपि हेतोः स्वव्याप्यतया स्वव्याप्यसाध्यव्याप्यत्वधियमुत्पादयन्ननर्थोत्थानबीजमात्रमिति तथाहि तर्केणोपाधौ स्वरूपेण निश्चिते अयं हेतुः साध्याव्याप्यः साध्यव्यापको पाध्यव्याप्यत्वात् प्रमेयत्वादिवदिति व्याप्यत्वासिद्धिमुत्थापयति सा त्वनुमानं दूषयतीति ॥

अथ विरुद्धत्वादीनां प्रकृतहेत्वसाधकतासाधकत्वेन-हेत्वाभासत्वमुक्तं तत्र कोऽसौ विरुद्ध इति । साध्याभाव व्याप्तो विरुद्ध इति चेत् । तदा हि इदमसाधकं साध्याभा-वव्याप्यत्वादित्यस्य साध्याभावनियतसमानाधिकरण-त्वादित्यर्थे नियमांशो व्यर्थः साध्याभावसामानाधिकरण्य-मात्रस्यैव साधारणानैकान्तिकवदसाधकत्वे तन्त्रत्वात् अपि च नियमांशे व्यर्थतया निरस्ते विरुद्धस्य साधारणानुप्रवेशे विरुद्ध एव लुप्यते किञ्च साध्याभावनियतसामानाधिकर-

ण्यग्रहे भवति साध्याभावसामानाधिकरण्यग्रह आवश्यक इति स एव क्लृप्तत्वादावश्यकत्वाल्लाघवाच्च दोषः स्यान्न तु विरुद्ध इति खण्डनं। अत्रोच्यते इयं हि विरुद्धस्य स्वरूपनिरुक्तिरिति सत्यं न हि साध्यतदभावोभयगामिनि परीक्षकाणां विरुद्धव्यवहारः किन्तु साध्याभावमात्रस्पृशि असाधकतायां तु नेदं लिङ्गं येन विशेषणवैयर्थ्यं स्यात् किन्तु साध्यविपरीतप्रमितिजनकत्वं तदेव कुत इत्याकाङ्क्षायां साध्यविपरीतव्याप्यत्वादिति । हन्तैवमसाधकतासाधकत्वं साध्यविपरीतप्रमितिजनकत्वस्य तद्बीजत्वं च साध्याभावतद्व्याप्यत्वस्य तथा च विरुद्धो न हेत्वाभासः स्यादुपाधिवदिति चेन्न। साध्याभावप्रमितिजनकत्वमेव विरुद्धत्वमित्यभ्युपगमात् । तदुक्तं तेनैव लिङ्गेन साध्याभावप्रमाविरोध इति । अन्ये तु अदृष्टसाध्यसहचारत्वं अदृष्टसाध्याभावव्यभिचारित्वं वा तल्लिङ्गं सर्वादृष्टिः सन्दिग्धा स्वादृष्टिस्तु व्यभिचारिणीति यदि तदा साध्यासहचरितत्वं साध्यव्यापकाभावप्रतियोगित्वं वा लिङ्गमस्तु । ननु हेत्वाभासशरीरमेवासाधकतालिङ्गं तथा चोक्तचतुष्टयमपि विरुद्धस्य शरीरं स्यात् असाधकतालिङ्गत्वात् तच्चायुक्तमवृत्तिसाधारण्यात् इदं हि चतुष्टयमाकाशादेरप्यस्तीति किमतः अवृत्तावपि विरुद्धव्यवहारः स्यादिति चेत्तत्र साध्याभावप्रमितिजनकत्वमात्रस्य तन्त्रत्वमिति मदुपगमात् एवं चासाधकतानुमाने कर्तव्ये नियमांशो व्यर्थ इति विरुद्धज्ञाने चासाधकतानुमितिर्बीजे भवति साध्याभावसामानाधिकरण्यज्ञानमेवावश्यकत्वादिनाऽसाधकतानुमापकमस्तु क्लृप्तमनावश्यकेन गुरुणा जघन्यप्रतिपत्तिकेन विरोधेनेति खण्डनमपास्तं असाधकतानुमितौ साध्यव्यापकाभावप्रतियोगित्वस्य मया हेतुत्वेनोपगमात् यदा तु विरुद्धे साध्याभावव-

द्गामितामात्रमेव प्रतीयते तदा साधारणतयैवायं दोषः यदा तु साध्यवदवृत्तिताधीः तदा त्वसिद्धतयोपधेयसङ्करस्य मयापगमात्। नन्वयं साध्यवदवृत्तितया प्रतीयमानश्चेद्दुषयेत्तदा ऽसिद्धे प्रविशेत् यदि तु साध्याभावव्याप्यतया तदा गौरवेण नियमांशे त्यक्ते सति साधारणतया दूषयेत्तदुभयथापि पृथग् हेत्वाभासो न स्यादिति चेत्। सत्यं साध्यव्यापकाभावप्रतियोगितया प्रतीयमानोयं दूषयन् पृथगिति ब्रूमः इदं तु रूपमसिद्धेप्यस्ति न त्वसिद्ध एवास्ति येनासिद्धमेवासौ प्रविशेत्। वस्तुतस्तु स्वसमानाधिकरणान्योन्याभावप्रतियोगिसाध्यवत्कत्वं विरुद्धत्वं सद्धेतुस्तु नैवं धूमवान्वह्निमान्नेत्यप्रतीतेः इदं च रूपं नावृत्तौ नवा व्यभिचारिणीति नास्य धर्मिसङ्करोपीति। यच्चानैकान्तिकः सव्यभिचार इति सूत्रमखण्डि तदप्यबोधात् साध्यस्येव तदभावस्याप्युपस्थापनसमर्थत्वं ह्यनैकान्तिकत्वं तथाहि साधारणोऽन्वयेनासाधारणो व्यतिरेकेणानुपसंहारी पक्ष एवोभयसहचारेण साध्यतदभावावुपस्थापयितुं क्षमः तेन साध्यतदभावोभयोपस्थापनसमर्थत्वं साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभावन्मात्रवृत्त्यन्यत्वं वा न चैवं सर्वमभिधेयं प्रमेयत्वादित्यनुपसंहारिणो न संग्रहः तत्र साध्याभावाप्रसिद्धेरिति वाच्यं तस्यानुपसंहारित्वाभावात् किन्तु सद्धेतुरेव केवलान्वयिनि साध्ये तत्समानाधिकरणमात्रस्यैव गमकत्वात्। नन्वस्त्वेवं तथापि नायमेको हेत्वाभासः तथाहि उक्तरीत्यास्य संशायकत्वेन दूषकतायामेकहेत्वाभासता भवेत् सा चायुक्ता विपक्षगामितामात्रेणैव लघुनावश्यकेन प्रथमप्रतीतेन साधारणस्य तद्वत्सपक्षास्पर्शितामात्रेणैवासाधारणस्यैकधर्म्युपसंहाराभावेनैवानुपसंहारिणो दूषकत्वसम्भवादिति बाढं अयोमी साधारणानुपसंहारि-

भेदात् न चैवं विभागासम्यक्त्वं उक्तरूपपुरस्कारेणैव विभागकरणात् तत्र च विपक्षवृत्तित्वं साधारणत्वं तन्मात्रस्यैव दूषकत्वात् विरुद्धस्यापि तत्त्वाज्ञाने विपक्षवृत्तिताज्ञानदशायां साधारणत्वं अन्यथा तदा तस्य हेत्वाभासान्तरता स्यात् उपाधेरसङ्कर एव सर्वमनित्यं मेयत्वादित्यनुपसंहारो शब्दो नित्यः शब्दत्वात् भूर्नित्या गन्धवत्त्वादित्यसाधारणश्च वस्तुगत्या साध्याभाववद्वृत्तित्वेन साधारणोऽपि पक्षतादशायां तथात्वेन न बोद्धुं न वा बोधयितुं शक्य इत्युभयोर्भेदेनोपन्यासः अनित्यः शब्दः शब्दत्वादित्यसाधारणश्च वस्तुतस्सद्धेतुरपि पक्षतादशायामसाधारण एव पक्षमात्रवृत्तित्वात् । ननु पक्षतादशायामसाधारणतया साध्यनिश्चयदशायामाश्रयासिद्धतया सर्वदैवायमाभास इति न कदापि सद्धेतुरिति चेन्न । साध्यसन्देहे प्रमाणान्तरेणानुपनुन्ने सिषाधयिषया पक्षतासम्भवेनाश्रयासिद्धेरसम्भवात् । ननु संशयाभावात्सिषाधयिषापि नोदेष्यतीति चेत् । तथापि सिद्धान्तरस्येष्टसाधनताज्ञानेनात्मनीव तत्सम्भवात् तत्र हि श्रोतव्यो मन्तव्य इति श्रुत्या श्रुतिनिश्चितस्याप्यात्मनो मननमिष्टसाधनतयावसितमिति तत्र तदधीना सिषाधयिषोदेतु प्रकृते तु तद्वद्द्वितीयसिद्धेरिष्टसाधनताग्राहकं किमपि न पश्यामो येन तत्र तदधीना निश्चितेऽपि सिषाधयिषोत्पद्येतेति चेत् । अत्रापि यद्यप्यस्य प्रातिभेनेष्टसाधनताज्ञानेन द्वितीयसिद्धाविच्छोदयेत्तदा कस्तां वारयेत् अयं तु विशेषो यदसाधारणो दशाविशेषे दोषः विशेषदर्शने सति संशयसत्प्रतिपक्षयोर्द्वारयोरनुदयात् सत्प्रतिपक्षवत् साधारणानुपसंहारिणौ तु नित्यदोषाविति । प्राञ्चस्तु असिद्धानैकान्तिकौ त्वदुक्तरीत्या यद्यपि प्रत्येकं त्रिविधौ तथापि सामग्रीविरह-

त्वेन संशायकत्वेन च दूषयन्तौ द्वावेवेति मुनेराशयः ॥

अथ सत्प्रतिपक्षः। अत्र केचित्। तुल्यबलबोधितसाध्यविपर्ययः सत्प्रतिपक्षितः तद्यथा तुल्यबलेन समानव्याप्तिपक्षधर्मताकत्वेन रूपेणानुमितिभागित्वाभिमतेन वादिना ज्ञायमानेन लिङ्गत्वाभिमतेन प्रतिहेतुना यदीयः साध्यविपर्ययो बोधितो बोधयितुमारब्धः स सत्प्रतिपक्षित इति ईदृशौ चात्र द्वावपि हेतू इति द्वावपि सत्प्रतिपक्षितौ। बाधितस्त्वधिकबलबोधितसाध्यविपर्यय इति ततोऽस्य भेदः इदं तु स्वार्थपरार्थयोः साधारणमस्य रूपं एवं च बलं व्याप्तिपक्षधर्मते उभयलिङ्गगतयोस्तयोस्तौल्यं वैज्ञानिकं तथात्वेन ज्ञातो वानुमितिभागित्वाभिमत इत्येवं वर्णने बहुषु दूषणेषु निरस्तेष्वपि सत्प्रतिपक्षहेत्वोरबोधकत्वप्रयुक्तानि खण्डनान्यवशिष्यन्ते। तत्र ब्रूमः। मिथः प्रत्यनीकव्याप्यतयावगतयोरेकधर्मिणि प्रतिसन्धीयमानयोस्तद्व्यापकीभूतगोचराया अनुमितेर्नोत्पत्तिः अन्यथा तत्सत्त्वे तद्व्यापकयोरुभयोरपि व्यवहारः स्याद्विनिगमनाविरहात् द्वयोरपि याथार्थ्ये वस्तुनो विरुद्धद्वैरूप्यं च स्यात् तस्माद्व्याप्तिपक्षधर्मताधीसद्भावेप्यनुमितिरसम्भवन्ती कमपि स्वप्रतिबन्धकमाक्षिपति तच्च प्रतिबन्धकं न तावदुभयलिङ्गव्याप्तिपक्षधर्मतावगाहितृतीयलिङ्गपरामर्शविषयीभूतव्याप्तिपक्षधर्मतासंशयः विरोधिसन्धानमन्तरेण तस्यैवानुदयात् तस्मात्प्राथम्यादन्तरङ्गत्वादुपजीव्यत्वाच्च मिथः प्रत्यनीकव्याप्यतयावगम्यमानयोः धर्मयोरेकत्र धर्मिणि-प्रतिसन्धीयमानत्वमेव विरोधिकोटिग्रहणजन्यतया प्रतिबन्धकं एवं च सति तुल्यबलबोधितसाध्यविपर्ययत्वं सत्प्रतिपक्षत्वमिति यदाशङ्क्य दूषितं तदयुक्तं न हि तत्रै-

कमपि साधनं स्वसाध्यं बोधयत्यपरेण प्रतिबन्धादिति न चाविनिगमादुभयोः साध्ययोरेकैवानुमितिरुदेति सा च परस्परविरुद्धार्थावगाहित्वेनार्थात्संशयाकारेति संशायकत्वेनास्याभासत्वमिति वाच्यं तर्हि द्वयं मिलितं संशायकं प्रत्येकं च हेत्वाभास इति यो हेत्वाभासः स न संशाययति यस्तु संशाययति स न हेत्वाभासः इति महद्वैशसं अथ द्वयोर्मिथो विरुद्धव्याप्ययोरेकत्रदर्शनाज्जिज्ञासोदेति अनयोः साध्ययोरनयोश्च हेत्वोः किं तत्त्वमिति तेनेदृशजिज्ञासाजनकत्वमेव सत्प्रतिपक्षितत्वमिति तन्न । जिज्ञासाजननेऽप्येकस्मिन्धर्मिणि विरोधिसाधनद्वयप्रतिसन्धानमेव तन्त्रमिति प्राथम्यादावश्यकत्वाच्च तदेव दोषः तेन गमकतौपयिकव्याप्तिपक्षधर्मताधीविषयेण यत्साध्यधीप्रतिबन्धनं तदेव सत्प्रतिपक्षितलक्षणं नन्वेवं कार्यं प्रतिबन्धन्प्रतिहेतुः सत्प्रतिपक्षयिता तेन च प्रतिरुद्धकार्यः सत्प्रतिपक्षित इति त्वद्वाक्यार्थः तथा च सत्प्रतिपक्षितत्वस्य ज्ञातस्य दोषतया तज्ज्ञाने सति कार्यप्रतिबन्धः कार्यप्रतिबन्धे च सति तद्घटितसत्प्रतिपक्षत्वसिद्धौ तज्ज्ञानमित्यन्योन्याश्रयः स्यात् न स्यात् कार्यप्रतिबन्धो हि सत्प्रतिपक्षस्य फलं सत्प्रतिपक्षस्तु विरुद्धानुमितिहेतुभूतव्याप्तिपक्षधर्मतापपन्नलिङ्गोपस्थितिः सा चावश्यं विपरीतानुमितिं प्रतिबध्नातीति द्वयोरप्यनुमित्योः प्रतिबन्धः बाधस्तु नैवम् । ननु बाधे बलवता प्रमाणेन प्रकृतानुमितेः प्रतिबन्ध इह तु समानबलेनेति ततोऽस्य भेदः स्यात् तदुक्तं विरोधिबोधकान्यगमकतौपयिकरूपसम्पत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यलिङ्गत्वं तत्त्वं अत्र चोपजीव्येनानुमानेन बाधेतिव्याप्तिवारणाय विरोधिबोधकान्येति गमकतौपयिकरूपसम्पत्तिमत्तया विशेषणं । हन्तैवं बाधे बलवता प्रतिबन्धः सत्प्रतिपक्षे तु

समानबलेनेति प्रतिबन्धाविशेषादुभयोरैक्यं स्यात् मैवम् । एवं हि पञ्चानामप्यैक्यं स्यात् अनुमितिप्रतिबन्धलक्षणफलाविशेषात् । किं नश्छिन्नमिति चेत् नहि फलैक्ये हेत्वैक्यं सम्भवति फलस्य ततो भेदात् किन्तु शरीरैक्ये तच्च न पञ्चानां न वानयोरपीति । ननु समानत्वाभिमता विरुद्धव्याप्तिपक्षधर्मतोपपन्नलिङ्गोपस्थितिः सत्प्रतिपक्षः तत्कवलितः सत्प्रतिपक्षित इति त्वन्मतं तथा च सत्प्रतिपक्षस्य हेतुदोषस्य हेत्वाभासान्तरज्ञानावश्यकत्वे उपस्थितेरपि ज्ञानं वाच्यं तथा च समानबलत्वेन ज्ञायमानस्य ज्ञानमपीह वाच्यं तच्चायुक्तं समानबलोपस्थितिरेव प्रतिबन्धिका न तु तद्धीरपि तत्सत्त्वे तद्विलम्बेन प्रतिबन्धविलम्बादर्शनादिति चेत् । अत्राहुः येन ज्ञानेन हेत्वाभासशरीरं निर्मीयते तस्य ज्ञानमवश्यं वाच्यं यथा व्यभिचारे निश्चितसाध्याभाववद्गामित्वलक्षणे निश्चयस्यापि ज्ञानं वाढं सत्प्रतिपक्षस्थलेप्युपस्थितेर्ज्ञानमवश्यमेवैषृव्यमिति हेत्वाभासानां ज्ञाननियम इत्यप्याहुः ॥

ननु बाधो दोषो न तु बाधकं बाधश्च साध्याभावप्रमेति फलं दोषो न तु करणं तथा सत्प्रतिपक्षे विरुद्धं करणं बाधे तु विरुद्धं फलं दोषः अत एव साध्याभावप्रमायाः प्रामाण्यग्रहः प्रतिबन्धक इति तवैव सिद्धान्तोद्धार इति चेत् । अत्र केचित् बाधे प्राथम्यात्करणस्यैव दोषत्वं वस्तुतस्तु करणमपि स्वफलीभविष्यद्विरुद्धावगतिं विना न दूषयितुमलमिति तस्य तदुपधानमवश्यं वाच्यं तथा च चरमोत्पन्नापि साध्याभावधीर्बाधकस्य दूषकत्वे प्रथमोपस्थिता चोपजीव्या चेति विवक्षितविवेकेन सैव बाधो दोषः तथा च सत्प्रतिपक्षे विपरीतं करणं प्रतिबन्धकं तत्र फलोदयस्यासम्भवात् बाधे तु विपरीतं फलमेव

प्रतिबन्धकमिति क्वानयोः सङ्करसम्भावनापि एवं व्यव। स्थापिते एतत्प्रणालीमजानानं प्रति विरोधिबोधकान्ये-त्युपलक्षणविधयोक्तमिति सर्वं सुस्थम्। यत्तु द्वे अप्यनुमाने सत्प्रतिपक्षिते सती जाती इति गुरुमतमवेत्य स्वव्याघात-कत्वं त्वन्मते न सदुत्तरे सत्प्रतिपक्षेतिव्याप्तं तथाहि स्थाप-नाहेतुरसाधकः समबलप्रतिपक्षप्रतिहततत्वादितिवत् सत्प्र-तिपक्षत्वं अनेनैव हेतुना स्वस्याप्यसाधकत्वं साधयितुं क्षममुभयोरपि सत्प्रतिपक्षत्वाविशेषादिति खण्डनं। तन्न। अबोधात् जातौ हि साधर्म्यमात्रं बलं तच्च स्थापनाजात्योः समानमेवेति जातिवाद्याशयः। समीकरणाभिसन्धिनैव जात्युत्थानात् स्वप्रयोगस्य बलवत्त्वाभिमाने च समीकर-णाभिसन्धिना तदुत्थानमेव न स्यात् तथा च जातिवत्स्था-पनापि स्वसाध्यं साधयेत् तथा साधर्म्यान्तरमपि जाति-साध्यविपरीतं साधयेत् साधर्म्यत्वेन तस्यापि स्थापना-जात्युभयतुल्यत्वात् तस्माद्यथा जातिवादी समबलयानु-मानप्रतिहततत्वेन स्थापनाया असाधकतां मन्यते स्थापय-ति च तथा तत एवाविशेषात् स्वानुमानस्यापि तथा मन्येत साधयेच्चेति भवति जातेः स्वव्याघातकत्वं सत्प्रतिपक्षे तु नैवं न हि तत्रोच्चारयिता स्थापको वा द्वयोः समबलत्वं मन्यते किन्तु स्वानुमानस्य बलवत्त्वमपरस्य तु विशेषादर्श-नदशायां बलभ्रममात्रमिति हि तस्याभिमानात् तथा च परानुमानस्यासाधकतामयं बलवत्प्रतिबन्धत्वेन साधयति न तु स्वानुमानस्य तथा साधयितुं क्षमते तेन परानुमानस्य बलवत्त्वानङ्गीकारेण स्वानुमानस्य बलवत्प्रतिबन्धत्वान-भ्युपगमात् किन्तु बलवत्त्वाभिमतमपरानुमानं प्रतिबन्धकं मन्यते तेन च रूपेण न परस्यासाधकतां साधयति मदनु-मानं बलवत्त्वेनावगतं किन्तु बलवन्न भवतीति तेनानङ्गी-

कारात् तथा च बलवत्प्रतिबन्धत्वेन परस्यासाधकतां साधयति न तु स्वस्यापि तेन रूपेणेति न सत्प्रतिपक्षः स्वव्याघातक इति। ननु सत्प्रतिपक्षत्वेनासाधकतासाधनन्तस्यैव हेतुदोषत्वात्तच्च द्वयोः समानमेवेति चेत् । सत्यम् । एकेन ह्यपरानुमानस्यासाधकता साध्यते सा च बलवत्प्रतिबन्धत्वलक्षणेन सत्प्रतिपक्षत्वेन न तु स्वस्यापि तथा साधयितुं शक्नोति बलवत्प्रतिबन्धत्वलक्षणस्य हेतोः स्वयमेवानभ्युपगमात् । ननु तथापि स्थैर्यादिः सत्प्रतिपक्षितत्वेन द्वयोरप्यसाधकतां साधयितुं शक्नोत्येवेति भवत्येव सत्प्रतिपक्षत्वं व्याघातकमिति चेत् । सत्यम् । तथापि सत्प्रतिपक्षयिता यद्बलवत्प्रतिबन्धत्वमाद्रियते तन्नोभयसाधारणत्वेन मन्यत इति स्वाशयानुसारेण सदुत्तरयन्न तेन व्याहन्यते जातिवादी तु तथेति विशेषः अत एव सत्प्रतिपक्षः सदुत्तरं जातिरसदुत्तरमिति सर्वतन्त्रसिद्धान्तः । एतद्विरुद्धाभिधायी तु गुरुरपि लघुरेवेति एवमपि रत्नप्रकाशतदुबोधावपि नेयाविति संक्षेपः । निरालम्बनाद्यनुमानमपि व्याप्त्याद्यिपुरस्कारप्रयुक्तं सदुत्तरमेव तदपुरस्कारप्रयुक्तं तु जातिरिति विवेकः ॥

अथ बाधो निरूप्यते। तत्र तावत्साध्याभावप्रमा बाधः प्रमिताभावप्रतियोगिसाध्यको बाधितः यद्यप्यकेवलान्वयिनः सर्वस्यैव साध्याभावप्रमा सम्भवतीति व्यतिरेकिसाध्यकाशेषसद्धेतुव्याप्तिः तथापि पक्षे सा विवक्षिता बाधे च पक्षतास्तीत्युक्तं तेन पक्षे साध्याभावप्रमा बाधः न च कपिसंयोगसाध्यके सद्धेतावतिव्याप्तिः प्रतियोगिव्यधिकरणेति साध्याभावविशेषणात् । ननु साध्याभावप्रमा गृहीतप्रामाण्या वा प्रतिबध्नीयादगृहीतप्रामाण्या वा नाद्यः तस्या बुद्ध्यन्तरमात्रविनाश्यत्वेन तावन्तं कालमनव-

स्थितेः । नापरः तस्याः संशयोपस्थितसाध्याभावधीवदधि-कबलत्वानवगमेन प्रतिबन्धकत्वायोगात् । साध्याभावधियः प्रामाण्यग्रहः प्रतिबन्धक इति चेत् । न तर्हि बाधो दोषः प्रामाण्यस्य ततो भिन्नत्वात् साध्याभावधियः प्रामाण्यग्रहानन्तरं पुनर्जाता साध्याभावधीः सा च विशेषदर्शनोदीच्यत्वेन शङ्कानास्कन्दितेति सैवानुमितिप्रतिबन्धिकेति चेत् सा हि तृतीयलिङ्गपरामर्शादर्वाक् पश्चाद्वा आद्ये परामर्शेनैव तर्हि सा ध्वंसितेत्यसत्त्वान्न प्रतिबन्धुमीष्टे अन्त्ये किं तया लिङ्गपरामर्शस्य चरमकारणत्वेनानुमितिः स्यादेव सत्प्रतिपक्षवदसावपि प्रतिबध्यत इति चेत् । तर्हि तृतीयलिङ्गपरामर्शस्य व्याप्तिपक्षधर्मतासम्पन्नद्वयग्राहिणः समसमयतया भागशः प्रतिबध्यप्रतिबन्धकभावो युज्यते प्रकृते तु निष्परिपन्थिना तृतीयलिङ्गपरामर्शेनादावनुमितौ जनितायां बाधैव नोदेष्यति अनुमित्यैव प्रतिबन्धात् । उदिता बाधनानुमितिं प्रतिबध्नीयात् । तदुक्तं गृहीत्वार्थं गताश्चौराः कस्तानाच्छेत्तुमर्हतीति । अथ प्रागुत्पन्नैव बाधाऽदूरविप्रकृष्टा तृतीयलिङ्गपरामर्शं प्रतिरोत्स्यति यथा सिषाधयिषा पक्षतां घटयतीति चेत् । निरन्वयध्वस्तापि सा मतिरेतस्य व्यामोहः । अथ बाधेन हेतुमति पक्षे व्यभिचारो निर्वाह्यत इति तद्वारैव बाधो विरोधीति तर्हि क्लृप्तत्वाद्व्यभिचार एव दोषः स्यात् हेत्वसत्त्वे त्वसिद्धिरिति नोभयथापि बाधः । तदुक्तं बाधायामपक्षधर्मो हेतुरनैकान्तिको वेति । अथ पक्षे हेतोः साध्याभाववद्गामितासन्देहो न दोषाय अनुमानमात्रोच्छेदापत्तेः किन्तु तन्निश्चयः न च साध्याभावप्रमायाः प्रामाण्यनिश्चयादेव तथा च गृहीतप्रामाण्या साध्याभावप्रमा पक्षे व्यभिचारनिश्चयमप्यापादयन्ती स्वतो दोषः प्राथम्यादा-

वश्यकत्वादुपजीव्यत्वात्स्वतो दूषकत्वाच्चेति। एवं क्लृप्तत्वाद्व्यभिचारो दोषोस्तु दूषणक्षमत्वे सति प्राथम्याद्बाधो वेति विवादसीमा। अत्र च व्यभिचारव्याप्यत्वासिद्ध्योः सङ्करे यथा प्रथमोपस्थितः स्वतो दूषणक्षमस्तत्र व्यभिचारो दोषस्तथात्र बाध इति त्वद्वचनार्थः अस्तु तावदेवं तथापि व्यभिचारान्न बाधः पृथक् असङ्कीर्णाभावादिति। अत्राहुः। प्रथमे क्षणे घटे पृथ्वीत्वसम्बन्धः जातेः सम्बन्धश्चेति वैशेषिकवचनात् द्वितीये च क्षणे तत्र गन्धोदयः तस्य घटत्वात्। अत एवाहुः। क्षणमगुणो भाव इति तथा च प्रथमे क्षणे पृथिवीत्वेन घटे यद्गन्धानुमानं तत्तावन्न सम्भवति तत्र तदा गन्धासत्त्वात् नाप्यसत् व्यभिचाराद्यभावात् अथ तत्र गन्धसम्बन्ध एवानुमीयते स च समवायलक्षणस्तत्रास्त्येव गन्धयोग्यता वा सापि तत्रास्तीति मैवम्। यदि तत्राशयस्वातन्त्र्यात्कश्चिद्गन्धमनुमिनोति तदा किं वाच्यं बाधादन्यत् साध्यसंसर्गाभाववति सद्धेतुर्व्यभिचरित एव तेन गन्धप्रागभावावच्छिन्ने घटे तत्पृथिवीत्वं व्यभिचरितमेवेति चेन्मैवम्। साध्यवद्भिन्नसाध्यात्यन्ताभाववद्गामित्वस्य वा व्यभिचारपदार्थत्वात् प्रथमे क्षणे न गन्धोदयः सम्भवतीति तत्रापि गन्धात्यन्ताभाव एवेति चेत्। धिङ्मूर्ख न हि यत्र यदवच्छेदेन यस्य प्रागभावस्तत्र तदवच्छेदेन तस्यात्यन्ताभाव इति कोप्याह नापि युज्यते प्रागभावस्य प्रतियोगिसादेश्यनियमात् अत्यन्ताभावस्य तद्वैदेश्यनियमादिति कथं तर्हि गन्धप्रागभावावच्छिन्नो घटो गन्धवानित्यत्र वाक्ये ऽयोग्यता एकपदार्थसंसर्गस्यापरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वे हि सा सा च नात्र आद्यक्षणावच्छिन्ने घटे गन्धस्य प्रागभावो न त्वत्यन्ताभाव इति। मैवम्। यत्र हि यन्न सम्भवति तत्र

तद्भावाभ्यां सर्वैरूपासनैरुपास्यस्याक्षरस्य ब्रह्मण, समानत्वा,दस्थूलत्वादीना तत्स्वरूपप्रतीतावन्तर्भावाच्च[1] । एतदुक्तं भवति—असाधारणाकारेण ग्रहण हि वस्तुनो ग्रहणम् । न च केवलानन्दादि ब्रह्मणोऽसाधारणमाकारमुपस्थापयति, प्रत्यगात्मन्यप्यानन्दादेर्विद्यमानत्वात् । हेयप्रत्यनीको ह्यानन्दादिर्ब्रह्मणो ऽसाधारण रूपम्, प्रत्यगात्मनस्तु स्वतो-हेयविरहिणोऽपि हेयसम्बन्धयोग्यताऽस्ति । हेयप्रत्यनीकत्त्व च चिदचिदात्मकप्रपञ्चधर्मभूतस्थूलत्वादिविपरीतरूपम् । अतोऽसाधारणाकारेण ब्रह्मानुसदधता ऽस्थूलत्वादिविशेषितज्ञानानन्दाद्याकार ब्रह्मानुसन्धेय[2]मित्यऽस्थूलत्वादीनामानन्दादिवद्ब्रह्मस्वरूपप्रतीत्यन्तर्भावात्सर्वासु ब्रह्म विद्यासु तथैव ब्रह्मानुसन्धेयमिति । गुणाना प्रधानानुवर्त्तित्वे[3] दृष्टान्तमाह 'औपसदव'दिति । यथा जामदग्न्यचतूरात्रे पुरोडाशाद्युपसद्[4]गुणभूतः सामवेदपठितो ''ऽग्नेर्वेहोत्र वेरऽध्वर''मित्यादिको[5] मन्त्रः प्रधानानुवर्त्तितया[6] याजुर्वेदिकेनो*पाशुत्वेन प्रयुज्यते । तदुक्त प्रथमे काण्डे—''गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसयोग''इति ।

नन्वेव सर्वासु ब्रह्मविद्यासु ब्रह्मण एव गुणित्वाद् गुणाना च प्रधानानुवर्त्तित्वात् ''सर्वकर्मा सर्वगन्धः सर्वरस'' इत्यादेर्गुणजातस्य प्रतिविद्य व्यवस्थितस्याप्यऽव्यवस्था स्या,त्तत्राह[7]—

## इयदामननात् ॥ ३४ ॥

आमननमाभिमुख्येन मननमऽनुचिन्तनम् । आमननाद्धेतोरियदेव गुणजातं सर्वत्रानुसन्धेयत्वेन प्राप्तम् यदस्थूलत्वादिविशेषितमानन्दादिकम् । येन गुणजातेन विना ब्रह्मस्वरूपस्येतरव्यावृत्तस्यानुसन्धान न

१ प्रतीतो भावाच्चेति सु॰ पु॰ ।

२ अनुसदधतोऽस्थूल ब्रह्मानुसन्धानमिति लि॰ पु ।

३ ०नुवर्त्तित्वेनेति लि पु । ४ रात्रपुरोडाशो यदिति लि॰ पु॰ ।

५ अग्निर्वै होत्र वेत्वित्यादिक इति मु पु॰, अग्नेर्होत्र रवेरध्वरमिति लि पु॰ शोधितम् । ६ ०नुमिततमेति लि पु ।

* याजुर्वेदिकेनेत्यपि क्वचित । ७ तत्राहेति लि॰ पु॰ नास्ति ।

सम्भवति, तदेव सर्वत्रानुवर्त्तनीयम्, तच्चेयदेवेत्यर्थः । इतरे तु सर्वकर्मत्वादयः प्रधानानुवर्त्तिनोऽपि चिन्तनीयत्वेन प्रतिविद्य व्यवस्थिताः ॥

अक्षरध्यधिकरण समाप्तम् ॥ १३ ॥

---

अथाऽन्तरत्वाधिकरणम् १४ । **अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चे,न्नो,पदेशवत् ॥ ३५ ॥**

बृहदारण्यके उषस्त[1]प्रश्न एवमाम्नायते—"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तम्मे[2]व्याचक्ष्वे"ति । तस्य प्रतिवचनं "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मे"त्यादि । अतुष्टेन[3] तेन पुनः पृष्ट आह—'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयाः न मतेर्मन्तारं मन्वीथाः न विज्ञातेर्विज्ञातारं विजानीयाः एष त आत्मा सर्वान्तरोऽतोऽन्यदार्त"मिति । तथा तदनन्तरं कहोल[4]प्रश्ने चैवमाम्नायते—"यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तम्मे व्याचक्ष्वे"ति । प्रतिवचनं च "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै त[5]मात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाः[6]श्चे"त्यादि "अतोऽन्यदार्त"मित्यन्तम् । तत्र संशय्यते—किमनयोर्विद्याभेदोऽस्ति, नेति । किं युक्तम् । भेद इति । कुतः । रूपभेदात् । प्रतिवचनभेदाद्रूपं भिद्यते । प्रश्नस्यैकरूप्येऽपि प्रतिवचनप्रकारो हि भेदेनोपलभ्यते—पूर्वत्र प्राणनादीनां कर्त्ता सर्वान्तरात्मत्वेनोच्यते, परत्राऽशनायापिपासादिरहितः । अतः पूर्वत्र प्राणितीति[7] देहेन्द्रियबुद्धिमनःप्राणव्यतिरिक्तः प्रत्यगात्मोच्यते, परत्र तु तदतिरिक्तोऽशनायापिपासादिरहितः परमात्मा । अतो रूपं भिद्यते । भूतग्रामवतश्च प्रत्यगात्मनस्तस्य भूतग्रामस्य सर्वस्यान्तरात्मत्वेन[8] सर्वान्तरत्वमप्युपपन्नम् । यद्यपि[9] प्रत्य

---

१ उषस्त—इति लि० पु० । २ तन्मे—इति पु० द्वयेपि ।
३ अनुपृष्टेनेति लि० पु । ४ कहोलकेति लि० पु० ।
५ एव हैतमिति मु पु, एतहैतमिति लि० पु० ।
६ पुत्रैषणायाश्च वित्तैषणाया इति पु द्वयेपि । ७ प्राणिता—इति मु० पु० ।
८ तस्य ग्रामस्य सर्वान्तरात्मत्वेनेति लि० पु० । ९ यदपि—इति लि० पु० ।

गात्मनः सर्वान्तरत्वं भूतग्राममात्रापेक्षत्वेनापेक्षिकम्, तथाऽपि तदेव ग्राह्यम्[1] । अन्यथा मुख्यान्तरात्मपरिग्रहलोभात्परमात्मस्वीकारे प्रतिवचनभेदो नोपपद्यते । प्रतिवचनं हि पूर्वत्र प्रत्यगात्मविषयम्, परमात्मनः प्राणितृत्वापानितृत्वा[2]द्यसम्भवात् । परं च परमात्मविषयम्, अशनायाद्यतीतत्वात् । तदिदमाशङ्कते 'अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथाभेदानुपपत्तिरिति चे'दिति । अन्तरा सर्वान्तरात्मत्वेन प्रथमप्रतिवचनं भूतग्रामवत्स्वात्मनः, भूतग्रामवास्तदन्तरः स्वात्मा प्रत्यगात्मा सर्वान्तर इत्युच्यत इत्यर्थः । अन्यथा "यः प्राणेन प्राणिति' योऽशनायापिपासाद्यतीत इति प्रतिवचनभेदानुपपत्तिरिति चेत्, अत्रोत्तरम्—

नेति, न विद्याभेद इत्यर्थः । उभयत्र परविषयत्वात्प्रश्नप्रतिवचनयोः । तथा हि, "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर" इति प्रश्नस्तावत्परमात्मविषय एव । 'ब्रह्म'-शब्दस्य परमात्माऽसाधारणत्वेऽपि प्रत्यगात्मन्यपि कदाचिदुपचरितप्रयोगदर्शनात्तद्व्यावृत्त्या परमात्मप्रतिपत्त्यर्थं यत्साक्षाद्ब्रह्मेति विशेषणं क्रियते । अपरोक्षत्वमपि सर्वदेशसर्वकालसम्बन्धित्वम्, 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यऽनन्तत्वेनावगतस्य परमात्मन एवोपपद्यते । सर्वान्तरत्वमपि "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर" इत्यारभ्य "य आत्मनि तिष्ठन्नात्मनोऽन्तर" इति सर्वान्तर्यामिणः परमात्मन एव सम्भवति । प्रतिवचनमपि तथैव परमात्मविषयम्[3] । "यः प्राणेन प्राणिती"ति निरुपाधिकं प्राणनस्य कर्तृत्वं परमात्मन एव, प्रत्यगात्मनः सुषुप्तौ प्राणनं प्रति कर्तृत्वाभावात् । एवमजानतोषस्तेन प्राणने कर्तृत्वमात्रमुक्तं मन्वानेन प्रत्यगात्मनोऽपि साधारणत्वं प्रतिवचनस्य मत्वा अतुष्टेन पुनः पृष्टस्तं प्रति प्रत्यगात्मनो व्यावृत्तं निरुपाधिकत्वेन प्राणनस्य कर्तारं परमात्मानमाह । "न दृष्टेर्द्रष्टारं पश्ये"रित्यादिनेन्द्रियाधानीनां दर्शनश्रवणमननविज्ञानानां कर्तारं प्रत्यगात्मानं

---

१ ग्राह्यं चेति लि० पु० चकारोऽधिकः ।

२ प्राणितृत्वापाणित्वेति लि० पु० प्रमादः ।

३ प्रतिवचनमिति तथैव परमात्मेतिविषयमिति लि० पु० ।

प्राणनस्य कर्तृत्वेनोक्त इति न मन्वीथा,स्तस्य सुषुप्तिमूर्च्छादौ प्राणनादेरकर्तृत्वात् । "को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्या"दिति सर्वप्राणिप्राणनहेतुत्वं हि परमात्मन एवा ऽन्यत्र श्रुतम् । अतः पूर्वप्रश्नप्रतिवचने परमात्मविषये, एवमुत्तरे अपि, अशनायाद्यतीतत्वस्य परमात्मासाधारणत्वात् । उभयत्रा'तोऽन्यदार्त्त'मित्युपसंहारश्चैकरूपः । प्रश्नप्रतिवचनावृत्तिस्तु कृत्स्नप्राणिप्राणनहेतोः परस्य ब्रह्मणोऽशनायाद्यतीतत्वप्रतिपादनाय । तत्र दृष्टान्तमाह 'उपदेशव'दिति । यथा सद्विद्यायाम् "उत त[1]मादेशमप्राक्ष्य इति प्रक्रान्ते सदुपदेशे "भगवांस्त्वेव मे तद् ब्रवीत्वि"ति "भूय एव मा भगवान् विज्ञापयत्वि"ति प्रश्नस्य "एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्य"मिति प्रतिवचनस्य च भूयोभूय आवृत्तिः सतो ब्रह्मणस्तत्तन्माहात्म्यविशेषप्रतिपादनाय दृश्यते, तद्वत् । अत एकस्यैव सर्वान्तरभूतस्य ब्रह्मणः कृत्स्नप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन रूपैक्याद्विद्यैक्यम् ।

अथ स्यात्–यद्यप्युभे प्रश्नप्रतिवचने परब्रह्मविषये, तथाऽपि विद्याभेदोऽवर्ज्जनीयः । एकत्र सर्वप्राणिप्राणनहेतुत्वेनोपास्यम्, इतरत्राशनायाद्यतीतत्वेनेत्युपास्यगुणभेदेन रूपभेदात् प्रष्टृभेदाच्च । पूर्वत्र ह्युषस्तः प्रष्टोत्तरत्र तु कहोल† इति, तत्राह–

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३९ ॥

नात्र विद्याभेदः, प्रश्नप्रतिवचनाभ्यामेकरूपार्थविषयाभ्यामेकेन च विधिपदेनैकवाक्यत्वप्रतीतेः । प्रश्नद्वयं तावत्सर्वान्तरात्मविशिष्टब्रह्मविषयम् । द्वितीये प्रश्ने "यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर" इत्येवकारश्च पूर्वत्रोषस्तेन पृष्टगुणविशिष्टब्रह्मविषयत्वं कहोलप्रश्नस्यावधारयति । प्रतिवचनं चोभयत्र " स त आत्मा सर्वान्तर" इति सर्वान्तरात्मत्वविशिष्टब्रह्मविषयमेकरूपमेव । विधिप्रत्ययश्चोत्तरत्रैव दृश्यते–"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासे"दिति ।

---

१ पुनस्तमिति लि० पु० ।

† एतच्चिह्नादारभ्य ४७७ पृष्ठे द्वितीयपङ्क्तौ एतच्चिह्नं यावत् लि० पु० पाठस्त्रुटितः ।

एव सर्वान्तरात्मत्वविशिष्टब्रह्मैकविषयत्वे द्वयोरवधृते सत्येकस्मिन्नेव सर्वान्तरात्मत्वविशिष्टे ब्रह्मण्युपास्य उषस्तकहोलयोरितरेतरबुद्धिव्यतिहारः कर्त्तव्यः । उषस्तस्य या सर्वान्तरात्मनो ब्रह्मणः सर्वप्राणिप्राणनहेतुत्वविषया बुद्धिः, सा कहोलेनापि प्रष्ट्रा कार्या । या च कहोलस्य तस्यैव ब्रह्मणोऽशनायाद्यतीतत्वविषया बुद्धिः, सोषस्तेनापि कार्य्या । एव व्यतिहारे कृत उभाभ्या सर्वान्तरस्य ब्रह्मणो जीवव्यावृत्तिरवधृता भवति । एव[1] सर्वान्तरात्मान प्रत्यगात्मनो व्यावृत्तमवगमयितु सर्वप्राणिप्राणन[2]हेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन विशिंषन्ति हि याज्ञवल्क्यस्य प्रतिवचनानि । अतो ब्रह्मणः सर्वान्तरात्मत्वमेवोपास्यगुणः, प्राणनहेतुत्वादयस्तु तस्योपपादका, नोपास्याः । ननूपास्यगुणः सर्वान्तरात्मत्वमेव चे,त्प्राणनहेतुत्वस्याशनायाद्यतीतत्वस्य च प्रष्ट्रोर्व्यतिहृत्यानुसन्धान किमर्थम् । तदुच्यते—सर्वप्राणिप्राणनहेतुत्वेन सर्वान्तरात्मनि जीवाद्व्यावृत्ते ब्रह्मण्युषस्तेनावधृते सति कहोलेन जीवस्य सर्वात्मनाऽसम्भावितेन स्वभावविशेषेण सर्वान्तरात्मा व्यावृत्तोऽनुसधेय इति कृत्वा पुन. प्रश्नः कृतः । याज्ञवल्क्योऽपि तदभिप्रायमभिज्ञाय प्रत्यगात्मनोऽसम्भावितमशनायादिप्रत्यनीकत्वमुक्तवान् । अतश्चोपास्यस्य व्यावृत्तिप्रतीतिसिद्ध्यर्थमुभाभ्या परस्परबुद्धिव्यतिहारः कर्त्तव्यः । 'इतरवत्'—यथेतरत्र सद्विद्यायां भूयोभूयः प्रश्नैश्च प्रतिवचनैश्च तदेव सद्ब्रह्म व्यवच्छिद्यते, न पुनः पूर्वप्रतिपन्नाद्गुणाद्गुणान्तरविशिष्टतयोपास्य प्रतिपाद्यते, तद्वत् ।

तत्रापि प्रश्नप्रतिवचनभेदे सति कथमैक्यमवगम्यत इति चेत्, तत्राह—

## सैव हि सत्यादयः ॥ ३७ ॥

सैव हि सच्छब्दाभिहिता परमकारणभूता परा देवतैव "सेय देवतैक्षत" "तेजः परस्या देवताया"मिति प्रकृता "यथा सोम्य मधु मधु[3]-

१ एनमिति सु० पु० ।
२ प्राणिप्राणप्राणनेति सु० पु० ।
३ मध्विति सकृत् लि० पु ।

ज्ञतो निस्तिष्ठन्ती''त्यादिषु पर्यायेषु सर्वेषूपपाद्यते, अत ''एतदात्म्यमिद सर्व तत्सत्य स आत्मे''ति प्रथमपर्यायोदिताः सत्यादयः सर्वेषु पर्यायेषूपपाद्योपसह्रियन्ते ॥

केचित्तु 'व्यतिहारो विशिंषन्ति हीतरवत्' 'सैव हि सत्यादय' इति सूत्रद्वयमधिकरणद्वयं वर्णयन्ति। तत्र पूर्वेण ''त्व वा अहमस्मि भगवो देवते अह वै त्वमसि भगवो देवते'' ''तद्योऽह[1] सोऽसौ योऽसौ सोऽह''मिति वाक्ये जीवपरयोर्व्यतिहारानुसन्धानं प्रतिपाद्यत इत्युच्यत इत्याहुः। तत् ''सर्व खल्विद ब्रह्म'' ''एतदात्म्यमिद सर्व'' तत्त्वमसी''त्यपगत[2]सर्वात्मभावविषयत्वादस्य वाक्यस्य नात्र प्रतिपादनीयमपूर्वमस्तीत्यनादरणीयम्। तत्तु वक्ष्यति ''आत्मेति तूपगच्छन्ति ग्राहयन्ति चे''ति। न च सर्वात्मत्वा[4]नुसन्धानातिरेकेण परस्मिन् ब्रह्मणि जीवत्वा[3]नुसन्धान, जीवे च परब्रह्मत्वा[4]नुसन्धानं तथ्य सम्भवति। उत्तरेण च[5] सूत्रेण ''स यो ह वै तन्महद्यक्ष[6] प्रथमज वेद सत्यं ब्रह्मे''त्यादिवाक्यप्रतिपादितस्य तस्योपासनस्य ''तद्यत्सत्यमसौ स आदित्यो य एष एतस्मि[7]न्मण्डले पुरुषो यश्चायं दक्षिणेऽक्ष''न्नित्यादिवाक्यप्रतिपादितोपासनस्य चैक्य प्रतिपाद्यत इति। तदप्ययुक्तम्[8], उत्तरवाक्ये ऽत्यादित्यस्थानभेदेन विद्याभेदस्य पूर्वमेव ''न वा[9] विशेषा''दित्यनेन प्रतिपादितत्वात्। न च द्वयोरनयोर्व्याहृत्यादिशरीरकत्वेन रूपवतो''र्हन्ति[10] पाप्मानं जहाति च य एव वेदे''ति च[11] पृथक्फलयोगचोदनावतोर्द्वयोरुपासनयोः ''स यो ह वै तन्महद्यक्ष[12] प्रथमज वेद सत्य ब्रह्मेति जयतीमाल्लँ

१ त्वमसि योऽहमिति लि पु।
२ ०त्यवगम्यते–इति लि॰ पु।
३ जीवत्वेत्यस्य स्थाने जीवे चेति लि पु ऽत्राप्युपकल्पितम्।
४ त्वेति नास्ति लि पु॰। ५ चेति नास्ति लि॰ पु॰।
६ योऽह वै तन्महाध्यक्षादक्षरमिति लि॰ पु।
७ एष तस्मिन्निति मु॰ पु॰। ८ तदप्युक्तमिति लि॰ पु।
९ नचा–इति लि॰ पु॰। १० ०वतोरपहत–इति लि॰ पु।
११ चेति नास्ति लि पु।
१२ योऽह वै तन्महाध्यक्षमिति लि पु, योऽहेति मु पु अकारच्छेदोऽत्र।

लोका"निति[1] संयोगरूपादिमत्तया निरपेक्षेण पूर्वेणैकेनोपासनेनाभेदः[2] सम्भवति । न च "हन्ति पाप्मानं जहाती"ति च[3] गुणफलाधिकारत्वम्,[4] प्रमाणाभावात् । पूर्वेणैकविद्यात्व[5] प्रमाणमिति चे,न, इतरेतराश्रयत्वात्[6]—एकविद्यात्वे निश्चिते सति पूर्वफलस्यैव[7] प्रधानफलत्वेनोत्तरयोः फलयोर्गुणफलत्वम्, तयोर्गुणफलत्वे निश्चिते सति संयोगभेदाभावात् पूर्वेण विद्यैक्यमितीतरेतराश्रयत्वमिति । एवमादिभिर्यथोक्तप्रकारमेव सूत्रद्वयम् ॥

अन्तरत्वाधिकरणं समाप्तम् ॥ १४ ॥

---

अथ कामाद्यधिकरणम् १५ ।

## कामादीतरत्र तत्र[8] चायतनादिभ्यः ॥ ३८ ॥

छान्दोग्ये श्रूयते "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्य"मित्यादि, वाजसनेयके च "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशान" इत्यादि । तत्र संशयः—किमनयोर्विद्याभेद उत नेति । किं युक्तम् । भेद इति कुतः । रूपभेदात्, अपहतपाप्मत्वादिगुणाष्टकविशिष्ट[10] आकाशश्छान्दोग्य उपास्यः प्रतीयते, वाजसनेयके त्वाकाशे शयानो वशित्वादिगुणविशिष्ट उपास्यः प्रतीयते । अतो रूपभेदाद्विद्याभेद इति प्राप्ते प्रचक्ष्महे—

न भेद इति । कुतः । रूपाभेदात्, 'इतरत्र तत्र च कामाद्येव हि रूपम् । वाजसनेयके छान्दोग्ये च सत्यकामादिविशिष्टमेव ब्रह्मोपास्यमित्यर्थः । कुत एतदवगम्यते । 'आयतनादिभ्यः'—हृदयायतनत्वसेतुत्वविधरणत्वादिभिस्तावदुभयत्र सैव विद्येति प्रत्यभिज्ञायते । वशि-

---

१ लोकानेति—इति लि पु० ।  २ पूर्वेण केनोपासनाभेद इति लि० पु० ।
३ चेति नास्ति लि पु० ।  ४ ०धिकारत्वे—इति लि पु० ।
५ ०विद्यायामिति लि पु० ।  ६ ०श्रयणादिति लि० पु० ।
७ एकविद्याविनिश्चिते पूर्वकल्पस्यैवेति लि पु० ।
८ समिति नास्ति लि पु ।  ९ कामादितरत्रवचेति लि० पु० प्रमाद ।
१० गुणविशिष्ट इति लि पु० ।

त्वादयश्च वाजसनेयके श्रुताश्छान्दोग्ये श्रुतस्य गुणाष्टकान्यतमभूतस्य सत्यसङ्कल्पत्वस्य विशेषा[1] एवेति सत्यसङ्कल्पत्वसहचारिणा सत्यकामत्वादीनामपहतपाप्मत्वपर्यन्तानां सद्भावमवगमयन्ति। अतो रूपं न भिद्यते। सयोगोऽपि "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" "अभयं वै ब्रह्म भवती"ति ब्रह्मप्राप्तिरूपो न भिद्यते। 'आकाश'-शब्दश्छान्दोग्ये परमात्मविषय इति 'दहर उत्तरेभ्य' इत्यत्र निर्णीतम्। वाजसनेयके त्वाकाशे शयानस्य वशित्वादिश्रवणा[2]त्तस्य शयानस्य परमात्मत्वे सति तदाधाराभिधायिन आकाशशब्दस्य "तस्यान्ते सुषिरं सूक्ष्म"मिति हृदयान्तर्गतस्य 'सुषिर'-शब्दवाच्यस्याकाशस्याभिधायकत्वमवगम्यते। अतो विद्यैक्यम्।

अथ स्यात्-यदुक्तं वाजसनेयके वशित्वादिभिः सह सत्यकामत्वादिसद्भावोऽवगम्यत इति, तन्नो[3]पपद्यते, वशित्वादीनामेव तत्र परमार्थतः सद्भावाभावात्। तदभावश्च

"मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥
एकधैवानुद्रष्टव्यमेतदप्रमयं* ध्रुव"मिति-

प्रकृतेन वाक्येन, 'स एष नेति नेत्यात्मे'त्युत्तरेण[4] चोपास्यस्य ब्रह्मणो निर्विशेषत्वप्रतीतेरवगम्यते। अतो वशित्वादयोऽपि स्थूलत्वा[5]दिवन्निषेध्या इति प्रतीयन्ते। अत एव च्छान्दोग्येऽपि[6] सत्यकामत्वादयो न ब्रह्मणः परमार्थिका गुणा उच्यन्ते। अतोऽपारमार्थिकत्वादेवजातीयकानां गुणानां मोक्षार्थमुपासनेषूपलोप[7] इति, तत्राह-

---

१ विशेष-इति लि॰ पु॰। २ वशित्वाश्रवणादिति लि॰ पु॰।
३ तन्नो-इति लि॰ पु॰। * ०दप्रमेयमिति पु० द्वयेऽपि।
४ ०त्मेति वक्ष्यमाणेनोत्तरेणेति मु॰ पु॰।
५ अणुत्वेति लि॰ पु॰ ऽधिकम्।
६ अपिर्नास्ति लि॰ पु॰।
७ ०प्युपलोप इत्युपकल्पित लि॰ पु॰।

## आदरादलोपः ॥ ३९ ॥

ब्रह्मगुणत्वेन प्रमाणान्तराप्रतिपन्नानां[1] गुणानां[2]मेषां सत्यकामत्वादीनां "तस्मिन् यदन्तस्तदन्वेष्टव्यमेष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" "सर्वस्य वशी सर्वस्येशान एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाये"त्यादिभिरनयोः श्रुत्योरन्यासु च मोक्षार्थोपासनोपास्यब्रह्मगुणत्वेन सादरमुपदेशादेषामलोपः, अपि तूपसंहार एव कार्यः । छान्दोग्ये तावत् "तद्य इहा ऽऽत्मानमनुविद्य व्रजन्त्ये[3]तांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती"ति सत्यकामत्वादिगुणविशिष्टस्य ब्रह्मणो वेदनं विधाय "अथ य इहाऽऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवतीत्यऽवेदननिन्दा क्रियमाणा गुणविशिष्टवेदनस्यादरणीयतां दर्शयति। तथा वाजसनेयके "सर्वस्य वशी सर्वस्येशान एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल" इति भूयोभूय ऐश्वर्योपदेशाद् गुणेष्वादरः प्रतीयते, एवमन्यत्रापि । न च मातापितृसहस्रेभ्योऽपि वत्सलतरं[4] शास्त्रं प्रतारकवदऽपारमार्थिकान्निरसनीयान्[5] गुणान् प्रमाणान्तराप्रतिपन्नानाऽऽदरेणोपदिश्य संसारचक्रपरिवर्त्तनेन[6] पूर्वमेव ब[7]म्भ्रम्यमाणान् मुमुक्षून् भूयोऽपि भ्रमयितुमऽलम् । "नेह नानाऽस्ति किञ्चन "एकधैवानुद्रष्टव्य"मिति तु सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वादेकधाऽनुदर्शनं विधायाऽब्रह्मात्मकत्वेन पूर्वसिद्धनानात्वदर्शनं निषेधतीत्ययमर्थः प्रागेव[8] प्रपञ्चितः । "स एष नेति नेत्यात्मे"त्यत्र चे'ति'-शब्देन प्रमाणान्तरप्रतिपन्नं प्रपञ्चाकारं[9] परामृश्य न तथाविधं ब्रह्मेति सर्वा[10]त्मभूतस्य ब्रह्मणः प्रपञ्चविलक्षणत्वं प्रतिपाद्यते । तदेव चानन्तरं

---

१ प्रमाणान्तराप्राप्तानामिति क्वचित् ।
२ गुणानामिति लि पु॰ नास्ति । ३ प्रव्रजन्तीति लि पु ऽत्र ।
४ वात्सल्यपरमिति मु पु । ५ ०र्थिकानिरमणीयानि।त लि पु॰ ।
६ ०परिवर्त्तने-इति लि॰ पु । ७ ब्रमिति नास्ति लि पु ।
८ प्राप्रे चेति लि पु । ९ प्रपञ्चप्रकारमिति क्वचित् ।
१० ०मभ्रय तथाविधं ब्रह्मेति सत्त्वा-इति लि॰ पु ।

मुपपादयति "अग्रह्यो[1] न हि गृह्यते ऽशीर्यो न हि शीर्यते ऽसङ्गो न हि सज्यते ऽसितो न व्यथते न रिष्यती"ति । प्रमाणान्तरग्राह्यविसजातीयत्वात् प्रमाणान्तरेण न गृह्यते विशरणीयविसजातीयत्वान्न विशीर्यते, एवमुत्तरत्रानुसन्धेयम् । छान्दोग्येऽपि "नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत[2] एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता"इति सर्वविसजातीयत्वं ब्रह्मणः प्रतिपाद्य तस्मिन्सत्यकामत्वा[3]दयो विधीयन्ते ।

नन्वेवमपि "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति स यदि पितृलोककामो भवती"त्यादिना सत्यकामादिगुणविशिष्टवेदनस्य सांसारिकफलसम्बन्धश्रवणान्मुमुक्षोर्ब्रह्मप्रेप्सोर्न सगुणं ब्रह्मोपास्यम्, परविद्याफलं च[4] 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत"इतीदमेव । अतः सत्यकामत्वादयो ब्रह्मप्रेप्सोर्नोपसंहार्या इत्यत उत्तरं पठति—

## उपस्थितेऽतस्तद्वचनात् ॥ ४० ॥

उपस्थितिरुपस्थानं ब्रह्मोपसम्पत्तिः । उपस्थिते ब्रह्मोपसम्पन्ने सर्वबन्ध[5]विनिर्मुक्ते स्वेन रूपेणाभिनिष्पन्ने प्रत्यगात्मन्यऽत एवोपसम्पत्तेरेव हेतोः सर्वेषु लोकेषु कामचार उच्यते "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपूरुष[6] स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्" "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवती"ति । तदेतच्चतुर्थे निपुणतरमुपपादयिष्यते । अतः सर्वेषु लोकेषु कामचारस्य मुक्तोपभोग्यफलत्वान्मुमुक्षोः सत्यकामत्वादयो गुणा उपसंहार्याः ॥

कामाद्यधिकरणं समाप्तम् ॥ १५ ॥

—

१ अग्राह्य इति पु द्वयेपि । २ न वधेनास्य सहते—इति लि॰ पु॰ । ३ त्वेति नास्ति लि पु । ४ चेति नास्ति लि पु । ५ सबन्धेति लि पु॰ । ६ उत्तम पुरुष इति पु द्वयेपि ।

अथ तन्निर्धारणानिय माधिकरणम् १६ । **तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥ ४१ ॥**

"ओमित्येतदक्षरमुद्गीथमुपासीते"त्यादीनि कर्माङ्गाश्रयाण्युपासनानि कर्माङ्गभूतोद्गीथादिमुखेन जुह्वादिमुखेन पर्णतादिवत् कर्माङ्गत्वेन निरूढानुष्ठानानी[1]त्युद्गीथाद्युपासनसम्बन्धिनो "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरम्भवती"ति वर्त्तमाननिर्देशस्य पर्णतादिसम्बन्ध्यऽपापश्लोकश्रवणवत्पृथक्फलत्वकल्पनायोगात् क्रतुषु नियमेनोपसंहार्याणीत्येवं प्राप्ते प्रचक्ष्महे—

'तन्निर्धारणानियम' इति । निर्धारणं निश्चयेन मनसोऽवस्थापनं ध्यानमित्यर्थः । तन्निर्धारणानियमः कर्मसूद्गीथाद्युपासनानामनियमः । कुतः । 'तद्दृष्टेः' । उपलभ्यते ह्युपासनानुष्ठानानियमः,[2] "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे"त्यविदुषोऽप्यनुष्ठानवचनात् । न चाङ्गत्वे सत्युपासनस्यानुष्ठानाऽनियम उपपद्यते[3] । एवमुपासनस्यानङ्गत्वे निश्चिते सत्युपासनविधेः फलाकाङ्क्षाया रात्रिसत्त्रन्यायेन वीर्यवत्तरत्वं कर्मफलात्पृथग्भूतमेव फलमित्यवगम्यते । किमिदं वीर्यवत्तरत्वम् । कर्मफलस्यैवाप्रतिबन्धः[4] । प्रतिबध्यते हि कर्मफलं प्रबलकर्मान्तरफलेन तावन्तं कालम् । तदभावोऽप्रतिबन्धः कर्मफलात्स्वर्गादिलक्षणात् पृथग्भूतमेव फलम् । तदिदमुच्यते 'पृथग्ध्यऽप्रतिबन्धः फल'मिति । अतः कर्माङ्गाश्रयाणामपि पृथक्फलत्वाद् गोदोहनादिवत्कर्मसूद्गीथाद्युपासनानामनियमेनोपसंहारः ॥

तन्निर्धारणानियमाधिकरणं समाप्तम् ॥ १६ ॥

---

१ निरूढानुष्ठेयानीत्युपकल्पितं लि॰ पु॰ ।

२ उपासनानियम इति लि पु ।

३ उपलभ्यत इति लि पु ।

४ सहप्रतिबन्ध इति लि॰ पु ऽत्राऽधिकम् ।

अथ प्रदाना धिकरणम् १७ । **प्रदानवदेव[1] तदुक्तम् ॥ ४२ ॥**

दहरविद्यायां "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामा"निति दहराकाशस्य परमात्मन उपासनमुक्त्वा 'एतांश्च सत्यान्कामा'निति गुणानामपि पृथगुपासनं विहितम् । तत्र संशयः–गुणचिन्तनेऽपि तत्तद्गुणविशिष्टतया दहरस्यात्मनश्चिन्तनमावर्त्तनीयम्, उत नेति । दहराकाशस्यैवापहतपाप्मत्वादीनां गुणित्वात्[2] तस्य च सर्वदैवाऽनुसन्धातुं[3] शक्यत्वाद् गुणार्थं तच्चिन्तनं नावर्त्तनीय[4]मिति प्राप्त उच्यते–

'प्रदानवदेवे'ति । प्रदानवदावर्त्तनीयमेवेत्यर्थः । यद्यपि दहराकाश एक एवापहतपाप्मत्वादीनां गुणानां गुणी, स च प्रथमं चिन्तितः, तथाऽपि स्वरूपमात्राद्गुणविशिष्टाकारस्य भिन्नत्वाद'पहतपाप्मा विजर'[5] इत्यादिना गुणविशिष्टतया चोपास्यत्वेन विहितत्वात्पूर्वं स्वरूपेणानुसंहितस्यापहतपाप्मत्वादिविशिष्टतयाऽनुसन्धानार्थमावृत्तिः कर्त्तव्या । यथे"न्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपे[6]दिन्द्रायाधिराजायेन्द्राय स्वराज्ञ" इतीन्द्रस्यैव राजत्वादिगुणविशिष्टत्वेऽपि तत्तद्गुणसम्बन्ध्याकारस्य भिन्नत्वात्प्रदानावृत्तिः क्रियते । तदुक्तं साङ्कर्षणे[7] "नाना वा देवता पृथक्त्वा"दिति ॥

प्रदानाधिकरणं समाप्तम् ॥ १७ ॥

---

१ प्रधानेति लि पु ऽत्र प्रकरणमात्रे ।
२ गुणत्वादिति लि· पु ।
३ सकृदेवानुसंधातुमिति क्वचित् ।
४ नानुवर्तनीयमिति मु पु ।
५ विरज इति लि· पु ।
६ ०कपालमनुनिर्वपेदिति मु· पु ।
७ संकर्षणेति लि· पु· ।

अथ लिङ्गभूयस्त्वाधिकरणम् १८ ।

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४३ ॥**

तैत्तिरीया[1] दहरविद्यानन्तरमधीयते[2]–

"सहस्रशीर्षं देवं विश्वाक्ष[3] विश्वश[4]म्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदं[5]"मित्यारभ्य[6]–
"सोऽक्षरः परमः स्वरा"डित्यन्तम् ।

तत्र संशयः–किं पूर्वप्रकृतविद्ययैकविद्यात्वेन तदुपास्यविशेषनिर्द्धारणमनेन क्रियत उत सर्ववेदान्तोदितपरविद्योपास्यविशेषनिर्धारणमिति । किं युक्तम् । दहरविद्योपास्यविशेषनिर्धारणमिति । कुतः । प्रकरणात् । पूर्वस्मिन्ननुवाके दहरविद्या हि प्रकृता–

"दहरं विपापं[7] परवेश्मभूतं
यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दहं गगनं विशोक-
स्तस्मिन् यदन्तस्तदुपासितव्य"मिति ।

अस्मिंश्चानुवाके "पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुख"मित्यादिना हृदयपुण्डरीकाभिधान[8]मस्य नारायणानुवाकस्य दहरविद्योपास्यनिर्धारणार्थत्वमुपोद्बलयतीत्येवं प्राप्ते प्रचक्ष्महे–

'लिङ्गभूयस्त्वा'दिति । अस्य निखिलपर[9]विद्योपास्यविशेषनिर्धारणार्थत्वे भूयांसि लिङ्गानि दृश्यन्ते । तथा हि, परविद्यास्वक्षरशिवशम्भुपरब्रह्मपरज्योतिःपरतत्त्वपरमात्मादिशब्दनिर्दिष्टमुपास्य वस्त्विह तैरेव शब्दैरनूद्य तस्य नारायणत्वं वि[10]धीयते । भूयसीषु विद्यासु श्रुतानऽनूद्य

---

१ तैत्तिरीयके–इति मु० पु । २ अभिधीयत इति लि० पु० ।
३ विश्वाख्यमिति लि पु । ४ संभवमिति पु द्वयेपि ।
५ विश्वमित्यर्द्धे लि० पु नास्ति, पदमित्यस्य स्थाने प्रभुमिति मु० पु० ।
६ संभवमित्यादि आरभ्येति लि पु० ।
७ विपाप्ममिति मु पु० । ८ पुण्डरीकमभिध्यानमिति लि० पु० ।
९ परस्येति लि पु० । १० ०त्वमभीति लि पु० ।

नारायणत्वविधानभूयस्त्व नारायण एव सर्वविद्यासूपास्यमऽस्थूलत्वादिविशेषितानन्दादिगुणक[1] पर ब्रह्मेति विशेषनिर्णये 'भूयो'—बहुतरं लिङ्ग भवति। अत्र 'लिङ्ग'—शब्दश्चिह्नपर्यायः, चिह्नभूत वाक्य बहुतरमस्तीत्यर्थः। तद्धि प्रकरणाद्बलीयः। तदप्युक्त प्रथमे काण्डे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याना समवाये पारदौर्बल्य*मर्थविप्रकर्षा"दिति। यत्तूक्तम्[2]—पद्मकोशप्रतीकाशमित्यादि वचन दहरविद्या[3]शेषत्वमस्योपोद्बलयतीति, तन्न, बलीयसा[4] प्रमाणेन सर्वविद्योपास्यनिर्धारणार्थत्वेऽवधृते[5] सति दहरविद्यायामपि तस्यैव नारायणस्योपास्यत्वेन तद्वचनोपपत्तेः। न च 'सहस्रशीर्ष'मित्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदितोपास्तिना[6] सम्बन्ध' शङ्कनीयः, 'तस्मिन् यदन्तस्तदुपासितव्य'मित्युपास्तिगतेन‡ कृत्प्रत्ययेनोपास्यस्य[7] कर्मणोऽभिहितत्वात्तदुपास्ये द्वितीयाऽनुपपत्ते[8] "विश्वमेवेद पुरुष' 'तत्त्व नारायणः पर" इत्यादिप्रथमानिर्देशाच्च प्रथमार्थे[9] द्वितीया वेदितव्या।

"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः"।

"तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः।

स ब्रह्मा[10] स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" ॥—

इति निर्देशैः[11] सर्वस्मात्परो नारायण एव सर्वत्रोपास्य इति निर्णीयमानत्वाच्च प्रथमार्थे[12] द्वितीयेति निश्चीयते ॥

लिङ्गभूयस्त्वाधिकरण समाप्तम् ॥ १८ ॥

---

१ ०त्वादिविशेषितानन्दित्वाकमिति लि० पु। * परदौर्बल्यमिति पु० द्वयेपि।
२ परदौर्बल्यमर्थविकप्रकर्षादिति युक्तमिति लि० पु० प्रमाद०।
३ विद्येति नास्ति लि पु। ४ तत्राबलीयसेति लि पु प्रमाद।
५ निर्धारणात्वेत्यर्थ. त्रिधृते—इति लि पु।
६ ०वाक्योदितोपास्तिनामिति लि० पु०। ‡ उपास्तिगतेनेति पाठान्तरम्।
७ उपासनस्येति लि पु।
८ तदुपास्य द्वितीया उपपत्तेरिति लि० पु०।
९ प्रथमार्था—इति लि पु। १० स ब्रह्म—इति मु पु।
११ निर्देशे—इति लि पु। १२ ०र्था—इति लि पु।

अथ पूर्वविकल्पाधिकरणम् १६ । **पूर्वविकल्पः प्रकरणात् स्यात्[1] क्रियामानसवत् ॥ ४४ ॥**

वाजसनेयकेऽग्निरहस्ये मनश्चिदा*दयोऽग्नयः श्रूयन्ते मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित इति । तत्र संशयः—किमेते मनश्चिदादयः साम्पादिकत्वेन[2] विद्यारूपा अग्नयः क्रियामयक्रत्वनुप्रवेशेन क्रियारूपा आहो स्विद्विद्यामयक्रत्वनुप्रवेशेन विद्यारूपा एवेति विशये[3] क्रियारूपत्वं तावदाह 'पूर्वविकल्प' इत्यादिना । चित्याग्नित्वेन[4] सम्पादितानामेषां मनश्चिदादीनां क्रत्वनुप्रवेशसाकाङ्क्षाणां स्वदेशे क्रतुविध्यभावात् पूर्वत्र "सद्वा इदमग्र आसी"दित्यादिनेष्टकाचितस्याग्नेः प्रकृतत्वात् तस्य च क्रियामयक्रत्वव्यभिचारित्वेन तत्र क्रतुसंविधानात् तत्प्रकरणगृहीता[5] मनश्चिदादयस्तेनेष्टकाचितेनाग्निना विकल्प्यमानाः क्रियारूपा[6] एव स्युः । विद्यारूपाणामपि क्रियामयक्रत्वनुप्रवेशेन क्रियारूपत्वं मानसग्रहवदुपपद्यते । यथा द्वादशाहे अवि[7]वाक्ये दशमेऽहनि मानसग्रहस्य मनोनिष्पाद्यग्रहणासादन[8]स्तोत्रशस्त्रप्रत्याहरणभक्ष[9]त्वेन विद्यारूपस्यापि[10] क्रियामयक्रत्वङ्गतया क्रियारूपत्वम्, तथेहापि ।

**अतिदेशाच्च ॥ ४५ ॥**

इतश्चेष्टकाचितेनाग्निना मनश्चिदादीनां विकल्पः क्रियारूपत्वं चावगम्यते । "तेषामेकैक एव तावान् यावानसौ पूर्व" इति पूर्वस्येष्टकाचितस्याग्नेर्वीर्यं मनश्चिदादिष्वतिदिश्यते, तेन तुल्यकार्यत्वाद्विकल्पः । ततश्चेष्टकाचितवत्तत्क्रतुनिर्वर्त्तनेन[11] तदङ्गभूता मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशेन क्रिया[12]रूपा एव । इत्येवं प्राप्ते प्रचक्ष्महे—

---

१ स्यादिति लि पु॰ नास्ति । * चित्–इत्यस्य स्थाने चित–इति प्रकरणमात्रे पु द्वयेपि । २ साकाङ्क्षित्वेनेति लि॰ पु॰ । ३ विषय–इति लि॰ पु । ४ चित्यग्नित्वेनेति लि पु । ५ प्रकरणावभिहिता इति लि पु॰ । ६ क्रिया इति लि पु । ७ आदि–इति लि॰ पु॰ । ८ ग्रहणसाधनानुप्रवेश–इति लि पु । ९ लक्षणेति लि० पु० । १० अपिर्नास्ति लि० पु० । ११ ०वत् क्रतुपूर्वं निर्वर्तते–इति लि० पु० । १२ ०दय, क्रियेति लि० पु० ।

## विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ४६ ॥

'तु'-शब्दः पक्षं व्यावर्त्तयति । यदुक्तम्-मनश्चिदादयः क्रियामयक्रत्वनुप्रवेशेन क्रियामया एवेति, नैतदस्ति, विद्यारूपा एवैते, विद्यारूपक्रत्वन्वयिन इत्यर्थः । कुतः । 'निर्धारणाद्दर्शनाच्च'। निर्धारणं तावत् "ते हैते विद्याचित एव विद्यया हैवैत एवंविदश्चिता[१] भवन्ती"ति यवाङ्मनश्चक्षुरादिव्यापाराणामिष्टकादिवच्चयनानुपपत्तेर्मनसा सम्पादितामिनत्वेन विद्यारूपत्वे सिद्धेऽपि 'विद्याचित एव' 'विद्यया हैवैत' इति चावधारणं विद्यामयक्रत्वन्वयेन विद्यारूपत्वज्ञापनार्थमिति निश्चीयते । दृश्यते चात्रैवैषां शेषी विद्यारूपः क्रतुः "ते[२] मनसैवा*धीयन्त मनसाचीयन्त मनसैषु[३] ग्रहा अगृह्यन्त मनसा ऽस्तुवत[४] मनसा ऽशसन्[५] यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञिय[६] कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमऽक्रियते"ति[७] । इष्टकचितेष्वग्निषु यत्क्रियामययज्ञिय[८] कर्म क्रियते, तन्मनोनिर्वर्त्येषु[९] मनश्चिद[१०]ग्निषु मनोमयमेवाक्रियते"ति[११] वचनात् क्रतुरपि विद्यामयोऽत्र प्रतीयते ।

नन्वत्र विधिपदाश्रवणात् फलसम्बन्धा[१२]प्रतीतेश्चेष्टकचितान्य[१३]स्यापितक्रियामयक्रतुप्रकरणाद्विद्यामयक्रत्वन्वयेन विद्यारूपतैषां बाध्येत,[१४] नेत्याह-

१ एव विद्याचिता इति लि० पु० ।
२ चात्र तेषां शेषि विद्यारूप क्रतु तेन-इति लि० पु० ।
* मनसैवेति प्राय पुनःपुन पु द्वयेपि । ३ मनसैव-इति लि० पु० ।
४ स्तुवन्तेति पु० द्वयेपि । ५ सशंचिति मु० पु० ।
६ मनसा पश्यति-इति मु० पु०, मनसा पश्यन्त-इति लि० पु० चाधिकमत्र ।
७ यज्ञमिति लि० पु० ।
८ ०मय क्रियते ते-इति लि० पु० । ९ यज्ञीयमिति मु० पु० ।
१० तन्मनोभिक्रत्वनुप्रवेशेनापि न चित्तव्य अथ इष्टके चित्ताग्ने स्वक्रतूद्धारेण यत्फल तदेव मनश्चितादीनामपि विद्यामयक्रतूद्धारेण फलमित्यनिर्देशाद्धावगम्यते परेण च शब्दस्य तावद्विध्य तद्विध्यत्वविद्याप्रतिपादित्वमवमगम्यते परेण हि ब्रह्मणा नाय चावलोक एषोऽग्निचितस्तस्यावलोकार्थे-इति लि० पु० ।
११ ०श्चिताद्य-इति मु० पु० । १२ ०मेव क्रियते इति-इति लि० पु० ।
१३ ०सबन्धादिति लि० पु० । १४ ०नय -इति लि० पु० ।
१५ ०रूपतेषा बाध्यते-इति लि० पु० ।

तर्हि सर्वथा ब्रह्मग्रहणाभावे मोक्षो न स्यादित्याशङ्क्याह ।

**अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३ । २ । २४ ॥**

अपि चैनमात्मानं संराधने समाध्यवस्थायां कृतार्थाः पश्यन्तीति प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामवगम्यते । तथा हि श्रुतिः "पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन् कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इति, "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति । स्वयम्भूः परमात्मा खानि श्रोत्रात्मकाकाशोपलक्षितानीन्द्रियाणि पराञ्च्यनात्मविषयाणि व्यतृणद्धिंसितवान् । इन्द्रियाणां हिंसाऽनात्मविषयतया सर्जनमेव । तथा सर्जने गमकमाह "तस्मा"दिति । ननु यदोन्द्रियैः पराञ्चमेवार्थं पश्यति, नान्तरात्मानं, कथं तर्ह्यात्मज्ञानम्, तत्राह "कश्चि"दिति । कश्चिद्धीरो विवेक्यावृत्तचक्षुः संयतेन्द्रियो मोक्षमिच्छन्प्रत्यगात्मानं समाधावीक्षितवानित्यर्थः । ज्ञानस्य करणव्युत्पत्त्याऽन्तःकरणस्य प्रसादेन रागादिराहित्येन विशुद्धसत्त्वः प्रत्यक्प्रवणान्तःकरणस्ततस्तु विशुद्धसत्त्वाद्धेतोस्तमात्मानं निष्कलं निरवयवं ध्यायमानः पश्यति साक्षात्करोतीत्यर्थः । स्मृतिरपि "यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥" इति । जितश्वासाः प्राणायामपराः । योगात्मत्वं ध्यानात्मकयोगगम्यत्वम् ॥

ननु जीवेश्वरयोर्ध्यातृध्येयभावाङ्गीकारे भेदः स्यादित्याशङ्क्याह ।

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्य-भ्यासात् ॥ ३ । २ । २५ ॥**

यथा सौरः प्रकाश आकाशो वाऽङ्गुल्याद्युपाधौ कर्मणि भिन्न इव वक्र इव भाति, वस्तुतस्त्वेकरूपः, तद्वत्प्रकाश आत्माऽपि ध्यानज्ञानादौ कर्मण्युपाधौ भिन्न इव भाति । वस्तुतस्त्ववैशेष्यमेकरूपत्वमेवात्मनः । कुतः । अभ्यासात्, तत्त्वमसीत्याद्यभेदश्रुत्यभ्यासादित्यर्थः ॥

**अतोऽनन्तेन तथाहि लिङ्गम् ॥ ३ । २ । २६ ॥**

अतो भेदस्यौपाधिकत्वाद्विद्यया भेदं निरस्य जीवोऽनन्तेन परमात्मनैकतां गच्छति । तथाहि लिङ्गमपूर्वार्थज्ञापकं श्रुतिजातं "ब्रह्मैव सन्ब्रह्माप्येती"त्यादि ॥

एवं जीवब्रह्मणोः पारमार्थिकमभेदमुक्त्वा, स्वमतसिद्ध्यर्थं भेदाभेदपक्षमुपन्यस्यति ।

**उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३ । २ । २७ ॥**

ध्यातृध्येयभावादिना भेदस्याभेदस्य च श्रुतौ व्यपदेशाज्जीवेश्वरयोर्भेदाभेदौ भवतः । तुशब्दः सिद्धान्तवैषम्यद्योतनार्थः । अहिकुण्डलवत् । कुण्डलमहेः संस्थानविशेषः । यथाऽहिकुण्डलयोरहित्वेनाभेदः कुण्डलत्वेन भेदस्तद्वदित्यर्थः ॥

धर्मभेदेन भेदाभेदाविति पक्षमुक्त्वा, एकधर्मावच्छेदेनैव भेदाभेदाविति पक्षमाह ।

**प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ३ । २ । २८ ॥**

यथा प्रकाशः सौरस्तदाश्रयश्च सविता तयोर्नात्यन्तं भेदस्तेजस्त्वाविशेषात्, तथाऽपि भिन्नत्वेन प्रतीयते । तथा

चैकतेजस्त्वावच्छेदेनैव प्रमाणबलाद्भेदाभेदौ यथा, तद्वद्वा-जीवेश्वरयोर्भेदाभेदावित्यर्थः ॥

ननु भेदस्य पारमार्थिकत्वे ज्ञानान्निवृत्तेरसम्भवान्मोक्षो न स्यात्, एकावच्छेदेन तयोरेकत्वाङ्गीकारे लोके विरोधकथैव न स्यादित्यादिदोषं परमते मत्वा स्वसिद्धान्तमाह ।

पूर्ववद्वा ॥ ३ । २ । २९ ॥

"प्रकाशवच्चावैशेष्य"मित्यत्र पूर्वं भेद औपाधिकोऽभेदः पारमार्थिक इति यदुक्तं स एव सिद्धान्तोऽभ्युपेयः ॥

प्रतिषेधाच्च ॥ ३ । २ । ३० ॥

"नान्योऽतोऽस्ति द्रष्टे"त्यादिशास्त्रेण परमात्मातिरिक्तस्य चेतनस्य "नेति नेती"त्यादिवाक्यैः प्रपञ्चस्य च प्रतिषेधाद्ब्रह्माद्वितीयमित्ययमेव सिद्धान्त इत्यर्थः । तस्माच्छ्रुतिबलान्निर्विशेष एकः परमात्मेति सिद्धम् ॥

ननु नेति नेतीति ब्रह्मातिरिक्तं वस्तु निषेध्यमित्युक्तम् । तदयुक्तं, ब्रह्मणः सेतुत्वोन्मानादिव्यपदेशेन वस्त्वन्तरसत्त्वावगमात्, द्युभ्वाद्यधिकरणे सेतुत्वस्य गौणत्वेन नीतत्वेऽप्युन्मानादीनां गतेरदर्शनादित्याक्षिपति ॥

परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३ । २ । ३१ ॥

अत्र पूर्वपक्षे पूर्वाधिकरणसिद्धान्तासिद्धिः फलम्, सिद्धान्ते सिद्धिरिति बोध्यम् । अत्र ब्रह्मातिरिक्तं वस्त्वस्ति न वेति संशये, अस्तीत्याह "पर"मिति । अतो ब्रह्मणः परं वस्त्वस्ति, "अथ य आत्मा स सेतु"रिति

ब्रह्मणः सेतुत्वव्यपदेशात् । तथा च ब्रह्म सद्वितीयम्, सेतुत्वात्, दारुसेतुवत्. इत्यनुमानमुक्तम् । "ब्रह्म चतुष्पा"दिति श्रुतावुन्मानव्यपदेशात्, एतावदिदमिति परिच्छिन्नत्वव्यपदेशात्, वैश्यसमीपस्थक्रयसाधनकार्षापणादिवत्सद्वितीयं ब्रह्मेत्युन्मानशब्दार्थः । चतस्रो दिश एकः पादः, पृथिव्यन्तरिक्षं द्यौः समुद्र इति द्वितीयः पादः अग्निः सूर्यश्चन्द्रमा विद्युदिति तृतीयः पादः, चक्षुः श्रोत्रं वाङ्मन इति चतुर्थः पादः, इति श्रुतावुपासनार्थं चतुष्पाद्ब्रह्मेत्युक्तमिति मन्तव्यम् । सुषुप्तौ प्राज्ञेनात्मना शारीरः सम्परिष्वक्त इत्यादिना ब्रह्मणः सम्बन्धव्यपदेशात्सम्बन्धत्वेन हेतुना घटादिवत्सद्वितीयत्वमिति सम्बन्धशब्दार्थः । आदित्ये हिरण्मयं पुरुषमीश्वरं व्यपदिश्यातो भेदेनाक्षिपुरुषस्य व्यपदेशात्परमात्मा सद्वितीय इति प्राप्ते॥

सेतुत्वादिहेतोरसिद्धिमाह ।

**सामान्यात्तु ॥ ३ । २ । ३२ ॥**

मृद्दार्वादिमये हि सेतुशब्दो रूढो लोके । न हि तादृशं सेतुत्वं ब्रह्मणोऽस्ति । किं तु सेतुर्यथा जलस्य व्यवस्थापक एवं ब्रह्मणोऽपि सकलजगन्मर्यादाव्यवस्थापकत्वेन प्रसिद्धसेतुसामान्यात्सेतुत्वव्यपदेश इत्यर्थः । तुशब्दः पूर्वपक्षनिरासार्थः । एकविज्ञानात्सर्वविज्ञानप्रतिज्ञाविरोधः सर्वेषामनुमानानां बोध्यः ॥

उन्मानव्यपदेशोऽपि न मुख्य इति द्वितीयहेतुमप्यसिद्धा दूषयति ।

**बुद्ध्यर्थः पादवत् ॥ ३ । २ । ३३ ॥**

ब्रह्म चतुष्पादिति श्रुतावुन्मानव्यपदेशो बुद्ध्यर्थ उपासनार्थः । निर्विशेषस्य बुद्धिस्थत्वायोगात्, उपासना-

द्वारा बुद्धिस्थत्वायोन्मानव्यपदेशो न मुख्य इत्यर्थः । 'पादवत्' । यथा ब्रह्मप्रतीकस्य मनसो वाग्प्राणचक्षुःश्रोत्राण्युपासनार्थं पादत्वेन व्यपदिश्यन्ते तद्वदित्यर्थः ॥

अत्रशिष्टहेतुद्वयमप्यसिद्ध्या दूषयति ।

**स्थानविशेषात्प्रकाशादिवत् ॥ ३ । २ । ३४ ॥**

सुषुप्तौ ब्रह्मणो जीवेन न घटस्य पटेनेव सम्बन्धः । किं तु स्थानविशेषाद्बुद्ध्याद्युपाधिविशेषात्प्राप्तस्य विशेषविज्ञानस्योपाध्युपशमादुपशमेऽभिव्यक्तोपाधिप्रयुक्तभेदाभाव एव जीवपरयोः सुषुप्तौ सम्बन्ध इति व्यपदिश्यते । अक्ष्यादित्यपुरुषयोर्भेदव्यपदेशोऽप्यक्ष्यादित्यरूपस्थानविशेषापेक्षया । 'प्रकाशादिवत्' । यथा सौरः प्रकाश आकाशो वाऽङ्गुलीयोगाद्धटसूचीपाशाद्युपाधिविशेषादसम्बद्ध इव भिन्न इव भाति, उपाधिविगमे तु तदानीं सम्बद्ध इवाभिन्न इव व्यपदिश्यते, तद्वदित्यर्थः । तस्माज्जीवपरयोः सम्बन्धो भेदश्चोपाधिनिमित्तो न स्वाभाविकः ॥

ननु मुख्य एवास्तु तत्राह ।

**उपपत्तेश्च ॥ ३ । २ । ३५ ॥**

न मुख्यः सम्बन्धो जीवपरयोः सुषुप्तौ सम्भवति "स्वमपीतो भवती"ति स्वरूपस्यैव सम्बन्धत्वव्यपदेशात् । स्वरूपस्य च सदातनत्वात्सुषुप्तौ गौणसम्बन्धत्वमेव । एवं भेदोऽपि न मुख्यः, श्रुतिसहस्रविरोधाद्युपपत्तिवशान्नैमित्तिक एवेत्यर्थः ॥

एवं सेतुत्वादीन्हेतून्निराकृत्य ब्रह्मणोऽद्वितीयत्वं हेत्वन्तरेणाह ।

## तथाऽन्यप्रतिषेधात् ॥ ३ । २ । ३६ ॥

यथा सेतुत्वादिहेतुभ्यो न वस्त्वन्तरप्रमा, तथाऽ "इमेवाधस्तादात्मैवाधस्ता"दित्यादिवाक्यैरन्यस्य वस्तुनः प्रतिषेधादद्वितीयमेव ब्रह्मेत्यर्थः ॥

ननु ब्रह्मणोऽद्वितीयत्वे सर्वगतत्वं कथमित्यत आह ।

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३ । २ । ३७॥

अनेन सेतुत्वादिव्यपदेशमुख्यत्वस्य वस्त्वन्तरस्य च प्रतिषेधेन ब्रह्मणः सर्वगतत्वं सिद्धम् । अप्रतिषेधे प्रसिद्धसेतुवद्ब्रह्मणो ऽसर्वगतत्वं प्रसज्येत । सर्वगतत्वे मानमाह "आयामे"ति । आयामशब्दो व्यापकत्ववाचकः "आकाशवत्सर्वगतश्च नित्य" इत्यादिशब्दः । 'आदि'पदेन "नित्यः सर्वगतः स्थाणु"रित्यादिस्मृतिरुक्ता । तस्मादद्वितीयस्य ब्रह्मण आविद्यकं सर्वमादाय श्रुतिस्मृतिभ्यां सर्वगतत्वं सिद्धम् ॥

ननु ब्रह्मातिरिक्तवस्तुनो निषेधे ब्रह्मणो निर्विशेषत्वेन कर्मफलदातृत्वं न स्यादित्याक्षेपे, व्यावहारिकफलदातृत्वमविरुद्धमित्याह ।

## फलमत उपपत्तेः ॥ ३ । २ । ३८ ॥

पूर्वं निर्विशेषं तत्पदलक्ष्यं ब्रह्मोक्तम् । इदानीं तत्पदवाच्यं विचार्यत इति पादसङ्गतिः । पूर्वपक्षे कर्मण एव फलदातृत्वाद्ब्रह्मणोऽकिञ्चित्करत्वसिद्धिः फलम्, सिद्धान्त ईश्वरस्यैव फलदातृत्वसिद्धिरिति भेदः । किं सर्वस्य जन्तोः कर्मण एव फलं भवति, उतेश्वरादिति सन्देहे, अग्रे पूर्वपक्षं निराकरिष्यन्सिद्धान्तमाह "फल"मिति । अतः परमात्मनः फलं सर्वस्य लोकस्य भवितुमर्हति, क्षणिकात्कर्मणः फलासम्भवेनेश्वरस्यैव फलदातृत्वोपपत्तेरित्यर्थः ॥

**श्रुतत्वाच्च ॥ ३ । २ । ३९ ॥**

"स वा एष महानज आत्माऽन्नादो वसुदान" इतीश्वरे फलहेतुत्वस्य श्रुतत्वाच्चेश्वरः फलदातेत्यर्थः । अन्नमा समन्तात्प्राणिभ्यो ददातीत्यन्नादः । वसुदानो धनदाता ॥

शङ्कते ।

**धर्मं जैमिनिरत एव ॥ ३ । २ । ४० ॥**

यतः श्रुत्युपपत्तिभ्यामीश्वरं फलदातारं मन्यते सिद्धान्ती, अत एव श्रुत्युपपत्तिभ्यां धर्मं फलदातारं जैमिनिराचार्यो मन्यते । तथाहि "स्वर्गकामो यजेते"तिविधिविषयस्य यागस्य स्वर्गसाधनत्वं श्रुतम् । तन्निर्वाहाय श्रुतिप्रमाणकैरपूर्वाख्यो व्यापारो यागस्योत्तरावस्थारूपः कल्पनीय इति यागादिधर्म एव फलदाता, ईश्वरस्य सर्वसाधारणस्य विचित्रफलदातृत्वानुपपत्तेरिति ॥

समाधत्ते ।

**पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ३ । २ । ४१ ॥**

बादरायणस्त्वाचार्यः पूर्वोक्तमीश्वरं फलदातारं मन्यते । तुरुक्तशङ्कानिरासकः । कर्मापूर्वं वा स्वस्वरूपस्य विनियोगसाक्षात्कारवदधिष्ठितं भवितुमर्हति, अचेतनत्वात्, मृदादिवत्, इत्यनुमानेन सम्भाविते़ऽर्थे श्रुतिस्मृती प्रमाणयति "हेतुव्यपदेशा"दिति । "एष एव साधु कर्म कारयत्यन्नादो वसुदान" इत्यादिश्रुत्या "लभते च ततः कामान्मयैव विहितान्हि ता" नित्यादिस्मृत्या चेश्वरस्य धर्माधर्मयोस्तत्फले च हेतुत्वेन व्यपदिष्टत्वादित्यर्थः । तस्मात्तत्तत्कर्मसापेक्षादीश्वरादेव सर्वेषां फलसिद्धिरिति सिद्धम् ॥

॥ इति तृतीयाध्यायस्य द्वितीयः पादः ॥

एवं तत्पदलक्ष्यवाच्यात्मकं निर्गुणं सगुणं ब्रह्म ज्ञेयं व्याख्यातम् । इदानीं तज्ज्ञानं किम्प्रकारकमित्यपेक्षायां तद्विचाराय पादान्तरमारभ्यते ।

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३ । ३ । १ ॥**

पूर्वपादे वाक्यार्थज्ञानकारणीभूततत्त्वम्पदार्थनिरूपणं कृतम् । अस्मिन्पादे वाक्यार्थो निर्धार्यत इत्यनयोः पादयोर्हेतुहेतुमद्भावः सङ्गतिः । सगुणविद्यायाः सत्त्वशुद्धिद्वारा वाक्यार्थज्ञानोपयोगित्वात्तद्वाक्यार्थचिन्ता क्रियत इति मन्तव्यम् । तत्र तावत्सगुणब्रह्मप्राणपञ्चाग्न्यादिविषयेषूपासनेषु भेदाभेदचिन्ताऽऽरभ्यते । किं प्रतिवेदान्तं प्राणोपासनं पञ्चाग्न्युपासनमित्येवञ्जातीयकमुपासनं भिद्यते न वेति सन्देहे, पूर्वपक्ष उपासनानां भेदादेकवेदान्तोक्तोपासनस्थगुणानां वेदान्तान्तरोक्तोपासनेऽनुपसंहारः, सिद्धान्त उपासनैक्याद्गुणोपसंहारे तदुपासनात्सत्त्वशुद्धिद्वारा वाक्यार्थज्ञाने मुक्तिरिति फलनिष्पत्तिः । द्रव्यदेवते यथा यागस्य रूपं तथोपासनस्योपास्यं रूपम् । तथा च, यथाऽऽमिक्षावाजिनयागयोर्द्रव्यरूपभेदाद्भेदः, एवमुपासनानामुपास्यरूपभेदाद्भेदो न्याय्यः । तथाहि क्वचित्पञ्चाग्निविद्यायां षष्ठोऽग्निरुपास्यः श्रूयते, क्वचित्तु शाखायां पञ्चैवाग्नयः । इत्येवंरूपेण तत्र तत्रोपासने रूपभेदावगमादुपासनं भिद्यते । इति प्राप्ते ब्रूमः । सर्वैर्वेदान्तैः प्रत्ययं प्रतीयमानान्युपासनानि न भिद्यन्ते । कुतः । "चोदनादी"ति । आदिपदेन कर्माभेदे हेतुत्वेनोपन्यस्ताः संयोगरूपसमाख्या गृह्यन्ते । चोदनासंयोगरूपसमाख्यानामविशेषादित्यर्थः । यथा सर्वशाखासु "अग्निहोत्रं जुहोति" इति चोदनाया अविशेषान्नित्याग्निहोत्रमेकम्, तथा "यो ह वै ज्येष्ठं च श्रेष्ठं च प्राणं वेद" त्यादि-

चोदनायाश्छान्दोग्यानां वाजसनेयिनां चाविशिष्टत्वा-देकैव प्राणविद्या सर्वेषां शाखिनामिति गम्यते। यः प्राणोपासकः स ज्येष्ठश्च श्रेष्ठश्च स्वानां भवतीति फल-संयोगस्य सर्वत्राविशिष्टत्वाच्च न विद्याया भेदः। ज्येष्ठ-त्वादिगुणकप्राणस्योपास्यरूपस्य सर्वत्राविशिष्टत्वाच्च, तथा प्राणविद्येति समाख्यायाः सर्वत्राविशेषाच्च विद्यै-क्यमिति ॥

## भेदान्नेति चेन्नैकस्यामपि ॥ ३। ३। २॥

ननु वाजसनेयिनः पञ्चाग्निविद्यायां षष्ठं प्रसिद्धा-ग्निमुपास्यत्वेनामनन्ति, तस्य मृतस्य यजमानस्यर्त्विग्भिर-रण्यं प्रापितस्य प्रसिद्धाग्निरेवाग्निर्भवतीति। छान्दोग्यास्तु पञ्चाग्नीन्वेदेत्यामनन्ति, न तु षष्ठमग्निम्। तथा च रूपभे-दादामिक्षावाजिनयागयोरिव शाखाद्वये पञ्चाग्निविद्याया भेदो न्याय्य इत्युक्तम्। इति चेन्न। यत एकस्यामपि विद्यायामयं रूपभेद उपपद्यते। तथ हि ये हि द्युलोका-दयः पञ्चाग्नयो वाजसनेयिशाखायामुक्ताः, त एव छा-न्दोग्ये प्रत्यभिज्ञायन्ते। तथा च न विद्याभेदो युक्तः। न च षष्ठाग्नितदभावाभ्यां भेदः, एकस्मिन्नेवातिरात्रे षोडशीग्रहणतदभावयोर्दर्शनात्। यद्वा, अनेकगुणप्रत्य-भिज्ञानानुरोधाच्छान्दोग्ये षष्ठाग्नेरुपसंहारः कर्तव्यः। न चाग्निषु पञ्चत्वसंख्याश्रवणविरोधः, तस्य स्वबुद्ध्या सम्पादिताग्निपरत्वादिति भावः॥

ननु ब्रह्मविद्याप्रतिपादकमुण्डकाध्ययने शिरस्यङ्गा-रपात्रधारणरूपं व्रतं कर्तव्यत्वेनोपदिश्यते। इतरोपनिष-दध्ययनकाले तु शिरोव्रतं नापेक्ष्यते। तथा च मुण्डकस्थ-विद्याऽपेक्षयेतरोपनिषन्निष्ठविद्याया भेदो युक्तः। न ह्येकैव

विद्या शिरोव्रतरूपधर्ममपेक्षते नापेक्षते चेति युक्तम् । अतो धर्मभेदाद्विद्याभेद इत्याशङ्क्याह ।

**स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ । ३ । ३ ॥**

स्वाध्यायस्यैवैष शिरोव्रताख्यो धर्मोऽङ्गं, न विद्यायाः । कुतः । हि यतस्तथात्वेन स्वाध्यायाङ्गत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थे शिरोव्रतमपि वेदव्रतत्वेनाथर्वणिकाः समामनन्ति । तथा च यथा गोदानरूपं वेदव्रतं वेदाध्ययनाङ्गम्, एवं शिरोव्रतमपि मुण्डकाध्ययनाङ्गमेव । न मुण्डकोक्तविद्याया अङ्गमित्यर्थः । अधिकाराच्च "नैतदचीर्णव्रतोऽधीते" इत्यत्रत्यादधिकृतमुण्डकग्रन्थजातपरादेतच्छब्दात्, चकारात् "अधीते" इत्यध्ययनशब्दाच्च, शिरोव्रतमध्ययनस्यैवाङ्गमित्यर्थः । अचीर्णव्रतोऽननुष्ठितशिरोव्रतः । तस्य शिरोव्रतस्य मुण्डकाध्ययने नियम इत्यत्र दृष्टान्तः "सववच्चे"ति । यथा सवाः सप्तहोमाः सौर्यादयः शतौदनान्ताः शाखान्तरोक्तत्रेताग्न्यसम्बन्धादथर्वणोक्तैकाग्निसम्बन्धाच्चैकाग्नीनामाथर्वणिकानामेव नियम्यन्ते, तद्वदेतच्छब्दात् "अधीते" इतिशब्दाच्च मुण्डकाध्ययन एव शिरोव्रतस्य नियम इत्यर्थः । तस्मात्सर्वत्र विद्यैक्यम् ॥

**दर्शयति च ॥ ३ । ३ । ४ ॥**

"सर्वे वेदा यत्पदमामनन्ति" इत्यादिवाक्यं निर्गुणस्य ब्रह्मणो वेद्यस्य सर्ववेदान्तेष्वेकत्वेन तद्विद्यायाः सर्वत्रैकत्वं दर्शयति । तथा वाजसनेयके सगुणस्य ब्रह्मणो वैश्वानरस्य प्रादेशमात्रत्वेन सम्पादितस्य छान्दोग्ये सिद्धवदुपादानं "यस्त्वेतमेवं प्रादेशमात्रं वैश्वानरमुपासते"

इति तदपि सर्वत्र वैश्वानरविद्याया एकत्वं दर्शयति । तथा च, यथा निर्गुणस्य सगुणस्य वा ब्रह्मण एकत्वेन सर्वत्र श्रूयमाणत्वात्तद्विद्याया एकत्वं, तथा शस्त्रविशेषरूपोक्थादीनां सर्वत्र श्रूयमाणत्वादिदमवगम्यते सर्वत्रोपास्त्यर्थं तेषां श्रवणमिति । ततश्चोपास्योक्थादीनामेकत्वात्तदुपासनानामप्यैक्यमिति, तत्समभिव्याहारादितरेषामप्युपासनानामभेदसिद्धिरित्यर्थः ॥

उपासनैक्यविचारस्य प्रयोजनमाह ।

**उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ३ । ३ । ५ ॥**

सर्वत्रोपासनानामेकत्वेऽप्येकशाखास्थविद्यायां कतिपयगुणयुक्तायां शाखान्तरस्थाधिकगुणानामुपसंहारोऽस्ति न वेति सन्देहे, यत्र यावन्तो गुणाः श्रुतास्तैरेवाकांक्षाशान्तेर्नोपसंहारः, इति प्राप्ते ब्रूमः । समान उपासने गुणोपसंहारो युक्तः । कुतः । अर्थाभेदात्, उपास्यगुणैर्निर्वृत्तस्योपासनरूपार्थस्य सर्वशाखास्वभिन्नत्वात् । न ह्येकमेवोपासनं गुणान्तरमपेक्षते नापेक्षते चेति युक्तम् । विधिशेषवत्, यथाऽग्निहोत्रस्य सर्वत्रैक्यात्तच्छेषाणामुपसंहारः, तद्वदित्यर्थः । अत्र पूर्वपक्षे पूर्वाधिकरणप्रयोजनस्य गुणोपसंहारस्यासिद्धिः फलम्, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । तस्माचोदनाद्यविशेषेण हेतुना कृतस्योपासनैक्यविचारस्य सफलत्वं सिद्धम् ॥

इदानीं चोदनाद्यविशेषस्योपासनैक्यसाधकत्वापवादार्थमाह ।

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३ । ३ । ६ ॥**

बृहदारण्यके श्रूयत उद्गीथब्राह्मणे । क्षेत्रस्य यास्तामसवृत्तयस्तेऽसुराः । याश्च सात्त्विकवृत्तयस्ते देवाः । तेषां देवासुराणामन्योन्यं स्पर्धां तामसवृत्त्युद्भवे सात्त्विकवृत्त्यनुद्भवः, सात्त्विकवृत्त्युद्भवे च तामसवृत्त्यनुद्भवः, इत्येवंरूपां श्रावयित्वा, तत्र देवाः सामभक्तिरूपेणोद्गीथेनोद्गातृकर्मणाऽसुरजयं करिष्याम इति बुद्ध्वा वाचं प्राणं चक्षुः श्रोत्रं मनश्चोचुः 'त्वमस्माकमौद्गात्रं कर्मोद्गीथं कुरु' इति । ते च वागादयस्तथाऽस्त्वित्युक्तवन्तः । कर्मणि प्रवृत्तांस्तानुद्गातॄनसुरा एभिरुद्गातृभिर्देवा अस्मज्जयं करिष्यन्तीति बुद्ध्वा ताडितवन्तः । ते च वागादयस्ताडिता इति वागादीन्निन्दित्वा मुख्यप्राणमुद्गातृत्वेन श्रावयति "अथ हेमं मुख्यं प्राणं देवा ऊचुस्त्वमस्माकमुद्गाता भवे"ति । स प्राणस्तथाऽस्त्वित्युक्त्वा कर्मणि प्रवृत्तः । तं चोद्गातारं प्राणं प्राप्य हन्तुकामा असुराः पाषाणं प्राप्य वेगवान्लोष्ट इव विशीर्णावयवा अभूवन्निति प्राणस्तुतिं कृत्वा, उद्गीथकर्तारं प्राणमुपास्यं दर्शयतीति । एवमेव छान्दोग्येऽपि श्रूयते "तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः" इति । तत्र पूर्ववद्देवासुरस्पर्धायां, देवा उद्गीथोपलक्षितमौद्गात्रं कर्माहृतवन्तोऽनेन कर्मणैनांस्तामसवृत्तिलक्षणानसुरानभिभविष्याम इत्युपक्रम्य, पूर्ववदेव वागादिनिन्दां कृत्वा, "अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे (देवा)" इति । सर्वत्र वागादिशब्दास्तदभिमानिदेवतापरा बोध्याः । तत्र संशयः किमनयोर्विद्ययोरभेद उत भेद इति । अत्र पूर्वपक्षे गुणोपसंहारः फलम्, सिद्धान्ते विद्ययोर्भेदान्नोपसंहार इति भेदः । चोदनाद्यविशेषादित्यत्र समाख्याया अविशेषाद्विद्यैक्यमित्युक्तम् । तद्वत्राप्युद्गीथविद्येति समाख्याया अविशेषाद्विद्यैक्यमे-

वेति दृष्टान्तसङ्गत्या प्राप्तम् । तदाक्षिपति सिद्धान्ती "अन्यथात्वं शब्दादिति चे"दिति । छान्दोग्यबृहदारण्यकवाक्याभ्यां प्राणस्यान्यथात्वं भिन्नाकारत्वं बृहदारण्यक उद्गीथकर्तृत्वं छान्दोग्य उद्गीथकर्मात्मकत्वमित्येवंरूपं गम्यते । तथा च कर्तृकर्मणोर्भेदेनोपास्यभेदान्न विद्यैक्यमिति शङ्कार्थः । पूर्वपक्षी परिहरति "ने"ति । कुतः । अविशेषात्, देवासुरस्पर्धोपक्रमादीनां बहूनामर्थानामुभयत्राविशेषात् । छान्दोग्ये "तमुद्गीथमुपासांचक्रिरे" इति प्राणस्योद्गीथकर्मात्मकत्वश्रवणं लक्षणयोद्गीथकर्तृत्वेनैव व्याख्येयमिति, विद्यैक्यमिति प्राप्ते ॥

सिद्धान्तयति ।

**न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ३ । ३ । ७ ॥**

नैवात्र विद्यैक्यं युक्तं प्रकरणभेदात् । उपक्रमभेदादित्यर्थः । तथाहि "ओमित्येतदक्षरमुद्गीथमुपासीते"त्योंकाराद्यनेकवर्णरूपावयवविशिष्टस्य सामभक्तिविशेषोद्गीथस्यावयवमोंकारमुपास्यमुपक्रम्य, तस्यैवोंकारस्य पृथिव्यादिभ्यः सारतमत्वादिगुणानुक्त्वा, पुनरुद्गीथावयवमोंकारमनुवर्त्य, देवासुराख्यायिकारूपेण प्राणमुद्गीथमुपासांचक्रिरे देवा इत्याह । तत्रत्योद्गीथशब्देनोद्गीथावयव ओंकार एव स्वीकर्तव्यः, उपक्रम उद्गीथपदेन तस्यैवोक्तत्वात् । अन्यथोद्गीथपदेन सकलसामभक्तिग्रहणे, उद्गीथशब्दकर्तृलक्षणायां च, उपक्रमो बाध्येत । तस्मादत्रोद्गीथावयव ओंकारे प्राण उपास्यः, बृहदारण्यके तूद्गीथकर्ता प्राण उपास्यः, इत्यनयोर्विद्ययोर्भेद इति । परोवरीयस्त्वादिवत् । यथोद्गीथोपास्तित्वसाम्येऽप्येकत्रोद्गीथे परमा-

त्माध्यासेन प्राणाद्यपेक्षया परत्ववरीयस्त्वादिगुणकमुपासनं "स एष परोवरीयानुद्गीथ" इत्यादिवाक्यविहितमक्ष्यादित्यपुरुषगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनाद्भिद्यते, तद्वदित्यर्थः ॥

**संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ३ । ३ । ८ ॥**

ननूद्गीथविद्येति संज्ञाया एकत्वाच्छाखाद्वये विद्यैक्यमित्युक्तमिति चेत्, तत्रोत्तरमुक्तं "न वा प्रकरणभेदात्" इति सूत्रे । संज्ञाकरणस्य पौरुषेयत्वान्न विद्यैक्यसम्पादकत्वमिति भावः । किं च तत्संज्ञैकत्वं परोवरीयस्त्वाद्युपासनयोर्भिन्नयोरप्यस्त्युद्गीथविद्येति । सूत्रस्थापिशब्देनान्योऽपि दृष्टान्तः सूच्यते । तथैकस्मिन्काठकग्रन्थे चोदितानां भिन्नानां कर्मणां काठकैकसंज्ञत्वमस्ति, अतः पौरुषेयसंज्ञैक्यं विद्यैक्येऽप्रयोजकमिति भावः । तस्माच्छान्दोग्यवाजसनेयिशाखयोः प्रकृतविद्ययोर्भेद इति सिद्धम् ॥

ननु "ओमित्येतदक्षरमुद्गीथमुपासीते"त्युपक्रम उद्गीथपदस्योङ्कारपरत्वनिर्धारणेन सिद्धान्तः कृतः । तदयुक्तम्, उपक्रमवाक्यस्यान्यथाऽपि योजनासम्भवेन निर्धारणायोगात् । इत्याक्षेपे, समाधत्ते ।

**व्याप्तेश्च समञ्जसम् ॥ ३ । ३ । ९ ॥**

"ओमित्येतदक्षरमुद्गीथ"मित्योंकारत्वोद्गीथत्वयोः सामानाधिकरण्यप्रतिभासोऽस्ति । स किं नाम्नि ब्रह्मदृष्टिवदध्यासः, उत यद्रजतं सा शुक्तिरितिवदपवादः । किं वा भूसुरो ब्राह्मण इतिवत्तुल्यधर्मावभासः । आहोस्विन्नीलमुत्पलमितिवदुद्गीथोङ्कारयोर्विशेषणविशेष्यभावावभासः, इति संशयः । तत्र पूर्वपक्षे निर्धारणे कार-

णाभावादनिर्धारितार्थकमिदमुपक्रमवाक्यमप्रमाणमिति तन्मूलकस्य पूर्वाधिकरणसिद्धान्तस्यासिद्धिः फलम्, सिद्धान्ते त्वोङ्कारस्य प्रत्यृचं प्रत्यनुवाकं प्रतिसामं चाद्यन्तेषु व्याप्तेर्व्यापित्वात्को वा ओङ्कार उपास्य इत्याकांक्षायामुद्गीथावयवत्वेनोङ्कारो विशेष्यते "ओमित्येतदक्षरमुद्गीथमुपासीते"ति, तथा चोद्गीथमित्योङ्कारस्य विशेषणमित्येव समञ्जसम्, उत्पलस्य नीलत्वमिव, न त्वध्यासादिपक्षग्रहणं युक्तम्, इत्युपक्रमवाक्यस्य निर्धारितत्वात्तन्मूलकस्य सिद्धान्तस्य सिद्धिरिति बोध्यम् । सूत्रे त्वर्थचशब्देनाध्यासादिपक्षाणामसम्भवः सूचितः । तथाहि, उद्गीथ ओङ्कारस्योङ्कारे वोद्गीथस्याध्यासेनोपास्यत्वे, उत्तरत्र विधीयमानादोङ्कारे प्राणदृष्टिरूपादुपासनाद्भिन्नमिदमुपासनमिति वक्तव्यम् । तथा च पृथक्फलकल्पनाप्रसङ्गः । सिद्धान्ते तु प्राणाश्रय ओङ्कारोऽत्र विशिष्य समर्प्यत इति नायं दोषः । नापि द्वितीयः पक्षः, ओङ्कारोद्गीथयोरन्यतरज्ञानस्यान्यतरज्ञानबाधकत्वादर्शनात् । नापि तृतीयः पक्षः, ओङ्कारोद्गीथशब्दयोः पर्यायत्वाभावादिति । तस्मात्पटैकदेशे दग्धे पटो दग्ध इत्यादिवदुद्गीथपदं स्वावयवमोङ्कारं लक्षयतीति सिद्धम् ॥

## सर्वाभेदादन्यत्रेमे ॥ ३ । ३ । १० ॥

वाजसनेयके छान्दोग्ये च प्राणसंवादे मुख्यप्राणस्य श्रैष्ठ्यगुणकस्योपास्यत्वमुक्तम् । वाक्चक्षुःश्रोत्रमनोरेतांसि क्रमेण वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वजनिमत्त्वरूपगुणयुक्तानि सङ्कीर्त्यन्ते च । वागादयः प्राणाधीनस्थितिकत्वं स्वेषु निश्चित्य स्वनिष्ठान्वसिष्ठत्वादिगुणान्प्राणे समर्पितवन्त इत्युक्तम् । वाचो हि वसिष्ठत्वं, वाग्मिनो

लोके सुखेन वासदर्शनात् । चक्षुषः प्रतिष्ठात्वं, चक्षुष्मतः सुखेन पादप्रतिष्ठादर्शनात् । श्रोत्रस्य सम्पत्त्वं, श्रुतात्मनिर्धारणेन परमसम्पत्तिदर्शनात् । मनो हि भोग्याकारवृत्तिद्वारा भोग्यानामायतनम् । पुरुषाद्याकारेण परिणममानं रेतो जनिमन्मन्तव्यम् । एवं कौषीतक्यादिशाखास्वपि प्राणसंवादेषु "अथातो निःश्रेयसादानमेता ह वै देवता अहंश्रेयसे विवदमाना" इत्यादिना प्राणस्य श्रैष्ठ्यमुक्तम्, वसिष्ठत्वादिगुणास्तु नोक्ताः । निःश्रेयसं श्रैष्ठ्यम्, तस्यादानं निर्धारणं, तद्विनोपास्तेरयोगात्तदारभ्यत इत्याह "अथे"ति । एता वागाद्यभिमानिन्यो देवताः । अहंश्रेयसे स्वकीयश्रेष्ठत्वायेत्यर्थः । तत्र किं वसिष्ठत्वादिगुणानां क्वचिदुक्तानामन्यत्रोपसंहारोऽस्ति न वेति सन्देहे, पूर्वमोङ्कारस्य समीपस्थगुणैरेवोपास्यत्ववदत्रापि यत्र ये गुणाः श्रुतास्तैरेवोपास्यत्वं प्राणस्येति नोपसंहारः, इति दृष्टान्तेन प्राप्ते, ब्रूमः । अन्यत्र वसिष्ठत्वादिगुणानामश्रवणस्थले, इमे वसिष्ठत्वादयो गुणा उपसंहर्तव्याः । कुतः । सर्वाभेदात्, सर्वासु शाखासु प्राणोपासनस्य प्राणसंवादस्थस्याभिन्नत्वादित्यर्थः । एकस्यामेव विद्यायां वसिष्ठत्वाद्यपेक्षातदभावयोर्विरोधादिति भावः ॥

ननु, प्राणस्य सविशेषत्वाद्भवतु शाखान्तरीयगुणोपसंहारः, ब्रह्मणस्तु निर्विशेषत्वेन स्वशाखागतधर्मैरेव ज्ञानसम्भवान्नान्यशाखाश्रुतानामानन्दादीनामुपसंहार इति प्रत्युदाहरणेनाक्षिप्य समाधत्ते ।

**आनन्दादयः प्रधानस्य ॥ ३ । ३ । ११ ॥**

निर्गुणब्रह्मपरासु श्रुतिष्वानन्दस्वरूपत्वविज्ञानघनत्वापरिच्छिन्नत्वाद्वितीयत्वादयो धर्माः क्वचित्क्वचिच्छ्रु-

**षप्रयत्नस्य यागाविषयत्वं स्वर्गे ऽपि अविरुद्धम्, वृक्षइव च्छेद्ये परशुविषयत्वम्। न च यागादेरव्यापारत्वम्। शब्दा-**
भावाऽभावकृतम् । सत्यप्यपेक्षितपरत्वे यत्रापूर्वाऽभावस्तस्य प्राधा-
न्यमाग्नेयादेः समिदादेश्च । यत्र तदभावस्तस्य गुणकर्मता ऽवघा-
तादेः प्रोक्षणादेश्च । नियमाऽपूर्वे तु नियमादेव न कर्मण इत्युक्तं
वार्त्तिककृता ।

यच्चोक्तं वस्तुतो न भाव्यता स्वर्गादेः पुरुषप्रयत्नस्य यागा-
दिधात्वर्थविषयत्वादिति, तत्परिहरति—पुरुषप्रयत्नस्य यागादिवि-
षयत्वं स्वर्गे ऽपि साध्ये ऽविरुद्धं, वृक्षे इव च्छेद्ये परशुविषय-
त्वम् । यदि हि साक्षात्पुरुषव्यापारगोचरतया भाव्य नेदानीं लोक-
प्रसिद्धभाव्यत्वानां द्वैधीभावादीनामपि भाव्यत्वं भवेत् । न हि ते
ऽपि साक्षात्पुरुषव्यापारविषयाः । अपि तूद्यम्यमाननिपात्यमानाः
परश्वादय एव । न च ते भाव्याः, अपि तु तत्साधनम् । परशु-
विषयस्यापि पुरुषव्यापारस्य फलांशद्वैधीभावोद्देशेन प्रवृत्तेस्तस्य भा-
व्यत्वं स्वर्गादीनामपि समानम् । तत्रापि स्वर्गाद्युद्देशेन पुरुषव्या-
पारस्य यागादिविषयास्यापि प्रवृत्तेः ।

यच्चोक्तमव्यापारा यागादयो न करणं, न च भूतिरेषां व्यापार
इति, तत्राह—न च यागादेरव्यापारत्वम् । कुत. ? शब्दादेः साध-
नतया प्रतीतेः । अन्यथा ऽन्यथाऽनुपपत्त्या तन्निर्वाहायाऽर्थापत्त्या
ऽपूर्वाभिधानावान्तरव्यापारपरिकल्पनात् । कथं तदनाश्रितउपर-
तेपि कर्मणि तस्य व्यापार इति चेत्, तर्हि किमिदानीमाग्नेयाद्यु-
त्पत्त्यपूर्वाण्याग्नेयादिभिः करणैरधिकाराऽपूर्वे जनयितव्ये न तेषा-
मवान्तरव्यापारा. ? न हि तान्याग्नेयादिसमानकालानि, उपरतेष्वेव
तेषु तेभ्यः परमाऽपूर्वोत्पत्तेः, दर्शपूर्णमासयोश्च सहभुवोः स्वरूपतो
दर्शपूर्णमासाभ्यामित्यवगतसाधनभावनिर्वाहाय तदभिधानकल्पनायां

द्वेव तत्प्रतीतेः। ज्ञानप्रदीपानां चोत्पत्तेरपि व्यापारत्वाऽभ्युपगमात्। न च स्वर्गो नित्यो, ऽत्यन्तमसत्त्वात्, येनाताद्थ्यांत्तदसमवायितदाश्रिततया तदवान्तरव्यापारतया चाऽसिद्धमव्यापारत्वं यागादीनामपि। प्रपञ्चितं चैतन्न्यायपरीक्षायाम्।

न च भूतिर्न व्यापारो ज्ञानप्रदीपादिषु दर्शनादित्याह—ज्ञानप्रदीपादीनां चोत्पत्तेरपि व्यापारत्वाऽभ्युपगमात् 'तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते' इत्यादिना। नन्वसिद्धस्य कथं भवनकर्तृत्वम्? नाऽसिद्धम्। उपादानरूपेण सिद्धत्वात्। तन्तव एव पटोत्पादनप्रवृत्ताः पूर्वाऽपरीभूतसंयोगविशेषप्रचयशालिनस्तादर्थ्यादुपचारात् पट इत्युच्यन्ते। तेषां च तदुद्देशप्रवृत्तानां पटीभवनव्यापारस्य भवनमिति नाऽसिद्धस्य व्यापारः। द्विविधं च भवनांशाय (?)। किंचिद्भावमात्राऽधीनजन्म यथा विज्ञानस्य ज्ञेयाऽभिव्याप्तिः। किंचिच्चोत्पन्नानां सतां पश्चात्सहकारिग्रामसवधानोत्पादनं, यथा चक्षुरादीनां रूपादिज्ञानम्। न ह्युत्पन्नमित्येव चक्षू रूपमीक्षते किं त्वर्थाल्लोकादिसहकारिप्रत्ययसमवधानात्। न हि निर्व्यापाराणां साधनतोपलब्धा। तत्र यत्कार्यं येषां नैयत्याधीनं तस्मिञ्जनयितव्ये कश्चिदुत्पत्तिमान्प्रत्यक्षः परोक्षव्यापारो ऽभ्युपेतव्य इति तद्योगात्तेषां साधनता। यत्पुनः स्वभावमात्राऽऽयत्तप्रभवं कार्यं न तत्र व्यापारान्तरं समस्ति। न च निर्व्यापारस्य साधनतेति जन्मैव तत्र व्यापारो ऽभ्युपेयते। तत्र चाऽस्य कर्तृत्वमुपपादितम्। न चोत्पत्त्यनन्तरमेव व्यापाराः फलं जनयन्ति। उत्पन्ने व्यापारे पूर्वसंयोगे विभागेन विनाशिते सत्युत्तरसंयोगोत्पत्तिरिति सर्वमवदातम्।

यच्चोक्तं स्वर्गं कुर्यादित्यशक्योपदेश इति। तदनुपपन्नम्। द्विधा हि भवति क्रियाऽनर्हता ऽत्यन्तसत्त्वाद्गगनवदत्यन्ताऽस-

ऽशक्यः । उपायाऽज्ञानादिति चेत्? अत एव स ज्ञाप्यते । न चावश्यकर्त्तव्यताप्रसङ्गः । फलांशे ऽनुवादात्करणांशोपसंहाराच्च विधेः । दध्ना जुहोतीति यथा । फलविषयाया एव च प्रवृत्तेर्य्यागविषयत्वेन शब्दो हेतुरिति यागो विधीयते । न ह्यन्या पुरुषस्य कर्म्मणि प्रवृत्तिरन्या करणे । करणएव

त्वाद्वा तत्पुष्पवत् । न चैतदुभयमपि स्वर्गादौ समस्तीत्याह—न च स्वर्गो नित्य. अत्यन्तमसत्त्वाद्येनाऽशक्यः स्यात् । ननु मा भूदस्य स्वरूपाऽयोग्यता उपायाऽज्ञानात्त्वकरणीयो भविष्यतीति चोदयति—उपायाऽज्ञानादिति चेत् । परिहरति—अत एव स ज्ञाप्यते विधिना अतश्च ज्ञातोपायः शक्यो भविष्यतीति ।

यच्चोक्तमवश्यकर्तव्यताप्रसङ्गो विध्यधीनत्वात्पुरुस्येति, तत्राह—न चाऽवश्यकर्तव्यताप्रसङ्गः । स्वर्गादेः फलांशे ऽनुवादात्करणांशोपसंहाराच्च विधेः । अप्राप्तप्रापणस्वरसो हि विधिः सत्यपि भावनाविषयत्वे तत्सबन्धेन तमशमस्या विधत्ते यो न प्राप्तः । प्राप्तश्च फलांशः । तस्मात्तदनुवादेनाऽप्राप्ते साधनांशे वर्तते । अत्रैव दृष्टान्तमाह—दध्ना जुहोतीति । यथा होमभावनाविषयो ऽपि विधिस्तस्या होमांशमग्निहोत्रं जुहोतीत्युत्पत्तिवाक्यसमधिगतमनूद्योपपदपरो भवत तथा ऽयमपीत्यर्थः ।

यच्चोक्तं प्रवृत्तिविषयो विधिः फलविषया चेत्प्रवृत्तिः फलं विधीयेत न यागो, यागविषया चेन्न फलमिति, अत्राह—न वयमाचक्ष्महे न फलविषयेति, किन्तु तदुद्देश्यत्वात्फलविषयाया एव प्रवृत्तेः फलपरतया व्याप्यत्वेन यागविषयत्वमप्राप्तत्वाच्छाब्दो हेतुः प्रमाणमिति यागो विधीयते । नन्वेवं यागप्रवृत्तौ विधीयमानायां कुतः फलसगति? रित्यत्राह—न ह्यन्या पुरुषस्य कर्मणि फले प्रवृत्तिरन्या करणे । करणप्रवृत्त्या फलप्रवृत्तौ भवति, तदेवाऽनेन फलं साधितं

**प्रवृत्तः फलप्रवृत्तो भवति। कर्म्मण्येव प्रवर्त्तमानः करणे प्रवर्त्तते। तदेवमर्थाऽवगमान्न वैयर्थ्यम्। नाप्यन्यत् प्रयोजनम्। स्वर्गकामो यागं कुर्यादिति। यागनिष्ठे शब्दे तत्समवायादप्रमाणत्वाच्छ्रुतहानादश्रुतकल्पनाच्च। न च दृष्टमेव प्रयोजनमात्मप्रतिपत्तिः कर्म्मभिः कृतकामनिबर्हणेन दान्तेन कामैरनागर्द्धितमनसा ऽऽत्मतत्त्वस्य सुप्रत्ययत्वात्। यदि खलु कामनिबर्हणानि कर्म्माणि तैश्च कृती न प्रयोजनान्तरमपेक्षते कामी। तथा च तत्पर एव कर्म्मविधिरिति नान्यपरत्वे प्रमाणम्। न चाऽशास्त्रत्वम्।**

भवति। कर्मण्येव फले प्रवर्तमानस्तस्याऽन्यथासिद्ध्यसम्भवान्नान्तरीयकतया करणे प्रवर्तते। तस्मात्फलसम्बन्धादाधिक्याऽभावाद्यदानर्थक्यमापादितं पूर्वपक्षिणा तत्फलसम्बन्धोपपादनेनाऽपास्तमित्युपसंहरति—तदेवमर्थावगमान्न वैयर्थ्यम्। पूर्वपक्षैकदेशिनो मतमनुपपन्नमित्याह—नाप्यन्यदात्मज्ञानाऽधिकाराऽनुप्रवेशः प्रयोजनम्। कुतः? भवन्मते स्वर्गकामो यागं कुर्यादिति यागकर्तव्यतानिष्ठे शब्दे तत्रैव तात्पर्यसमवायादप्रमाणत्वादात्मज्ञानाऽधिकाराऽनुप्रवेशस्य। तत्परत्वे वा श्रुतयागकर्तव्यताहानादश्रुतात्मज्ञानाऽनुप्रवेशकल्पनाच्च। ननु शब्दसमधिगम्यत्वे भवेदयं दोषः, दृष्टा त्वात्मप्रतिपत्तिः कर्मणां प्रयोजन,मित्यत आह—न च दृष्टमेव प्रयोजनमात्मप्रतिपत्तिः, कर्मभिः कृतकामनिबर्हणेन दान्तेन कामैरनागर्धितमनसा ऽऽत्मतत्त्वस्य सुप्रत्ययत्वात्। कृतव्याख्यानमेतत्पूर्वपक्षे। तच्च कथं कर्मविधयः कामं निबर्हयन्ति, किं तत्कामोपहारेण तदुपभोजकतया, आहो स्वित्प्रवृत्त्यन्तरोपदेशेन स्वाभाविकीभ्यः प्रवृत्तिभ्यो निवर्त्तनेन? न तावदाद्यः कल्प इत्याह—यदि खलु कामनिबर्हणानि तदुपभोजकतया तैरेव कर्मभिः कृतकामैः कृती पुरुष इति न प्रयोजनान्तरमपेक्षते। अना-

**श्रेयोऽभिधायकत्वात् । श्रेयसः प्रीतिरूपत्वात्, प्रीतेश्च कामेषु प्रत्यात्मसंवेद्यत्वात् । न च भोगो निबर्हणम् । न हि कामानां तृप्तिरस्ति । अथ प्रवृत्त्यन्तरनिवृत्त्या, तत्रापि यदि कामी यागेन कुर्य्यान्नाऽन्येनोपायेन कामं को विशेषः कामपक्षे चेतसः कामनिवृत्तायां प्रवृत्तौ कथं च पक्षे ऽप्यप्राप्तविधावन्यनिवृत्तिः ?[1] । अथ कामी यागं**

काङ्क्षित च न विधिना स्वीक्रियत इति । तथा च तत्पर एव स्ववाक्योपात्तकर्मपर एव कर्मविधिरिति अन्यपरत्वे प्रमाणं कामनाऽनपेक्षित्वात् । अस्य च तद्वैपरीत्यात् ।

यदुक्तं कामनापरत्वे शास्त्रव्यापत्तिरिति, तत्राह—न चाऽशास्त्रत्वम् । कुत: ? श्रेयोऽभिधायकः पदसमूहः शास्त्रमिति वृद्धाः । कामविधयश्च तथेत्याह—श्रेयोऽभिधायकत्वात् । नन्वापातत एव कमनीयानामनर्थपरिणामानां केन श्रेय:स्वभावते? त्यत आह—श्रेयसः प्रीतिरूपत्वात् । श्रेयो हि पुरुषप्रीतिरिति लौकिकी प्रतीतिस्तदुपदेशः शास्त्रमिति लौकिकमेव । न चैते पर्यनुयोगिन:, येन न कामलोभमाद्रियेरन् । कामास्तु पशुस्वर्गादयो न प्रीत्यात्मान इत्याह—प्रीतेश्च कामेषु प्रत्यात्मसंवेद्यत्वात् । न च भोगो निबर्हणं सम्भवति । न हि कामानां स्वर्गादीनां तृप्तिरस्ति पुरुषस्य । कामानामिति सुहितार्थयोगे षष्ठी । तदुक्तं 'न जातु कामः कामानामुपभोगेन शाम्यती'ति । 'भोगाऽभ्यासमनुविवर्धन्ते रागाः कौशलानि चेन्द्रियाणा'मिति च । द्वितीयं कल्पमनुभाषते—अथ प्रवृत्त्यन्तरनिवृत्त्या । दूषयति—तत्रापि यदि कामी यागेन कुर्यान्नाऽन्येनोपायेन कामं को विशेषः कामाक्षेपे चेतसः कामनिवृत्तायां प्रवृत्तौ ? कथं च पक्षेण प्राप्तविधावन्यनिवृत्तिः ? न तावत्कामिनो विधेः पूर्वं कामोपायान्यागादिभेदानङ्गभेदप्रचयसा-

१ निवृत्तिप्रतीतिः—मू० पु० ।

**विकत्वाच्चफलोपभोगस्य स्वभाववाद एवाऽऽम्नायार्थश्छद्मना[1] ऽऽश्रितः स्यात् । तस्मान्महद्दण्डपदमिदं दृष्टेनैव कर्मविषय आत्मज्ञानाधिकारमारोहन्तीति । नियोज्याऽनुशासनं शास्त्रस्येति ज्ञाननियोगोऽपि नियोज्याऽनुशासनमात्रमिति न तत आत्मप्रतिपत्तिः । ज्ञानस्वभावादिति चेत्? । विधिवैयर्थ्यात् । अवहन्त्यादिवदिति चेत्? न, नियमार्थत्वात् । न ज्ञानविशेषनियमः । पक्षेप्यप्राप्तेः । समारोपेण च संभवात् न तत्त्वपरिच्छेदः । तस्मान्ना-**

कायतिकाऽभ्युपगताम्नायार्थ इति वचनव्यक्त्यन्तरेणाऽभ्युपगतं भवतीत्याह–स्वाभाविकत्वाच्च फलभोगस्य स्वभाववाद एवाऽर्थादाम्नायार्थच्छद्मना ऽऽश्रितः स्यात् । उपसंहरति–तस्मान्महद्दण्डपदमिद दृष्टेनैव कर्मविषय आत्मज्ञानाऽधिकारमधिरोहन्तीति । अपि चाऽधिकाराऽनभ्युपगमे नियोज्याऽनुशासन शास्त्रत्व शास्त्रस्य यागादिविधेरिति तेनैव न्यायेन ज्ञाननियोगोऽपि नियोज्याऽनुशासनमात्मज्ञानं कर्तव्यमित्येतावन्मात्रविधानपरमिति । तस्मात्फल नाऽऽत्मप्रतिपत्तिरभिव्याप्तिः स्यात् ।

शङ्कते–ज्ञानस्वभावादिति चेत् । निराकरोति–विधिवैयर्थ्यात् । पुनः शङ्कते–अवहन्त्यादिवदिति चेत् । निराचष्टे–न, नियमार्थत्वादवहन्त्यादिविधेः । यद्युच्येत इहाप्यात्माऽवगतावात्मज्ञानं नियम्यतइति, तत्राह–न ज्ञानविशेषनियमः । कुतः? पक्षेप्यप्राप्तेर्ज्ञानानन्तरं न खल्वात्मज्ञानादात्मप्रतीतिसभवः । आत्मज्ञाने च विधेये विपरीतस्याप्यात्मज्ञानत्वात्तस्यापि विधेयत्वसंभवान्न तत्त्वपरिच्छेदः स्यादित्याह–समारोपेण संभवान्न तत्त्वपरिच्छेदः । उपसहरति–तस्मा-

१ अर्थः शब्देन मू॰ पु॰ ।

ऽसाधने धात्वर्थे ऽधिकारसिद्धिः। साधनत्वं चास्य विधिरित्युक्तम् ॥

इति श्रीमहामहोपाध्यायमण्डनमिश्रविरचितो विधिविवेकः समाप्तः ॥

न्नाऽसाधने धात्वर्थे ऽधिकारसिद्धिः[1]। भवतु फलसाधनं धात्वर्थः, सिध्य तु चाऽधिकार,स्तथापि किमायातं विधा?वित्यत आह—साधनत्वं चाऽस्य विधिरित्युक्तम् ॥

इत्याचार्यवाचस्पतिमिश्रविरचिता विधिविवेकटीका न्यायकणिका समाप्ता ॥



१ न साधने धात्वर्थाऽधिकाराऽसिद्धिः—मू॰ पु॰ पा॰।

# योगसूत्रवृत्तिशुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| १ | २२ | अप्रमाण | अप्रामाण्यं |
| १ | २५ | अप्रमाण्यं | अप्रामाण्यं |
| ४ | १४ | अम्प्रज्ञातः | असम्प्रज्ञातः |
| ४ | १५ | अप्रकाश | प्रकाश |
| ४ | १७ | बुध्या | बुद्ध्या |
| ५ | १४ | तद | स्तद |
| ८ | १८ | संलक्षते | संलक्ष्यते |
| १२ | ३ | रू | रूपम् |
| १३ | १४ | नतु | ननु |
| १६ | १० | इच्छुचेति | इच्छुश्चेति |
| २० | २४ | चेच्छुणु | चेच्छृणु |
| २२ | ४ | साक्षा॰ | साक्षात् |
| २५ | २२ | पदमिवकैवल्य | कैवल्यपदमिव |
| ३१ | १६ | संकल्प | सकल्प |
| ३२ | २२ | वीजमनुमापकंजमनुमापकं | बीजमनुमापकं |
| ३३ | १३ | शिवे | शिवो |
| ३४ | ६ | एव | एवं |
| ३५ | १२ | जोब्रह्मणो | जीवब्रह्मणो |
| ३६ | २ | द्वाराधक्यं | द्वाराधिक्य |
| ४१ | १४ | संहरन् | सहरन् |
| ४२ | १० | संस्कर | सस्कार |
| ४२ | २० | अभेदकार | अभेदाकार |
| ४२ | २४ | कारो | कारः |
| ४३ | १८ | दुखितेषु | दुःखितेषु |
| ४३ | २० | कलुष्यं | कालुष्य |
| ४३ | २२ | तते | ततो |
| ४४ | २० | नासिकाऽये | नासिकाये |
| ४५ | १६ | प्रदाप | प्रदीप |

| पृ | पं॰ | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| ४६ | २१ | यत्रैद | यत्रैद |
| ४८ | २ | मह | महत् |
| ५२ | ६ | विषयात्वा | विषयत्वा |
| ५२ | १८ | सर्वादा | सर्वदा |
| ५२ | १६ | वर्तमना | वर्तमाना |
| ५३ | ११ | विद्धो | विरुद्धो |
| ५४ | २ | अस्यत्या | अस्त्य |
| ५४ | ६ | व्यख्याता | व्याख्याता |
| ५५ | १५ | रूपन्मात्र | रूपतन्मात्रे |
| ५५ | २२ | अङ्कर | अङ्कुर |
| ५६ | १ | निधर्मक | निर्धर्मक |
| ५६ | १४ | परिभषा | परिभाषा |
| ५७ | ८ | स | स |
| ५६ | १२ | विम्वाएव | विम्वाएव |
| ६० | ६ | ज्ञन्य | जन्य |
| ६१ | १७ | परपराया | परम्पराया॰ |
| ६१ | २४ | तस्येत्या | तस्येत्य |
| ६२ | ३ | ज्ञानस्यैक | ज्ञानस्यैव |
| ६२ | ८ | सस्कारागा | सस्कारागां |
| ६२ | ११ | ध्युत्याना | व्युत्याना |
| ६३ | १० | साख्योक्तस्यैव | सांख्योक्तस्यैव |
| ६५ | १ | विरोधित्वत् | विरोधित्वात् |
| ६५ | १८ | वैराग्य | वैराग्या |
| ६६ | १५ | क्लेवा | क्लेशाः |
| ६६ | २५ | पदमाधिकं | पदमधिकं |
| ६८ | १४ | द्वत्र | द्वित्रि |
| ६८ | १८ | किम्प्रमाणा | किम्प्रमाणं |
| ६६ | ३ | विच्छिना | विच्छिन्ना |
| ७२ | २३ | साधन | साधनं |
| ७७ | ८ | अग्नि | अग्न्य |
| ७८ | १७ | उत्क्रमणा | उत्क्रमणा |
| ८५ | ३ | यथेर्णा | यथोर्णा |
| ८५ | १० | स्त्रोतसो | स्रोतसो |

| पृ० | पं० | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| ६२ | २१ | कर्मणेव | कर्मणैव |
| ६२ | १६ | जातीय | जातीये |
| ६४ | १६ | प्रवधारण | अवधारण |
| ६६ | २१ | पारिमार्थिक | पारमार्थिक |
| ६६ | २० | मणो | माणो |
| १०० | १२ | पश्चच्च | पश्चाच्च |
| १०० | १३ | मैत्रेय | मैत्रेय |
| १०० | १८ | विकारः | विकारा |
| १०१ | १७ | औरन्य | औरस्य |
| १०५ | १६ | तुवैधर्म्मलक्षाभेदपर | त्ववैधर्म्मलक्षणाभेदपरं |
| १०७ | २४ | कार्मजातं | कार्य्यजातं |
| १११ | ६ | विवेकलख्याति | विवेकख्याति |
| १११ | १३ | लिङ्ग | लिङ्ग |
| १११ | २ | दीप्तिः | दीप्ति |
| ११३ | ६ | ब | च |
| ११३ | १० | वजिन्त | वर्जित |
| ११३ | १४ | अनुभ्युप | अनभ्युप |
| ११३ | १६ | परशुश्छेद्यस्य | परशुच्छेद्यस्य |
| ११४ | ७ | वाक्यस्य | वाकस्य |
| ११४ | १६ | प्युच्यते | मप्युच्यते |
| ११५ | ७ | धरक | धारक |
| ११६ | २० | विपरीन्तार्थे | विपरीतार्थे |
| ११७ | ६ | पापक | पाप |
| ११६ | २० | अन्तरावा | अन्तराया |
| १२१ | ६ | मतीवतीव्र | मतिप्र |
| १२१ | १८ | शास्त्रादि | शस्त्रादि |
| १२१ | २२ | शस्त्रदिना | शस्त्रादिना |
| १२२ | ५ | आसुरीवेव | आसुरीष्वेव |
| १२२ | १२ | जन्माधनर्थ | जन्माद्यनर्थ |
| १२२ | १३ | अनिष्ठ | अनिष्ट |
| १२२ | १७ | मप्त्वा | मत्या |
| १२२ | २१ | अनतादिष्वपि | अनृतादिष्वपि |

| पृ | पं॰ | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| १२४ | २ | कथव | कथवा |
| १२४ | १३ | अवश्यन् | अपश्यन् |
| १२४ | १६ | शद्धि | शुद्धि |
| १२४ | ३० | जपः | जयः |
| १२५ | ५ | वैतृष्णायस्य | वैतृष्ण्यस्य |
| १२७ | १५ | प्रश्चासः | प्रश्वास |
| १२८ | ५ | आभ्यन्तप | आभ्यन्तर |
| १३१ | ६ | गीयाया | गीतायां |
| १३७ | ४ | साक्षत्कारे | साक्षात्कारे |
| १३७ | १० | विद्या | विद्या |
| १४२ | १७ | इन्द्रियेयुतेयु | इन्द्रियेषुतेषु |
| १४३ | ३ | अपचयाभ्या | अपचया भ्या |
| १४३ | २४ | प्रकृत्यादिषु | प्रकृत्यादिष्व |
| १४४ | १ | सौक्ष्म्येणा | सौक्ष्म्येणा |
| १४५ | १७ | साङ्कर्य | साङ्कर्यं |
| १४७ | १० | पुराणता | पुराणतां |
| १५१ | १ | व्यपारक | व्यापारक |
| १५३ | १० | आत्मान्या | आत्मन्या |
| १५४ | २० | एव | एवा |
| १५५ | ६ | निर्ग्राह्य. | निर्ग्राह्य· |
| १५६ | ४ | अङ्ग | अङ्ग |
| १५७ | ६ | तदपटहस्य | तदपहस्य |
| १७२ | ६ | गणान | गणान |
| १७२ | २१ | पर्यत्वात् | परार्थात् |
| १७४ | २२ | विज्ञानीयात् | विजानीयात् |
| १७७ | १ | काय | कार्य |
| १७७ | १६ | उत्क | उत्का |
| १७७ | १७ | उत्कमेणा | उत्कमणा |
| १७८ | ८ | आत्रयत्व | आश्रयत्व |
| १७८ | १२ | प्रतिय | प्रतिम |
| १७८ | १६ | अमाव | अभाव |
| १७९ | १४ | व्यञ्जक | व्यञ्जक |

| पृ० | पं० | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| १८१ | १५ | आकाशाधर्मा ... .. | आकाशधर्मा |
| १८१ | १५ | व्याख्याता .. ... | व्याख्याताः |
| १८२ | ८ | समुदायस्या ... .. | समुदायस्य |
| १८२ | २४ | अवच्छिनेषु .. ... | अवच्छिन्नेषु |
| १८३ | ६ | त्रेविध्य ... ... ... | त्रैविध्य |
| १८४ | २ | तधर्म ... ... | तद्धर्म |
| १८४ | ४ | तुल ... ... ... | तूल |
| १८५ | १७ | ज्ञान ... ... ... | ज्ञानं |
| १८५ | २१ | अनुपपत्त .. ... | अनुपपत्तेः |
| १८६ | २ | कार्य .. .. ... | कार्या |
| १८६ | ६ | इन्द्रियाण ... ... | इन्द्रियाणां |
| १८७ | १२ | विशेष .. . | विशेष॰ |
| १८७ | १६ | येसभावा॰ .. | येसर्वे भावा |
| १८७ | १६ | ईश्वराण .. | ईश्वराणा |
| १८७ | २१ | नामः . | नाम |
| १८८ | १४ | वैराय . . | वैराग्य |
| १८८ | १८ | नयनानाय .. .. | नयनाय |
| १८८ | १६ | प्रमात् ... . ... | प्रसङ्गात् |
| १८६ | २ | तेभ्यन .. . | तेभ्योन |
| १८६ | ३ | विशोकादि .. | विशोकादि |
| १८६ | ३ | प्रज्ञाततेषु .. . . | प्रज्ञातान्तेषु |
| १८६ | ४ | यत्नस्य . ... | यत्नस्य |
| १८६ | २० | स्वस्तियः .. ... | स्वस्तिवः |
| १८६ | २१ | स्वप्नोऽयमेभ्यः .. | स्वप्नोपमेभ्य |
| १८६ | २३ | स्मपात् ... . | स्मयात् |
| १८६ | २३ | मत्युनान .. .. . | मत्युना |
| १६० | १ | प्रतीर्यः ... .. .. | प्रतीकार्य |
| १६० | २ | भाविता ... .. .. | भावितोर्या |
| १६१ | ६ | अस्याकं . .. ... | अस्माकं |
| १६१ | १२ | व्यवहाराण ... ... | व्यवहाराणां |
| १६१ | १३ | सत्तां . ... . | तत्त |
| १६१ | १३ | यवत्वेन ... ... ... | यथात्वेन |

| पृ॰ | पं॰ | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| १९२ | ६ | तुल्योः | तुल्ययोः |
| १९२ | १० | गोवऽयोः | गोवडवयोः |
| १८९ | १३ | विपाभावः | विपाकाभावः |
| १८९ | १४ | काद्दृश्यत्वेन | द्दृश्यत्वेन |
| १९१ | १४ | आवरणा | आवरणे |
| १९१ | १७ | मूलात्यनु | मूलान्यनु |
| १९१ | १९ | रसान् | रसाः |
| १९४ | ५ | मनस्य | मनस्या |
| १९४ | ६ | शुक्ल कृष्णमित्यारभ्योत्पत्तेरित्यन्तं पुनरुपात्तम् | |
| १९४ | १२ | त्रय | भय |
| १९४ | २१ | शुध्याख्यः | शुद्ध्याख्यः |
| १९६ | १५ | तियत | नियत |
| १९७ | २४ | द्रव्यपो | द्रव्यरूपो |
| १९८ | १९ | ध्यापिनामपत | ध्यायिनामयत्न |
| १९८ | २० | उपाद | उत्पाद |
| १९९ | ७ | अधर्माद्वदुःखं | अधर्माद्दुःखं |
| २०० | २३ | कांलात्मके | कालात्मके |
| २०१ | ६ | धर्मा | धर्मो |
| २०१ | १४ | अभिक्ति | अभिव्यक्ति |
| २०२ | २ | सुतच्छ | सुतुच्छ |
| २०९ | ८ | आद्यशा | आद्यशा |
| २०९ | १२ | परमाणावः | परमाणाव |
| २०९ | १५ | सति | सन्ति |
| २१० | ८ | उभ | उभय |
| २१० | २४ | धर्मा | धर्मौ |
| २११ | १२ | एकस्मिनेव | एकस्मिन्वेव |
| २१२ | १४ | वस्तुने | वस्तुनो |
| २१४ | १० | अपुरुषात्व | अपुरुषार्थत्व |
| २१६ | १३ | स्वान्म | स्वात्म |
| २१७ | १० | सकलवं | सकल |
| २१७ | १६ | सङ्कुर | सङ्कुरः |
| २१८ | ५ | स्कन्धान | सन्धान |

| पृ | पं | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| २१८ | ६ | [1]स्याभ्युपगम | स्वाभ्युपगम |
| २१८ | २२ | प्रतिषेधाथ | प्रतिषेधार्थं |
| २१९ | २ | तय | जपा |
| २१९ | ६ | दोषान्तः | दोषान्त |
| २१९ | १५ | विम्ब | विम्बा |
| २१९ | १५ | बुद्धिवृप्र | बुद्धिवृत्य |
| २१९ | १८ | विनावि | विनापि |
| २१९ | १८ | विव | बिम्ब |
| २२० | १ | भेदादात्य | भेदादात्म |
| २२० | १८ | बुद्धवृत्ति | बुद्धिवृत्तिः |
| २२२ | १ | चत्त | चित्त |
| २२३ | १ | प्रवृषि | प्रावृषि |
| २२४ | ७ | प्रत्यान्तराणि | प्रत्ययान्तराणि |
| २२४ | २२ | रेपि | रपि |
| २२५ | १४ | अतिरित्ताऽ | अतिरिक्ताः |
| २२६ | १५ | सर्वथ | सर्वथा |
| २२८ | १४ | षद्भाव | षड्भाव |



## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४७ ॥

श्रुतिलिङ्गवाक्यानां प्रकरणाद्बलीयस्त्वेन[1] श्रुत्याद्यवगतः क्रतुरेषा तदन्वयश्च दुर्बलेन प्रकरणेन बाधितुं न शक्यते । श्रुतिस्तावत्–"ते हैते विद्याचित एवे"ति, तां[2] विवृणोति "विद्यया हैवैत एवंविदश्चिता भवन्ती"ति । 'विद्यया'–विद्यामयेन क्रतुना सम्बद्धा मनश्चिदादयश्चिता भवन्तीत्यर्थः । "तान्[3] हैतानेवंविदे सर्वदा सर्वाणि भूतानि[4] चिन्वन्त्यपि स्वपते"–इति लिङ्गम् । वाक्यं च "एवंविदे चिन्वन्ती"ति । समभिव्याहारो वाक्यम् । एवंविदे विद्यामयक्रतुमते सर्वदा सर्वाणि भूतानि [5]चिन्वन्तीत्यर्थः । सर्वभूतकर्तृकं सर्वकालव्यापिचयनं[5] मनसा सम्पादितं परिमितकर्तृकालक्रियामयेष्टकचितकार्यद्वारेण क्रत्वनुप्रवेशसम्भवं[6]मलभमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति ।

यत्त्वेदमुक्तम्–विधिप्रत्ययाश्रवणात् फलसम्बन्धाप्रतीतेश्च क्रियामयात्क्रतोरन्योऽत्र विद्यामयः क्रतुर्न सम्भवतीति, तत्राह–

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ४८ ॥

इष्टकचिताऽन्वयिनः क्रियामयात्क्रतोर्विद्यामयोऽयं क्रतुः[7] पृथक्त्वेनानुबन्धादिभ्यः पृथक्त्वहेतुभ्योऽवगम्यते । अनुबन्धाः यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयः "मनसैव ग्रहा अगृह्यन्त मनसाऽस्तुवत[8] मनसाऽशंस"–इत्यादिना प्रतिपादिताः । 'आदि–शब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते । श्रुतिलिङ्गादिभिः सानुबन्धैर्विद्यामयः क्रतुः पृथगवगम्यत इत्यर्थः । 'प्रज्ञान्तरपृथक्त्ववत्,' यथा प्रज्ञाऽन्तरं दहरविद्यादि क्रियामयात्क्रतोः पृथ-

---

१ प्रकरणाल्लिङ्गत्वेनेति लि० पु० प्रमादः । २ तानिति मु० पु० ।
३ वेशब्दोऽत्र लि० पु० । ४ वीत्यधिकं मु० पु० ।
५ ०चयेन–इति लि० पु० । ६ सम्भवेति लि० पु० नास्ति ।
७ युत इति लि० पु० । ८ स्तुवन्तेति मु० पु०, स्तुवंचिति लि० पु० ।

भूतं श्रुत्यादिभिरव[1]गम्यते, एवमयमपि । एवं चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेऽवगते सति विधिः परिकल्प्यते । दृष्टश्चानुवादस्वरूपेषु[2] कल्प्यमानो विधिः । तदुक्तम्—"वचनानि त्व[3]पूर्वत्वा"दिति । फलवत्त्वं च "तेषामेकैक[4] एव तावान् यावानसौ पूर्व"इत्यतिदेशात् स्वक्रतुद्वारेणेष्टकाचितस्याग्नेर्यत्फलम्, तदेव मनश्चिदादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ।

यत्पुनरतिदेशेन तुल्यवीर्यत्वा[5]वगमात् क्रियामयक्रत्वनुप्रवेशोऽवगम्यत इत्युक्तम्, तत्राह—

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ४९ ॥**

नावश्यमतिदेशादवान्तरव्यापारस्यापि तुल्यतया भवितव्यम्, येन क्रियामयक्रत्वनुप्रवेश एषां स्यात् । यस्मा[6]त्कस्माच्चित्सामान्यमात्रादतिदेशोपलब्धेः । उपलभ्यते हि "स एष एव मृत्युर्य एतस्मिन्मण्डले पुरुष" इत्यादिषु संहर्तृत्वादिसामान्यमात्रादतिदेशः[7] । न हि तत्र मण्डलपुरुषस्य मृत्युवत्तल्लोकापत्तिस्तद्देशप्राप्तिरपि भवति, एवमिहापि मनश्चिदादीनामिष्टकाचिताग्निवद्भावातिदेशमात्रेणेष्टकाचिताग्निदेशरूपक्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यम् । अत इष्टकाचिताग्नेः स्वक्रतुद्वारेण यत्फलम्, तदेव मनश्चिदादीनामपि विद्यामयक्रतुद्वारेण फलमित्यतिदेशादवगम्यते ।

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५० ॥**

परेण च ब्राह्मणेनास्यापि मनश्चिदाद्य[8]भिधायिनः शब्दस्य ताद्विध्यम्—तद्विधत्वं, विद्यामयप्रतिपादित्व[9]मवगम्यते । परेण हि ब्राह्म-

१ दिभिश्चेति लि० पु० ।
२ स्वरूपेष्विति लि० पु० ।   ३ वचनानित्यत्वेति लि० पु० ।
४ फलं च तेषामेवैकैक इति मु० पु० ।
५ तुल्यकार्यत्वेति क्वचित ।   ६ यस्मादिति द्विर्मु० पु० ।
७ ०मात्रातिदेश इति मु०, लि० तु ०मात्राद्यतिदेश इति ।
८ आदिशब्दो नास्ति लि० पु० ।   ९ ०प्रतिपादितत्वमिति लि० पु० ।

णेन—"अयं वाव लोक एषोऽग्निश्चितः[1]तस्यापः एव परिश्रित" इत्यादिना "स यो हैतदेवं वेद लोकंपृणामेनं[2] भूतमेतत्सर्वमभिसम्पद्यत" इति पृथक्फलना विद्यैव विधीयते । तथा वैश्वानरविद्यादौ विद्यैव विधीयते । अतोऽग्निरहस्यस्य[3] क्रियैकविषयत्व नास्ति । एवं तर्हि विद्यामया मनश्चिदादयो बृहदारण्यकेऽनुबन्धव्याः किमर्थमिहानुबध्यन्ते । तत्रोच्यते—'भूयस्त्वात्त्वनुबन्ध' इति । मनश्चिदादिषु सम्पादनीयानामग्न्यङ्गाना भूयस्त्वात्तत्सविधाविहानुबन्धः कृतः ॥

पूर्वविकल्पाधिकरणं समाप्तम् ॥ १९ ॥

---

अथ शरीरे भावाधिकरणम् २० । **एक आत्मनः शरीरे भावात् ॥५१॥**

सर्वासु परविद्यासूपास्योपासनस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तम्—'त्रयाणामेव चैवमुपन्यासः प्रश्नश्चे'ति । वक्ष्यति चास्य प्रत्यगात्मनः परमात्मात्मकत्वेनानुसन्धान"मात्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति । किमयं प्रत्यगात्मा ज्ञाता कर्ता भोक्तेहामुत्र संचारक्षमो[4]ऽनुसन्धेय उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः । किं युक्तम् । ज्ञातृत्वाद्याकारमात्र इत्येके मन्यन्ते । कुतः । अस्योपासकस्या'त्मनः शरीरे भावात्,' आत्मनः शरीरे वर्त्तमानस्य तादृशमेव रूपम्, तावतैवानुसन्धानेन तत्फलसिद्ध्युपपत्तेश्च । न हि कर्मस्वऽधिकृतानां स्वर्गादिफलार्थिनां ज्ञातृत्वाद्यतिरेकेण फलानुभवदशायां यादृशं रूपम्, तादृश रूपं साधना[5]नुष्ठानदशायामनुसन्धातव्यम्, तावतैव साधनानुष्ठानतत्फलयोः सिद्धेः, अतिरिक्तानुसन्धाने प्रयोजनाभावात् । तदविशेषादिहापि तथैव । ननु चात्र[6] "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति विशेषवचनादपहतपाप्मत्वाद्याकार[7] एवानुसन्धातव्य[8] इत्य-

१ अग्निश्चित इति लि० पु० ।
२ लोकपृणानमेवमिति मु० पु०, लोकपुराणानामेनमिति लि० पु० ।
३ ०रहस्येति लि० पु० । ४ ०क्रम इति लि० पु० ।
५ तावता—इति लि० पु० । ६ न उ वात्रेति लि० पु० ।
७ ०त्वाधिकारे—इति लि० पु० । ८ ०तव्य—इति लि० पु० ।

वगम्यते, नैवम्,[1] "तं यथायथोपासत" इत्युपास्यविषयत्वात्तस्य—इत्येवं प्राप्ते प्रचक्ष्महे—

व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ५२ ॥

न त्वे[2]तदस्ति—यज् ज्ञातृत्वाद्याकार एवानुसन्धेय इति। अस्यात्मनः संसारदशाया[3] मोक्षदशाया यो व्यतिरेकः सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः। अस्य मोक्षदशाया यादृशं रूपं तादृग्रूप एवोपासनवेलायामात्माऽनुसन्धेय इत्यर्थः। कुतः। 'तद्भाव[4]भावित्वा'त्तद्रूपापत्तेः। "यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" "त यथायथोपासते तथैव भवती"ति यथोपासनमेव हि प्राप्तिः श्रूयते। न च परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते, प्रत्यगात्मनोऽप्युपास्यभूतपरब्रह्मशरीरतयोपास्यकोटिनिक्षिप्तत्वात्। अतः प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरपरमात्मोपासनस्य[5] तथारूपमेव प्राप्यमित्युक्तं भवति। अत एवे'वंक्रतुरिहामुं लोकं प्रेत्या[6]ऽभिसम्भवितास्मी'त्युच्यते। तस्मात्प्रत्यगात्मा प्राप्याकार एवानुसन्धेयः। 'उपलब्धिवत्'—ब्रह्मोपलब्धि[7]वत्। यथा ब्रह्मोपलब्धिर्विहिता यथावस्थितब्रह्मस्वरूपविषया, तथाऽऽत्मोपलब्धिरपि यथाऽवस्थितात्मस्वरूपविषयेत्यर्थः। कर्मस्वाऽऽत्मस्वरूपानुसन्धानं न* कर्माङ्गम्, "यजेत[8] स्वर्गकाम" इति कर्मानुष्ठानमेव[9] हि फलाय चोद्यते, देहाद्यतिरिक्तज्ञातृ[10]त्वाद्याकारात्मावगतिः कालान्तरभाविफलसाधनकर्माधिकारार्थेति तावन्मात्रमेव तत्रापेक्षितमिति न किञ्चिदपहीनम्[11] ॥

शरीरे भावाधिकरणं समाप्तम् ॥ २० ॥

---

१ नैव—इति लि० पु०। २ नन्वे—इति लि० पु०।
३ ०दशायामिति लि० पु०। ४ तद्भावा—इति लि० पु०।
५ ०प्रत्यगात्माशरीरपरमात्मा उपासनस्येति लि० पु०।
६ अतो यथं क्रतु इहामु प्रेत्येति लि० पु०।
७ ब्रह्मोपासनेति लि० पु०। * पु० द्वयेपि नेति नास्ति।
८ यजेनेति लि० पु०।
९ ०ष्ठान एवेति लि० पु०। १० देहातिरिक्तज्ञान—इति लि० पु०।
११ तावन्मात्रेति न कि चिदवहितमिति लि० पु०।

अथाङ्गावबद्धाधिकरणम् ३१ ।

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५३ ॥**

"ओमित्येतदक्षरमुद्गीथमुपासीत" "लोकेषु पञ्चविधं सामोपासीत" "उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी अयं वाव[2] लोक एषोऽग्निश्चित"[3] इत्येवमाद्याः क्रत्वङ्गाश्रया उपासना भवन्ति । ताः किं यासु शाखासु श्रूयन्ते तास्वेव नियता, उत सर्वासु शाखासु[4]उद्गीथादिषु सम्बन्ध्यन्त इति विचारः । सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्त इति तत्रतत्र व्यवतिष्ठेरन्निति युक्ता शङ्का । किं युक्तम् । व्यवतिष्ठेरन्निति । कुतः । 'उद्गीथमुपासीते'ति सामान्येनोद्गीथसम्बन्धितया श्रुतायास्तस्यामेव शाखायां स्वरविशेषयुक्तस्योद्गीथविशेषस्य सन्निधाना,त्तस्मिन्नेव विशेषे पर्यवसानं युक्तमित्येव[5]माद्यास्तास्वेव[6] शाखासु व्यवतिष्ठेरन्नित्येवं प्राप्ते प्रचक्ष्महे—

'अङ्गावबद्धास्त्वि'ति । 'तु'—शब्दः पक्षं व्यावर्त्तयति । न ह्युद्गीथाद्यङ्गावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन्, अपि तु प्रतिवेदं सम्बध्येरन्, सर्वासु शाखास्वित्यर्थः । 'हि'—शब्दो हेतौ । यस्माच्छ्रुत्यैवोद्गीथाद्यङ्गमात्रावबद्धा, स्तस्मात् यत्रोद्गीथादयस्तत्र सर्वत्र सम्बध्येरन् । यद्यपि स्वरभेदेनोद्गीथव्यक्तयो भिद्यन्ते, तथाऽपि सामान्येनोद्गीथश्रुत्या सर्वा व्यक्तयः संनिहिता इति न क्वचिद् व्यवस्थाया प्रमाणमस्ति । सर्वशाखाप्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः । अतः सर्वासु शाखास्वेकस्य क्रतोः सन्निधानात् क्रत्वङ्गभूतोद्गीथादयोऽपि सन्निहिता इति नैकस्य सन्निधिविशेषोऽस्तीति न व्यवस्था ।

---

१ ०मित्येव यदिति लि० पु० । २ वा—इति मु० पु० ।
३ ०चितमिति लि० पु० । ४ शाखास्विति नास्ति लि० पु० ।
५ युक्तमिति, इत्येवमिति मु० पु० ।
६ पर्यवसानमित्येव युक्तैवमाद्याहतास्वेवेति लि० पु० ।

## मन्त्रादिवद्वा ऽविरोधः ॥ ६४ ॥

'वा'-शब्दश्चार्थे । 'आदि'-शब्देन जातिगुणसंख्यासादृश्यक्रमद्रव्यकर्माणि गृह्यन्ते । यथा मन्त्रादीनामेकैकशाखास्वाऽऽम्नातानामपि शेषिणः क्रतोः सर्वशाखास्वेकत्त्वेन यथायथं श्रुत्यादिभिः सर्वासु शाखासु विनियोगो न विरुध्यते, तद्वदिहाप्यविरोधः[1] ॥

अङ्गावबद्धाधिकरणं समाप्तम् ॥ २१ ॥

---

अथ भूमज्याय स्त्वाधिकरणम२२। **भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥५५॥**

"प्राचीनशाल औपमन्यव" इत्यारभ्य वैश्वानरविद्याऽऽम्नाता तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यः अतः स्वर्लोकादित्यवाय्वाकाशाऽप्पृथिव्यवयवः । तत्र च द्यौर्मूर्द्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशः सन्देहः, मध्यकाय इत्यर्थः, आपो बस्तिः, पृथिवी पादावित्यवयवविशेषाः । तत्र संशयः-किमस्य त्रैलोक्यशरीरस्य व्यस्तस्योपासनं कर्त्तव्य,मुत व्यस्तस्य समस्तस्य च, अथ[2] समस्तस्यैवेति । किं युक्तम् । व्यस्तस्येति । कुतः । उपक्रमे व्यस्तोपासनोपदेशात् । तथा ह्युपदिश्यते, औपमन्यवादयः किलोद्दालकषष्ठाः कैकेयमश्वपतिमुपसद्य "त्वानमेवेमं वैश्वानरं सं[3]प्रत्यध्येषि तमेव नो ब्रूही"ति पप्रच्छुः, स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीनुक्तवद्भ्यो मूर्द्धादिषु व्यस्तेषूपासनं तत्रतत्र फलं[4] चोक्तवान् "अत्त्यऽन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते" "मूर्द्धा त्वेष आत्मन इति" एष वै सुतेजा आत्मा वैश्वानर इत्यादिना तेषुतेषूपासनेषूपास्यस्य वैश्वानरत्वं चाह[5] । अतो व्यस्तस्यैवोपासनं कर्त्तव्यम् । परत्र "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त" इति द्युप्रभृतिप्रदेश-

---

१ ०दिहाप्ययोग इति लि० पु० ।

२ व्यस्तस्य समस्तस्य च अथेति लि० पु० नास्ति ।

३ समिति नास्ति लि० पु० । ४ फलमिति लि० पु० ।

५ इत्यादि तेषूपासनेषूपास्य वैश्वानरत्व प्राहेति लि० पु० ।

तस्यैव क्रतोरेकदेशा 'यदष्टाकपालो भवती'त्यादिभिरनूद्यन्ते । तथा[1] समस्तोपासनमेव न्याय्यं न व्यस्तोपासनम् । तथा हि दर्शयतीयं श्रुति-र्व्यस्तोपासनेऽनर्थं ब्रुवती-"मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य" इति, "अन्धोऽभविष्यो यन्मां नागमिष्य" इत्यादिका । अतं इदमप्यपास्तम्[2]—यन्नामाद्युपासनसाम्य[3]मुक्तम् । तत्र हि नामाद्युपासनेष्वनर्थो न श्रुतः, नामाद्युपासनेभ्यो भूमोपासनस्यातिशयित[4]फलत्वं श्रुतम्-"एष तु वा अतिवदति यः सत्येनातिवदती"ति । तत[5] एव तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्युपासनानां सफलानां विवक्षितत्वम्, अन्यथाऽतिशयित-फलत्वनिमित्तातिवादेन[6] भूमविद्यास्तुत्यनुपपत्तेः । अतः[7] समस्तोपासन-मेव न्याय्यम् ॥

भूमज्यायस्त्वाधिकरणं समाप्तम् ॥ २२ ॥

---

अथ शब्दादिभेदाधिकरणम् २३ । **नाना शब्दादिभेदात् ॥ ५६ ॥**

इह ब्रह्मविद्याः सर्वा ब्रह्मप्राप्तिरूपमोक्षैकफलाः सद्विद्याभूम-विद्यादहरविद्योपकोसलविद्याशाण्डिल्यविद्यावैश्वानरविद्याऽऽनन्दमय-विद्याऽऽक्षरविद्यादिका एकशाखागताः शाखान्तरगताश्चोदाहरणम्,[8] अन्याः प्राणाद्येकविषयफलाश्च[9] । किमत्र विद्यैक्यम्, उत विद्याभेद इति संशय्यते । अत्रैवासां परस्परभेदे समर्थिते सत्येकस्या दहरविद्यादिकायाः सर्ववेदान्तप्रत्ययन्यायः । किं युक्तम् । विद्यैक्यमिति । कुतः । वेद्यस्य ब्रह्मण एकत्वात् । वेद्यं हि विद्याया रूपम् । अतो रूपैक्याद्विद्यैक्यमि-त्येव प्राप्तेऽभिधीयते—

'नाने'ति । नाना भूताः विद्याः । कुतः । शब्दादिभेदात् । 'आदि'-शब्देनाभ्याससंख्यागुणप्रक्रियानामधेयानि गृह्यन्ते । शब्दान्तरा-

---

१ विदितस्य क्रतोरेकदेशो यदष्टाकपाल इत्यादिभिरनूद्यते यथा-इति लि० पु० ।
२ इदमप्रेपास्तमिति लि० पु० । ३ साम्येति लि० पु० नास्ति ।
४ ०शयतादिति लि० पु० । ५ अत इति लि० पु० ।
६ अन्यथातिशयमिति तत्र एव भूमाविद्यापरत्वेऽपि वाक्यस्य नामाद्युपासना सत्यफलत्वनिमित्तवादने-इति लि० पु० । ७ अत एवेति लि० पु० ।
८ ०श्चोदाहरणीया इति लि० पु० । ९ चकारो नास्ति लि० पु० ।

दिभिरत्र विधेयभेदहेतवोऽनुबन्धभेदा दृश्यन्ते । यद्यपि 'वेदो''पासीति'-त्यादयः शब्दाः प्रत्ययावृत्त्यभिधायिनः, प्रत्ययाश्च ब्रह्मैकविषया,स्तथाऽपि तत्तत्प्र[1]करणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः प्रत्ययावृत्तिरूपा विद्या भिन्दन्ति । ब्रह्मप्राप्तिरूपफलसम्बन्ध्युपासनविशेषाभिधायीनि च निराकाङ्क्षाणि वाक्यानि प्रतिप्रकरणं विलक्षणविद्याऽभिधायीनीति निश्चीयते । अस्मिन्नर्थे "शब्दान्तरे कर्मभेद' इत्यादिभिः पूर्वकाण्डोदितैः सूत्रैस्सिद्धेऽपि पुनरिह प्रतिपादनं वेदान्तवाक्यान्यऽविधेय[2]ज्ञानपराणीति कुदृष्टिनिरसनाय । अतो विद्याभेद इति स्थितम् ॥

शब्दादिभेदाधिकरणं समाप्तम् ॥ २३ ॥

---

अथ विकल्पाधिकरणम् २४ । **विकल्पोऽविशिष्ट[3]फलत्वात् ॥ ५७ ॥**

ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां नानात्वमुक्तम् । इदानीम्,आसां विद्यानामेकस्मिन् पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽपि सम्भवत्युत प्रयोजनाभावाद्विकल्प एवेति विशये[4] किं युक्तम् । समुच्चयोऽपि सम्भवतीति[5] । कुतः । एकफलानां भिन्नशास्त्रार्थानामपि समुच्चय[6]दर्शनात् । दृश्यते ह्येकस्यैव स्वर्गादेः साधनानामग्निहोत्रदर्शपूर्णमासादीनां तस्यैव स्वर्गस्य भूयस्त्वापेक्षयैकत्र पुरुषे समुच्चयः, एवमिहापि ब्रह्मानुभवभूयस्त्वापेक्षया समुच्चयोऽपि सम्भवतीत्येवं प्राप्ते प्रचक्ष्महे-

'विकल्प' एव, न समुच्चयः सम्भवतीति । कुतः । 'अ[7]विशिष्टफलत्वात्' । सर्वासां हि ब्रह्मविद्यानामनवधिकातिशयानन्दब्रह्मानुभवः फलमविशिष्टं श्रूयते, "ब्रह्मविदाप्नोति परम्" "स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" ।

---

१ ०पि तदिति लि० पु० ।     २ ०न्यभिध्येयेति लि० पु० ।
३ वशिष्टेति लि० पु० ।
४ शेषे-इति लि० पु० ।     ५ इतिशब्दो नास्ति लि० पु० ।
६ स्वरूपेति लि० पु० ।     ७ अ-इति नञ् नास्ति लि० पु० ।

"यदा[1] पश्यः पश्यते रुक्मवर्णं
कर्त्तारमीशं पुरुषं ब्रह्म योनिम् ।
तदा विद्वान्पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैती"त्यादिभ्यः ।

ब्रह्म हि स्वस्य परस्य च स्वयमनुभूयमान[2]मनवधिकातिशयानन्दं भवति । स च तादृशो ब्रह्मानुभव एकया विद्ययाऽवाप्यते चे,त्किमन्ययेति न समुच्चयसम्भवः । स्वर्गादेर्हि देशतः कालतः स्वरूपतश्च परिमितत्वेन तत्र[3] देशाद्यपेक्षया भूयस्त्वसम्भवात्तदर्थिनः समुच्चयः सम्भवति,[4] इह तु तद्विपरीतस्वरूपे ब्रह्मणि तच्च सम्भवति । सर्वाश्च विद्या ब्रह्मा[5]नुभवविरोध्यनादिकर्माविद्यानिरसनमुखेन ब्रह्मप्राप्तिफला इत्यविशिष्टफलत्वात्सर्वासां विकल्प एव ।

ब्रह्मप्राप्तिव्यतिरिक्तफलास्तु विद्याः स्वर्गादिफलकर्मवद्यथेष्टं विकल्प्येरन् समुच्चीयेरन् वा,[6] तासां परिमितफलत्वेन भूयस्त्वापेक्षासम्भवात्, तदाह[7]–

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ५८ ॥

अपरिमित[8]फलत्वाभावादित्यर्थः ॥

विकल्पाधिकरणं समाप्तम् ॥ २४ ॥

---

अथ यथाश्रयभावाधिकरणम् २५ ।

## अङ्गेषु यथाश्रयभावः[9] ॥ ५९ ॥

उद्गीथादिक्रत्वङ्गेष्वाश्रिता[10] "ओमित्येतदक्षरमुद्गीथमुपासीते"-त्यादिका विद्याः किमुद्गीथादिवत् क्रत्वर्थतया क्रतुषु नियमेनोपादेया

१ अ यथा–इति लि० पु० ।
२ स्वरूपमनुभूयमानमिति मु० पु०, स्वयं प्रकाशमानमिति लि० पु० ।
३ तत्तदिति लि० पु० । ४ इति शब्दोऽधिको मु० पु० ।
५ ब्रह्मेति नास्ति लि० पु० । ६ विकल्प्येरन समुच्चयेरन्च वा–इति लि० पु० ।
७ तत्राहेति लि० पु० । ८ अपरमितीति मु० पु० ।
९ यथाश्रयाभाव इति लि पु । १० क्रत्वङ्गे विद्याश्रिता–इति लि पु ।

उत गोदोहनादिवत्पुरुषार्थतया यथाकाममिति विशये[1] नियमेनोपादेया इति युक्तम्। ननु चासौ पुरुषार्थत्वेनानियमः[2] प्रतिपादितः "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः[3] फल"मित्यत्र। सत्यं तदेव द्रढयतुं कैश्चिल्लिङ्गदर्शनैर्युक्त्या चाक्षिप्यते। तत्र हि 'तेनोभौ कुरुत'-इत्यनियमदर्शनात् पृथक्फलत्वमुक्तम्। उपासनाश्रयभूतोद्गीथादिवदुपासनाना[4]मप्यङ्गतयोपादाननियमे बहवो हेतव उपलभ्यन्ते। न ह्यत्र "गोदोहनेन पशुकामस्य प्रणये"दित्यादिवदुपासनाविधिवाक्ये फलसम्बन्धः श्रूयते। "उद्गीथमुपासीते"त्युद्गीथादिसम्बन्धितयैवोपासनं प्रतीयते। "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तर"मिति वर्त्तमानाप[5]देशरूपवाक्यान्तराद्धि फलसम्बन्धो ज्ञायते, स्ववाक्येनैवाव्यभिचरितक्रतुसबन्ध्युद्गीथादि[6]सम्बन्धेन निर्ज्ञातक्रत्वङ्गभावस्य वाक्यान्तरस्थवर्त्तमानफलसम्बन्धनिर्देशोऽर्थवादमात्रं स्यात्, अपापश्लोकश्रवणादिवत्। अतो यथोद्गीथादय उपासनाश्रयाः क्रत्वङ्गतया प्रयोगविधिना नियमेनोपादीयन्ते, तथा[7] तदाश्रिताश्चोपासनास्तन्मुखेन क्रत्वङ्गभूता इति नियमेनोपादेया एव।

## शिष्टेश्च ॥ ६० ॥

शिष्टिः-शासनं विधानमित्यर्थः। "उद्गीथमुपासीते"त्युद्गीथाङ्गतयोपासनविधानाच्चोपादाननियमः। "गोदोहनेन पशुकामस्य प्रणये"-दित्यादिवद्विधिवाक्येऽधिकारान्तराश्रवणादुद्गीथाद्यङ्गभाव एव हि विधेय इति गम्यते।

## समाहारात् ॥ ६१ ॥

"होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरती"त्युपासनस्य समाहा-

1 विषये—इति लि॰ पु॰। 2 ०र्थत्वेन नियम इति लि॰ पु।
3 ०नियमातद्दृष्टे पृथग्घ्यप्रतिबन्ध—इति लि॰ पु॰।
4 ०दुपासीनानामिति लि॰ पु। 5 ०मानोपेति नि पु।
6 आदिशब्दो लि॰ पु॰ नास्ति। 7 उपाधीयन्त इति लि॰ पु॰।

रनियमो दृश्यते । ‡उद्गीथम्, वेदनविहीनमुद्गीथम्[1] । वेदनहानावन्यैन समाधान ब्रुवतस्य † नियमेनोपादानं दर्शयति ।

## गुणसाधारण्यश्रुतेश्च ॥ ६२ ॥

उपासनगुणस्य उपासनाश्रयस्य † प्रणवस्य सोपासनस्य "तेनेय त्रयी विद्या वर्त्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायती"ति साधारण्यश्रुतेश्चोपासनसमाहारो गम्यते । तेनेति प्रकृतपरामर्शात् सोपासन एव प्रणवः सर्वत्र सचरति । अत उपासनस्य प्रणवसहभावनियमदर्शनाच्चोद्गीथाद्युपासनानामुद्गीथादिवन्नियमेनोपादानमिति प्राप्त उच्यते -

## न वा तत्सहभावाश्रुतेः ॥ ६३ ॥

न वै[2]तदस्ति यदुद्गीथाद्युपासनाना क्रतुषूद्गीथादिवदुपादाननियम इति । कुतः । 'तत्सहभावाश्रुते.' उद्गीथाद्यङ्गभावाश्रुतेरित्यर्थः । अङ्गभावे हि सहभावनियमो भवति । यद्यप्युद्गीथमुपासीतेत्यस्मिन् पदसमुदायेऽधिकारान्तर न[3] प्रतीयते, तथाऽपि तदनन्तरमेव "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"ति विद्यायाः क्रतुवीर्यवत्तरत्व प्रति साधनभावः[4] प्रतिपाद्यते, तेन क्रतुफलात् पृथग्भूतफलसाधन‡भूता विद्योद्गीथमुपासीतेति कर्त्तव्यतया विधीयते । क्रतुफलात् पृथग्भूतफलसाधनतयाऽवगतस्योपासनस्य‡ क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते, अत उपासनस्याश्रयापेक्षाया सन्निहित उद्गीथ आश्रयमात्रं भवति । उद्गीथश्च क्रत्वङ्गभूत इति क्रतुप्रयुक्तोद्गीथाश्रय[5] उपासने क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वेच्छानिमित्तमिदमधिकारान्तरमिति न क्रतुषु तदुपादाननियमः । वीर्यवत्तरत्व च क्रतुफलस्य प्रबल[6]कर्मान्तरफलेनाप्रतिबन्ध इत्युक्तम्, क्रतोरविलम्बितफलत्व-

---

१ उद्गीथमिति नास्ति लि॰ पु॰ । †† एतच्चिह्नान्तर्गत॰ पाठो लि पु त्रुटितः ।
२ न चे-इति मु॰ पु । ३ नेति लि॰ पु॰ नास्ति ।
४ ०त्तर प्रति साधनमेवेति लि॰ पु ।
‡‡ एतच्चिह्नान्तर्गतः पाठो लि॰ पु॰ त्रुटितः ।
५ ०द्गीथाद्याश्रये-इति मु॰ पु । ६ केवलेति लि पु॰ ।

मित्यर्थः। पर्णतादीनां तु 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति विद्यायाः फलसाधनत्ववदपापश्लोकश्रवणादिफलं प्रति साक्षात्साधनभावो न श्रुत इति क्रत्वङ्गभूतजुह्वाद्यङ्गतया विनियोगाविरोधात्तदङ्गभूतानां[1] फलान्तरसाधनभाव[2]कल्पनानुपपत्तेस्तत्र फलश्रुतिरर्थवादमात्रं स्यात् ।

दर्शनाच्च ॥ ६४ ॥

दर्शयति च श्रुतिरुपासनोपादानानियमम्,[3] "एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षती"ति ब्रह्मणो वेदनेन सर्वेषां रक्षणं ब्रुवत्युद्गातृप्रभृतीनां वेदनस्यानियमे सत्येतदुपपद्यते । अनेन लिङ्गेन पूर्वोक्तानां समाहारादिलिङ्गानां प्रायिकत्वमवगम्यते । अतोऽनियम एवेति स्थितम् ॥

यथाऽऽश्रयभावाधिकरणं समाप्तम् ॥ २५ ॥

---

इति श्रीमद्भगवद्रामानुजाचार्यचरणकृतौ शारीरकमीमांसाभाष्ये साधनाख्यस्य तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥



---

१ फलानामित्यधिकं लि पु । २ साधनाभावेति लि॰ पु॰ ।

३ ०पादाननियममिति लि॰ पु॰ ।

# अथ तृतीयाध्याये चतुर्थः पादः ॥

अथ पुरुषार्थाधिकरणम् १। **पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥**

गुणोपसंहारानुपसंहारफला विद्यैकत्वनानात्वचिन्ता कृता। इदानीं विद्यातः पुरुषार्थ, उत विद्याङ्गकात्कर्मण इति चिन्त्यते। किं युक्तम्। 'अतो' विद्यातः पुरुषार्थ इति भगवान्बादरायणो मन्यते। कुतः। 'शब्दात्'। दृश्यते ह्यौपनिषदः शब्दो विद्यातः पुरुषार्थं ब्रुवन्- "ब्रह्मविदाप्नोति परम्"

"वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात्।
तमेवं विद्वानमृत इह भवति
नान्यः पन्था विद्यतेऽयनाय" ॥
"यथा नद्यः स्यन्दमानाः समुद्रे
ऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्य"मित्यादिः।

तत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥**

नैतदेव यद्विद्यातः पुरुषार्थावाप्तिः शब्दादवगम्यत इति। न ह्येष "ब्रह्मविदाप्नोति पर"मित्यादिशब्दो वेदनात्पुरुषार्थावाप्तिमवगमयति, कर्मसु कर्तृभूतस्यात्मनो याथात्म्यवेदनप्रतिपादनपरत्वात्। अतः कर्तुः संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात् तत्र फलश्रुतिरर्थवादमात्रम्, यथाऽन्येषु द्रव्यादिष्विति जैमिनिराचार्यो मन्यते। तदुक्तम्—"द्रव्यगुणसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्या"दिति। ननु च कर्मसु

कर्त्तुर्जीवादन्यो मुमुक्षुभिः प्राप्यतया वेदान्तेषु वेद्य उपदिश्यत इति प्रागेवोपपादितम् "नेतरोऽनुपपत्तेः" "भेदव्यपदेशाच्च" "अनुपपत्तेस्तु न शारीरः" 'इतरपरामर्शात्स इति चेन्नासम्भवा"दित्येवमादिभिः सूत्रैः, तदेव ब्रह्म तत्त्वमस्यादिसामानाधिकरण्येन जीवादनतिरिक्तमित्येतदपि "अधिकं तु भेदनिर्देशा"दित्येवमादिभिर्निरस्तम् । [1]सामानाधिकरण्यनिर्देशश्चै"तदात्म्यमिदं सर्वं" 'सर्वं खल्विदं ब्रह्मे'ति चेतनाचेतनसाधारण 'यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन्नित्यादिनाऽवगततत्तदात्मतयाऽवस्थितिनिबन्धन इत्य"ऽवस्थितेरिति काशकृत्स्न" इत्यादिभिरुपपादितम्, तत्कथं कर्मसु कर्त्तुरात्मनो याथात्म्योपदेशपरा वेदान्तशब्दा इति विद्यायाः कर्माङ्गत्वं प्रतिपाद्यते । उच्यते—वेदान्तवाक्येष्वेव विद्यायाः कर्मप्राधान्यं सूचयद्भिर्लिङ्गैस्तदुपबृंहितसामानाधिकरण्यनिर्देशेन च वेदान्तशब्दा देहातिरिक्तजीवस्वरूपयाथात्म्योपदेशपरा इति बलादभ्युपगमनीयमिति पूर्वपक्षिणोऽभिप्रायः । ननु च कर्तृसंस्कारमुखेन विद्यायाः क्रत्वनुप्रवेशो न शक्यते वक्तुम्, कर्त्तुर्लौकिकवैदिकसाधारणत्वेनाव्यभिचरितक्रतुसम्बन्धित्वाभावात् । नैवम्, लौकिकस्य कर्मणः कर्त्तुर्देहादव्यतिरिक्तत्वेऽप्युपपत्तेर्देहातिरिक्तनित्यात्मस्वरूपस्य क्रतावेवोपयोगात्,तत्स्वरूपप्रतिपादनमुखेन क्रत्व[2]नुप्रवेशो न विरुद्ध्यते । अतो विद्यायाः क्रतुशेषत्वान्नातः पुरुषार्थः ।

कानि पुनस्तानि लिङ्गानि, यदुपबृंहितसामानाधिकरण्यनिर्देशेन वेदान्तशब्दा जीवस्वरूपपरा इति निर्णीयते,[3] तत्राह—

## आचारदर्शनात् ॥ ३ ॥

ब्रह्मविदां प्राधान्येन कर्मस्वेवाचारो दृश्यते । अश्वपतिः कैकेयः[4] किलात्मवित्तमस्तद्विज्ञानायोपगतांस्तानृषीन् प्रत्याह "यक्ष्यमाणो ह वै भगवन्तो ऽहमस्मी"ति । तथा च जनकादयो ब्रह्मविदग्रेसराः कर्मनिष्ठाः स्मृतिषु दृश्यन्ते—

१ तदेवमित्यधिकमिह लि॰ पु॰ ।    २ क्रत्वङ्गेति लि॰ पु॰ ।
३ निर्णीयन्त इति मु पु ।    ४ केकय इति पु॰ द्वयेपि ।

"कर्मणैव हि संसिद्धिमास्थिता जनकादय."

"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रय" इति ।

अतो ब्रह्मविदां कर्मप्रधानत्वदर्शनाद्विद्यायाः कर्त्तुः स्वरूपवेदनपरत्वेन कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः ।

लिङ्गमिदम्, प्राप्तिरुच्यता,मित्यत्राह–

**तच्छ्रुतेः ॥ ४ ॥**

श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती' ति । नेयं श्रुतिः प्रकरणादुद्गीथमात्रविषयेति व्यवस्थापयितुं शक्या, यतः, प्रकरणाच्छ्रुतिर्बलीयसी । 'यदेव विद्यया करोती'ति विद्यामात्रविषया हीयं श्रुतिः ।

**समन्वारम्भणात् ॥ ५ ॥**

"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोः साहित्यं च दृश्यते, साहित्यं चोक्तेन न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति ।

**तद्वतो विधानात् ॥ ६ ॥**

विद्यावतः कर्मविधानाद् विद्या कर्माङ्गमित्यवगम्यते । "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे[1] शुचौ देश" इत्यादौ[2] वेदमधीत्येत्यध्ययनवतः कर्माणि विदधदर्थावबोधपर्यन्ताध्ययनवत एव विदधाति । अर्थावबोधपर्यन्तं ह्यध्ययनमिति स्थापितम् । अतो ब्रह्मविद्याऽपि कर्मसु विनियुक्तेति न पृथक्फलायावकल्पते ।

**नियमात् ॥ ७ ॥**

इतश्च न विद्यातः पुरुषार्थः । "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा" इत्यात्मविदः पुरुषायुषस्य[3] सर्वस्य कर्मसु नियमेन विनियोगात् कर्मण एव फलमित्यवगम्यते, विद्या तु कर्माङ्गम् ।

१ कुटुम्बी–इति लि॰ पु॰ । २ इत्यादीति लि॰ पु॰ ।
३ पुरुषार्थस्येति लि॰ पु॰ ।